# SAMPURṆĀNANDA-GRANTHAMĀLĀ

( Vol. 9 )

General Editor
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ, 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.



# BHĀRATĪYA-VICĀRADARŚANAM

( *Part I* )

by

**Dr. HARIHARA NĀTHA TRIPĀṬHĪ**
Ācārya, M. A., Ph. D.
Department of Political Science
Banaras Hindu University.

VARANASI
1973

सम्पूर्णानन्द-ग्रन्थमाला

( ९ )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
गवेषणालयसंचालकः
वाराणसेयसंस्कृतविश्वविद्यालयस्य

# भारतीयविचारदर्शनम्

( प्रथमो भागः )

प्रणेता

डॉ० हरिहरनाथत्रिपाठी
आचार्यः, एम्० ए०, पी-एच० डी०

राजनीतिशास्त्रविभागः, काशीहिन्दूविश्वविद्यालयः
वाराणसी

वाराणस्याम्

२०३० तमे वैक्रमाब्दे | १८९५ तमे शकाब्दे | १९७३ तमे खिस्ताब्दे

# प्रास्ताविकम्

वैदिकं लौकिकं च संस्कृतवाङ्मयं सुमहत् । तत्र वेदवेदाङ्गोपवेदपुराणादिषु निबद्धं ज्ञानं विज्ञानं च । देशान्तरेषु प्रचलितानां विधीनां समावेशो लोकोपयोगित्वात् समये समय आयुर्वेदे ज्योतिषे ( शिल्पशास्त्रे ) संगीते चाभूत् । संस्कृतभाषोपनिबद्धानि शास्त्राणि । लोकोपयोगिनां विधीनां देशान्तराद् गृहीतानामपि षोडशशताब्दीपर्यन्तं तथा समावेशो विहितः संस्कृतभाषया शास्त्रेषु, यथा न विज्ञायेत पार्थक्यं मूलशास्त्रात् तेषाम् । इदमेव कारणं यद् आङ्गलदेशीयानामागमनात् प्राग् आयुर्वेदे श्रद्धावान् आसील्लोकः । चिकित्सालोके नवनवानाम् आविष्कृतविधीनां समावेशाभावाद् नास्ति स तत्र पूर्ववत् सुनिर्भरः । एवमेव प्राचीनेऽर्थशास्त्रे राजनीतिशास्त्रे च नूतननूतनानां विधीनां क्रोडीकरणाभावाद् औदासीन्यं दृश्यते तत्र लोकस्य । विद्यमानानां सर्वेषां शास्त्राणामियमेव स्थितिः ।

वाराणसेयसंस्कृतविश्वविद्यालयस्य स्थापनानन्तरम् इहाधुनिकविषयाणां तेषां ग्रन्थानां प्रकाशनमपि स्वीकृतम्, येषां प्रणयनं संस्कृतभाषया संजातम् । संस्कृतभाषासमृद्धिर्लक्ष्यम् । येन प्राचीनेन सह प्रत्यग्रं ज्ञानमपि संस्कृतज्ञैस्तत्र लब्धुं शक्येत । तादृशग्रन्थानां प्रकाशनार्थं संपूर्णानन्दग्रन्थमाला प्रचालिताऽऽद्यैर्गवेषणालयसंचालकैः पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयैः ।

अस्यां ग्रन्थमालायामष्टौ प्रसूनानि प्रस्फुटितानि । तानीमानि—१. दृक्सिद्धान्तपञ्चाङ्गनिर्माणपद्धतिः, २. पाश्चात्यं नीतिशास्त्रम्, ३. अर्वाचीनं मनोविज्ञानम्, ४. अर्वाचीनं ज्योतिर्विज्ञानम्, ५. ज्योतिर्विज्ञानम्, ६. अभिनवमनोविज्ञानम्, ७. सांस्कृतिको दिग्विजयः, ८. अनुसन्धानपद्धतिश्चेति । प्रकृतं नवमिदं नवमं प्रकाशनम् ।

इतः पूर्वं प्रायो वर्षाष्टके तुलनात्मकं राजनीतिशास्त्रं भूगोलशास्त्रं चास्थाय ग्रन्थप्रणयनं प्रस्तावितमासीत् । डॉ० हरिहरनाथत्रिपाठिना तुलनात्मकराजनीतिशास्त्रमधिकृत्य प्रस्तुतः "भारतीयविचारदर्शनम्" इत्याख्यो ग्रन्थो रचितः सरलया संस्कृतगिरा, येन सर्वेषां संस्कृतज्ञानामुपयोगाय संस्कृतस्य च प्रचाराय स्यादयम् । विषयस्यास्य नवमाद्यम्, मालायाश्च नवमं प्रसूनमिदं नूनं बुधजनमनोमोदाय संस्कृतप्रणयिजनोपकाराय च भविष्यतीति मन्यते ।

गीताजयन्त्याम्
२०३० वैक्रमाब्दे
( ६-१२-७३ खी०

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
संचालकः
गवेषणालयस्य

# कृतज्ञताज्ञापनम्

प्रस्तुतग्रन्थलेखनं भाग्यस्यैवास्ति परिणामः, न तु कस्यचन पूर्वसंकल्पस्य। एकस्यां विचारगोष्ठयां मदीयविचारान् श्रुत्वा वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिपदं तत्कालं विभूषयन्तः **श्रीसुरतिनारायणमणित्रिपाठिमहोदया** इच्छामकुर्वन् यत्प्राचीनविषयानाश्रित्याधुनिकपद्धत्या संस्कृतभाषायां मया ग्रन्था रच्येरन्निति, विशेषतश्च भारतीये राजनीतिशास्त्रेऽर्थशास्त्रे समाजशास्त्रे विधिशास्त्रे च। कार्यभाराच्चात्मानं रक्षितुं मया कतिचन मान्यतास्तत्समक्षमुपस्थापिताः, यासां पूर्त्तिं कर्त्तुं विश्वविद्यालयो न क्षमेत। अतीते कतिपयकाले तदानीं महदाश्चर्यमभूद् यदा त्रिपाठिमहोदया मामाहूयादिष्टवन्तो यन्मया ग्रन्थलेखनस्य कार्यभारोऽवश्यं स्वीकार्यः, यतो हि तदीयप्रयासेन विश्वविद्यालयस्य कार्यकारिणीपरिषद् मत्सम्बन्धे तादृशं प्रस्तावं पारितवती, यत्र मदीया मान्यताः प्रायेण स्वीकृताः। त्रिपाठिमहोदयानामस्मिन् प्रयासम् ईश्वरेच्छाया एव हेतुत्वं मया दृष्टम्, अन्यथा ग्रन्थस्यास्य निर्माणे मे मनसि कदापि विचार एव नासीत्। योजनायाश्चास्याः प्रदत्तं व्यावहारिकं रूपं पूज्येन पण्डितप्रवर**श्रीबलदेवोपाध्यायमहानुभावेन** संस्कृतविश्वविद्यालयीयशोधसंस्थाने तात्कालिकसञ्चालकपदमलङ्कुर्वाणेन। अनयोः ऋषिकल्पमनीषिणोरादेशपालनं मम सर्वातिशायि महनीयं कर्त्तव्यमासीत्।

पूज्योपाध्यायमहोदयानां समये **"नीतिविधिविमर्शः"** **"भारतीयविचारदर्शनम्"** इत्यनयोर्ग्रन्थयोर्लेखनस्य निश्चयोऽभूत्। १९६९ ईस्वीये वत्सरे मया पाण्डुलिपिः संस्थाने प्रकाशनार्थं प्रेषिता। यद्यपि संस्थाने मुद्रणालये च विभिन्नानां विघ्नानां संहतिस्तदानीमासीत्, तथापि संस्थानस्य मुद्रणालयस्य च प्रत्येकं व्यक्तयो मम पूर्णं सहयोगमकुर्वन्, येन ग्रन्थस्य प्रथमः खण्डो भवतां समक्षमुपस्थितः। सर्वेभ्यश्चैतेभ्यो मया हार्दिकी कृतज्ञता प्रकाश्यते।

प्रस्तुतग्रन्थेन सह ममाप्रत्याशिताशुभस्य संघर्षस्य च क्षणाः सम्पृक्ताः सन्ति। यतो हि ग्रन्थारम्भकाल एवास्मत्समग्रमहत्त्वाकाङ्क्षाणां प्रतीकभूतः षड्वर्षवयस्कः शैलेन्द्रनामको मम पुत्रः परमज्योतिषि निलीनोऽभवत्। यतश्चाहं लौकिकः प्राणी, अतो ग्रन्थमेनमश्रुपूरितेन नेत्रेण लिखितवान्, न तु नेत्रज्योतिषा। ग्रन्थेऽस्मिन् समस्ता मानवसीमा विद्यन्ते। फलतस्तान् विदुषः प्रत्यहं कृतज्ञो भवामि भविष्यामि च, येऽत्र विषयविवेचने ध्यानं ददति दास्यन्ति च। अन्ते वैयाकरणमार्त्तण्ड**श्रीरामप्रसादत्रिपाठिमहोदयं** शिरसाऽभिवादयन् एतदेव वक्तुमीशोऽस्मि यद् यद्येषां जन्म मम कुले न सम्पद्येत, तदा नूनं संस्कृताध्ययने मयाऽवसरो न लभ्येत, नाप्ययं ग्रन्थो विरच्येत। अतस्तदीयोऽहमित्युक्त्वैवात्मानं कृतकृत्यं मन्वानो विरम्यते। इति शम्।

—❀—

# प्राक्कथनम्

भारतवर्षस्याधुनिकं पुनर्जागरणमपि वैदेशिकशासनस्य परिणाम एव। एतद्देशस्य समग्रविद्यानां विश्लेषणे पाश्चात्त्यसाम्राज्यवादिकूटनीतेः स्पष्टं प्रभावो विद्यते। तथाकथित-भारतीयविद्वांसोऽपि तदेव प्रमाणं मन्वते यत्पाश्चात्त्या विद्वांसः सङ्केतयन्ति। भारतवर्षस्येतिहासदर्शनराजनीतिधर्मसंस्कृतिप्रभृतीनां व्याख्या एव विपरीता अभवन्, यतः पाश्चात्त्य-भारतीयव्यवस्थयोस्तुलनैव नासीत्। पाश्चात्त्यविचारका राजनीतिकदृष्ट्यैव देशमेनं परतन्त्रं कर्त्तुं नावाञ्छन्नपि तु बौद्धिकदृष्ट्याऽपि। एतैरेव विचारकैर्मतमिदं प्रस्तावितं यद् देशेऽस्मिन् दानधर्मकर्मकाण्डप्रभृतिविषयानाधृत्यावश्यं विचारोऽकारि, किन्तु लौकिक-विषया नूनमुपेक्षिता विचारकोटौ। यतोऽर्थशास्त्रराजनीतिशास्त्रप्रभृतिविषयाणां ज्ञानमेवैतेषां नासीत्। कौटलीयार्थशास्त्रस्योपलब्धौ सत्यामप्येते विचारकाः स्वस्मिन्नेव मते दृढमतिष्ठन्। आश्चर्यमिदं यदेतावान् महानपसिद्धान्तः कथं स्वीकृतः? स्पष्टमेतद् यद् भारतीयैः स्वदेशीय-साहित्याध्ययनार्थं रुचिर्नाक्रियत। अन्यथा रामायणमहाभारतपुराणनीतिग्रन्थधर्मशास्त्र-वैदिकसाहित्यसम्बद्धापारज्ञानराशौ स्थापितान् लौकिकविषयानालोच्येदृशमपसिद्धान्तं श्रोतुं क उत्सहेत!

भारतीयसमाजे सामन्तवादिव्यवस्थाया उदयेन मुस्लिमशासनस्य स्थापनया च नवीनचिन्तनधारा टीकाभाष्यप्रभृतिरचनात्मकक्रियया प्रस्तुताऽभूत्। कौटल्यार्थशास्त्रमपि मौर्यकालस्यावश्यकतापूर्त्तये महाभारतस्य वार्त्तिकमेवाऽस्ति। कामन्दकप्रभृतय उत्तरवर्त्ति-विद्वांसस्तदेव पुनरावर्त्तयन्ति स्म। निबन्धटीकाग्रन्थादिग्रथितेष्वपि धर्मशास्त्रेषु मूलतः सङ्ग्रह-मात्रमेवानुभूयते। यद्यप्येतत्कार्यमत्यन्तविद्वत्तयाऽलौकिकप्रतिभया च सम्पादितमासीत्। आधुनिकविश्वकोशपरम्परापेक्षया कल्पतरुप्रभृतिप्राचीनग्रन्थेषु महत्कार्यं कृतमस्तीति स्पष्टं वक्तुं शक्यते। किन्तु राजधर्मस्य परम्परा नूतनसमस्यानां समाधाने विकासं नालभत। फलतो भारतीयसमाजो विदेशीयाक्रमणकालेऽभिनवशक्तिसम्पन्नशासकैः सह योद्धुं नाशकत्। अद्यापीयमेव स्थितिः। ईदृशा भारतीया विद्वांसः सन्ति, य उक्तां स्थितिं पूर्णतया परिचिन्वन्ति, ते भारतीयविद्यानां वास्तविकं स्वरूपं प्रस्तोतुं वाञ्छन्ति, किन्तु ते पूर्णतया संस्कृतज्ञानाभावान्मूलज्ञानावसर आङ्ग्लभाषानुवादे निर्भरा भूत्वा भ्राम्यन्ति। अद्यत्वे संस्कृत-साहित्ये मूर्धन्या विद्वांस उपलभ्यन्ते। परन्त्वाधुनिकसमस्यानामध्ययनपद्धतेश्चाज्ञानात् तेऽप्या-धुनिके भारते विद्वत्कोटावपाङ्क्तेया एव सन्ति।

अस्यां स्थितावीदृशबौद्धिकानामावश्यकताऽस्ति ये मूलरूपेण भारतीयविद्यायां विद्वांसो भवेयुः, तथाऽऽधुनिक्याः पद्धत्याः समस्यायाश्चापि मूलत एवाधिवेत्तारः स्युः। एवं सति

त्रिविधं कार्यं सम्पत्तुमर्हति—प्राचीनसामग्र्यां आधुनिकोपयोगितानुरूपः सङ्ग्रहः, प्राचीनज्ञानधाराया आधुनिकदृष्ट्या वर्तमानसन्दर्भेण सह योजनम्, तथाधुनिकसमस्यानां प्राचीनविद्यादृष्ट्या समाधानप्रस्तावः। कार्यमेतद् व्यक्तिसमूह एव कर्त्तुं शक्नोति, न त्वेका व्यक्तिः। भारतवर्षस्य वास्तविकराष्ट्ररूपेण परिणतये कार्यमेतदनिवार्यमस्ति। परन्त्वतीव खेदविषयोऽयं यदांशिकरूपेणापि राष्ट्रेणात्र ध्यानं न प्रदत्तम्। भविष्यकाले कार्यमेतदेतावताऽपि कठिनं प्रतीयते यत् संस्कृतविदुषां नवीनश्रेणी प्रायः स्वविषये तादृशी निष्णाता न सम्भविष्यति। फलतस्तत्कालमेवैतस्य कार्यस्य सम्पादने ध्यानमत्यावश्यकं प्रतीयते।

अस्याञ्च दिशायाम् "भारतीयविचारदर्शनम्" प्रथमः प्रयासोऽस्ति। एतस्य प्रथमे खण्डे राजनीतिकानामार्थिकानां च विषयाणामांशिकं विवेचनं कृतमस्ति। एतद्विषयसम्बद्धापारसामग्रीतः कतिपय एव सामान्यविषया मया सङ्गृहीताः। विषयविश्लेषणे सामग्री प्राचीना पद्धतिश्च नवीना अस्ति। यथास्थानमाधुनिकविचाराणां समावेशः समीक्षा चापि कृताऽस्ति। सङ्गृहीते विषयेऽयमुद्देश्यविशेषोऽपि संयुक्तोऽस्ति। अत्र प्रथमोऽध्यायो राजधर्मनामकोऽस्ति यत्र राजशास्त्रस्य स्पष्टरूपेण स्वतन्त्रता प्रतिपादिता। राजशास्त्रधर्मशास्त्रस्यानुचरमात्रमेव नास्ति। अग्रे धर्मशास्त्रार्थशास्त्रयोर्यौ मूलपुरुषौ मनुकौटल्यौ स्तस्तयोर्विषये कतिपयभ्रान्तधारणानां निरासोऽपि कृतः। राज्यस्य राज्ञश्चास्य स्वतन्त्रविषयद्वयस्य स्थापनायामेतत् स्पष्टमस्ति यद् राजनीतेः प्रतिपाद्यमेतद्विषयद्वयं प्राचीनराजशास्त्रेण स्पष्टतया प्रस्तावितमस्ति।

भारतीयराजशास्त्रार्थशास्त्रपरम्पराया अयं महान् विशेषो यदत्र समग्रभारतीयराजशास्त्रीयैकात्मकता व्यवहार उपलब्धाऽस्ति, या क्षेत्रियतां धर्मं सम्प्रदायञ्चातिक्रम्य विराजते। बौद्धसम्प्रदायस्य जैनसम्प्रदायस्य राजतरङ्गिण्याश्च राजनीतिकमीमांसाऽप्येतदर्थमेव कृताऽस्ति। बौद्धपरम्परायामशोकं प्रति मया यदुक्तं तद् यद्यपि विवादास्पदं सम्भाव्यते, तथापि मत्प्रस्तावितः पक्षोऽत्यन्तं विचारणीयोऽस्ति। जैनराजनीतिग्रन्थस्त्वर्थशास्त्रस्य पूरकोंऽश एवाऽस्ति। काश्मीरस्य सैव राजनीतिरासीद् या समग्रभारते व्यवाह्रियत। एवंरूपेण मया समग्रभारतस्य समस्तसम्प्रदायानां चैकविधाया राजनीतिव्यवस्थायाः साक्षात्कारः कृतः। यस्यैतत् तात्पर्यं यद् देशस्यैकतायां धर्मापेक्षया राजनीतेरधिकं योगदानमासीत्। एषा मान्यता स्वस्मिन् विषये प्रत्याह्वयते तान्, मध्ययुगीयविचारका ये धर्मापेक्षया कस्यापि राजनीतेरस्तित्वमेव न स्वीकुर्वते। यतः परस्परविरोधिनां बौद्धजैनवैदिकधर्मावलम्बिनां राजनीतिव्यवस्था प्रत्यक्षं प्रत्युत्तरमस्ति।

सामन्तवादिनः पराधीनताकालिकाः सनातनविचारकाश्चेदं नाभ्युपगच्छन्ति यद् राजतन्त्रादतिरिक्ता शासनप्रणाल्यस्मद्देश आसीत्। एतदर्थं मया गणराज्यव्यवस्थाया अध्यायः प्रस्तावितः। एवमेवात्यन्तसंक्षेपेण प्राचीनजनतान्त्रिकमान्यताः सूचयितुमेकोऽध्याय उपस्थापितः। सर्वाधिकं स्पष्टीकरणं राष्ट्रान्तरीयसम्बन्धे मया कृतम्। एतद्विषये सामान्यतयाऽधिकं

बलमेतदर्थं दीयते यन्मध्ययुगीयटीकानिबन्धादिग्रन्थलेखकैश्चायमंशः सर्वथा परित्यक्तः। आधुनिका अपि विद्वांस एतद्विषये सामान्यरूपेणान्यथापक्षं प्रस्तुवन्ति। वस्तुत एष सिद्धान्तो यत्प्राचीनसाहित्ये विषयमेनमाश्रित्य विस्तृतो विचारः कृतोऽस्ति।

राजनीतेरनन्तरं मया आर्थिकविचारोऽधिकृतः। अत्र सर्वेऽध्याया नूतना इव प्रतीयेरन्। यतो मध्ययुगेऽस्मिन् विषये विचार एव नायातः। आधुनिकविदुषा दृष्टौ त्वार्थिकसमस्यानां मूल्याङ्कनं भारतीयैर्नैव कृतम्। अर्थशास्त्रस्य दर्शनम्, उत्पादनम्, वितरणम्, विनिमयः, भूस्वामित्वम्, श्रम इत्येतद्विषयका अध्याया आधुनिकविदुषः प्रतिपदं प्रत्याह्वयते। ममैष दृढो विश्वासो यदाधुनिकधनवादिनां साम्यवादिनाञ्चार्थिकव्यवस्थयोरनुकल्प एव प्राचीनभारतीयार्थव्यवस्थाऽस्ति।

ग्रन्थलेखने चात्र मयैतिहासिकी पद्धतिः समाश्रिता। अहं दृढं विश्वसिमि यत् समाजविकासेन सह तदीयघटकानां विचाराणां च विकासः समजनि। सामान्यधर्मसम्बन्धिनियमा अपि शाश्वता नैव भवन्ति। एकस्मिन् युग एको धर्मोऽन्यस्मिन् युगेऽधर्मायते। फलतो विशेषधर्मस्य शाश्वतत्वे प्रश्न एव न जागर्ति। राज्यम्, राजा, मन्त्रिपरिषद्, राष्ट्रान्तरीयविधिः, आर्थिकनियमश्चैते सर्वेऽनादिकालतोऽद्य यावद् भारतवर्ष एकरूपेणैव व्यवहृता भवन्ति, तथा चैतेषामभिव्यक्तिरपौरुषेयवेदेनैव भवति—इत्येतत् स्वीकर्तुमद्यतने युगे नास्त्यवसरः। मान्यता चैषा कुण्ठितसमाजस्योपलब्धिमात्रमेव। सामन्तवादियुगेऽपि सर्वे भारतीयविचारका एनां नैव समाद्रियन्त। वयं विचारविकास आस्थां कुर्मः, विश्वस्मिंश्च यद् भारतीयराजनीतेरार्थिकनियमाना च परिवर्तनविकासौ भवतः। देशस्य कालस्य पात्रस्य च योग्यतानां चैषु समावेशोऽप्यजायत। एष विकासः सततं प्रचलेदित्युद्देश्यमादाय "भारतीयविचारदर्शनम्" इत्यस्मिन् ग्रन्थे प्राचीनसिद्धान्तानां नवीनसिद्धान्तैः सह योजने प्रयासः कृतः।

आशाशून्यसमाजे विचारसम्प्रेषणीयतारूपं मुख्यं लक्ष्यं परित्यज्य भाषा स्वयं पण्डितम्मन्यताया अङ्गं भवति, यदा तदीयबौद्धिकवर्गेण प्रस्तुतसमस्यानां समाधानं कर्तुं न शक्येत, किन्तु भाषायाः काठिन्येन रहस्यमयशब्दप्रयोगवाग्जालेन च स्वीयाऽस्तित्वं संरक्ष्यते। अतीतकाले संस्कृतभाषां प्रत्ययमेव व्यवहारोऽभवत्। शाब्दबोधपरिष्कारादिप्रणाल्या संस्कृतसमाजो विचारशून्यदिशायां निमग्नोऽभूत्। नव्यन्यायस्य नव्यव्याकरणस्य च भाषासरणिः केनापि जीवितसमाजेन स्वीकर्तुं न शक्येत। इयमीश्वरेच्छैव यद् राजनीतिशास्त्रीया ग्रन्था अनया पण्डितम्मन्यतासरण्या मुक्ताः सन्ति। एतद्ग्रन्थलेखने मया सरलतमभाषायाः प्रयोगो विहितः। मया चेदं मन्यते यद् भाषा विषयावगाहने साधिका भवेत्, न तु बाधिका। विषयमुद्दिश्य विचारः समुचितो भवति, न तु भाषामुद्दिश्य। इदानीं स युगः समाप्तो यस्मिन् भाषाया रटनमावश्यकं मन्यते स्म, विषयज्ञानं भवतु वा न। प्रस्तुतग्रन्थे व्यवहृता संस्कृताभाषा हिन्दीभाषया आङ्ग्लभाषया च पर्याप्तं प्रभाविताऽस्ति। वाक्यविन्यासे, शब्दप्रयोगे, क्रियाप्रयोगे च अभिनवा सरणिरपि मया स्वीकृता। यथा

"होता है" एवम् "हो रहा है" अनयोः क्रियर्योर्भेदः सुनिश्चितः। तस्याभिव्यक्तये 'भवति' एवं 'भवन्नस्ति' इत्यनयोः प्रयोगः कृतः। दार्शनिकसार्वभौमेण वाचस्पतिमिश्रेणापि सांख्यतत्त्वकौमुद्यामर्थापत्तिप्रमाणखण्डनावसरे 'सन्नास्ति' 'सन्नस्ति' इत्येवं प्रयोगः कृतोऽस्ति। फलतोऽत्र व्यवहृता भाषा अंशतः सम्प्रदायमनपेक्षमाणाऽस्ति। वाक्यविन्यासे ममेच्छा प्रयोजिका, शब्दप्रयोगे च भावाभिव्यक्तिमूलिकाहेतुः। आधुनिकविषयाणां बोधका अभिनवाः शब्दा अवश्यं निर्मातव्या भविष्यन्ति। 'ननु, नच' इत्यादिप्रयोगप्रधानमध्ययुगीयशैल्यां परम्पराप्राप्तशब्दप्रयोगे चाऽभ्यस्ता नवीनविषयविज्ञानशून्या विद्वांसो ममास्य प्रयासस्येममंशं हास्यास्पदं मंस्यन्ते, किन्तु नवीनप्रयोगाकरणे वयं न स्थास्यामः, फलत ईदृशोपहासस्योपेक्षैव कर्त्तुं युज्यते। पुनश्चायं पूर्णो विश्वासो यद् विषयावगाहनपटीयांसो विद्वांसः प्रयासमेनं समीचीनं सम्भावयिष्यन्ति।

अस्मिन् ग्रन्थे मया विभिन्नानां तादृशां विषयाणां स्थापना कृताऽस्ति येष्वेकैकमपि विषयमादाय स्वतन्त्राः शोधप्रबन्धाः प्रस्तोतुं शक्येरन्। एतादृशेषु विषयेष्ववश्यं ध्यानं देयमित्येतदेवास्ति ममोद्देश्यम्। यं विषयमाश्रित्य मया अध्यायो लिखितः, विद्वांसस्तस्मिन्नेव विषये विशालं ग्रन्थं विरचयेयुरित्येषोऽस्ति ममाभिलाषः। अस्ति ममायं ग्रन्थः 'पौरुषेय' इति सुनिश्चितमेव, अतश्चात्र मानवीयाः सर्वे दोषा उपलब्धुं शक्येरन्, तद्विषये सहृदया विद्वांसश्छिद्रान्वेषणं परिहाय विषयविवेचनपरम्पराया विकासं कुर्वन्तु, अनयैव दृष्ट्याऽहं प्रस्तुतखण्डेन सह विदुषां सेवायां प्रस्तुतो भवामि।

विजयादशमी, वि० सं० २०३० — हरिहरनाथत्रिपाठी

राजनीतिशास्त्रविभागः
काशीहिन्दूविश्वविद्यालयः

# विषयानुक्रमणी



—※—

# भारतीयविचारदर्शनम्

## १

## राजधर्मः

भारतीयसमाजस्य मूलं स्वतः सञ्चालितम्। तस्य शासनं येन विधिना भवति, स विधिरपौरुषेयः। ऋग्वेदतो भारतीयसमाजस्यादर्शो व्यवहारश्च परिज्ञायते। तदानीं सामाजिकाः स्वयमेव प्रशासनं व्यवहारञ्च सञ्चालयन्ति स्म। सभा-समित्यादयोऽधिकारयुक्ताः संस्था आसन्। समाजस्य सर्वाङ्गीणं सञ्चालनं निर्बाधं ताभिरेव सम्पाद्यते स्म। वैदिकसमाजे खलु संघर्षा जाताः। ते च राजनीतिहेतुकाः, समाजहेतुका प्रजातिहेतुकाश्च (Political, Social and Racial)। संघर्षस्य विविधाः पक्षाः ऋग्वेदे प्रदर्शिताः। तत्र आन्तरो बाह्यश्चेति मुख्या आसन्। एते संघर्षाः न तथा विचारक्षेत्रे यथा रणक्षेत्रे। संघर्षदशायां सुरक्षायाः भारः समाजस्य अंशविशेषे (केषुचित् प्रतिनिधिषु) निक्षिप्तः। तस्यैव नेता उत्तरकाले राजत्वम् आपन्नः। युद्धकाले राजा सेनायाः नेता जनतायाश्च रक्षकः आसीत्।[१] शान्तियुगे प्रजा तम् आद्रियते स्म।[२] युद्धविषयकात् कस्माच्चिदपि भयात् प्रजायाः रक्षणं राज्ञः कर्त्तव्यम्। एष एव तदानीन्तनः राजधर्म इति कथयितुं शक्यते।

वेदेषु राजधर्मशब्दः नोपलभ्यते। तस्य इदं कारणं यत् तदानीं समाजः 'ऋते' प्रतिष्ठित आसीत्। तदा राजधर्मः सामान्यधर्मरूपेण अभ्यनुज्ञातः। अतः राजधर्मनामकं किञ्चित् स्वतन्त्रं विधानं शक्यं न आसीत्। परन्तु ब्राह्मणग्रन्थकालपर्यन्तं राजशक्तेः महान् विकासः समजनि। सभा-समित्यादीनां प्रागुक्तानां सभानां लोके तत्स्थाने पौरजानपदप्रभृतयः संस्थाः देशनियन्त्रणे अशक्ताः अभवन्। स्थानीयान् सङ्घानपि राजा एव निर्दिशति स्म। यतः राजशक्तिः केन्द्रिता अभूत्, राज्यस्य विभिन्नेषु अङ्गेषु समाजस्य शक्तिः तिरोहिता जाता। राज्यस्वामिपदे अधिष्ठितः राजा एव युगस्य समाजस्य च सञ्चालकोऽभूत्, इदानीमेव राजधर्मोऽभ्युदितः। तस्य व्यवस्था स्वरूपञ्च ब्राह्मणग्रन्थोत्तरकाले लभ्यते।

---

१. ऋग्० ३।४३।५।

२. ऋग्० ४।५।८।

धर्मशास्त्रेषु राजधर्मपराणि वचांसि सूत्ररूपेण लभ्यन्ते। तेषु च राजकार्याणां निर्देशनं भवति।[१] उत्तरकालं यावत् वर्णधर्मेण समाजस्य अनिवार्या अङ्गता आसादिता। अवैदिकसम्प्रदायैः जात्यन्तरैश्च सह तस्य वर्णधर्मस्य अभिभव आरब्धः। राज्ञः एतदेव कर्त्तव्यम् आसीत् यत् सः वर्णाश्रमधम सार्वजनीनं कल्याणं च प्रतिष्ठापयेत्। बाह्येभ्य, आक्रमणेभ्यः आन्तरेभ्यश्च विद्रोहेभ्य· वर्णाश्रमधर्मस्य सुरक्षा राज्ञैव शक्या आसीत्। अत एव वर्णाश्रमधर्मस्य रक्षा एव राज्ञः मुख्यं कर्त्तव्यं स्वीकृतम्। धर्मशास्त्रतः स्मृतिग्रन्थं यावत् वर्णिते राजधर्मे प्रस्तुतं स्वरूपं लभ्यते।

आपस्तम्बेन राजधर्मे समाजस्य सर्वाण्यपि अङ्गानि समावेशितानि। वर्णानां धर्मस्य रक्षा, अनाथानां धार्मिकं कार्यं कुर्वतां कारयताञ्चेत्यादीनां रक्षा इत्येतद् द्वयं राजधर्मस्य विषयः।[२] धर्मशास्त्रकालपर्यन्तं कल्याणकारिण· राज्यस्वरूपस्य आधार-भित्तिः दृढताम् आसादितवती। महाभारते शान्तिपर्वणि राजधर्मनामकम् एकं स्वतन्त्रम् एव प्रकरणं योजितम्।[३] अनुशासनपर्वणि बार्हस्पत्यशास्त्रम् औशनस-शास्त्रञ्च चर्चितम् अस्ति।[४] मनुनापि राजधर्मः वैधानिकतया स्वीकृतः।[५] शान्ति-पर्वणि बृहस्पति-भारद्वाज-गौरशिरः-काव्य-महेन्द्र-मनु-प्राचेतसादीनां राज-शास्त्राणि निर्दिष्टानि सन्ति।[६] शान्तिपर्वणि शम्बरमतस्य प्रतिवादः कृत·।[७] मानव-बार्हस्पत्यौशनसपाराशराम्भीया पञ्च सम्प्रदायाः कौटल्येन अर्थशास्त्रे सूचिताः। बाहुदन्तिपुत्र-दीर्घचारायण-घोटमुख-कणिक-भारद्वाज-कात्यायन-किञ्जल्क-पिशुनपुत्रा-दीनाम् आचार्याणां मतानि सप्तवारं उट्टङ्कितानि। भारद्वाजः, कौणपदन्तः, पाराशरः, पिशुनः, वातव्याधिः, विशालाक्षः इत्येते अनेकवारम् अर्थशास्त्रे उल्लिखिताः। राजशास्त्रस्य भाष्यमपि आसीत् इत्यपि शान्तिपर्वणि सूचितमस्ति।[८] प्राचीनभारते राजधर्मस्य राजशास्त्रस्य च अविच्छिन्नपरम्परा लभ्यते।[९] यस्मिन् काले

---

१. आपस्तम्बधर्मसूत्रम् २।६।२५।१।

२. आ० ध० सू० २।९।२५।१।

३. शा० प० ५६।१३०,१३१,१७२।

४. अनु० प० ३९।८।

५ मनु० ७।१।

६. शा० प० १०२।३१-३२।

७. शा० प० १०३।४४।

८. शा० प० १०३।४४।

९. बाम्बे युनिवर्सिटी जर्नल, खण्डम् ११, भा० २, पृ० ७३; N. N. ला, माडर्नरिव्यू १९१८, स्टडीज इन एंशेण्ट इण्डियनकल्चर, परिशिष्टम्।

राजशास्त्रस्य राजधर्मस्य च व्याख्या प्रारब्धा विद्वद्भिः, तदानीं राजशक्त्या समाजस्य मूलता आसादिता आसीत्। राजा वर्णाश्रमाणां नियतधर्मस्य पालने निरतसमाजस्य दायित्वं स्वीकरोति, एवं कुर्वन् स धर्मविषयकप्रायश्चित्तसम्बन्धि-परिषदः निर्णयस्य कार्यान्वयनं करोति, अन्यथा प्रायश्चित्तस्य निर्णयोऽनावश्यकः प्रतिभाति।[1] राज्ञः कानि कानि कर्त्तव्यानि इति आलोचने क्रियमाणे एतत् स्फुटं भवति। महाभारतानुसारं सर्वे अपि धर्माः राजधर्मे अन्तर्भवन्ति। सर्वाः विद्याः सर्वे लोकाश्च राजधर्मे एव अन्तर्गताः। सर्वेषु धर्मेषु राजधर्मः प्रधानः।[2] निश्च-यरूपेण कथितं यत् सुवृष्टियोगक्षेमादयः राजमूलकाः। एतावदेव न, अपि तु प्राकृतिकशक्तीनां सञ्चालनम् आधिव्याधिकञ्च इत्येतेषामपि राज्ञैव सम्बन्धः। युगचतुष्टयस्यापि मूलं राजा एव।[3] जीवलोकस्य आश्रयः राजधर्म एव।[4]

"राजा कालस्य कारणम्, कालो वा राज्ञः कारणम्" इति संशयं दूरीकर्तुम् उद्योग-पर्वणि राज्ञः कालकारणत्वं निर्णीतम्।[5] राजा एव वस्तुतः युगम्।[6] स एव प्राणि-मात्रस्य कर्ता संहर्ता च। युगप्रवर्तकः युगस्थितौ जायमानस्य पतनोत्थानस्य विषये

---

१. गौ० ध० सू० १०।७-८;११।९-११; तस्य चेच्छास्त्रं वर्तेरन् राजा न गमयेत्। राजा पुरोहितं धर्मार्थकुशलम्। स ब्राह्मणान् नियुञ्जीयात्। बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत्। आ० ध० सू० २।५।१३; वशिष्ठ०-१९।१-२; नारदप्रकीर्णक० ५-७; ३३-४४; शां० प० ७७।७३; ५७।१५; मत्स्य० २१५।६३।

२. एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थं सम्प्रलीनान्निबोध।
सर्वा विद्या राजधर्मेषु युक्ताः सर्वे लोकाः राजधर्मे प्रतिष्ठाः॥
सर्वे धर्म्माः राजधर्मप्रधानाः.............................।
(म० शा० प० ६३।२५, २६,२९)

३. राजमूला महाभाग योगक्षेमसुवृष्टयः।
प्रजासु व्याधयश्चैव मरणं च भयानि च॥
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ।
.........राजमूला नास्त्यत्र संशयः॥
(म० शा० प० ५।९-१०)

४. सर्वस्य जीवलोकस्य राजधर्मपरायणम्। (म० शां० प० ५६।३)।

५. कालो वा कारणं राज्ञो राजा वा कालकारणम्।
इति मे संशयो मा भूत् राजा कालस्य कारणम्॥
(महा० उ० प० १३२।१६; शा० ६९।७९)

६. राजैव कर्ता भूतानां राजैव च विनाशकः।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते॥
(म० शा० प० ९१।६-६)

राजा एव उत्तरदायी, न प्रजा, नापि युगम्।[१] शुक्रनीतौ धर्माधर्मविषये राजा एव स्वीकृतः। तन्निर्दिष्टमेव कार्यं प्रमाणताम् अलभत।

पूर्वं धर्मसामान्यस्य व्याख्या आसीत्। पश्चात्तेन सार्धं राजधर्मस्यापि स्वतन्त्रतया वर्णनम् आरब्धम्। धर्मशास्त्रवदेव राजधर्मोऽपि स्वतन्त्रतया व्याख्या-विषयताम् आपन्नः। तद्विषये इतिहासोऽपि उपस्थापितः। राजशास्त्रं धर्मशास्त्रस्य एकदेशम् अमत्वा तस्य (राजशास्त्रस्य) साक्षाद् ब्रह्मणा सह सम्बन्धः स्थापितोऽभवत्। शान्तिपर्वणि प्रतिपादितं यत् मात्स्यन्यायनिवृत्त्यर्थं दशलक्षाध्यायात्मकं नीतिशास्त्रं रचितम्, यत्र पुरुषार्थचतुष्टयं विवेचितम्,[२] यन्नीतिशास्त्रं संक्षिप्य विशालाक्षेण शङ्करेण च अध्यायानां दशसहस्र्यां सङ्गृहीतम्। एतन्नीतिशास्त्रं सम्यगधीत्य इन्द्रेण अध्यायानां पञ्चसहस्र्यां सङ्गृहीतम्। नीतिप्रकाशिकानुसारं ब्रह्मा, महेश्वरः, स्कन्दः, इन्द्रः, प्राचेतसः, मनुः, बृहस्पतिः, शुक्रः, भारद्वाजः, वेदव्यासः, गौरशिराः इत्येते राजशास्त्रस्य संज्ञापका आसन्।[३] महाभारतेऽपि बृहस्पति-भारद्वाजौ अर्थशास्त्रप्रणेतारौ कथितौ, अश्वघोषेणापि राजशास्त्रप्रणेतारौ स्वीकृतौ।[४] एष निष्कर्षः यत् राजशास्त्रस्य धर्मशास्त्रसापेक्षता स्वीकृता, परं तस्य उत्पत्तिः न धर्मशास्त्रतः अङ्गीकृता।

राजशास्त्रेण राजेव राज्यमपि बोध्यते, किन्तु व्यक्तिवादिमनोवृत्तीनां विकासेन समं तदेव राजशास्त्रं नृपशास्त्रपदेनापि व्यवह्रियते स्म। पञ्चतन्त्रस्य प्रथमपद्ये मनुशुक्रचाणक्यपाराशरादयः राजशास्त्रप्रणेतारः कथिताः।[५] समाजस्य आरम्भदशायां राज्ञा दण्डेन च रहिता प्रजा धर्मेण एव शासिता आसीत्। एषा स्थितिः दीर्घकालं स्थातुं न अशकत्। येन राज्ञः दण्डस्य च उत्पत्तिर्जाता। उत्तरकाले धर्मशास्त्रस्य स्थानं दण्डशास्त्रेणैव गृहीतम्; राजशास्त्रमेव च दण्डशास्त्रव्यपदेशं प्राप। मनुष्यः दण्डेनैव सन्मार्गं प्राप्तुं शक्नोति। 'नश्येत् त्रयी दण्डनीतौ हतायाम्' इत्येवंविधा धारणा स्वीकृता, न केवलं मनुष्यस्य एव, अपि तु प्राणिमात्रस्य त्रैलोक्यस्य च

१. युगप्रवर्तको राजा राजधर्मप्रशिक्षणात्।
युगानां न प्रजानां न दोषः किन्तु नृपस्य तु॥
(शुक्र० ४।१।६०)

२. म० शा० प० ३०।७९, ८०, ८३; का० सू० १।५-८।

३. नीतिप्र० १।२१-२२।

४. यद्राज्यशास्त्रं भृगुरङ्गिरा वा न चक्रतुर्वंशकरावृषी तौ।
तयोः सुतौ तौ च ससर्जतुस्तत् कालेन शुक्रश्च बृहस्पतिश्च॥
(बुद्धचरितम् १।४६)

५. प्रो० एडगर्टन संस्करणम्।

सञ्चालनं दण्डेनैव शक्यम् आसीत्।[1] राज्ञा सह दण्डस्य तादात्म्यम् इव अभूत्। दण्डतः एव वर्णानाम्, आश्रमाणां समाजस्य च विकास आसीत्।[2] एवं राजधर्मः दण्डनीति-स्वरूपताम् आपन्नः। आन्वीक्षिकीत्रयीवार्तानां योगक्षेमयोः साधनभूता नीतिरेव दण्डनीतिरिति व्यपदिष्टा। अलब्धस्य लाभः लब्धस्य परिरक्षणम्, समृद्धस्य सम्यग् विनियोजनं च इत्यादिकमेव दण्डनीतेः उद्देश्यतया स्वीकृतम्। तदनुसारं धर्मे दृष्टफलविषयकं षाड्गुण्यरूपं कर्त्तव्यम् आयाति। एतदेव च राजधर्मः।[3] किन्तु यदा महाभारतकृतराजधर्मे सर्वान् अपि धर्मान् समावेशयति, तदा षाड्गुण्यादि-स्वरूप एव राजधर्मः कथम्? इति तु विचारणीयम्।

वैदिकपरम्परायां राजधर्मस्य स्थापनावसरे न ततः क्षात्रशक्तिर्दूरीकृता। इदं स्वीकृतं यत् पुरुषः सदाचारवान् भवितुं शक्नोति, तदर्थं न दण्डशक्तेः आवश्यकता। परं समाजः समष्टिरूपेण नैवंविधो भवितुं शक्नोति। एतदर्थं राजधर्मः अपेक्षणीय एव। बौद्धैरपि राजधर्मो व्याख्यातः। परन्तु तदनुसारं दयया कर्त्तव्यपालनेन च समाजस्य सञ्चालनं शक्यम्, न तदर्थं दण्डनीतेः आवश्यकता। अत एव द्वयोः सम्प्रदाययोः राजधर्मे महान् भेदः।

'राजधर्मः' 'धर्मराजः' इति द्वौ शब्दौ। वैदिकपरम्परायां राज्येन धर्मस्य रक्षा शक्या अभवत्। बौद्धैरपि धर्मचक्रप्रवर्तनार्थं राज्यस्य आवश्यकता स्वीकृता। तैरपि राज्यं साधनतया स्वीकृतम्।

अत्रेदम् अवधेयं यत् स्थितिद्वयेऽपि धर्मः राजानम् अपेक्षते स्म। किन्तु एष धर्मः राज्येन राज्ञा वा रक्षितः, न वास्तवो धर्मः; अपि तु समाजस्य कतिपय-वर्गीयमान्यता एव भवितुं शक्नोति। ईदृशं धर्मं समाजव्यापकरूपेण अङ्गीचकार। समाजं शासनमार्गे प्रापयितुं धर्मे प्रवर्तयितुं च राजशासनम् आवश्यकम् अभूत्।

---

१. दण्डेन नीयते नीतिः चेदं नयति वा पुनः।
दण्डनीतिरिति ख्याता त्रीन् लोकानभिवर्तते॥
(म० शा० प० ५९।७८)

२. दण्डनीतिः स्वधर्मेभ्यः चातुर्वर्ण्यं नियच्छति।
प्रयुक्ता स्वामिना सम्यक् अधर्मेभ्यो नियच्छति॥
(म० शा० प० ५६।७६)

३. आन्वीक्षिकीत्रयीवार्तानां योगक्षेमात्मको दण्डः। तस्य नीतिः दण्डनीतिः। अलब्ध-लाभार्था, लब्धपरिरक्षिणी, रक्षितस्य विवर्धिनी, वृद्धस्य तीर्थेषु प्रतिपादिनी च—(कौटलीयम् अर्थशास्त्रम् १।४।, शुक्र० १।१।५७)।
दमो दण्ड इति ख्यातस्तस्माद् दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते॥
(नीतिसारः २।२५)

अनिवार्यतया धर्मपालनं कारयति राजधर्मे एव सर्वे धर्माः अन्तर्भवन्ति। तस्य विशाले हस्तिपदे सर्वेषां चरणानि निमज्जन्ति।[१] एष एव महाभारतीयराजधर्मः, यत्र स्थानीयसङ्घटनतः केन्द्रं यावत् समस्ताः शक्तयः राज्ञैव निर्दिश्यन्ते स्म। एष एव बौद्धानां 'चक्कवत्ति राज्यम्', यत्र बौद्धसंघस्यापि आध्यक्ष्यं राज्ञा अशोकेन लभ्यते। अस्मिन् काले धमराज्यस्य स्थाने राजधर्म एव प्रसरति।

अर्थशास्त्रं दण्डनीतेः पर्यायतामाप्तमस्ति। यदा आपस्तम्बेन राज्ञः कृते पुरोहितस्य आवश्यकता प्रतिपादिता, तदा अर्थशास्त्रस्य धर्मशास्त्रस्य च ज्ञानं पुरोहितस्य कृते आवश्यकमिति स्वीकृतम्।[२] अनुशासनपर्वणि एतद् लभ्यते यद् बृहस्पतिना अन्यैश्च आचार्यैः अर्थशास्त्रं व्यरचि इति।[३] द्रोणपर्वणि मानव्याः अर्थविद्यायाः उल्लेखोऽस्ति। काशीप्रसादजायसवालमहोदयेन एतद् विषये बहु विवेचितम्।[४] शान्तिपर्वणि राजोपदेशावसरे कथितं यत् यो राजा धर्मं कामं च उपेक्ष्य केवलम् अर्थशास्त्रमेव आश्रयते, तस्य अर्थोऽपि विनश्यति।[५] यो राजा अर्थशास्त्रानुसारं कार्यं सञ्चालयति स श्रेष्ठः।[६] रामायणे श्रीरामचन्द्रस्य उपाध्यायः सुधन्वा अर्थशास्त्रवेत्ता इति कथितम्।[७] कौटलीयार्थशास्त्रस्य तु आरम्भे एव इदं प्रतिपादितम् अस्ति यत् अनेकानि अर्थशास्त्राणि अधीत्य इदम् अर्थशास्त्रं मया विरच्यत इति। मनुना अन्यैश्च शास्त्रकारैः पुरुषार्थचतुष्टयं पुरुषस्य लक्ष्यं स्वीकृतम्।[८] किन्तु कौटल्येन

---

१. बाह्वायत्तं क्षत्रियैर्मानवानां लोकश्रेष्ठं धर्ममासेवमानैः।
सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मादिति वेदाच्छृणोमि॥
यथा राजन् हस्तिपदे पदानि संलीयन्ते सर्वसत्त्वोद्भवानि।
एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थं सम्प्रलीनान्निबोध॥
अल्पाश्रयानल्पफलान् वदन्ति धर्मान् न्यायान् धर्मविदो मनुष्याः।
महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं नेतरं प्राहुरार्याः॥
सर्वे धर्माः राजधर्मप्रधानाः सर्वे वर्णाः पाल्यमानाः भवन्ति।
(म० शा० प० ६३।२४-२६)

२. आ० ध० सू० २।५।१०।१६।

३. महा० अनु० प० ३९।१०-११।

४. काशीप्रसादजायसवाल, मनु एण्ड याज्ञवल्क्य, पृ० ५, ७, २५, २६, ४१, ४२, ५०, ८४।

५. महा० शा० प० ७२।१४।

६. म० शा० प० ७२।१०९।

७. रामा० अयोध्याकाण्डम् १००।१४।

८. मनु० ७।९९-१००; म० शा० १०२।५७; १०४।५; याज्ञ० १।३१७; नीतिसार: १०।७।

उद्देश्यद्वयं स्वीकृतमस्ति, यथा शान्तिपर्वणि (६९।१०२) अपि प्रतिपादितम्। दण्डिना दशकुमारचरिते षट्सहस्रश्लोकसमन्वितस्य अर्थशास्त्रस्य उल्लेखः कृतोऽस्ति।[1]

मेधातिथिना मिताक्षराकारेण च दण्डनीत्यर्थशास्त्रयोः कश्चन विशेषरूपेण भेदो न प्रतिपादितः।[2] कामसूत्रे अनयोः एव सामान्यः भेदः उक्तः यत् अर्थविषयकं शास्त्रम् अर्थशास्त्रम्, प्रशासनविषयकं शास्त्रं दण्डनीतिः।[3] फलतः धर्मशास्त्रार्थशास्त्रयोः कः सम्बन्धः इत्येष विचारोऽपि पुरःस्फुरति। उक्तदृष्ट्या एव आधुनिका विद्वांसः मन्यन्ते यदर्थशास्त्रे धर्मः उपेक्षितः। वस्तुतः कौटल्येन अन्यैश्च अर्थशास्त्रकारैः धर्मः आदृतः, किन्तु तेषां प्रतिपाद्यो विषयः न धर्मः; अपितु अर्थः अर्थविद्या च। तत्र धर्मस्य सम्बन्धादेशनिर्देशादीनां चर्चा एव न उदेति। फलतः अर्थशास्त्रं दृष्टार्थकं कथितमस्ति। क्वचित् क्वचिद् अर्थशास्त्रं व्यवहारशास्त्रमित्यपि कथितम् अस्ति।[4] मनुस्मृतेः (७।१) व्याख्यायां मेधातिथिना धर्मराजधर्मयोः सम्बन्धः इत्थम् उक्तः—"धर्मशब्दः कर्त्तव्यतावचनः इत्युक्तम्। कर्त्तव्यञ्च दृष्टार्थं षाड्गुण्यादि। अदृष्टार्थम् अग्निहोत्रादि। तत्र इह प्राधान्येन दृष्टार्थं उपदिश्यते।" स्पष्टं यत् दृष्टार्थसम्बद्धप्रशासनादिकमेव राजधर्म इति प्रसिद्धिः। राजधर्मस्य कृते अन्यौ अपि द्वौ शब्दौ प्रयुज्येते, नीतिशास्त्रं राजनीतिशास्त्रञ्चेति। कौटलीयार्थशास्त्रमहोदधेरेव कामन्दकेन नीतिसारात्मकम् अमृतम् उद्धृतम्।[5] पञ्चतन्त्रे अर्थशास्त्रनीतिशास्त्रशब्दौ पर्यायतया स्वीकृतौ। याज्ञवल्क्यव्याख्यायां मिताक्षरायां टीकाकृता लिखितमस्ति यत् स्मृतिकृता राजनीतिशास्त्रमेव अर्थशास्त्रम् इति अभिप्रेतम्, यतो हि अर्थशास्त्रं खलु धर्मशास्त्रस्य अङ्गम्। बहुत्र राजनीतिशास्त्रशब्दः अर्थनीतिशास्त्रशब्दश्च पर्यायतया प्रयुक्तौ स्तः।[6] अनेन सम्बद्धः अन्योऽपि शब्दः 'नयः' इति

---

१. अधीष्व तावद् दण्डनीतिम्। इयमिदानीम् आचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता। येऽपि मन्त्रकर्कशाः शास्त्रतन्त्रकाराः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयः—(दशकुमारचरितम् ८, पृ० १३१, १३३)।

२. मनु० ७।४३ मेधातिथिः; याज्ञवल्क्य० १।३१३ मिताक्षरा।

३. कामसूत्रम् १।२०।

४. अपरार्कः पृ० ६२६। उद्धृतभविष्यपुराणकानि वचनानि; स्मृतिचन्द्रिकायाम् पृ० २४; वीरमित्रोदये पृ० १९।

५. नीतिशास्त्रामृतं धीमानर्थशास्त्रमहोदधेः।
तत्सर्वं राजशार्दूल नीतिशास्त्रेति वर्णितम्॥
(कामन्दकीयनीतिसारः १।६)
यैर्यैरुपायैर्लोकस्तु न चलयेदार्य वर्त्मनः।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितम्॥
(शां० प० ५९।७४)

६. रघुवंशे १७।६८; भगवद्गीता १०।३८; आश्रमवासिकपर्व ६।५; मनु० ७।१७७; म० शां० प० ३।७३, १३८, ३९, ४३, १९६, २६८, ९; अनुशा० प० १६३।७; द्रोणप० १।५२।२९; म० शा० प० ३७।९।

अस्ति। अर्थशास्त्रे 'नय' इति 'अनय' इति च द्वौ शब्दौ प्रयुक्तौ स्तः। किरातार्जुनीयेऽपि (२।३; १२। ५४; १३।१७) नयशब्दः प्रयुक्तः। धर्मशास्त्रेण राजधर्मस्य सम्बन्धस्वीक्रियमाणे अर्थशास्त्रधर्मशास्त्रयोः पारस्परिकस्य सम्बन्धस्यापि विवेचनम् आवश्यकं भवति। राजकर्त्तव्यसम्बद्धतया अर्थशास्त्रस्य धर्मशास्त्रेण सम्बन्धः आवश्यकः। धर्मशास्त्रस्य विशेषतः अदृष्टविषयकत्वेन धर्मशास्त्रे राजशास्त्रसम्बन्धिनः विषयाः विस्तरेण न वर्णिताः। कामसूत्रकृता स्पष्टमेव लिखितं यत् चतुर्षु पुरुषार्थेषु धर्मः उत्कृष्टतमः, कामश्च निकृष्टतम इति।[1] अत एव अर्थशास्त्रं न धर्मशास्त्रसमं पुरुषार्थचतुष्टयस्य प्रतिपादकम्। याज्ञवल्क्यादयः स्मृतिकाराः "अर्थशास्त्राद् धर्मशास्त्रं बलीयः" इत्येव मन्यन्ते।[2] एतद्विषये कौटल्यस्य वचनम् अवधेयमस्ति—

संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम्।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिर्णयेत्॥
शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्।
न्यायस्तत्र प्रमाणं स्यात् तत्र पाठो हि नश्यति॥

(अर्थशास्त्रम् ३।१)।

अतोऽपि सुस्पष्टानि वचनानि एतद्विषये लभ्यन्ते यत्र धर्मार्थकामानां सम्बन्धो विवेचितः। "धर्ममूलत्वात् कामफलत्वाच्च अर्थस्वधर्मार्थकामानुबन्धस्य सिद्धिः सा सर्वार्थसिद्धिः" (अर्थशास्त्रम ९।७।१७), किन्तु अर्थशास्त्रकारैः नैतिका नियमा एव धर्मशास्त्रविषयतया स्वीकृताः। "सुखस्य मूलं धर्मः" इति स्वीकारानन्तरं 'धर्मस्य मूलमर्थः' इत्येव स्वीकृतम्। विश्वनाथेन याज्ञवल्क्यस्मृतेः (२।२१) कानिचित् एवंविधानि वचनानि उदाहृतानि, यत्र अर्थशास्त्रधर्मशास्त्रयोः अस्ति विषयवादः। मनुस्मृतौ (८।३५१) व्यावहारिकदृष्ट्या न कश्चित् दण्डः स्वीकृतः अत्याचारिणो वधे, किन्तु अत्याचारिणः अपि ब्राह्मणस्य वधे ईदृशं महत्पातकं भवति यत् निराकर्तुं प्रायश्चित्तमपि न प्रभवति। मनुस्मृतौ (११।८९) मिताक्षरायामपि एतदेव उदाहृतम्। याज्ञवल्क्यस्मृतौ (३।३५२) कथितं यत् राजा मित्राणि प्राप्नुयात्, परन्तु अन्यत्र कथितं यत् न्यायविषये राजा मित्रादिकमपि न पर्यालोचयेत्। अर्थशास्त्रम् उपवेदः अमन्यत।[3] कौटल्येन धर्मशास्त्रम् अर्थ-

---

१. कामसूत्रम् १।२।१४।

२. आ० ध० सू० १।९।२४।२३; याज्ञ० २।२१; नारदव्यवहारमातृका १।३९।

३. आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्या अष्टादशैव ताः॥
(विष्णुपुराणम् ३।६।२८)

शास्त्रञ्च इतिहासान्तर्गतम् इति स्वीकृतम्।[1]

अर्थशास्त्रं धर्मशास्त्रस्य अङ्गमिति स्वीकृतमेव। परन्तु अर्थशास्त्रे, महाभारते, अन्यत्र वा यत्र कुत्रापि राजधर्मप्रकरणम् अस्ति, तत्र अनैतिका अपि नियमाः शासने स्वीकृताः। कणिकस्य नीतिधर्मः अनैतिकानामपि नियमानां राजधर्माङ्गतां स्वीकरोति, येषाम् अनैतिकनियमानाम् आचरणं पापमेव स्वीकृतं धर्मशास्त्रे। शान्तिपर्वणि भीष्मेणापि आपत्काले तेषां नियमानाम् आश्रयणम् अनुमोदितम्।[2] निम्नलिखितानि ( आदिपर्वणि १४० अ० ) कानिचित् उदाहरणानि विषयं स्पष्टयन्ति —

कुर्यात् तृणमयं चापं शयीत मृगशायिकाम्।
सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितम्॥ १३॥
छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः।
कथं तु शाखा तिष्ठेरंश्छिन्नमूले वनस्पतौ॥ १७॥
एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः।
राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत्॥ १८॥
दृष्ट्वैवाचेष्टमानं तु भूमौ मृगकलेवरम्।
स्नात्वागच्छत भद्रं वो रक्षामीत्याह जम्बुकः॥ ३२॥
एवं समाचरन्नित्यं सुखमेधेत भूपतिः।
भयेन भेदयेद् भीरुं शूरमञ्जलिकर्मणा॥ ५०॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम्॥ ५४॥
अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः।
स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः॥ ५८॥
वाचा भृशं विनीतः स्याद् हृदयेन तथा क्षुरः।
स्मितपूर्वाभिभाषी स्यात् सृष्टो रौद्रेण कर्मणा॥ ६६॥

---

१. पश्चिमम् इतिहासश्रवणे। पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रञ्चेतिहासः ( अर्थशास्त्रम् १।५ )।

२. म० भा० आदि० १४० अध्यायः; शान्ति० १४० अध्यायः।

अञ्जलिः शपथः सान्त्वं शिरसा पादवन्दनम् ।
आशाकरणमित्येवं कर्त्तव्यं भूतिमिच्छता ॥ ६७ ॥

'अर्थशास्त्रं कया रीत्या उक्तां नीतिं समर्थयितुं शक्नोति' इति युधिष्ठिरमुपदिशता भीष्मेण कथितं यद्राजधर्मः कदाचित् दस्युधर्मायते। भीष्मेण तादृशस्य राजधर्मस्य स्रोतः धर्मशास्त्रमिति नाङ्गीकृतम्, यस्मिन्नंशेऽनैतिकता समर्थिता। राजधर्मे शाश्वतस्य धार्मिकस्य च सत्यस्य स्थापनार्थं राज्ञो विवेकः, परिस्थितिः, शत्रूणां नीतिरित्यादिकमालोच्य कार्यं कर्तुं स्वातन्त्र्यं प्रदत्तमस्ति। इदृशी एव नीतिरिन्द्रेण बृहस्पतेर्लब्ध्वा शत्रुर्जितः। शान्तिकर्मणि निर्बलाय राज्ञे एतत्-सौविध्यं प्रदत्तमस्ति यत्स सबलं शत्रुं युद्धद्वारा जेतुं न शक्नोति, तदा अग्नि-विषादिप्रयोगेण सबलं शत्रुं स निगृह्णीयात्।

अविश्वासः खलु राजनीतेराधारभूत इत्यभ्युपगतम्। यदि नैतिक-नियमानुसारं राज्यरक्षा न सम्भवेत् तर्हि राज्यरक्षार्थं सर्वविधा अप्यनैतिकाः मार्गाः राज्ञा आश्रयणीया इति महाभारतकृता आदिश्यत। परन्तु अत्रेदमवधेयं यत् केवलं राज्यरक्षार्थमेव राजा एवं कर्तुं शक्नोति; यदि स ईदृशाननैतिकान् नियमान् सर्वत्र प्रयुञ्जीत, अथ च तान् सर्वान् नैतिकान् एव मन्वेत तदा स राजा अनैतिक एव भवेत्।

कौटलीयेऽर्थशास्त्रे राज्यरक्षाविषये यत्किमपि प्रतिपादितं तदवधेयमस्ति। प्रथमाधिकरणस्य सप्तदशाध्यायस्य त्रयोदशप्रकरणमत्रोद्ध्रियते यत्र अर्थशास्त्रस्य नीतिः सुप्रकाशते —

"रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः परेभ्यश्च। १। पूर्वं दारेभ्यः पुत्रेभ्यश्च। २। पुत्ररक्षणं जन्मप्रभृति राजपुत्रान् रक्षेत्। ५। कर्कटसधर्माणो हि जनकभक्षाः राजपुत्राः। ६। तेषामजातस्नेहे पितर्युपांशुदण्डः श्रेयानिति भारद्वाजः। ७। नृशंस-मदृष्टवधः क्षत्रबीजविनाशश्चेति विशालाक्षः। ८। तस्मादेकस्थानावरोधः श्रेया-निति। ९। अहिभयमेतदिति पाराशराः। १०। कुमारो हि विक्रमभयात् मां पिता रुणद्धीति ज्ञात्वा तमङ्के कुर्यात्। ११। तस्मादन्तपालदुर्गे वासः श्रेयानिति। १२। औरभ्रकं भयमतदिति पिशुनः। १३। प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वान्तपालसखः स्यात्। १४। तस्मात् स्वविषयादपकृष्टे सामन्तदुर्गे वासः श्रेयान् इति। १५।"

"वत्सस्थानमेतदिति कौणपदन्तः। १६। वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात्। १७। तस्मात् मातृबन्धुषु वासः श्रेयानिति। १८। ध्वजस्थानमेत-दिति वातव्याधिः। १९। तेन हि ध्वजेनादितिकौशिकवदस्य मातृबान्धवा भिक्षे-रन्। २०। तस्माद् ग्राम्यधर्मेष्वेनमवसृजेयुः। २१। सुखोपरुद्धा हि पुत्राः पितरं नाभि-

द्रुह्यन्तीति । २२ । जीवन्मरणमेतदिति कौटल्यः । २३ । काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । २४ ।"

"सत्रिणमेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत् । २९ । पितरि विक्रम्य राज्यं गृहाणेति । ३० । तदन्यः सत्री प्रतिषेधयेदित्याम्भीयाः । ३१ । महादोषमबुद्धबोधनमिति कौटल्यः । ३२ । तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थञ्च । ३५ ।"

अर्थशास्त्रीयस्य एकस्य प्रकरणस्य उक्तानाम् अंशानां पर्यालोचनेन इदं स्पष्टीभवति यत् कौटल्यात् पूर्ववर्तिभिरर्थशास्त्रिभिः धर्मशास्त्रमर्यादारहितो राजधर्मः स्थापित आसीत् । कौटल्यः 'कुटिलमतिः' इति जैनाचार्याणामुक्तिः पाश्चात्त्यैरपि स्वीकृता । अत एव मेकेवली इत्यनेन कौटल्यस्य तुलना तैः पूर्वाचार्यैः कृता, किन्तु उक्ते विवेचने कौटल्यमतस्य पर्यालोचने क्रियमाणे स्पष्टं भवति यत्तेन सन्तुलितः व्यावहारिकः नैतिकश्च मार्गः आधिक्येन स्वीकृतः । अर्थशास्त्रधर्मशास्त्रसम्बन्धविषयकः प्रस्तुतो विषयः उक्तोदाहरणद्वयेन स्पष्टं यद्राजधर्मः न केवलं धर्मशास्त्रस्य अङ्गम् अपि तु राजधर्मस्य स्वातन्त्र्येण सत्ता वर्तते । तस्याः स्वतन्त्रताया एष आशयः पाश्चात्त्यैरमन्यत यद्राजधर्मः धर्मशास्त्रविरोधिसम्प्रदायः । इदमेकदेशिमतं तथ्यहीनं च अस्ति । धर्मशास्त्रराजधर्मयोः परस्परं विरोध इत्यपि निर्मूलमेव । तादृशानां विषयाणां समन्वयः अस्माभिः करणीयः यत्र विरोधः आभासते । ईदृशस्य विरोधस्य विवरणमन्यत्र धर्मशास्त्रस्य अर्थशास्त्रस्य च सम्बन्धनिरूपणावसरे प्रस्तोष्यते । अत्रेदमेवास्माकं तात्पर्यं यद्राजधर्मस्य स्वतन्त्रमस्तित्वम्, न केवलं तस्य धर्मशास्त्राङ्गतैव मन्तव्या ।

विण्टरनित्जमतानुसारेणार्थशास्त्रं धर्मशास्त्रस्य अङ्गमासीत् । पश्चात् अस्य स्वतन्त्रं स्वरूपमभवत् । महाभारते तु सम्प्रदायाः स्वतन्त्रतया विकासमाप्ताः ।[१] काणेमहोदयः मन्यते यत् यद्यपि एतयोरुभयोरपि सम्प्रदाययोः मूलभूतमन्तरम्, तथापि मूलभूतस्य कस्यचिदेकस्यैव सम्प्रदायस्य उभावप्यङ्गाविति ।

अर्थशास्त्रं धर्मशास्त्रत एव विकासमाप्तम् ।[२] डॉ नरेन्द्रनाथमहोदयस्य तु इदं मतं यदनयोः द्वयोरपि सम्प्रदाययोः समानतया स्वतन्त्रतया च विकासो

---

१. Winternitz; Calcutta Review, April 1924, P. 23.
N. N. Law; Studies the Indian History and Culture, PP. 256-57.

२. P. V. Kane; History of Dharmashastra, Vol. I, PP. 9, 24.

जातः। धर्मसूत्रैरेव द्वयोरपि सम्प्रदाययोः स्वतन्त्रमस्तित्वं बोध्यते।[१] फलतः, तदानीं राज्याङ्गानां राजशास्त्रस्य च विकासः न समभवत्।[२] वस्तुतः, एवंविधाः विचाराः निर्मूलाः। डॉ० लॉ० महोदयस्य विचारस्तथ्यपूर्णोऽस्ति। धर्मसूत्रेषु अर्थशास्त्रपरम्परायाः विकास उपलभ्यते। मनुस्मृतौ प्रतिपादितं मतमिदं यद् ब्रह्मतेजोमयं दण्डमीश्वरेण सृष्टम्।[३] इत्थं दण्डनीतेरुत्पत्तिपरम्परा पूर्वाचार्यमतनिर्देशपुरस्सरं यथा अस्माभिः वर्णिता, तत्र दण्डनीतेरुत्पत्तिः साक्षाद् ब्रह्मण इति स्वीकृतम्।

प्रोफेसर के० वी० रङ्गस्वामी आयङ्गरमहोदयो मन्यते यन्निश्चितमेव अर्थशास्त्रस्य स्वतन्त्रतया विकासोऽभूदिति। नीतिशास्त्रसम्बन्धिशास्त्रस्य साहित्यमात्रस्य च विषयस्थापना, उद्देश्यं शैली च इत्यादिकं धर्मशास्त्रतः विलक्षणं प्रतीयते।[४] एतदवश्यं यदर्थशास्त्राद्धर्मशास्त्रं बलीय इति याज्ञवल्क्यमतं कौटल्योऽपि समर्थयते। ए०बो० कीथप्रभृतयः मन्वते यदर्थशास्त्रम्, नीतिशास्त्रम्, राजनीतिशास्त्रञ्चेत्यादिकं राजधर्ममेव उपवर्णयति। अत्र धर्मशास्त्रस्यविरोधोऽपि परिलक्ष्यते। धर्मः नैतिकता चेति धर्मशास्त्रस्य विषयः, अर्थशास्त्रस्य तु प्रशासनमेव विषयः। धर्मशासने यावानंशः राजप्रशासने उपयुक्तोऽस्ति तावन्तमेव अंशमर्थशास्त्रमुपादत्ते।[५] हिरण्यकेशीयगृह्यसूत्रत एव अर्थशास्त्रपरम्परा आरभ्यते।[६] अत्र विषये कीथमहोदयेन दुराग्रहः कृतः। धर्मशास्त्रप्रतिकूलाया अर्थशास्त्रपरम्परायाः विकासस्य स्थापनमेव तस्य (कीथमहोदयस्य) उद्देश्यम्। अस्य सिद्धान्तस्य स्थापनार्थं कीथमहोदयः वस्तुस्थितिमन्यथयतीति। यदा एष साहित्यस्य कवितायाश्च प्राचीनतां विवेचयति, तदा तदीयलौकिकभावनायाः स्वतन्त्रमस्तित्वं न स्वीकरोति, अपि तु धार्मिकः परम्पराङ्गतामेव मनुते।[७] परन्तु अर्थशास्त्रविषये एष महाभागः उपयुक्तं मतं व्यवस्थापयति यत् स्वग्रन्थविरोधादेवम्।

---

१. Law; op. cit. PP. 25-7-58.

२. A. A. Macdonell; Vedic Index, II. P. 463.

३. तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः॥
(मनु० ७।१४)

४. B. K. V. Rangswami Ayangar; Some Aspects of Ancient Indian Polity, PP. 53-52.

५. Kieth; History of Sanskrit litereture, P. 243.

६. Ibid. P. 451.

७. Ibid. P. 405.

अनेन विवेचनेन केचन निष्कर्षाः पुरः आयान्ति। तथा हि राजधर्मः धर्मशास्त्रस्य अङ्गम् इति भारतीयपरम्परासम्मतः पक्षः। सर्वविधोऽपि ज्ञानराशिः वेदात् विकासमायाति इति।

श्रुतिस्मृत्यादीनां सम्बन्धस्य धर्मशास्त्रीयपक्षानुसारिनिरूपणं मनुस्मृतेः कतिपयैः वचनैः स्पष्टीभवति —

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनाम् आत्मनस्तुष्टिरेव च॥
यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥
सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै॥
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥
योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्।
अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥

(२।६-१३)

धर्मशास्त्रदण्डनीत्योर्विषये मनुः —

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः॥

(७।४३)

अत्र दण्डनीतिपरम्पराविषये कुल्लूकभट्टस्यापि मतम् अवधेयम्- "दण्डनीतिं चार्थशास्त्ररूपामर्थयोगक्षेमोपदेशिनीं पारम्पर्यागतत्वेन नित्यां तद्विद्येभ्योऽधिगच्छेत्।" इति मनुस्मृतौ दृश्यमाना दण्डोत्पत्तिविषयकाः श्लोकाः प्रकृतविषयं स्पष्टीकरणे सहायकाः भविष्यन्ति। अतस्तेऽत्र उद्ध्रियन्ते—

तस्माद् धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥
तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद् भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥
तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्तिषु ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥
समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥

( ७।१३-१९ )

अर्थशास्त्रे कौटल्येन उभयोः कार्यक्षेत्रम् अपि पृथक् कृतम्– "धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्तायाम्, नयापनयौ दण्डनीत्याम्" ( १।२।११ ) । अत्र कौटल्यः—

चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात् ।
नश्यतां सर्वधर्माणां राजा धर्मप्रवर्तकः ॥
धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः ॥

( ३।१।५०-५१ )

"अर्थशास्त्रं तु बलवद् धर्मशास्त्रमिति स्थितिः" इति याज्ञवल्क्यवचनेन तु इदमेव वक्तुं शक्यते यद् यत्र अर्थशास्त्रधर्मशास्त्रयोः विरोधः, तत्र धर्मशास्त्रं बलवदिति । न एतावता अर्थशास्त्राज्ञता वक्तुं शक्यते; वस्तुतः शतपथ-ब्राह्मणानुसारेण ( ५।४।४।७ ) धार्मिकविधिना सहैव दण्डनीतेः संस्कारः राजविषये प्रवर्तत इति ।

अर्थशास्त्रे उपस्थापितेन उशनसो मतेन इदं व्यज्यते यद् धार्मिकविधि-विषये धर्मसूत्राणामिव व्यावहारिकविधीनामपि प्रयोगः क्रियते स्म । अर्थशास्त्रस्य

यादृशी व्याख्या कृता अस्ति, तत्र आर्थिकसिद्धान्तः, जनप्रशासनम्, विदेशनीतिः, युद्धविद्या, व्यवहारविधिः, सामाजिकसंघटनञ्च इत्येतेषां समावेशः क्रियते। अर्थशास्त्रं व्यावहारिकं शास्त्रम्। अतोऽत्र वैदिकवचनानां न केवलं विस्तारः, अपि तु व्यक्तिः, समाजः, परिस्थितिः इत्येतेषां प्रयोगो यथाविवेकं कृतो विद्यते। अर्थशास्त्रे न कस्यापि धर्मशास्त्रवचनस्य उल्लेखोऽस्ति। एतेन एतज्ज्ञायते यत् कौटल्येन परम्पराणाम् अन्धानुकरणं न स्वीकृतम्। 'विधायकविधेः' (positive law) विकास एव तस्य ध्येयभूत आसीत्। स राजनीतेः सैद्धान्तिकपक्षापेक्षया व्यावहारिकं पक्षम् आद्रियते। अत एव अर्थः जीवनाधारतया स्वीकृतः, अथ च दण्डनीतेः व्याख्यायां भौतिकशक्तीनां प्रभावः स्वीकृतः। इत्थं च जनोपलब्ध्यर्थं प्राशासनिकं विज्ञानम् एव अर्थशास्त्रस्य संक्षिप्तं स्वरूपम्। परन्तु जनोपलब्धि-विषये वैदिकपरम्परा न अनादृता। अस्यैव वैदिकपरम्परास्वरूपस्य रक्षायां राज्यस्य राजतन्त्रस्य च उपयोगितया राजशासनं विधिरिव सम्मन्यते, किन्तु राज्ञः विवेकसम्बन्धी अधिकारः सदाचारसामाजिकविध्यादिभिः नियमितः।

अर्थशास्त्रे व्यवहारविधेः सम्प्रभुता प्रतिपादिता। धर्मः धर्माश्रितपरम्परा-गतनैतिकता च राज्यशक्तिसाधनमभूताम्। अर्थस्य धर्ममूलतया समाजे भौतिकानां तत्त्वानां प्राधान्यम् आवश्यकम् आसीत्। अस्य युगस्य आर्थिक्यां व्यवस्थायां सामन्तवादिन्याः भूमिव्यवस्थायाः, धनवादिन्याः अर्थव्यवस्थायाश्च बीजारोपणं उदितमासीत्। धर्मविषये संस्कारविषये च एतस्य प्रभावोऽभूत्। ताभ्यां च धर्म-संस्काराभ्याम् उपयोगितावादः अवलम्बितः। बौद्धक्रान्तेः पश्चात् पुनः वर्णव्यवस्था-स्थापनस्य कारणं तत्र वर्णव्यवस्थायाम् अस्याः आवश्यकतायाः उचितरीत्या समन्वयः आसीत्। अस्मिन् युगे वर्णव्यवस्थायाः क्षेत्रम् अतीव विस्तीर्णं जातम्। सामाजिकसम्बन्धविषये अवैदिकीभ्योऽपि जातिभ्यः नागरिका अधिकारा अदीयन्त। नैयायिकप्रशासने आर्थिकनियोजने राज्यस्य सम्राज्ञानां संघटने च तत्प्रभावः अभूत्। विभिन्नानां विभागानां नियुक्तिविषये वैदिकानां प्राथम्यं तु स्वीकृतम् अर्थशास्त्रे, परन्तु यथा मनुस्मृतौ पुरोहितब्राह्मणानाञ्चैव ग्राह्यता उक्ता, नात्र तथा। विभिन्नानां विभागानां संघटनविषये याः योग्यताः कौटल्येन निर्दिष्टाः, तत्र व्यष्टीनां साम्यस्य महत्त्वं स्वीकृत्य पारस्परिके सामाजिके संघटने परिवर्तनं कृतमस्ति। तत्र केवलं वर्णश्रेष्ठताम् आधृत्य सौविध्यप्रदानम् अस्वीकृतम्। कार्यमेव दण्डनिर्णयस्य आधार इति मत्वा क्रूरदण्डव्यवस्थायाः स्थाने यथोचितव्यवस्थां स्वीकृत्य नैयायिकप्रशासने अपि अस्य प्रभावः व्यञ्जितः। न्याये दासेभ्योऽपि आर्येभ्य इव सौविध्यं प्रदत्तम्। अथ च, आर्याः कदापि दासा

भवितुं नैव शक्नुवन्ति इति स्वीकृतम् । विभिन्नावश्यकतावशाद् अस्य नूतनस्य संरक्षणस्य कृते राज्ञः सुरक्षा अपेक्षिता आसीत् । अर्थशास्त्रेण च तस्याः प्राथम्यम् उक्तम् ।

अर्थशास्त्रं यावद् राजादीनां विभिन्नानां राज्यस्य घटकानां पूर्णतया विकासः समजायत, परन्तु तत्रापि राज्ञ एव विशेषतः प्राधान्यं स्वीकृतम् । राज्योत्पत्तेः कारणम् इदं स्वीकृतमस्ति यद्राज्ञः अभावे मात्स्यन्यायस्य साम्राज्यं स्यात् । अतः मात्स्यन्यायं निरोद्धुं राज्ञः अनिवार्यता । अत एव भाण्डारकरमहोदयस्य एष विचारः उचित एव यद् अर्थशास्त्रे न सामाजिकः अनुबन्धः, अपि तु प्राशासनिकः एव, यत्र राज्ञः प्रजायाश्च विवेचनम् । एतदवश्यं यत् राज्याङ्गेषु राजशब्दम् अप्रयुज्य तत्स्थाने स्वामिशब्दं प्रयुञ्जानेन कौटल्येन एष सिद्धान्तः गणतन्त्रराजतन्त्रसाधारणः कृतः । अथ च अन्यान् संप्रदायान् निरस्य स्वामिनः एव महत्त्वं स्थापितम् । किन्तु अर्थशास्त्रे राजा प्रजानां सेवकः स्वीकृतः । जना एव च तस्य शक्तेः स्रोतांसि आसन् । अत एव यद्यपि राजा धर्मप्रवर्तकः, तथापि न स जनतायाः नैतिकतायां हस्तक्षेपं करोति, नापि निर्देशम् । धर्मसूत्रानन्तरम् अर्थशास्त्रे सम्प्रभुत्वस्य नूतनं रूपं पदं न्यदधात्, यत्र सर्वेषां समावेश आसीत् । राज्येन जनकल्याणरूपतया प्रशासनरूपतया ईदृशानि कार्याणि अधिकृतानि आसन् यानि सामाजिकीभिः आर्थिकीभिश्च संस्थाभिः, जनजातिसभाभिश्च सम्पाद्यन्ते स्म । अर्थशास्त्रेण प्रशासनक्षेत्रे वर्णव्यवस्थायाः महत्त्वमपि तथा न स्वीकृतः यथा धर्मशास्त्रे, परन्तु अर्थशास्त्रेण भारतीयसमाजस्वरूपे न मनागपि परिवर्तनं कृतम् । पुरुषः स्वसामाजिकानां नियमानां व्यवस्थानाम् आचाराणां च अनुसारमेव कार्यं करोति स्म ।

अग्रे च अर्थशास्त्रधर्मशास्त्रयोः परस्परं विसंवादोऽपि उपस्थितः । तदानीम् एतद्विषये साम्प्रदायिकनिर्णया अभूवन् । याज्ञवल्क्यप्रभृतिभिः धर्मशास्त्रप्रणेतृभिः इदं निर्णीतं यद् यत्र विषये अर्थशास्त्रधर्मशास्त्रे विसंवदतः, तत्र धर्मशास्त्रमेव आदरणीयम् ।[1] एतेन सहैव अर्थशास्त्रधर्मशास्त्रयोः यथा समन्वयः स्यात् तथा अपि प्रयत्नः प्रचलित आसीत् । स्मृतिचन्द्रिकायामुक्तं यद् यत्र द्वयोः न कश्चिद् विरोधः, तत्र द्वे अपि शास्त्रे अनुसरणीये । एतच्चोभयविधिशास्त्रानुसरणं तयोर्मिथः विरोधाभाव एव । अर्थशास्त्रधर्मशास्त्रयोः धर्मशास्त्रस्य बलवत्त्वम् इत्येतद् वीरमित्रोदये यथा उपपादितम् तेन वस्तुस्थितिः प्रकाशमायाति । तदनुसारेण अर्थशास्त्रं केवलं दृष्टविषयकं धर्मशास्त्रं च दृष्टादृष्टोभयविषयकम्, इति । अत एव धर्मशास्त्रस्य क्षेत्रं विस्तीर्णं महत्त्वपूर्णं च ।

१. यत्र विप्रतिपत्तिः स्याद् धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ।।

जायसवालमहोदयः मन्यते यत् कौटल्यः धर्मशास्त्रापेक्षया व्यवहार-शास्त्रम् अधिकम् आद्रियते। केषाञ्चित् कथनं यत् धर्मशास्त्रप्रणेतृभिः तट्टीकाकारस्य बलवत्त्वं स्वीकृतम्, परन्तु अर्थशास्त्रकारैः एषा व्यवस्था स्वीकृता—

धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः॥

(३।१।५१)

इत्येतदाधृत्य जायसवालप्रभृतयः विद्वांसः अर्थशास्त्रस्य धर्मशास्त्रतो बलवत्त्वम् अङ्गीकुर्वन्ति। अत्र उपर्युक्ते वचने केचन विषया अवधेया वर्तन्ते—

(१) ईदृशा आशयाः धर्मशास्त्रेऽपि ध्वनिताः, (२) इमाम् उपर्युक्तां व्यवस्थां विवादविषये एव कौटल्यः स्वीकरोति, (३) कौटल्यः एतान् शब्दान् स्वयं व्याचष्टे। तत्र च बाध्यबाधकभावस्य चर्चैव न उदेति। वस्तुतः कौटल्यः स्वयं धर्मशास्त्रम् आद्रियते। तदनुसारं चरित्रविषये लोकाचारविषये च यत्रांशे धर्मशास्त्रेण विसंवादः, तत्र धर्मशास्त्रानुसारिणी व्यवस्था ज्यायसी।[१]

एतेन विवेचितेन वयम् एतन्निष्कर्षं प्राप्नुमो यद् अर्थशास्त्रधर्मशास्त्रे अतिविस्तीर्णायाः एकस्याः परम्परायाः द्वे अङ्गे। परम्परायाः प्रवाहे केचन विरोधा अपि समुपस्थिताः, येषां परस्परम् एकवाक्यतायाः आधारः वैदिकीपरम्परा आसीत्। परन्तु द्वयोरपि भिन्नविषयकतया ईदृशी उपर्युक्ता स्थितिः क्वचिदेव जाता। यत्रापि ईदृशी स्थितिः उद्भूता तत्र कार्यक्षेत्रम् आधृत्य द्वयोः एकवाक्यता कृता। राजधर्मः न धर्मशास्त्रस्य अङ्गम्, अपि तु स्वतन्त्रमेव शास्त्रम्।

—०—

---

१. संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम्।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिर्णयेत्॥

(अर्थ० ३।१।५६)

# २

# मनुः कौटल्यश्च

## मनुस्मृतेः काश्चित् समस्याः

ऋग्वेदत एव मनोरुल्लेख आरभ्यते। स मानवसृष्टेः मूलम्। अत एव मानव इति संज्ञा प्रवृत्ता इति स्वीक्रियते। परम्परानुसारं वैवस्वतः सावर्णिः स्वायम्भुवश्च मनुः मतः। विवस्वतः अपत्यतया वैवस्वत इति कथ्यते। स्वयमेव उत्पन्नत्वात् स्वयम्भू ब्रह्मा, तस्य अपत्यत्वात् स्वायम्भुवः इति प्रसिद्धिः। विवस्वतः स्त्री सवर्णा नाम्नी आसीत्। अत एव एषः सावर्णिः इत्यपि संज्ञाम् अलभत। एष सृष्टेः आरम्भात् प्रजापतिः इत्यपि कथ्यते, यज्ञांशभाक् च भवति।[1] मैत्रायणब्राह्मणोपनिषद्यपि स देवतात्वेन वर्णितः।[2] ऋषिस्वरूपतया अस्य मनोः उल्लेखो दृश्यते।[3] प्रलयानन्तरम् इडाद्वारा सृष्टेः कर्त्रा मनुना स्वपुत्रेषु सम्पदः विभाजनं कृतमित्यपि उल्लेखः तैत्तिरीयसंहितायाम्।[4] मनुष्यरूपेण सदाचारस्य पालनं कृतमिति उपवर्णितं शतपथब्राह्मणे।[5] पुरूरवसः शर्यातेः इक्ष्वाकोश्च पिता मनुः इत्यपि लभ्यते। तेन विभिन्नानां वैदिकीनां भाषाणां ज्ञानं सम्पादितम्। महाभारते एषः श्राद्धदेव इत्युक्तः।[6] छान्दोग्योपनिषदनुसारम् एतदुपलभ्यते यत् तदीयस्य दर्शनं कारितः प्रजापतिः ब्रह्मणा, तच्च प्रजापतिना मनुना मनुष्यमात्रे प्रसारितञ्च। एवं योगोऽपि भगवतः विवस्वता, ततो मनुना, ततश्च इक्ष्वाकुणा लब्धः।[7] मनुशब्देन अभिप्रेतानां मनूनां मनोर्वा उल्लेखो विद्यते, परन्तु क्वचिदपि बहुवचनान्तः मनुशब्दो न प्रयुक्तः, येनेदं वक्तुं शक्येत यत् अनेके मनवः आसन् इति। अथ च यदि सर्वेऽपि मनुविषयकाः निर्देशाः एव उपलभ्येरन्, तदा नैतद् वक्तुं शक्यते यत् एक एव मनुः आसीदिति।

---

१. प्रजापतये मनवे स्वाहा—( तै० ब्रा० ३।२।८।१।; ४।१।६।१ )।

२. मै० ब्रा० ५।१।

३. यामथर्वा मनुष्पिता दध्यङः धियमयत्नः—( ऋ० १।८०।१६ )।
याभिः पुरा मनवे गातुमीषथुः—( ऋ० १।११२।१६ )।

४. मनुः पुत्रेभ्यो दायं व्यभजत्—( तै० सं० ३।१।६।४ )।

५. शत० ब्रा० १।८।१।

६. महाभा० १२।१२१।२६।

७. भगवद्गीता ४।१-२।

मानवीयानाम् आचाराणां सदाचाराणां विधानानाञ्च विषये मनुना नियमा उक्ताः। तद्विषये कथितमस्ति यत् मनुना यत्किञ्चिदपि उक्तं तद् भेषजम् इति।[1] मनुसंहितायाः एका परम्परा आसीत् इत्यपि निरुक्तावलोकनेन ज्ञायते।[2] उत्तराधिकारविषये निरुक्तकृता स्वायम्भुवमनोः यद् वचनम् उद्धृतम् अस्ति, तत्तु मनुस्मृतौ नैव लभ्यते। किम्बहुना, मनुस्मृत्युक्तम् उत्तराधिकारिविषयकनिर्णयमपि तद्वचनं विसंवदति। श्राद्धशब्दस्य श्राद्धकर्मणश्च आरम्भः मनुना कृतः इति आपस्तम्बसूत्रे दृश्यते।[3] गौतमेनापि मनोः निर्देशः उल्लिखितः।[4] पुत्रेषु सम्पदः समानं विभाजनम् इत्येतद्विषये मनुप्रोक्ता व्यवस्था प्रामाणिकी मन्यते।[5] रजोदर्शनानन्तरं यः कन्यायाः विवाहं करोति तादृशः पिता पापभाक् इति कथयता बौधायनेन मनुः अनुकृतः।[6]

महाभारते चतुर्विंशतिवारं मनोः निर्देशः। तत्र हि षोडशस्थलेषु केवलं मनोः नाम्नः उल्लेखः। एकत्र स्थले राजधर्मविषये प्राचेतसस्य मनोः विचाराः सप्तसु स्थलेषु स्वायम्भुवमनोः स्मृतिसम्बन्धीनि उद्धरणानि दृश्यन्ते। ब्रह्मणः खड्गः मनुना लब्धः इत्यपि एकत्र उल्लेखः। यत्र अन्ततो धर्मः सन्निकृष्टः स मनुः तेन खड्गेन प्राणिमात्रस्य रक्षां करोति। भगवद्गीतायां चतुर्णां मनूनां निर्देशो लभ्यते। पुराणेषु चतुर्दशमनवः निर्दिष्टाः, यैः मन्वन्तराणां क्रमः विकासम् आप्नोति, यत्र षड् मन्वन्तराणि व्यतीतानि। साम्प्रतिकं मन्वन्तरं वैवस्वतमनोः। महाभारते यस्य प्राचेतसस्य मनोः निर्देशः, न स चतुर्दशमनुषु गण्यते। तस्य गणना दशसु ऋषिषु अस्ति, यैः मनुः उत्पादितः। मनुस्मृतौ पुराणेषु च सृष्टिरचनायाः कालपरिगणनम् अतीव विस्तृतम्। तत्र कालचक्रप्रवर्तकः मनुरेव स्वीकृतः।

१. यद्वै किञ्च मनुरब्रवीत् तद् भेषजम्—(तै० सं० २।२।१०।२); मनवे यत् किञ्चित् अवदत्तद् भेषजमभृतायै—( ता० ब्रा० २३।१६।१७ );
यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥
( मनु० २।८ )

२. अविशेषेण पुत्राणां दायो भवति धर्मतः।
मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्॥
( निरुक्त ३।४ )

३. सह देवमनुष्या अस्मिल्लोके पुरा बभूवुः। अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः। तेषु ये कर्माण्यभिरमन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्ति। अथैतन्मनुः श्राद्धशब्दं कर्म च प्रोवाच प्रजानिःश्रेयसं च-(आ० ध० सू० २।१६।१)।

४. त्रीणि प्रथमान्यनिर्देश्यानि मनुः—( गौ० ध० सू० २।१।८ )।

५. बौ० २।३।२।; आप० २।१४।११।

६. बौ० ४।१।१३।; तुलनीयः मनु० ९।९०-९१।

स एव सृष्टेः मूलभूतः पुरुषः संरक्षकश्च। स सम्पूर्णायाः सृष्टेः निर्माता, तथैव विधिनिर्माता च आसीत्। स्वायम्भुवमनोः विधिसंहितायां वर्णधर्मः प्रतिष्ठापितोऽस्ति। वर्णधर्मः मनुसंहिता च दैवरूपतया स्वीक्रियते स्म।

सर्वेषाम् ऋषीणां मनूनाञ्च अमरत्वं पुराणेषु प्रतिपादितम् अस्ति। ते सदाचारस्य परम्परायाश्च सञ्चालकाः विधिनियन्तारश्च सन्ति। तैरेव विश्वचक्रं प्रचाल्यते। ते प्रतिसृष्ट्यारम्भे प्रजां धर्मं बोधयन्ति। वर्तमानसृष्ट्यर्थं मनुना मनुस्मृतिः प्रोक्ता। या च विधिसंहिता एव।[१] मेधातिथिना मनुशब्दस्य प्रयोगः पदपरत्वेन कृतः, न तु नामपरत्वेन। एवंविधपरम्परायाः प्रचारेण सम्प्रदायो न विच्छिद्यते। वर्तमानो मनुः इन्द्रवाय्वादिदेवतास्वरूपः स्वीकृतः। तदीया स्मृतिश्च वेदमूलिका स्वीकृता अस्ति।[२] अत एव मनुस्मृतेः प्रामाण्याद् अधिकं प्रमाणं न कस्या अपि स्मृतेः।[३]

कल्पानुसारम्, मन्वन्तरानुसारं युगानुसारञ्च नैतिकतापि परिवर्तिता भवति। आरम्भे तपसः, ततो ज्ञानस्य, ततो यज्ञस्य, ततोऽप्यन्तिमे युगे दानस्य प्राधान्यं सम्मतम् अस्ति। स्मृतिषु विभिन्नानां विधीनां कारणं युगभेद एव। अर्थात् तत्तद्युगम् अनुसृत्य स्मृतीनां विधीनां व्यवस्था। ईदृशं सङ्कलनं वर्तमानयुगे वर्जितमस्ति। स्मृत्यर्थसारे प्रदर्शितायाः धारणायाः महाभारतं मनुस्मृतिश्च मूलम्। कालपरिवर्तनेन शक्तिः परिवर्तते। अत एव भक्तिदानप्रायश्चित्तादीनां व्यावहारिकी व्यवस्था स्वीकृता अस्ति। कानिचिद् ईदृशान्यपि कार्याणि, यत्र प्रतिनिधिः न आद्रियते। केषाञ्चित् कार्याणां वर्जनमपि कृतम्। तत्र च तत्कार्यकरणे जनानाम् असामर्थ्यमेव कारणम्। तपःप्रायश्चित्तयोर्विषये शूद्राणां कृते नियमाः शैथिल्यं नीताः। परन्तु युगभेदं विनैव मनुना शूद्राः विशेषनियमेषु प्रतिबद्धाः। तेषां विषये ईदृशाः नियमाः विहिताः यान् दृष्ट्वा इदं वक्तुं शक्यते यत् विधिसंहितायां शूद्राणां कृते न किञ्चित् स्थानमासीत्। द्विजातीनां कृते क्षेत्रविशेषे गमनं निषिद्धम्, परन्तु शूद्रः कुत्रापि गन्तुं शक्नोति; तस्य कृते न कश्चित् शास्त्रीयः प्रतिबन्धः।[४] शूद्रं न किमपि पातकं स्पृशति, नापि कश्चित् संस्कारोऽपेक्ष्यते। न वा धर्मविषये तस्य कश्चिद्धिकारः।[५] युगभेदतः द्विजातीनाम् आचारेषु ईदृशानि परिवर्तनानि

१. मत्स्यपु० अ० १४५।

२. मनु० २।७; ७।४२; १२।१२५।

३. वेदेनाप्रतिबद्धत्वात् प्रामाण्यं तु मनोः स्मृतम्।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥
(बृहस्पतिस्मृतिः, गाय० ८५, संस्कार० १३)।

४. शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद् वृत्तिकर्शितः—(मनु० २।२४)।

५. न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥
(मनु० १०।१२६)।

जातानि, येन सामाजिकाः तदानीन्तनाः द्विजातयः विमर्शविषयताम् आपन्नाः। शूद्रस्तु केवलं दानेनैव शुध्यति।[1] नियोगविषयकस्य वैदिकविधेः मनुना अत्यन्तं विरोधः कृतः। अथ च नियोगविधिः पशुधर्मः कथितः।[2] तपआदिविषयक-शक्तिहिनत्वमेव अस्य निषेधस्य मूलमस्ति इति बृहस्पतिना प्रतिपादितम्।[3]

परम्परावादिनां भारतीयानां मतानुसारं वेदः ज्ञानमयः सर्वविद्यानां मूलभूतश्च; तद्विषये शङ्कोद्भावनं नास्तिकतैव। शङ्कोत्पादकैः सामाजिका अधिकारा अपि न लभ्यन्ते। ते 'वेदबाह्याः' 'वेदनिन्दकाः' 'नास्तिकाश्च' कथ्यन्ते स्म। पुराणानि, इतिहासाः स्मृतयश्च वैदिकीं परम्परां विकासयन्ति। मनुः सर्वज्ञः आसीत् (सर्वज्ञानमयो हि सः)। अत एव मनुना स्वीये स्मृतिग्रन्थे निर्दिष्टानां सर्वेषामपि विधीनां वेदमूलकता स्वीकृता। सा ब्राह्मणैः तदन्तेवासिभिश्च अवश्यम् अध्येया।[4] मनुस्मृतेः अध्येता एव विद्वान् शंशितव्रतश्च मतः।[5] मनुस्मृत्यनुसारमेव आचारेण व्यवहारेण च पितृगणाः मुक्तिं यान्ति। स्वयं च ऐहिकेन आमुष्मिकेण च अभ्युदयेन युज्यते।[6] मनुमतानुसारं वेदशास्त्रविदेव सेनापतित्वम्, राज्यं दण्डनेतृत्वम्, सर्वलोकाधिपत्यञ्च निवोढुं शक्नोति।[7] वेदादारभ्य सूत्रकालं यावत् ब्राह्मणेषु उक्त-कार्याणां योग्यता न स्वीकृता आसीत्। परवर्तिकाले आपत्काले ब्राह्मणस्य कृते शस्त्रग्रहणं विहितम्। तस्य आपत्तिकालकस्य शस्त्रग्रहणस्य वैधानिकता स्वीकृता, परन्तु मनुना एषा नूतना शस्त्रग्रहणविषयिका घोषणा कथं वेदमूलकतया स्वीकृता, इत्येतद्-विषये व्याख्याकारैः दृष्टिः न प्रदत्ता। स्पष्टं यत् मनुस्मृतेः इदं संस्करणं (शस्त्रग्रहण-विषयकविधानम्) पुष्यमित्रस्य सेनापतित्वस्य शास्त्रीयता समर्थ्यते।

मनुस्मृतेः साम्प्रतिके संस्करणे द्वादशाध्यायाः सन्ति। इयं हि सर्वास्वपि स्मृतिषु विशाला। प्रथमाध्याये वर्ण्यविषयको विचारः।[8] विषयनिर्देशपरम्परा च

१. शूद्राणां नोपवासः स्यात् शूद्रो दानेन शुध्यति—(परा० ६।५१)।

२. मनु० ९।६४, ६६-६८।

३. बृहस्पति० २५।१६-१७।

४. विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः।
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचित्॥
(मनु० १।१०३)।

५. इदं शास्त्रमधीयानो ब्राह्मणः शंशितव्रतः—(मनु० १।१०४)।

६. मनु० १।१०५।

७. सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥
(१२।१००)।

८. मनु० १।१११-११८।

नातिप्राचीनतमा।[1] मेधातिथेः कालं बृहस्पतिस्मृतौ दृश्यमानं मनुविषयकं विचारं च आलोच्य इयं वर्तमाना मनुस्मृतिः सप्तमशताब्द्यां व्यवहारे आसीत् इति अनुमातुं शक्यते।[2] मनुस्मृतौ निर्दिष्टया परम्परया इदं परिज्ञायते यदियं स्वायम्भुवमनुना आरब्धा। स एनां ब्रह्मोपदेशतया प्राप्नोति। ऋग्वेदीयेन मनुना वर्तमानस्मृतेः न कश्चित् सम्बन्धः। तथाकथितमानवधर्मसूत्रेणापि मनुस्मृतेः न सम्बन्धः। मानव-गृह्यसूत्रेणापि इयं न सम्बद्धा। तयोः कश्चिद् विरोधोऽपि दृश्यते।[3] डॉक्टरकैलेण्ड-महोदयानुसारेण श्राद्धकल्पे मनुस्मृतौ च एकः श्लोकः समानोऽस्ति, किन्तु शवसंस्कार-विषयकः कोऽपि श्लोकः न समानः। ब्रैडक् इत्ययमपि ईदृशीं तुलनात्मिकां व्याख्यां प्रस्तौति। महाभारते मनुः धर्मशास्त्रस्य, प्राचेतसमनुः अर्थशास्त्रस्य, राजशास्त्रस्य, राजधर्मस्य, अर्थविद्यायाश्च प्रतिष्ठापकौ उक्तौ।[4] कौटल्येन निर्दिष्टस्य मनोर्विषये न कश्चिद् विचारो दृश्यते। स (कौटल्योक्तः) स्वायम्भुवाद् अन्यः अर्थशास्त्र-प्रणेता मनुरस्ति। वैलक्षण्यमिदं यत् 'मानवाः' इति निर्देशपूर्वकम् उपस्थापिता विचाराः मनुस्मृतौ नोपलभ्यन्ते, किन्तु कौटल्येन मनुस्मृतेः बहुतराणि वाक्यानि यथानुपूर्वि उद्धृतानि।[5] मनुना यत्साहित्यं निर्दिष्टं तत् कालविशेषेण सम्बद्धम्। स वेदत्रयस्य अथर्ववेदस्य च वचनानि उल्लिखति। तत्र अथर्ववेदवचनानि अथर्वाङ्गिरसश्रुतिरूपतया तेन उद्धृतानि।[6] सः स्वयमेव 'केचित्' 'अन्ये' इत्यादिना मतान्तराणि उपस्थापयति।[7] केचिदित्यादिकथनेन च तत्र स्वीयाम् अरुचिं द्योतयति। इदमपि कथ्यते यत् मनुस्मृतिः प्राग्वर्तिनाम् आचार्याणां मतान्यपि खण्डयति।

---

१. निबन्धग्रन्थेषु अदृश्यं बाहुल्येन प्रयोगो लभ्यते।

२. पी० वी० काणे; हिस्ट्री ऑफ धर्मशास्त्र, खं० १, पृ० १५०।

३. मानवगृ० सू० २।१२।१-२, मनु० ३।१; मा० गृ० सू० १।४।७; मनु० ४।९५; मा० गृ० सू० १।१२८।१; मनु० २।३४; मा० गृ० सू० १।२१।१; मनु० २।३५; मा० गृ० सू० १।२२।१; मनु० २।३६; मा० गृ० सू० २।१२।१-२; मनु० ३।८४-८६ आदय।

४. शान्ति म० भा० २१।१२; ५७।४३; ५८।२।

५. अलब्धलाभार्था कौ० १।४; अलब्धमिच्छेद् दण्डेन-(मनु० ७।१०१); तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात्- (कौ० १।४); नित्यमुद्यतदण्डः स्यात्- (मनु० ७।१६); असभाष्ये देशे साक्षिभिः मिथः सम्भाषते- (कौ० ३।१); असभाष्ये साक्षिभिश्च देशे संभाषते मिथः- (मनु० ८।५५); साहसमन्वयत् प्रसभकर्म- (कौ० ३।१७); स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम्—(मनु० ८।३३२)।

६. मनु० ११।३३।

७. मनु० ३।२६; ९।३२; १०।७०।

एतद्विषये बहूनि प्रमाणानि उपस्थापयितुं शक्यन्ते, यैः एतत्सिध्यति यत् परम्परावादिनां मतानुसारं स्वीक्रियमाणेन कालेन मनुस्मृतेः न समन्वयः। वेदाः, वेदाङ्गानि, धर्मशास्त्राणि इत्यादीनाम् उल्लेखाः, पुराणाख्यायिकानाम् उद्धरणानि च मनुस्मृतौ लभ्यन्ते। मीमांसकनिरुक्तधर्मपाठकहेतुकादीनामुल्लेखः परिषदः निर्मातृरूपेण प्राप्तः।[१] अग्निगौतमशौनकानां मतानुसारं शूद्रेण सह व्यवहरन् ब्राह्मणः बहिष्कार्यः।[२] स्वायम्भुवेन मनुना ऋषिदशकाय-सृष्टिविषयकः उपदेशः कृतः, ते सृष्टिं कुर्वन्तः आसन् (१।३५,३६)। मनुना स्वयं शास्त्रं निर्मितम्। तच्च ब्रह्मणो मानसपुत्राय भृगवे प्रदत्तम् (५।१-३।; १२।१,२)। तेन भृगुणा मनोः विचाराः सप्तसु अध्यायेषु सङ्गृहीताः।[३] क्वचित् क्वचिच्च उपलभ्यमानानि वचनानि आश्रित्य एतत्कथ्यते यत् वर्तमाना मनुस्मृतिः परम्परया सम्पादिता सम्बद्धा च अस्ति।[४] परम्परावादिनः अस्याः मनुस्मृतेः तान् अंशान् न आलोचयन्ति, ये वेदेन असम्बद्धाः सन्ति। तेषाम् अंशानां लुप्तश्रुतिमूलकतास्वीकारेण एषा समस्या न दूरीभवितुं शक्नोति।

परम्परावादिनां मतानुसारम् इयं मनुस्मृतिः वेदवदेव प्रमाणभूता अस्ति। वेदे न केवलं मनूक्तस्य विधानस्य निर्देश एव, अपि तु तत्पालनस्य विवरणमपि लभ्यते।[५] अनादिकालतः अद्य यावद् अनुवर्तमाना एका एव स्मृतिः अस्ति, परन्तु उपलब्धमनुस्मतौ दृश्यमानानि 'मनुराह' 'मनुरब्रवीत्' 'मनोरनुशासनम्' इत्यादीनि वचनानि उपर्युक्तस्य तथ्यस्य प्रतिकूलानि।[६] वस्तुत मनुस्मृतेः विभिन्नानि संस्करणानि पुराणेषु टीकाग्रन्थेषु च निर्दिष्टानि।[७] भृगुनारदबृहस्पतिप्रभृतिभिः मनुस्मृतेः

---

१. मनु० १२।१११।

२. मनु० ३।१६।

३. मनु० ३।२२२; ४।१०३; ५।४१; ५।५६; ८।१२४; ८।१३६; ८।१६८, २०४, २४२, २७६, २९२; ९।१५८, १८२, २३६; १०।६, ७८।

४. स्वायम्भुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे।
मनुप्रणीतान् विविधान् धर्मान् वक्ष्यामि शाश्वतान्॥

५. मानपथः पित्र्यान्मानववादिधि दूरं नैष्ट परावतः—(ऋ० ८।३०।३)।

६. मनु० ९।१४५; १०।७८; ८।१३९, २७९; ९।२३९।

७. मनु० १।५८ मेधातिथिः; दानखण्ड० पृ० ५२८; संस्कारमयूखे पृ० २ उद्धृत-भविष्यपुराणस्य वचनम्।

संक्षेपः कृतः। स्वायम्भुवनाम्ना यानि वचनानि विश्वरूपेण निर्दिष्टानि, न तानि साम्प्रतिक्यां मनुस्मृतौ दृश्यन्ते।[१] एवमेव अपरार्केण उद्धृतानि वचनान्यपि मनुस्मृतौ नोपलभ्यन्ते। तात्पर्यमिदं यत् परमितकाले एव अस्याः मनुस्मृतेः भूयान् पाठभेदो जातः। अस्यामवस्थायां सनातनपरम्परानुसारम् अनादिकालिके वेदे उपलभ्यमानायाः स्मृतेः पाठः कथमिदानीं मनुस्मृतौ लब्धुं शक्यते?

मनुस्मृतेः कालनिर्धारणं न सुकरम्। वैखानसस्याप्युल्लेखो विद्यते।[२] कुसीदे वशिष्ठस्य मतं निर्दिष्टम् अस्ति।[३] अवैदिकानां सम्प्रदायानां निर्देशः, तेषां कृते निषेधश्च उपलभ्यते।[४] स्पष्टतया ते वेदबाह्याः कथिताः।[५] नास्तिकस्य नास्तिक्यस्य च निर्देशोऽपि लभ्यते।[६] 'नास्तिकाक्रान्तस्य राष्ट्रस्य' 'नास्तिकब्राह्मणस्य' च वर्णनं दृश्यते।[७] वेदनिन्दका इव वेदबाह्या अपि स्मृतयः मनुसमये आसन्।[८] पुत्रे पितुरधिकारः इत्येतद्विचारावसरे विभिन्नानि मतानि समीक्षितानि।[९] सृष्टेराद्यकाले यदि मनुस्मृतिः प्रणीता स्मृता वा आसीत् तदानीमेव तेषां तत्त्वानां सम्प्रदायानां च अस्तित्वं किम् आसीत्? एतदाधृत्य एतासां समस्यानाम् आलोचनं कर्तुं न शक्यते। मेधातिथिप्रभृतिभिः मनुः 'पुरुषविशेषः' इति स्वीकृतः।[१०]

स्मृतिपरम्परायां स्वायम्भुवमनुः ब्रह्मोपदिष्टैः विधानैः सह योज्यते।[११]

---

१. याज्ञ० २।७३, ७४, ८३, ८५।; १।१८७, २५२ अत्र विश्वरूपः।

२. वैखानसमते स्थितः—( मनु० ६।२१ )।

३. मनु० ८।१४०।

४. पाषण्डिनो विकर्मस्थान् ··· ··· ··· ··· ···।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥
(मनु० ४।३०)।

५. ये वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः – (२।९५; ४।६१; ५।८९-९०; ९।२२५; ११।६६; १२।९५-९६)।

६. मनु० २।२; ४।१६३; ११।६६; ८।२२।

७. मनु० ३।५; २।११; ३।१६१।

८ मनु० १२।९५।

९. मनु० १०।८०-८२।

१०. मनुर्नाम कश्चित्पुरुषविशेषः—( मनु० १।१ )।

११. वात्स्यायनकामसूत्र० १।१।५-५८; नारदस्मृतिः ( सम्पा० जाली ) १८८० पृ० १-३; हेमाद्रौ उद्धृतं भविष्यपुराणवचनम्, पृ० ५२८।

वर्तमानमनुस्मृतिप्रणेतुः मनोः पुरः अवैदिकेभ्यः, समाजेभ्यः, सम्प्रदायेभ्यश्च वैदिकी परम्परा कथं रक्षणीया इति समस्या आसीत्। अत एव तेन स्वमतं 'देवोत्पन्नम्' इति उद्घोषितम्। विभिन्नानां विचारधाराणां परस्परं सम्मिश्रणम् आरब्धम् आसीत्। अत एव सदाचारपरम्परादयोऽपि प्रभाविता अभूवन्। एकात्मकतासम्पादनार्थं देवविधानम् आश्रयणीयम् अभूत्, यतः देवविधानमेव सार्वभौममतम् आमु शक्तमासीत्। वर्तमाने समाजे स्मृतेः तात्पर्यावबोधार्थं न्याय्या उक्तयः, युक्तयः, परिषदश्च आश्रिताः। तद्द्वारेण च शास्त्रार्थावगतिः शक्या।

मनुभृगुप्रभृतिपरम्पराभिः मूलस्मृतेः नूतनं स्वरूपम् उपस्थापितम्। नियोगः[1], ब्राह्मणस्य शूद्रया सह विवाहः[2], विभिन्नवर्णानुसारं विवाहस्य विभिन्नाः प्रकाराः[3], मांसभक्षणम्[4], आचार्यस्य पितुश्च तारतम्यनिर्धारणम्[5], भृगोरुत्पत्तिः इत्येतेषां चित्रणेन मनुस्मृतेः आधुनिकता स्पष्टा। अत्र परस्परं याः असङ्गतयः दृश्यन्ते तत्र विभिन्नकालिकसम्पादनविषयकानवधानता एव मूलम्। परम्परानुसारमत्र विभिन्नानां मतानामपि सङ्कलनम् अभूत्।[6] बूलरमहोदयस्य मतानुसारं वर्तमानस्मृतौ अर्धः अंशः प्रक्षिप्तोऽस्ति। मनुस्मृतिः तदेव सूत्रम् आश्रयति यद् विष्णुस्मृतिः। केचन अंशाः स्पष्टतया पौराणिकाः सन्ति। अतस्तेषाम् अंशानां स्मृतौ योजनं नोचितम्। एतदुक्तिद्वयमाधृत्य बूलरमहोदयः स्वमतं समर्थयते। उक्तद्वयमपि सम्प्रति विद्वांसः न मन्यन्ते।[7]

कल्पसूत्रापेक्षया मनुस्मृतेः क्षेत्रं व्यापकमस्ति। द्वयोर्विषये पूर्णं साम्यं नास्ति। याज्ञवल्क्यस्मृतिः मनोरपेक्षया योगविषयकं विवेचनं विशदयति। तस्याः भाषाविषयकोऽप्यन्तरः प्रतिभाति। द्वयोर्विषयक्रमः सम्बन्धः इति तु न मन्तव्यम्। अनयोर्भेदः वर्णनसापेक्षः। स च स्वाभाविकः। मनुस्मृतौ लेखकस्य स्वरूपं स्फुटमेव पृथग्भूतमस्ति। बृहस्पतिनारदकात्यायनानां वर्णनशैलीगतभेदानाधृत्यैवैष निष्कर्षः यद् एतेषां स्मृतयः मनुविष्णुस्मृत्योरनन्तरं तस्मिन् काले समुल्लिखिताः यदा वैधानिकविकासः सम्पन्नः आसीत्, इत्येत्सर्वं कतिपयमूलभूततथ्यानामवहेलनारूपम्।

---

१. मनु० ९।५९-६३; ११।६४-६९।

२. मनु० ३।१२-१३।

३. मनु० ३।२३-२६।

४. मनु० ५।२७-५६।

५. मनु० १।३५; ९।३२-५६।

६. हिस्ट्री ऑफ धर्मशास्त्र, खं० १, पृ० १४८-५१।

७. के० वी० रङ्गस्वामी आयङ्गार; सम आस्पेक्ट्स ऑफ सोशल ऐण्ड पोलिटिकल सिस्टम ऑफ मनुस्मृति, पृ० ५४।

वस्तुतस्तु उत्तरवर्त्तिलेखकाः वैयक्तिकानुभवमात्मप्रेरणाञ्चातिरिच्य पूर्ववर्तिविधिसंहितया सह स्वयुगीयानां समस्यानां समाधानं कृत्वा विचारान् विधिरूपेण परिणमयन्ति। एवंविधाने पूर्ववर्तिस्मृतिकारैः सह सम्बन्धस्थापने तेषां सौविध्यं भवति। वस्तुतस्तु याज्ञवल्क्यस्मृतेः कौटलीयार्थशास्त्रस्य च परस्परं तुलनायां कश्चिदपि सैद्धान्तिको मतभेदः न प्रतीयते। केवलं वर्णनप्रकारे उद्देश्ये च द्वयोर्भेदो भवति। भारते सांस्कृतिकविकीर्णतायाः लोकाचारस्य जात्याचारस्य च परस्परंसम्मिश्रणेन नूतनाः परिस्थितय उदभूवन्। तेषां परस्परं समन्वयेन किञ्चिन्नाविन्यम् आयातम्, किन्तु तेन नैतिकतायाः सदाचारस्य च नियमेषु न कश्चिन्मतभेदोऽभूत्। इद न कथनीयं यद् यदा सर्वा अपि स्मृतयः समानानेव विधीन् निर्दिशेयुः, तदा पृथक् पृथक् स्मृतिनिर्माणस्य का आवश्यकता ? नूतनस्य विधेः स्थापनं नूतनस्मृतिनिर्माणं नासीत्, अपि तु पूर्ववर्तिस्मृतिभिः स्थापितानां सिद्धान्तानां युगानुसारं स्पष्टीकरणमेव आसीत्।

## आधुनिकं मतम्

अर्थशास्त्रस्य प्रकाशनात् पूर्वं बूलरमहोदयेन स्वीयसिद्धान्तो व्यवस्थापितः। यदि स, अर्थशास्त्रम् अध्यैष्यत तदा निश्चितमेव स्वसिद्धान्तं समशोधयिष्यत्। बूलरमहोदयः मनुस्मृतौ वर्णितायाः प्रक्रियायाः विषये कथयति यद् मनुः व्यावहारिकतायाः वास्तविकतायाश्च स्थाने नैतिकतामेव बहु मन्यते। मनुप्रक्रियांशाः नारदीयस्मृतौ याज्ञवल्क्यस्मृतौ च विकासम् आयान्ति। वस्तुतः उद्देश्यभेदम् आश्रित्यैव इदम् अन्तरं प्रतीयते, न तु विकासादिभेदम्। बूलरमहोदयः मनुकालस्य पूर्वावधिक ईसातः पूर्वं वर्षशतं मन्यते। किमिदं स्वीकर्तुं शक्यं यत् तदानीं ततः पूर्वं वा प्रक्रियाणां विकासः प्रयोगो वा भारते नासीदिति ? याज्ञवल्क्यनारदयोरपि प्रक्रियासु नैतिकांशो न परित्यक्तः।

धर्मसूत्राणां मनुस्मृतेश्च असमानकालिकतया तेषाम् उद्देश्येऽपि भेदो भवति। धर्मसूत्रकाराणां पुरः ताः समस्या नासन्, या मनुसमये वैदिकसमाजं विध्वंसयन्ति स्म। धर्मसूत्राणि शिष्यपरम्पराभिः विकसन्ति। स्मृतिषु च विधयः उद्घोष्यन्ते। मनोः पुरः वैदिकविधिषु वैदिकपरम्परायां सामाजिकमान्यतायां च अविश्वसतां जनानां समस्या आसीत्। राष्ट्राणि शूद्रभूयिष्ठानि, नास्तिकाक्रान्तानि च आसन्।[1] वेदानां स्मृतीनां च पावित्र्यं भज्यते स्म। परम्पराप्राप्तविधिप्रसङ्गे मनुना

---

१. यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजम्।
विनश्यत्याशु तत् कृत्स्नं दुर्भिक्षव्याधिपीडितम्॥
(मनु० ८।२२)

सामाजिकस्थितेः समन्वयः कृतः। परिषत्सु तार्किकाणां सदस्यता अनिवार्या अमन्यत, यतः समाजस्थित्यनुकूलं विधेः यथार्था व्याख्या स्यात्।[१] 'न्यायस्य' प्रामाण्यं स्वीकृतम्।[२] अस्याः नूतनायाः स्थितेः कृते प्रस्तूयमानस्य विधेः विषये दैवसिद्धान्तोऽपि योजितः।

मनुस्मृतेः कालं निश्चेतुं कानिचिद् अन्तरङ्गाणि बहिरङ्गाणि च प्रमाणानि सन्ति, तानि अत्र अवधेयानि। मेधातिथिना विश्वरूपेण च मनुस्मृते यत् स्वरूपम् उपस्थापितं तत्तथैव अद्यत्वेऽपि लभ्यते। शङ्कराचार्येण वेदान्तसूत्रभाष्ये मनोः वचनम् उद्धृतम्।[३] बृहदारण्यकोपनिषदि मनोः मतं लभ्यते।[४] तत्र मनोरुल्लेखः 'शिष्ट' रूपेण विद्यते।[५] तन्त्रवार्तिके कुमारिलभट्टः मनु गौतमादधिकं आद्रियते। मृच्छकटिके मनोः विधानानुसारं निर्णयः कृतोऽस्ति।[६] पञ्चमशताब्द्या इतस्ततः वल्लभीप्रभृतिषु शिलालेखेषु मनोरुल्लेखः अस्ति।[७] बृहस्पतिना मनुविषये लिखितं यत् मनुमतं वेदानां निकटतमम्, अतः तदेव सर्वोत्कृष्टं प्रमाणम्।[८] बृहस्पतिना अनेकस्थलेषु मनुवचनानि उद्धृतानि। एकत्र मनुवचनस्य विरोधोऽपि कृतः।[९] भृगोः मनुस्मृत्या सह सम्बन्धः बृहस्पतिनापि ज्ञात आसीत्।[१०] अश्वघोषस्य वर्णसूच्यां मनुवचनम् उद्धृतम् अस्ति। रामायणमपि मनुवचनम् उल्लिखति।[११] महा-

---

१. मनु० १२।१११।

२. मनु० १२।१०५।

३. वेदान्तसू० १।३।२८; ४।२।६; ३।४।३८, १।३।३६; २।१।११ अत्र क्रमशः मनु० १।५,२१; १।२७, २।८७; १०।४, १२६; १२।९१, १०५-६।

४ बृ० उ० १।४।१७ मानवे च सर्वाः प्रवृत्तिकामहेतुत्वयैवेति।

५. वेदान्तसूत्रम् १०३।१।१४।

६. मृच्छ० ९।३९।

७. ए० इ०, खं० ८, पृष्ठ २०३; ख० ४, पृ० १०२।

८. वेदार्थोपनिबद्धत्वात् प्राधान्य हि मनोः स्मृतम्।
मन्वर्थविपरीता तु या स्मृतिः सा न प्रशस्यते॥
तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च।
धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते॥
(मनु० १।१। कुल्लूकेनोद्धृतबृहस्पतिवचनम्)।

९. याज्ञ० २।११९ अपरार्केण उद्धृतं वचनम्।

१०. विवादरत्नाकर०, पृ० १००।

११. रामा० किष्कि० १८।३०-३२।

भारतेऽपि मनुवचनं निर्दिष्टमस्ति।[1] एतैः उद्धरणैः इदं तु स्पष्टं यद् द्वितीयशताब्दी-पर्यन्तेषु ग्रन्थेषु मनुस्मृतिवचनानि उट्टङ्कितानि।

मनुस्मृतौ परस्परं विरुद्धान्यपि मतानि सन्ति। शूद्रया सह ब्राह्मणविवाहस्य विधिः[2], निषेधश्च मनुस्मृतौ दृश्येते।[3] एकत्र नियोगविधिः समर्थितोऽस्ति।[4], अपरत्र च नियोगविधिः पशुधर्मः कथितः।[5] श्राद्धे मधुपर्के च मांसं विहितम्।[6], अन्यत्र च सर्वत्र निषिद्धम् अस्ति।[7] एकत्र पिता आचार्यात् श्रेष्ठः कथितः, अपरत्र च आचार्यः।[8] भृगोरुत्पत्तिः अग्नेः स्वायम्भुवमनोश्च प्रतिपादिता। एतत् सर्वम् आलोच्य कथ्यते यत् मनुस्मृतेः अनेकानि संस्करणानि देशकालपरिस्थित्या-ह्यनुसारीणि अभूवन्। परन्तु ईदृशानि तृतीयशताब्दीपर्यन्तं सम्पन्नानि आसन्। नारदस्मृतिः बृहस्पतिस्मृतिश्च मनुस्मृतिम् अनुवर्तेते। यद्यपि तयोरपि परिवर्तनम् अभूत्।

तृतीयशताब्दीतः पश्चादपि मनुस्मृतेर्मूले परिवर्तनसिद्धान्तस्तु प्रमाणमपेक्षते। यदिदमुच्यते विश्वरूपादीनाम् उद्धरणानि वर्तमानमनुस्मृतौ नोपलभ्यन्ते, तत्तु तेषां स्मरणशक्तौ उद्धरणशैली प्रभावो वेति आधारितमस्ति। अन्तरङ्गाण्यपि कानिचित् प्रमाणानि विचारणीयानि। याज्ञवल्क्यस्मृत्यपेक्षया मनोः प्रक्रिया वैधानिकशब्दावल्यश्च अव्यवस्थिताः सन्ति। अत एव तृतीयशताब्द्याः पूर्वमेव मनुस्मृतेः कालं स्वीकर्तुं शक्यते, परन्तु न अत्यधिकपूर्वम्। मेड-आन्ध्र-पौण्ड्र-चौण्ड्र-द्रविड-काम्बोज - यवन - शक - पारद - पल्हव - चीन - किरात - दरद - खश इत्येते तृतीयशताब्द्याः निकटवर्तिनः आसन्। एतेषां विषये वैधानिकं समाधानं मनुस्मृतौ उक्तम् अस्ति।[9] अतः तृतीयशताब्दी एव एतत्कालस्य उत्तरावधिः। मनुस्मृतौ सेनापतेः उल्लेखः कृतः। अयं च सेनापतेरुल्लेखः सेनापतिं पुष्यमित्रं सङ्केतयति।[10] धर्मसूत्रापेक्षया मनुस्मृतेः भाषा अर्वाचीना। एतत् सर्वम् आधृत्य बूलरमहोदयः

---

१. महाभारतम्, ३ पृ० ५८; उद्योग० ३८।१।
२. मनु० ३।१२-१३।
३. मनु० ३।१४-१९।
४. मनु० ९।५९-६३।
५. मनु० ९।६४-६९।
६. मनु० ५।३१-३२, ३५; ३९, ४१।
७. मनु० ५।४८-५०।
८. मनु० २।१४५।
९. मनु० १०।४४,४८।
१०. जायसवाल, कलकत्ता वीकली, खं० १५।

इमं निष्कर्षं स्थापयति यद् ईसातः पूर्वं शताब्दीद्वयं मनुस्मृतिसम्पादनस्य पूर्वावधिः, उत्तरं च शताब्दीद्वयम् उत्तरावधिः। परन्तु इदं कथनं तु वर्तमानमनुस्मृतिविषये। यस्याः स्मृतेः सम्पादनं सम्पन्नम् अभूत् तस्याः महाभारतेन सह सम्बन्धः आसीत्।

वी० एन० माण्डलिकः कथयति यत् मनुस्मृतिः महाभारतात् सङ्गृहीता अस्ति।[1] इदं मतं स्वीकुर्वता बूलरमहोदयेन लिखितं यत् महाभारतस्य द्वादशत्रयोदशपर्वणोः मानवधर्मशास्त्रस्य उल्लेखः अस्ति। तस्य सम्बन्धः मनुस्मृत्या सह सम्भाव्यते, किन्तु तद् (मानवधर्मशास्त्रम्) मनुस्मृतेः भिन्नम्। परन्तु सः स्वयं मनुते यत् महाभारतकारः धर्मसूत्राणां ज्ञाता आसीत्।[2] 'मनुराह' 'मनुरब्रवीत्' इत्यादीनि वचनानि आधृत्य हॉप्किसमहोदयः मनुते यत् वैदिकस्य मनोः दार्शनिकाः विचाराः महाभारते मनुस्मृतौ च उल्लिखिताः। ते च विचाराः उक्तग्रन्थद्वये व्यवस्थितात् कस्माच्चित् एकस्मात् ग्रन्थात् न सङ्गृहीताः। अत एव परस्परं विरोधः पार्थक्यं च दृश्यते।[3] एतैर्विचारकैः केचन विषया उपेक्षिताः। महाभारते मनुस्मृतेः उल्लेखो नास्ति, अपि तु मनुस्मृतौ इतिहासस्य उल्लेखो वर्तते।[4] मनुस्मृतौ निर्दिष्टेषु ऐतिहासिकसङ्केतेषु महाभारतस्यापि अंशः अस्ति। आङ्गिरसः, अगस्त्यः, वेनः, नहुषः, सुदासः, निमिः, पृथुः, मनुः, कुबेरः, वशिष्ठः, वत्सः, अक्षमा, शृङ्गी, दक्षः, अजीगर्तः, वामदेवः, भारद्वाजः, विश्वामित्रः इत्यादीनां निर्देशाः अत्र प्रमाणानि।[5] एषु वशिष्ठाजीगर्ताङ्गिरसानामुल्लेखः तेषां सम्बन्धः वेदेन सह अस्ति।[6] अन्ये अपि पुरुषाः महाभारतात् पूर्ववर्तिनः। द्यूतादीनामपि सम्बन्धः वेदैः सह अस्ति।[7] ऋग्वेदीया ऋक् महाभारते यथानुपूर्वि उद्धृता।[8] बूलरमहोदयः इमानि तथ्यानि अपि धित्सति। महाभारते 'मनुरब्रवीत्' इति निर्दिष्टम्। अथ च मनोः राजधर्मोऽपि कथितः। वनपर्वणः अनुशासनपर्वणः शान्तिपर्वणश्च सम्भूय २६०

१. व्यवहारमयूखस्य भूमिका।

२. सेक्रड बुक्स ऑफ दि ईस्ट, खं० २५।

३. ग्रेट एपिक्स ऑफ इण्डिया, पृ० २१-२२।

४. मनु० ३।२३२।

५. मनु० २।१५१-५२; ५।२२; ७।४१-४२; ८।११०, ११६; ९।२३; ९।१२८, १२९; १०।१०५, १०८; ९।४४, ३१४।

६. ऋग्वेद० ७।१०४।१५; बृहद्देवता ६।३२-३४; ऐ० ब्रा० ७।१६; ताण्ड्यमहाब्रा० १३।३।२४।

७. ऋग्वेद० १०।३४।

८. उद्योग० ३७।१९।

श्लोकाः बूलरमहोदयेन मनुस्मृतौ लब्धाः। अन्यत्रापि मनुस्मृतेः श्लोकानां परःशतं महाभारते लभ्यते। हॉप्किंसमहोदयः मन्यते यद् अनुशासनपर्वणा एकस्याश्चिन्मनुस्मृतेः सङ्केतः क्रियते। एतन्मतं बूलरमहोदयोऽपि स्वीकरोति, परन्तु मानवधर्मशास्त्रम् इति नामकरणपूर्वकम्।

अनुशासनपर्वणि स्पष्टमेव मनुना अभिहितस्य शास्त्रस्य निर्देशः कृतोऽस्ति।[१] मनूक्तं श्लोकद्वयमपि शान्तिपर्वणि उद्धृतमस्ति।[२] प्राचेतसमनोः राजधर्मविषयकाः श्लोकाः उद्धृता सन्ति महाभारते।[3] मनोः, प्राचेतसमनोः, स्वायम्भुवमनोश्च अर्थविद्या, राजधर्मः, अनुशासनञ्च विभिन्नेषु स्थलेषु निरदिश्यन्त।[४] हॉप्किंसमहोदयस्य मतमस्ति यद् अनुशासनपर्वणः एव मनुस्मृत्या सह सम्बन्धः, अन्यत्र सर्वत्र महाभारते वैदिकमनोरेव सम्बन्धः। काणे महाभागेन एतद्विषये उक्तं यत् मनोः राजधर्मस्य अर्थविद्यायाश्च अनुशासनपर्वणि अन्यत्रापि च महाभारते निर्देशोऽस्ति।[५] अस्माभिः पूर्वं कथितं यत् महाभारते निर्दिष्टस्य मनोः राजधर्मस्य अर्थविद्यायाश्च मनुस्मृत्या सह न कश्चित् सम्बन्धः। कौटल्येन मानवार्थशास्त्रस्य यानि वचनानि उद्धृतानि तानि मनुस्मृत्या न सम्प्रवदन्ते। बूलरमहोदयस्तु मानवधर्म एव महाभारतस्य प्रतिपाद्यो विषयः मन्यते। परन्तु महाभारते विभिन्नानां धर्मशास्त्राणां निर्देशेषु सत्स्वपि मनुः कुत्रापि धर्मसूत्रकारतया न निर्दिष्टः।[६] अनुशासनपर्वणि एकत्र स्थले धर्मसूत्रकारस्य मतम् उल्लिखितम् अस्ति. परन्तु तस्य सूत्रकारस्य नाम न निर्दिष्टम्।[७] तादृशं मतं च मनुस्मृतौ लभ्यते।[८] आश्चर्यं तु इदं यत् महाभारते हस्तिसूत्राणाम् अश्वसूत्राणाञ्च उल्लेखः लभ्यते। परन्तु कस्यापि धर्मसूत्रस्य नीतिसूत्रस्य वा नोल्लेखस्तत्र।

---

१. मनुनाभिहितं शास्त्रं यच्चापि कुरुनन्दन—( अनु० ४७।३५ )।

२. शान्ति० ५६।२३-२५।

३. शान्ति० ५७।४३-४५।

४. म० भा० द्रोण० ७।१; शान्ति० २१।१२; ७८।३१; ८८।१४, १६; १२१।१०, १२; १५२।३०; २४६।५; अनुशासन० ११४।१२; ४४।१८, २३; ६५।१, ४; ६७।१९; ६८।३१; ८८।४; ११५।५२-५३; वन०, १८०।३४-३५; ३२।२९; आदिप० ७३।९; १२०।३२, ३६; ४१।३१; ७४।३९; उद्योग० ३७।१-६; ४०।९-१०।

५. पी० वी० काणे; हिस्ट्री ऑफ धर्मशास्त्र, खं० १, पृ० ५४।

६. शान्ति० १६७।४; २९८।४०; ३४१।७४; अनुशासन० १९।८९; ४५।१७२-२०; वनपर्व० २०७।८३; २९३।३५; ३१३।१०५; आदि० ३।३२, ७७।

७. अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति—(अनु० १९।६;)। तुलनीयः–निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति। मनु० ९।१८।

८. सभाप० ५।२०।

उपर्युक्तेन विवेचितेन इदं स्पष्टं यद् बूलरमहोदयस्य मतम् असमीचीनम्। वस्तुतः ईसातः शताब्दीचतुष्टयात् पूर्वं मानवधर्मशास्त्रं प्राचेतसमनोः राजधर्मश्च आस्ताम्। द्वयोः परस्परं सम्बन्धोऽपि सम्भाव्यते। महाभारते निर्दिष्टं प्राचेतसवचनं मनुस्मृतौ दृश्यते।[1] मनुस्मृतेः सम्बन्धः न महाभारतेन, अपि तु मानवधर्मशास्त्रेण अस्ति। मनुस्मृतेः वर्तमानं स्वरूपं द्वितीयशताब्द्यां प्रायः सम्पन्नम्। अत्र प्राचीन-परम्परया सह नवीनानाम् आदर्शानाम् अपि समन्वयः कृतः। नारदमतानुसारम् इदं कार्यं सुमतिभार्गवेण सम्पादितम्। सः बृद्धमनुं बृहन्मनुं च पृथक् पृथक् स्वीकरोति। एषा एव मनुस्मृतिः अस्मत्कालपर्यन्तम आयातुम् अशकत्। अस्याः प्रभावः लङ्का-बर्मा-जावा इत्यादिषु देशेषु अभूत्।

## कौटिल्यः कौटल्यो वा ?

धर्मसूत्रानन्तरं राजनीतिशास्त्रस्य स्वतन्त्रधारा अर्थशास्त्ररूपे विकसति। धर्मसूत्रानन्तरं विकसतोऽर्थशास्त्रस्य उद्देश्यः धर्मसूत्रीयविषयतः बहिर्मुखानां विषयाणां प्रतिपादनं धर्मसूत्रविरोधो वा नासीत्, अपि तु अर्थशास्त्रं केवलं स्वतन्त्रतया विषयविशेषाणाम् आलोचनम् अकरोत्। अत एव तस्य विकासः। फलतः अर्थ-शास्त्रोत्पत्तिविषये यः इतिहासः स्थापितः, वेदेभ्यः धर्मशास्त्रेभ्योऽर्थशास्त्रस्य उत्पत्तिर्न स्वीकृता, अपि तु साक्षाद् ब्रह्मणः।[2] द्वितीयमिदं यद् अर्थशास्त्रे धर्मविषयको न कश्चित् स्वतन्त्रोऽध्यायः, यथा धर्मशास्त्रे राजधर्मविषयकः स्वतन्त्रोऽध्यायः अस्ति। तात्पर्यमिदं यद् धर्मशास्त्रस्य एव पिष्टपेषणं न अर्थशास्त्रस्य कार्यम्, अपि तु स्वत-न्त्रतया राजनीतेः आलोचनमिति तु प्राक् प्रतिपादितम्।

अर्थशास्त्रीयपरम्परायाम् उपलभ्यमाने साहित्येऽद्यत्वे कौटल्यस्य अर्थ-शास्त्रं सर्वतोऽधिकम् आद्रियते, यत् १९०९ ई० वर्षे समाजस्य दृष्टिगोचरम् अभूत्।[3] तदनन्तरं तद्विषये नानाप्रकारकमालोचनम् आरब्धम्। कौटल्यस्य देशविषये,

---

१. मनु० ४६।१-२; ३।५४।

२. महा० शा० ३०।६९; ३०।८०-६३; कामसूत्रम् १।५-८; नीतिप्र० १।२१-२२; बुद्धचरितम् १।४६।

३. 'प्राइवेट लाइब्रेरीज् ऑफ साउथ इण्डिया, इत्यत्र संस्कृतसम्बद्धे आपटे केटलाग सं० १८८२ इति ग्रन्थे कुम्भकोणीयस्य नरसिंहाचार्यस्य सविधे अर्थशास्त्रस्य प्रतिलिपिः वर्तते इत्युल्लेखः लभ्यते। मैसूर ओरियण्टल लाइब्रेरी क्यूरेटरश्रीमहादेव-

कालविषये, नामविषये च अनुसंहितं जनैः। तस्य विभिन्नेषु नामसु कौटल्येति नाम महतः भ्रमस्य जनकम् अभूत्। एष भ्रमः न केवलम् अर्वाचीनानामेव, अपि तु प्राचीनानामपि। प्रायः कौटिल्य इत्येव नाम व्यवहृतम्। पाश्चात्त्यैः विद्वद्भिः

---

शास्त्रिणा कञ्जीवर ( जिला ) इत्यस्मिन् स्थाने हस्तलिखितग्रन्थः प्राप्तः। तामिल ( जिला ) इत्यतः एकं हस्तलिपिग्रन्थं सम्प्राप्य श्रीशामशास्त्रिणा १९०९ ईस्वीये वर्षे अर्थशास्त्रस्य प्रकाशनम् कृतम्। अग्रेऽपि प्रकाशनकार्यं प्रचलितम् आसीत्। टी० गणपतिशास्त्री ( त्रिवेन्द्रम् ) श्रीमूलटीकया संवलितं अर्थशास्त्रं प्राकाशयत्। पञ्जाब संस्कृतसिरीज् इत्यतः डॉ० जॉलीमहोदयेन उपनिबद्धया भूमिकया सह नवचन्द्रटीकायुतस्य अर्थशास्त्रस्य महत्त्वपूर्णं प्रकाशनं सञ्जातम्। एतैः प्रकाशनैः सहैव अर्थशास्त्रस्य बहु विवेचनं प्रारब्धम्। येषु विवेचनेषु अधोलिखिताः महोदयाः मुख्याः—१. नरेन्द्रनाथ लॉ; स्टडीज् इन् एंशेण्ट इण्डियन पालिटी। २. डॉ० पी० बनर्जी; पब्लिक एडमिनस्ट्रेशन्स इन् एंशेण्ट इण्डिया। ३. यू० एन० घोषाल; हिन्दू पोलटिकल थ्योरीज्। ४. आर्० सी० मजूमदार; कारपोरेट लाइफ इन एंशेण्ट इण्डिया। ५. विनयकुमार सरकार; पोलटिकल इन्स्टीट्यूशन्स एण्ड थ्योरीज् ऑफ हिन्दूज्। ६. के० पी० जायसवाल; हिन्दू पालिटी। ७. एस० वी० विश्वनाथन्; इण्टरनेशनल लॉ इन एंशेण्ट इण्डिया इत्यादयः सन्ति। आचार्यस्य कौटल्यस्य विभिन्नपक्षान् आधृत्य विवेचनानि अभूवन्। ईदृशानि आङ्ग्लभाषीयाणि प्रमुख-प्रकाशनानि इमानि सन्ति। १. डॉ० जॉली, जेड० डी० एम० जी० ( खं० ६८, पृ० ३४५–३५ एवं खं० ६६ पृ० ३६६। २. ज० र० ए० सो०, १६१६, पृ० १३०-१३७। ३. प्रोफेसर कीथ; इं० ए० १६१८ पृ० १५७–१६१ तथा पृ० १८७–१६५। ४. डॉ० के० सी० नाग, जर्नल ऑफ इण्डियन हिस्ट्री, खं० ५। ५. डॉ० ऐटन, मेगस्थनीज एण्ड कौटिल्य। ६. के० वी० रङ्गस्वामी आयङ्गार, लेक्चर्स ऑन सम ऑस्पेक्ट्स ऑफ इण्डियन पॉलिटि। ७. डॉ० विण्टरनित्ज; कलकत्ता रिव्यू, १९२४ तथा हिस्ट्री ऑफ इण्डियन लिटरेचर, खं० ३ पृ० ५०६–५१४। ८. डॉ० जैकोबी, इं० एं० १६२४, पृ० १२८–१३६ तथा १४१–१४६। ९. प्रोफेसर० सी० एन० वन्द्योपाध्याय; सोशल आइडियल्स एण्ड पोलटिकल थ्योरीज् ऑफ कौटिल्य, इं० ए० १६२५, पृ० १७५ तथा ५०१।

अस्य नाम्नः सम्बन्धः कुटिलनीत्या सह स्थापितः। कुटिलनीतेः आश्रयणादेव अर्थशास्त्रकारः कौटिल्यः इति ख्यातः इति तेषाम् आशयः। अस्य नीतिम् अपरिचिन्वद्भिः कैश्चित् साहित्यकारैः अपि अर्थशास्त्रकारः कुटिलनीतिज्ञतया उपस्थापितः। धर्मशास्त्रिणः एतद् ज्ञातुम् अशक्ता आसन् यत् कौटल्यः अर्थशास्त्री भूत्वा राजनीतेः उद्देश्यं प्रकाशयति। फलतः टीकासु कौटिल्यः इत्येव नाम प्रायः प्रयुक्तम्। एतदपि सत्यं यत् कौटल्येन स्वीयेऽर्थशास्त्रे प्राक्तनाः अनेके अर्थशास्त्रकाराः स्मृताः, किन्तु कस्यापि धर्मशास्त्रकारस्य नाम न निर्दिष्टम्। किं बहुना, तदुल्लिखितेषु तत्पूर्ववर्तिषु पञ्चसु सम्प्रदायेषु नैकोऽपि सम्प्रदायो धर्मशास्त्रीय इति।[1] मानवादयः न धर्मशास्त्रीयाः, अपि तु अर्थशास्त्रीयाः। अत एव मन्वादीनाम् आचार्याणां मतानि नोपलभ्यन्ते। अर्थशास्त्रस्य विषयमूलं कूटनीतेः विवरणमेव कौटिल्य इति नाम्नः भूमिकां रचयति। अत एव एतदवश्यं विचारणीयं यद् वस्तुतः कौटिल्य इति नाम कौटल्य इति वा ?

कौटल्यस्य बहूनि नामानि दृश्यन्ते। जैनभिक्षुणा हेमचन्द्रेण अभिधानचिन्तामणौ वात्स्यायनः, मल्लनागः, कौटिल्यः, द्रामिलः, पक्षिलस्वामी, विष्णुगुप्तः,

---

१. 'हिस्ट्री ऑफ धर्मशास्त्र' ( खण्ड १, पृ० ९० ) इत्यस्मिन् ग्रन्थे कौटिल्यनामनिर्देशनपुरस्सरम् इदं कथितं यद् अर्थशास्त्रमपि धर्मशास्त्रस्यैव एकम् अङ्गम्। अयञ्च विचारः अनेकेषां विदुषां विचारेषु उपलभ्यते। वस्तुतः यथापूर्वं प्रतिपादितं यद् धर्मशास्त्राद् अर्थशास्त्रस्य स्वतन्त्रा सत्ता विद्यते। न तस्य उत्पत्तिः धर्मशास्त्रतः, अपि तु ब्रह्मणः इति। अत एव आचार्यवर्येण कौटल्येन यत्र तत्र अर्थशास्त्रिणां मतानि उद्ध्रियन्ते, न कस्यापि धर्मशास्त्रिणः। धर्मशास्त्रार्थशास्त्रयोः कः सम्बन्धः इति तु प्रश्नान्तरम्। अत्र वयम् इदमेव वक्ष्यामः यद् अर्थशास्त्रे न धर्मशास्त्रस्य प्रभावः, अपि तु धर्मशास्त्रमेव अर्थशास्त्रेण अत्यन्तं प्रभावितं लक्ष्यते। अर्थशास्त्रे धर्मशास्त्रसम्बन्धी न कश्चित् पृथग् अध्यायः, किन्तु धर्मशास्त्रे राजधर्मस्य पृथग् एकोऽध्यायः उपनिबद्धः। अत्रेदं वैशिष्ट्यं यत् कूटनीतिरेव न अर्थशास्त्रस्य विषयः। अर्थशास्त्रे राजनीतिविषयकं विवेचनम् अपि अस्ति। नीतिसम्बन्धिविषयेषु कूटप्रयोगाः दृश्यन्ते अर्थशास्त्रे। तस्माद् अर्थशास्त्रस्य प्रणेता कौटल्य एव कूटनीतेः संस्थापक इति वक्तुं न शक्यते। कूटनीतिविषये महाभारते सर्वान् अतिशय्य वर्तते यत्र कणिकप्रभृतीनां नीतिसम्बन्धिविषयाः दृश्यन्ते।

अङ्गुलः इत्येतानि नामानि निर्दिष्टानि ।[१] यादवप्रकाशेऽपि एतान्येव नामानि उद्धृतानि। हेमचन्द्रीयलेखाद् राजेन्द्रमित्रेण कुटिल इति पाठः उद्धृतः[२], परन्तु 'बम्बई'नगरतः प्रकाशिते संस्करणे कुटल इति पाठः दृश्यते। मुद्राराक्षसनाटकानुसारम् इदं प्रतीयते यत् कौटल्यः चणकग्रामवासी, अत एव चाणक्य इति ख्यातः; किन्तु राजेन्द्रलालमित्रः पैतृकपरम्परया सह चणकशब्दं सम्बध्नाति।[३] एतत्तु अवश्यं यत् कौटल्यः चणकात्मजः कथितः। कामसूत्रस्य न्यायसूत्रस्य च रचयिता अपि कौटल्यः कथ्यते। एकवारं श्रुतं पक्षपर्यन्तं स्मर्तुं शक्तः स आसीत्। अत एव पक्षिलस्वामी इति कथ्यते।[६] द्रामिलप्रान्तवासितया द्रामिल इति नाम तारानाथस्वामिना स्वीकृतम्। अत्र द्रामिल इत्यस्य तात्पर्यं 'तामिल' इत्यपि पक्षः।

कौटल्येति नामविषये अनेके तर्काः उपस्थापयितुं शक्याः। कौटिल्यस्य यत्र यत्र परिचयो लभ्यते, तत्र सर्वत्र तदीया कठोरनीतिरेव अभिप्रेता। स्वयं तेन अधोनिर्दिष्टं वचनं लिखितमस्ति।[४] विशाखेन मुद्राराक्षसनाटके स कुटिलमतिः इति कथितः।[५] एतद्विषये सर्वोत्कृष्टः परिचयः कामन्दकेन दत्तः। तत्र प्रायः तज्जीवनसम्बन्धीनि सर्वाण्यपि अङ्गानि समाविशन्ति। नीतेः प्रयोगः अवश्यं व्याघ्रमुखेन भवति, परन्तु आचार्यस्य कौटल्यस्य जीवनं

---

१. वात्स्यायन मल्लनागः कौटिल्यः चणकात्मजः ।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः ।।
( सं० पृ० ३४ श्लो० ८५३ बम्बई )

२. वात्स्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः।
द्रामिलः पक्षिलस्वामी मल्लनागोऽङ्गुलोऽपि च ।।
( वैजयन्ती आपटे १८९३ )

३. जर्नल ऑफ दि बङ्गाल एशियाटिक सोसायटी, ख० ५२, पृ० ५८८ (१८८३)।

४. तदेव, पृ० २६८।

५. सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च ।
कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः ।।
येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृत्याशु तेन शास्त्रमिदं कृतम् ।।

६. कौटिल्यः कुटिलमतिः स एष येन ।
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।।

नीतिलक्ष्यञ्चेत्येतद् द्वयमपि कल्याणकारि अस्ति।[१] एतैः उद्धरणैः स्पष्टं यत् स्वभावस्य नीतेश्च कठोरतया एव आचार्यः कौटिल्य इति कुटिल इति च कथितः। वस्तुतः एष आचार्यः ऋषिकल्पः।

अतोऽन्यान्यपि कौटिल्यनाम्नः मूलानि सन्ति। श्रूयते यत् कुटिलनामकं किमपि गोत्रम् आसीत्। तद्गोत्रापत्यत्वेन कौटिल्य इति संज्ञा प्रसिद्धा। कामन्दक-नीतिसारे कुटिल इति गोत्रनाम उक्तम्। परन्तु जयमङ्गलाटीकायां कुटल इति नाम निर्दिष्टम्। एतेन स्पष्टं यत् कामन्दकेन कुटिल इति पाठभेदः कृतः। आश्वलायनश्रौत्रसूत्रे आपस्तम्बश्रौतसूत्रे च 'कुटल' 'कुटिल'इति नामद्वयमपि न दृश्यते। प्रवरमञ्जर्यां यास्केषु कौटिल्याः इति पाठः दृश्यते। एवमेव आङ्गिरस-शाखायां भृगुशाखायां च कौटिली इति पाठः।[२] किन्तु कमलाकरीयप्रवरदर्पणे कौटली इति दृश्यते।[३] इत्थञ्च गोत्रावल्यां द्वयोरपि नाम्नोः उल्लेखः न लक्ष्यते। लभ्यते चेद् द्वयोरपि। संस्करणसम्पादनादिभेदोऽपि नामद्वयलब्धौ मूलं भवेत्।

पुराणेष्वपि कौटल्यस्य निर्देशोऽस्ति, किन्तु इकारघटितः कौटिल्यशब्द एव प्रयुक्तः। विष्णुपुराणे उद्धारकब्राह्मणस्य कौटिल्यस्य निर्देशो लभ्यते।[४] श्रीधर-स्वामिना कौटिल्यस्य व्याख्या इत्थं कृता "कौटिल्य-प्रधानत्वात्" इति।[५] यदि

---

१. वंशे विशालवंशानाम् ऋषीणामिव भूयसाम्।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः॥
जातवेदा इवार्चिष्मान् वेदान् वेदविदाम्बरः।
योऽधीतवान् सुचतुरः चतुरोऽप्येकवेदवत्॥
यस्याभिचारवज्रेण वज्रज्वलनतेजसः।
पपात मूलतः श्रीमान् सुपर्वा नन्दपर्वतः॥
एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम्॥
नीतिशास्त्रामृतं श्रीमान् अर्थशास्त्रमहोदधेः।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे॥

२. प्रवरमञ्जरी, पृ० ३२, मैसूर-संस्करणम्।

३. प्रवरदर्पणम्, पृ० १५६, मैसूर-संस्करणम्।

४. नवैतान् नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति।
(४।२४।६)
नन्दान् नन्दपुत्रांश्च कौटिल्यः कौटिल्यप्रधानः।

५. उद्धरिष्यति कौटिल्यः समैर्द्वादशभिः········।
(श्रीधरस्वामी, २७२।२२)
उद्धरिष्यति तान् कौटिल्यः—(९९।३३०-३३१)

कुटलगोत्रापत्यरूपोऽर्थः इष्येत, तदा श्रीधरस्वामी कौटिल्यप्रधानत्वादिति व्याख्यां कदापि न कुर्यात्। मत्स्यपुराणे वायुपुराणे च उद्धारकर्ता कौटिल्य उल्लिखितोऽस्ति, परन्तु तत्र कश्चिदपि पाठभेदो न लभ्यते।[1] श्रीमद्भागवते 'कश्चिद् ब्राह्मणः' इत्यनेन आचार्यो लक्ष्यीकृतः, परन्तु नाम न निर्दिष्टम्। चाणक्यः वात्स्यायनश्च एक एव इति श्रीधरस्वामी अमन्यत।[2] स्कन्दपुराणे बृहत्कथायां कथासरित्सागरे दशरूपकस्य अवलोकटीकायां च विभिन्नेषु स्थानेषु चाणक्यस्य उल्लेखः; येन कौटिल्यस्य विभिन्नैः नामभिः सह तादात्म्यम् उपस्थापयितुं शक्यम्।[3] एष्वपि स्थलेषु कठोरनीतिप्रयोक्तृतया कौटिल्यः कुटिलः कथितः।

कौटल्योत्तरवर्तिषु ग्रन्थेषु तत्परम्परा प्रचलति। कामन्दकेन स गुरुरिति नमस्कृतः। सोमदेवेन कौटल्यस्य शब्दाः एव वैदुष्येन स्वीयतया उद्धृताः। कौटल्यकथानकमपि सोमदेवः उल्लिखति, परन्तु कौटिल्यनाम्नः निर्देशं न करोति। दण्डिना दशकुमारचरिते कौटिल्य इति लिखितम्।[4] शामशास्त्रिणा संस्कृते संस्करणे तस्य किञ्चित् तुलनं कृतम्। बाणभट्टः विशाखदत्तवदेव कादम्बर्यां कौटिल्यं वर्णयामास।[5] धर्मशास्त्रव्याख्यातृभिरपि यत्र तत्र कौटिल्यः निर्दिष्टः। मेधातिथिना आचार्यतया स स्मृतः।[6] टीकासर्वस्वनाम्न्याम् अमरकोशटीकायां क्षीरस्वामी लिखति—"यत्कौटल्यः उपधाभिः शौचाशौचज्ञानममात्यानाम्।[7]

काव्यग्रन्थेषु निबन्धेषु च कौटल्यस्य निर्देशो लभ्यते। चतुर्दशशताब्दीयेन टीकाकृता दिनकरमिश्रेण शोभने एव अर्थे कौटल्यशब्दः प्रयुक्तः।[8] चरितवर्ध-

---

१. नवनन्दान् द्विजः कश्चिद्द सपुत्रान् उद्धरिष्यति।
(११।१।१२)।

२. स्कन्दपुराणम् कुमारिका खण्ड०, बंगला-संस्करणम् ४०।२५१।

३. तुलनात्मकदृष्टया द्रष्टव्यम्—कौ० पृ० १२, ११, १५, १६; सोमदेव० पृ० ५, ११, १४, १५; कौ० ६, २, ९; सो०, १०, २, १; कौ० २६, २, १०; सो० २८ २।१४; कौ० ४२, २, १५, १९; सो० ८७, २, ७।

४. दशकुमारचरितम्—सम्पादित बूलर, खं० २, पृ० ५१, ५५।

५. बाण०, कादम्बरी—सम्पादितम् पेटर्सन १८८९, खं० १, पृ० १०९। किं वा तेषां साम्प्रतं येनातिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रप्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः पराभिसन्धानपराः उपदेष्टारः, नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेषु अभियोगः स सहजप्रेमार्द्रहृदयानुरक्तमातर उच्छेदाः।

६. मनु० ४।४३।

७. अमरकोशस्य टीकायां क्षीरस्वामी, २।२१।

८. रघुवंशः ३, १२, एस० पी० पण्डितस्य परिशिष्टमपि द्रष्टव्यम्।

नस्यापि एतदेव स्वरूपम् आसीत्।[1] विभिन्नेषु स्थलेषु मल्लिनाथेनापि कौटिल्य-बचनानि उद्धृतानि।[2] अत्र इदम् अवधेयमस्ति यत् एषु ग्रन्थेषु कौटल्यः कौटिल्य इति द्वयोरपि नाम्नोरुल्लेखः। गणपतिशास्त्रिसम्पादितायामेव अरुणाचलनाम्न्यां कुमारसंभवव्याख्यायां कौटिल्य इति पाठः दृश्यते।[3]

साङ्गवेदविद्यालयीयविद्वद्भिः सम्पादितं जयमङ्गलउपाध्यायनिरपेक्ष इति टीकाद्वयेन समलङ्कृतं कामन्दकनीतिसारस्य एकं संस्करणं प्रकाशितम् अस्ति। तस्य भूमिकायाः लेखकः पटनाविश्वविद्यालयीयविधिविज्ञान (लॉ कॉलेज)-महाविद्यालयस्य अध्यक्षः देशपाण्डेमहाभागः अस्ति। अस्मिन् संस्करणे कौटिल्य-विषये विलक्षणा व्याख्या उपलभ्यते। कामन्दकनीतिसारस्य द्वितीयश्लोकस्य उपाध्यायकृतायां व्याख्यायां कौटिल्यपदव्याख्यानावसरे कुटिलशब्दस्य कुम्भीधान्यः इति अर्थः कृतः।[4] 'कुटि+ल'शब्दघटकस्य कुटिशब्दस्य घटः अर्थः स्वीकृतः। वस्तुतः कुटिशब्दस्य अर्थो घटो न भवति, अपि तु कुटशब्दस्य। शब्दकल्पद्रुमे घटपरतया एव कुटशब्दो व्याख्यातः।[5] अनेन एव भ्रमेण सम्पादकः जयमङ्गलायां कौटल्यस्थाने कौटिल्य इति पाठं स्थापितवान्। आश्चर्यन्तु इदं यत् पद्यश्लोकीयायां जयमङ्गलव्याख्यायां टीकाकारैः विचार एव न कृतः, यत्र कुटलगोत्रं निर्दिष्टमस्ति। अनेन संस्करणेन स भाव एव समापितः।

उपर्युक्तेषु उद्धरणेषु 'कौटल्यः' 'कौटिल्यः' इति पाठद्वयमपि लभ्यते। अत एव तानि उद्धरणानि आश्रित्य कोऽपि निष्कर्षः आसादयितुं न शक्यते। कौटिल्य इति पाठस्वीकारे आचार्यस्य नीतिः कुटिलगोत्रोत्पत्तिश्च इति द्वयं मूलम्। तत्र कुटिल-नीतिम् आश्रित्य कौटिल्य इति पाठस्वीकारस्तु सर्वदा अयुक्त एव, यतः अर्थशास्त्रं धर्मसापेक्षराजनीतेः आकरः लक्षणग्रन्थश्च। तत्र सुखस्य मूलम् धर्मम्, त्रयीशासने एव च प्राणिमात्रस्य कल्याणञ्च मन्यते। कुटिलगोत्रोत्पत्तेः चर्चाप्रसङ्गे इदं वक्तव्यं यत् क्वापि कुटिलगोत्रस्य निर्देशो न लभ्यते। कुटिलशब्दात् कौटिल्य-

---

१. रघु० ३।१३; ४।२१; १७।५६।

२. रघु० ३।२९, ३५; ४।३५; ८।२१; १५।२९; १७।४९; ५५, ५६, ७६।

३. १।२९; २।३१।

४. कुटिलत्वात् कुटिर्घट उच्चते। तं धान्यं मृतं लान्ति सह गृह्णाति प्रातः समये होमाद्यर्थं नाधिकम् अधिकं तु सद्यः प्रक्षालयन्ति इति कुटिलाः कुम्भी धान्या इति प्रसिद्धाः। अतएव कुटिलनामपत्यं विष्णुगुप्तः कौटिल्यः इत्युच्यते।

५. विष्णुगुप्ताय इति सांस्कारिकी संज्ञा, चाणक्यः कौटल्य इति द्वे जन्मभूमिगोत्रनिबन्धने।

शब्दं व्युत्पादयितुं ष्यञ्प्रत्ययः आश्रयणीयः। ष्यञ् प्रत्ययान्तस्य च कौटिल्य-शब्दस्य अर्थः कुटिलता ( वक्रता ) एव भवति, यतः भावे ष्यञ् विहितो अस्ति। परन्तु एषः सर्वमान्यः सिद्धान्तः यत् विद्वान् घृणोत्पादकं स्वनाम न प्रस्तोष्यति, यदि स हास्यलेखको नास्ति। अत एव कुटिलशब्दात् कौटिल्यशब्दस्य निष्पत्तिः स्वीकर्तुं न युज्यते।

वस्तुतः कुटलऋषेः गोत्रापत्यतया आचार्यः आत्मानं कौटल्यम् अकथयत्। गोत्रावल्यां कुटलः कुटिलः इत्येतद्द्वयोरपि अभावे उत्तरवर्तिलेखकैः अर्थशास्त्रीय-धारणामजानानैः कुटिलनीतिसञ्चालकतया कौटिल्यशब्दस्य प्रयोगः आरब्धः। ततः काव्यानां नीतिग्रन्थानां च संस्करणेषु यत्र क्वचित् कौटल्यः शब्दः सम्पादकैः दृष्टः, तत्र कौटल्यशब्दम् अशुद्धं मत्वा तत्स्थाने कौटिल्यशब्दः निवेशितः। ये सम्पादकाः कौटल्यशब्दस्य साधुत्वं निश्चितवन्तः, तैः यथास्थितमेव प्रकाशितम्। कुटलगोत्रस्य अनुपलब्ध्या तत्र न किञ्चित् विचारितम्, कौटिल्य इति कौटल्य इति पाठद्वयमपि प्रचलितम् आसीत्। पाश्चात्त्यानां विदुषां समालोचिकाबुद्धिः कुटिलता-द्योतकस्य कौटिल्य इति पाठस्यैव पक्षपातिनी आसीत्। यतः एतेन आचार्यस्य महद्व्यक्तित्वं मेकेवली इत्यस्य व्यक्तित्वम् इव सिद्ध्यति। भारतीयपरम्परायां राजनीतिकं दर्शनं नावशिष्यते। अस्याः धारणायाः निरसनं केनापि न कृतम्। फल-तश्च कौटिल्य इत्येव पाठः प्रचलितः। कैश्चित् कुटलशब्दात् कौटिल्यशब्दस्य निष्पत्तिः स्वीकृता, तत्र अकारः पश्चात् इकारताम् आपन्नः इत्यपि अङ्गीकृतम्। परन्तु तेनापि स्थितेः पूर्णतया स्पष्टीकरणं न जातम्।

कुटलगोत्रस्य उल्लेखः कामन्दकनीतिसारे जयमङ्गलाख्यायां तट्टीकायां च अस्ति। केशवस्वामिना नानार्थार्णवसंक्षेपेऽपि कुटलगोत्रीयस्य ऋषेः निर्देशोऽस्ति। 'अथ स्यात् कुटलो गोत्रकृत्पृषौ' अस्मादेव गोत्रवाचिनः कुटलशब्दात् गर्गादिभ्यो यञ् इति यञि कौटल्यशब्दो निष्पद्यते। आश्चर्यमिदं यत् पाणनीये गणपाठे कुटलशब्दो न निर्दिष्टः। नारायणभट्टस्य प्रक्रियासर्वस्वे गर्गादिभ्यो यञ् इति सूत्र-व्याख्यानावसरे कुटलशब्दस्य निर्देशोऽस्ति तत्र हि साधुकौटल्यः चाणक्य इति लिखितम्। इत्थञ्च कौटल्य इत्येव पाठः स्वीकार्यः।

—❀—

## ३

# राजनीतिः सदाचारश्च

यूनानदेशे केवलं धर्म एव वैयक्तिकं साधनम् उपासनं च नासीत्। धर्मेण राजनीतौ आर्थिकजीवने च पूर्णतया स्वत्वं स्थापितमासीत्। समाजस्य सर्वाण्यपि महान्ति कार्याणि धार्मिकभावनया क्रियन्ते स्म। नगरस्थापनतः युद्धस्थानं यावत् सर्वत्र धर्मस्य प्रभाव आसीत्। उपनिवेशस्थापनायां मातृभूमीतः अग्निरादीयते स्म। यूनानदेशस्य दार्शनिकपद्धतेः यादृशो विकासः प्रचरन्नासीत्, तत्र सुकरातेन मानवविषये चिन्तयता मूलभूतानि परिवर्तनानि उपस्थापितानि। श्रेयांसि प्रेयांसि च पुरोधाय सदाचारशास्त्रं पृथक्कर्तुम् अचेष्ट्यत। तस्य च ज्ञानस्वरूपतां प्रत्यपादयत्। सुकरातेन कथितं यत् विवेकार्थं विशिष्टम् अध्ययनं नापेक्षितम्। यथा शिल्पकलादयः स्वतन्त्रतया शिक्षणीयाः सन्ति, न सदाचारः। सुकरातः राजनीतिमपि एकां कलां मनुते स्म। अतः तद्दृष्ट्या राजनीतिः सदाचारशीलस्य पुरुषस्य विषय आसीत्। एथेन्सदेशीयजनतन्त्रं तेन निन्दितम्। इत्थं राजनीतिः सदाचारविषयताम् आपन्ना।

सुकरातशिष्येण प्लेटोमहोदयेन स्वधर्मम् आदर्शराज्यं च यदाधृत्य राज्यं स्थाप्यते स्म, तत्र राजनीतिः केवलम् अनुसर्त्री एव भवितुम् अशक्नत्। अरिस्टाटिलमहोदयेनापि यद्यपि श्रेष्ठतमराज्यस्य स्थापनम् ईहितम्, तथापि सः राजनीतेः स्वातन्त्र्यं स्थापयितुम् अचेष्टत। एवमपि तस्य शासनं धर्मेण सदाचारेण च प्रभावितं सर्वदैव नासीदिति न। आरिस्टटिलमहोदयानन्तरम् इपिक्यूरियन, स्टोइक इत्येतौ मानवस्वभावं यथा चित्रयन्तौ आस्ताम्, तदेव आधृत्य मेकेवली, हॉब्स इत्येताभ्यां स्वीयाः विचाराः उपस्थापिताः, परं मध्यकालिकया धर्मसापेक्षराजनीतिपरम्परया तत्रैव अवरोधः कृतः। मध्यकाले धर्मः राजनीतितः अत्यन्तम् उपरि प्रतिष्ठापितः। यद्यपि धर्मम् आधृत्य विश्वबन्धुत्वस्य सार्वभौमतायाश्च स्थापना सम्पद्यमाना असीत्, तथापि धर्मराजनीत्योः संघर्षः आरभ्यत। अत्र संघर्षे धर्मस्य राजनीतेश्च मूलभूतानाम् आधाराणां सिद्धान्तानां च महत्त्वं नासीत्, अपि तु आत्मानं धर्मस्य राजनीतेश्च नेतारं मन्यमानानां संघर्ष आसीत्। एष प्रश्नः आसीत् 'पोपः (धर्मगुरुः) यत् श्रेष्ठः, उत राजा ?' समस्तः मध्यकालिकराजनीतेरितिहासः विचारकाणाम् एभिरेव विचारैः व्याप्तः अस्ति। पञ्चदशशताब्द्यां मेकेवलीमहोदयेन धर्मं राजनीतेः पूरकं कृत्वा आधुनिकयुगस्य शिलान्यासः कृतः।

सापेक्षतावादिना उपयोगितावादिना च सिद्धान्तेन समं नैतिकतां व्याचक्षाणेन मेकेवलीमहोदयेन राज्यशक्तिः यया वृद्धिम् आप्नुयात् सैव नैतिकता इति प्रतिपादितम्। राज्यसमृद्ध्यर्थं हिंसानृतविश्वासघातादयोऽपि राज्ञः नैतिकता एव। आवश्यकतानुसारं सदाचारनियमेषु परिवर्तनस्य पूर्णतया राज्ञोऽधिकारः, परं मेकेवलीमहोदयः अनैतिकताम् अधार्मिकताञ्च नाश्रयति। स धर्मं सदाचारं च राजनीतेः पूरकं मन्यते। अस्यां स्थितौ राजनीतिज्ञः आचारशास्त्रं न सर्वथा तिरस्करोति, अपि तु स्वकार्यसिद्धौ शास्त्रतया तद् उपयुनक्ति। अस्य प्रयोगः अद्यापि दृश्यते।

षोडशशताब्दीयेन युरोपदेशीयेन धर्मसुधारसंघर्षेण धर्मसत्तायाः राजसत्तायाश्च सन्बन्ध युगानुकूल एव स्वीकृतः। लूथरमहोदयेन उक्तं यत् सांसारिकव्यवहारविषये राजसत्ता धर्मसत्तातः गुर्वी। इत्थमेव कालविनमहोदयोऽपि धर्मक्षेत्रं राज्यक्षेत्रञ्च पृथग् पृथगेव मन्यते. तेन अनुसाशनम् आदृतम्। अथ च कथितं यद् धर्मराजनीत्योः उभयोः समन्वयो न शक्यः। स शारीरिकं भौतिकञ्च दण्डं धर्मतः परं मन्यते स्म। मूर्तिपूजायाः धर्मविरोधिनां कार्याणां च नियन्त्रणस्य अधिकारः राज्यस्य एवेति स्वीकृत्य राज्यं धर्मादुपरि प्रतिष्ठापितं कालविनमहोदयेनापि। मेकेवलीमतं समालोचयता बोदांमहोदयेन उक्तं यद् राजनीतिकं जीवनं नियन्त्रयितुम् ईश्वरं न्यायं च अवश्यम् आश्रयत् शासकः, परन्तु एष विद्वान् एतत् कथयितुं नाशकत् यद् अनेन द्वयेन भौतिकशक्तेः नियन्त्रणं कथं शक्यम्?

धर्मविषये हॉब्समहोदयेन साधिकारं घोषणा कृता। तेन लेवियाथन इति ग्रन्थे लिखितं यद् राज्ञः आदेशं विना क्रियमाणं किमपि धार्मिकं कार्यं सर्वथा अवैधानिकम्। किं बहुना, अनेन विदुषा 'शासकस्य सर्वत्र अधिकारः' इत्यपि उद्घोषितम्। लॉकमहोदयेन 'लेटर्स ऑन टालरेशन' इति ग्रन्थे धार्मिकसहिष्णुता प्रतिपादिता। सर्वेऽपि स्वस्वधर्मविषये स्वतन्त्राः इति तेन स्वीकृतम्। किन्तु राजसत्ता धर्माद् पृथगेव स्थापिता। माण्टेस्क्यूमहोदयः इदं इच्छति यद् धर्मसत्तया राजसत्ता नियन्त्रिता स्यात्। सः 'चर्चीयानाम्' (मठीयानाम्) अधिकाराणां राज्येन नियन्त्रणं कामयते स्म। एतदवश्यं यत् स राजनीतिकसंघटनानुसारं धर्मस्य आवश्यकतां स्वीकृतवान्। यथा गणतन्त्रपद्धत्यर्थं स प्राटेस्टेण्टसम्प्रदायम् आवश्यकं मन्यते स्म, तथापि तेन धर्मः व्यक्तिगततया स्वीकृतः। तेन हि राज्यसत्ता-नियन्त्रितैव धर्मसत्ता आदृता।

एकोनविंशतितमशताब्द्याम् आदर्शवादिभिः दार्शनिकैः राज्यस्य पुरः नैतिकतायाः विचारः उपस्थापितः। वास्तवं राज्यं तदेव यत् मनुष्यजीवनस्य विकासे साहाय्यम् आचरेत्, शुद्धानां मालिन्यविहीनतर्काणाम् अभिव्यञ्जनमेव विधानम्

सामाजिककार्याणां पूर्तिरेव वास्तवं कर्त्तव्यम्। इत्येतान् आदर्शान् पुरोधाय प्लेटो-अरिस्टाटिलमहोदयानां दार्शनिकभावानां नूतनरीत्या आवर्तनम् एतत्कोटिकैः दार्शनिकैः आरब्धम्। हीगेलकाण्ट इत्येतयोः भावनाः नूतनरीत्या व्याचक्षाणेन ग्रीनमहोदयेन कथितं यद् नैतिकलक्ष्याणां प्राप्तिः अत्यन्तम् अपेक्ष्यते। एतदर्थम् इच्छानां हननमपि यदि अपेक्षितम् तदा तदपि कर्त्तव्यम्। ग्रीनमहोदयः अग्रे कथयति यद् नैतिककार्याणां सिद्धौ प्रतिबन्धकीभूतानाम् अन्तरायाणां दूरीकरणं राज्यस्य परमं कर्त्तव्यम्। राज्यस्य इदं कर्त्तव्यं यत् तद् ईदृशीं परिस्थितिम् उत्पादयेत्, येन नैतिकजीवनस्य पालनं सुशकं भवेत्। ग्रीनविषये बार्करमहोदयो लिखति यत् स न तथा प्लेटो-हीगेलमहोदययोः निकटवर्ती आसीत् यथा अरिस्टाटिल काण्ट इत्यतयोः। सः शाश्वतभ्रातृत्वभावनाः पुरोधाय राजनीतिकदर्शनेन राज्यस्य नियन्त्रणम् ऐच्छत्। ग्रीनमतानुसारं राजनीतिकसिद्धान्ता नैतिकानाम् आदर्शानां पूरकाः।

ग्रीनमहोदयः नैतिकतायाः सम्पन्नायाः राजनीतेः व्याख्याता स्वीक्रियते। एवंविधमेव ब्रेडले-बोसाँके इत्येताभ्यामपि प्रयतितम्। सामजिकस्य पुरुपकार्यनिर्धारणस्य विषये ब्रैडलेमहोदयः 'एथकिल स्टडीज' इत्यत्र लिखति यत् पुरुषेण स्वकर्त्तव्यपालनेनैव समाजे विश्वात्मवादिनैतिकता स्थापनीया। एवंविधा मान्यता पुरुषं राज्यतः उपरि प्रतिष्ठापयति। तदनुसारं श्रद्धया विकासेन च समस्तसमाजविषये वयं दैवं सावयवञ्च सिद्धान्तम् अनुभवामः। स लिखति यद् वयम् आत्मानम् ईसास्वरूपस्य ईश्वरस्य विराट्शरीरे अन्तर्भूतं पश्यामः।

आदर्शवादिनां दार्शनिकानां नैतिकतायाः राज्यसम्बधिनां भावानां च निष्कर्षः एवं ज्ञातुं शक्यः—

१–राज्यत एव विषमतामूलके जीवने विधिशिक्षादीनाम् उचितरीत्या प्रयोग-पूर्वकं नैतिकादर्शानां प्राप्तिसम्भवः।

२–राज्यमेव नैतिकतामार्गे उपस्थिताः बाधाः उन्मूलयितुं प्रभवति।

३–काश्चन ईदृश्यः अवस्थाः सन्ति यासां नैतिकतया सह न सम्बन्धः, किन्तु ताभिः तादृशवातावरणनिर्माणे साहाय्यं क्रियते यत्र नैतिकाः प्रयोगाः शक्याः।

४–संस्थानां सामाजिकसंघटनानां राजनीतिकसंघटनानां च तात्पर्यं नैतिकतायां तदनुकूलवातावरणनिर्माणे चास्ति।

५–राज्यं यथा एका संस्था तथैव नैतिको विचारः। यतः राज्यं नैतिको विचारः। अत एव तत् समस्तानां नागरिकाणां मस्तिष्कम्। राज्यं विकीर्णानां मस्तिष्काणाम् एकसूत्रे योजनं करोति। हीगेलमहोदयस्य सर्वव्यापकस्य विश्वात्मनः प्रतिबिम्बभूतं राज्यम् एवंविधमेव आसीत्।

आदर्शवादिभिः दार्शनिकैः राज्यं नैतिकतायाः संरक्षकं स्वीकृतम्। सहैव एतत्सम्बन्धस्थापने राज्यं नैतिकतायाः स्रोतः अपि स्वीकृतम्। तस्य एष परिणामो जातः यत्सदाचारेण शाश्वतरूपतां विहाय सापेक्षता अवलम्बिता। अत एव राज्यं नैतिकतायाः कृते आसीत्, किन्तु नैतिकता स्वयं राज्यनियन्त्रिता अभूत्। फलतः नैतिकतासापेक्षं राज्यं नैतिकतायाः विधायकम् अभूत्। यदा राज्यमेव नैतिकतायाः नियन्त्रकं जातं तदा राज्यात् पृथग् नैतिकतायाः न कापि सत्ता अवशिष्टा।

राजनीतेः सदाचारेण सह सम्बन्धम् एव आदर्शवादिनां परम्परा आसीत्। एकोनविंशतितमशताब्द्यां मार्क्सवादीयव्यवस्था पूर्णतया धर्मनिरपेक्षतामापन्ना। हीगेलराजनीतिम् आलोचयता मार्क्समहोदयेन उक्तम् यद् धर्मः मादकद्रव्यम् (अहिफेनगुटिका) इति। तेन धर्मः तदानीन्तन्याः भयप्रसूतप्रवृत्तेः फलं स्वीकृतम्, अर्थात् तदानीं जनेषु भयोत्पादनार्थम् आश्रीयमाणः उपाय एव धर्मः इति तस्याशयः। फ्रांसीसिभौतिकवादः, ट्यूबिनेजनविद्यालयस्य बायबिलपरीक्षणवादः, फ्वारबाखमहोदयस्य लोकोत्तरवादविरोधी भौतिकवादः इत्येतद्वादत्रयेण मार्क्समहोदयः प्रभावित आसीत्। ईसाई धर्मेण यहूदीधर्मविषये जायमानैः अत्याचारैरपि एषः प्रभावित आसीत्। अग्रे च तत्सिद्धान्तानुयायिनः लेलिन इत्यस्य पुरोऽपि चर्चस्वामिविषयको महत्त्वपूर्णः प्रश्न आसीत्। फलतः स आरम्भत एव धर्मविरोधी अस्ति।

मार्क्समतानुसारं धर्मः उत्पादनक्रियायाः प्रकाशनमात्रम्। द्वन्द्वात्मकभौतिकवादस्य आधारशिलाया स्थिराम् ऐतिहासिकभौतिकवादव्याख्यामनुसृत्य मार्क्समहोदयेन कथितं यद् उत्पादनसाधनविषये यथा यथा परिवर्तनानि भवन्ति, तथा तथा एव ज्ञानसंस्कृतिसभ्यतादिष्वपि परिवर्तनानि भवन्ति। विकासम् अनापन्ने युगे भयेन स्वार्थभावनया च धार्मिकभावानां प्रभावो भवति। दार्शनिकाः अबोधेषु जनेषु परलोकादिभयैः स्वीयं महत्त्वं स्थापयितुं धार्मिकभावनाः प्रतिपादयन्ति। उत्पादनसाधनेषु परिवर्तने, प्राकृतिकरहस्यानां वैज्ञानिकरीत्या विश्लेषणे च सति स्वयमेव धार्मिकभावनाः निलीयन्ते। लेलिनमहोदयेन प्रतिपादितं यत् सम्पद्विषयकशङ्कया व्याप्ते वर्तमाने युगे धर्मः उत्पद्यते। तद्व्याचक्षाणः स्ट्रैचीमहोदयो लिखति यत् कस्यापि देशस्य संस्कृतेः सभ्यताया वा परिचयः तद्देशीयस्य दर्शनशास्त्रस्य आचारशास्त्रस्य वा अध्ययनेन न संभवति, वस्तुतः तद्देशीयस्य अर्थशास्त्रस्य आलोचनेन तद्देशीयेषु उत्पादनसाधनेषु कस्य अधिकारः, कथं च तेषां विभाजनं भवति इत्यादिपरिज्ञाने सति स्वत एव तद्देशीयं दर्शनशास्त्रं ज्ञातं भवति। आदिमयुगस्य धार्मिकस्थितिं चित्रयता अध्यापकेन टामसनमहोदयेन लिखितं यद् धर्मः सदा-

चारश्च केवलं वन्यप्रवृत्तिः। सम्प्रति धर्मस्य सदाचारस्य नूतनं स्वरूपम् उपस्थाप्यते। तत्र च धर्मः सम्पच्छालिनां साधनस्वरूपतां विहाय मानवताया अङ्गताम् आप्नोति।

मार्क्सवादीयसमाजशास्त्रम् आश्रित्य हाइनरिखक्यूनोमहोदयेन अन्यैश्च विद्वद्भिः धर्मोत्पत्तिविषयकः सिद्धान्तः स्थापितः। क्यूनोमतानुसारं धार्मिकमतानाम् उत्पत्तिः प्राकृतिकेन वातावरणेन, सामाजिकजीवनेन च प्रभाविता भवति। किञ्चित् कालपर्यन्तं क्यूनोमतं मार्क्सवादिषु प्रचलितम् आसीत्, किन्तु तन्मतस्य ब्रिटिशप्राचीनमानवशास्त्रवेतृटायलरसिद्धान्तानुयायितया बैलशिकयोमहोदयेन खण्डनं कृतम्। रूसो इत्यादिभिः एषः अन्तरात्मा कथितः। सुकरातः एनं डेयमन इति कथितवान्। काण्टहीगेलप्रभृतिभिः दार्शनिकैः एतस्य भिन्नं भिन्नं स्वरूपं स्थापितम्। कार्लमेनहमप्रभृतयः दार्शनिकाः एतन्नैतिकत्वमपि द्वेधा विभाजयितुं कामयन्ते। तत्र प्रथमाविधा अन्तश्चेतनामुखी इति, द्वितीया च उत्तरदायित्वाभिमुखी इत्युच्यते। परम् इदृग् विभाजनं सर्वथा भ्रमोत्पादकम्। यावत्पर्यन्तम् उत्तरदायित्वभावना नोदेति, तावत् नैतिकतायाः न किमपि महत्त्वम्। नैतिकार्थं ज्ञानम् आवश्यकम्। बुद्धः सुकरातश्च दार्शनिकतया सह ज्ञानं नैतिकतायाः आधारभूतं स्वीकुरुते स्म। वास्तवे ज्ञाने जाते सति मनुष्यः नीतिविरुद्धं नाचरति। प्लेटोमहाभागेन उक्तं यद् यदा साहसिकीनां राजसिकीनां भौगोलिकीनां च वृत्तीनां सात्त्विकैस्तर्कैः समन्वयनं भवति तदैव यथार्थः न्यायः सम्भाव्यते।

सापेक्षवादिस्वरूपं शाश्वतवादिस्वरूपञ्चेति स्वरूपद्वये नैतिकता प्रस्तूयते। जर्मनदेशीयः अर्थशास्त्री सोम्बार्टमहोदयः कर्त्तव्यव्याख्याने वातावरणापेक्षया श्रेयस्तत्त्वानां प्राधान्यं मनुते, परन्तु यन्त्रवादः, विज्ञानवादः, धनवादः ( Capittalism ), निरङ्कुशतावाद इत्यादीनां तेन ये अर्थाः उपस्थापितास्ते स्वयं सापेक्षाः। अत एव कार्यमपि वातावरणापेक्षं जातम्। मार्क्समहोदयेन नैतिकता तु स्वीकृता, परन्तु तेन उत्पादनसाधनेषु इव तत्रापि परिवर्तनम् अङ्गीकृतम्। अनया परिवर्तनशीलया नैतिकतया सह शक्तेरपि सम्बन्धः अभवत्। जर्मनदार्शनिकः हीगेलमहोदयः सौराज्यं स्वतन्त्रतायाः मूर्तं स्वरूपम् इति मन्यमानः शक्तिवादस्य कियतिचिदंशे समर्थकः आसीत्। राज्यं नैतिकानां तत्त्वानाम् आधारः इति मन्यमानस्य एतस्य इदं कथनम् आसीत् यत् वैयक्तिकैः नैतिकैः आदर्शैः मानवः न नियन्त्रितोऽस्ति, परं नैषा नैतिकतायाः स्थापना, अपि तु शक्तिवादस्य चाटुकारिता। यद्यपि इति तु यथार्थमेव यत् सिकन्दरसीजरनेपोलियनहिटलरमुसोलिनी इत्येतैः पुरुषैः शक्तेः प्राप्त्यर्थं नैतिकतायाः सर्वथा त्यागः कृतः, किन्तु एतेषां पतनेनापि इदमेव बोध्यते यद्यावत्पर्यन्तं शक्तिः नैतिकताम् आश्रयति तावत्पर्यन्तमेव सा सफला। एतेषु उपर्युक्तेषु नायकेषु धैर्यसाहसप्रभृतयः नैतिकताया गुणाः आसन्। मेकेवली-

नीत्शे इत्येताभ्यां शक्तिवादस्य समर्थनावसरे ईसाईधर्मस्य खण्डनं कृतम्। यतः ईसामहोदयेन शान्तिदयाक्षमादीनां प्रसारः कृतः आसीत्। स्पेङ्गलर अनेनापि शक्तिवादप्रयोगे एव स्वीयायाः उच्चप्रतिभायाः उपयोगः कृतः। काण्टगेटेप्रभृतिभिः दार्शनिकैः असभ्यं पाशवञ्च बलवादम् आधृत्य इतिहासस्य व्याख्या चिकीर्षिता। सम्प्रति रूसदेशीयसाम्यवादे अस्य किमपि महत्त्वं नास्ति।

मार्क्सवादिविचारणायाः आलोचनेन धर्मविषये निष्कर्षद्वयं मूलतया पुरः स्फुरति। प्रथम एष निष्कर्षः यद् धर्मः अज्ञानमयः परिस्थितेः प्रतिबिम्बभूतः। द्वितीयः एष निष्कर्षः यद् धर्मः सम्पदाभिमानिनां दार्शनिकानां कृते शोषणस्य शस्त्रम्। अर्थात् इमम् आधृत्य उक्तविधाः पुरुषाः समाजशोषणं कुर्वन्ति। मार्क्समहोदयः आचारं न परिभवति, किन्तु तदीयम् आचारस्वरूपं भिन्नम् अस्ति। यथा-यदा निश्चितलाभाद् अधिकलाभः भवति, तदा तस्मिन् अतिरिक्ते लाभे कर्मकरः (श्रमिकः) स्वीयम् अधिकारं जानीयात्। प्राचीनार्थशास्त्रानुसारं यदा कर्मकरेण वेतनं गृहीत्वा स्वीयः अधिकारः विक्रीतः, तदा अतिरिक्ते लाभे न तस्य मनागपि अधिकारः, किन्तु यावद्वेतनं लाभे न केवलं कर्मकराणाम् अधिकारमेव, अपि तु पूर्णतया स्वत्वं मन्यते। मार्क्समहोदयानुसारं पूर्ववर्तिदार्शनिकानाम् अनुसारं स्वत्वरूपमपि भिन्नं भिन्नम्। अत्रायम् आशयः यद् धर्मस्य सदाचारस्य व्याख्यातॄणां पूर्वाचार्याणां मतानि निरस्य मार्क्समहोदयः तत्र सापेक्षवादिनूतनं स्वरूपम् आदधाति।

लेलिनमार्क्समहोदयः यं नूतनं सदाचारं स्थापयति सः राजनीतिकेभ्यः अर्थशास्त्रीयेभ्यश्च नियमेभ्यः न पृथगस्ति। वस्तुतः मार्क्समहोदयस्य भौतिकवादी इतिहासः सर्वाङ्गीणतया मान्यतां न आपद्यते। धार्मिकेषु संघर्षेषु उत्पादनक्रियायाः हस्तक्षेपः भवति इति कथनं सर्वाङ्गीणतया न प्रामाणिकम्। वैदिकधर्मस्थापनार्थं जगद्गुरुशङ्कराचार्येण क्रियमाणः संघर्षः मार्क्सवादिसिद्धान्तस्य सर्वथा विसंवादी। यदा उत्पादनसाधनेषु विकसितेषु बौद्धानां जैनानां च वर्णहीनप्रवृत्तेः विकासः आरब्धः, तदा सहसा पुनः वैदिकप्रवृत्तयः किमर्थं प्रसृताः? मार्क्समहोदयेन आदिमकालस्य चित्रणावसरे धर्मस्य यत्स्वरूपं व्यवस्थापितं तद् इतिहासविरुद्धम्। औपनिषदं ज्ञानविश्लेषणादिकमपि विकसितायां परम्परायाम् अभूतपूर्वमेव। अतः धर्मः वैयक्तिक्याः सम्पदः संरक्षणस्य शोषणस्य च अस्त्रम् इति कथनं भ्रमद्योतकमेव। वस्तुतः धार्मिकेषु विचारेषु अर्थस्थाने नैतिकता एव आद्रियते। मार्क्समहोदयेन स्वसमये स्वदेशे च यत्किमपि दृष्टं न तदेव सर्वम्। धर्मव्याख्याविषये मार्क्समहोदयः अतिवादी एकाङ्गी च आसीत्। अत एव धर्मः सदाचारस्य राजनीतितः बहिष्कार्यः इति तस्य मतं न स्वीकर्तुं युज्यते। एष सदाचारस्य यां व्याख्यां प्रस्तौति सा असामाजिकी।

बहूनां समाजशास्त्रिणाम् इदं मतं यत् नैतिकाः आदर्शाः न सार्वकालिकाः। वेस्टरमार्क इत्येतन्मतानुसारं नैतिकनिर्णयः वैयक्तिकभावनामूलकः। पुरुषः स्वभावनाः एव पुरस्कृत्य पारिभाषिकं स्वरूपम् उपस्थापयति। परमेतैः दार्शनिकैः एतद्विस्मारयितुं प्रयतितं यत् शक्तेः रहस्यं संयमं नियमं बौद्धिकं विकासं च आश्रयति।[1]

सुदीर्घकालं शक्तिं द्रढयितुं न केवलं बलम् अपेक्ष्यते, किन्तु जनानाम् आशा ऐतिहासिकपरम्परा तथा सामाजिकपरम्परा इत्यादयः शक्तेः आश्रयभूताः। केवलं वैयक्तिकविकासार्थमेव नैतिकता अपेक्षिता इति न, अपि तु सामाजिकता-संस्थापनार्थं राजनीतिसंघटनार्थं चापि तस्याः आवश्यकता। प्लेटो फिक्टे इत्येताभ्यां राजनीतिकबलं नैतिकतायाः वशवर्ति स्वीकृतम्। अरस्तूमहोदयोऽपि राजनीतिशास्त्रं सद्गुणानां पूरकं मनुते।

नैतिकादर्शविषये राज्यस्थापनविषये च द्वयोः पृथक्करणम् अशक्यम्। राज्यस्य आधारः कः? राज्याज्ञाः किमर्थं पालनीयाः? इत्यादिविषयको विचारः मूलतः नैतिकाः। हॉब्स इत्यस्य एतन्मतं यद् राजाज्ञां विना नैतिकतापरिपालनं न संभवति। दण्डशक्तिं विना वचनमात्रेण क्रियमाणं किमपि विधानं व्यर्थमेव इति एष सिद्धान्तः दास्ययुगे एव उपयुज्यते। स्वार्थमूलाः शक्तिशालिनां व्यवस्था एव न्यायः इति थ्रैसीमेकस इत्यस्य प्रस्तावः असङ्गत एव। वस्तुतः शक्तिर्न, अपि तु जनसम्मतिः राज्यस्य आश्रयः। शक्तिमाधृत्य यदि कदाचिद् व्यवस्था क्रियतेऽपि तदा सा अस्थिरैव भवति। अत्र संघर्षबीजानि अवश्यम्भावीनि।[2]

राजनीतेः सदाचाराद् पृथक्करणे प्रस्तुवता डब्लू. एच. ह्वाइट इत्यनेन 'अमेरिकनपॉलिटिकल सायंस रिव्यू' पत्रिकायां १९४३ अगस्तमासीयायां लिखितं यद् राजनीतिशास्त्रेण ध्येयविषये यथार्थवादिना भवितव्यम्। तत् शास्त्रं याथातथ्यरूपेण समस्याः चित्रयित्वा आदर्शान् उपस्थापयितुं न यतेत। ईदृशकरणे तस्य केवला कल्पना एव। पैरेटो इत्यनेन कृतं समाजस्य मनोवैज्ञानिकं विश्लेषणमेव

---

१. एतावानेव पुरुषो यदमर्षी यदक्षमी।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान्॥

२. तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित्॥

(मनु० ७।३६)

ह्वाइट इत्यस्य विचाराणाम् आश्रय आसीत्। एवमेव १९२८ ख्रिष्टीयवर्षे विलियम् डी० मुनरो इत्यनेनापि कथितं यद् दार्शनिकेभ्यः विधिशास्त्रिभ्यः मनोवैज्ञानिकेभ्यश्च दूरे एव राजनीतिः तिष्ठेत्। एषां हस्तागता सती राजनीतिः उपायस्वरूपताम् आप्नोति, येन तया राजनीत्या ईदृशी अनावश्यिकी शक्तिः समर्थनीया भवति, यस्याः सा न पोषिका अस्ति। स्टुअर्ट इत्यनेनापि दार्शनिकानां कृते दर्शनशास्त्रम् अस्तु, राजनीतिशास्त्रम् इत्थं नानुतिष्ठीयते, तदा तदीयसाध्यसाधनयोर्मध्ये परस्परं विरोधः उद्भवेत्।

यथार्थवादिनां राजनीतिकविचाराणां परम्परा एव प्रचलन्ती आसीत्। आदर्शम् अपास्य यथार्थविश्लेषणस्य समर्थकेन कैटलिन इत्यनेन प्रस्तावः प्रस्तुतः यद् राजनीतिकपुरुषस्वरूपे अस्य विश्लेषणं कार्यम्। यथा भौतिकशास्त्री किञ्चिल्लक्ष्यम् आदर्शं वा अनपेक्ष्यैव वास्तवं विश्लेषणं कुरुते, तथैव वास्तवेन राजनीतिकविश्लेषणेन सर्वविधादर्शाः न योजनीयाः।

अद्यत्वे वैज्ञानिक्या प्रगत्या सामाजिके स्तरे गतिविधौ च क्रान्तिकारिपरिवर्तनं जातमस्ति। ये मुक्तिम् ईश्वरं कर्मकाण्डञ्च जीवनस्य सर्वस्वं मन्यन्ते, त एव अद्यत्वे वैज्ञानिकानि तत्त्वानि शैक्षणिकान् विकासान् च सर्वस्वं मन्यन्ते। तात्पर्यमिदं यद् जीवनस्य ध्येयं परिवर्तितम् अस्ति। सम्प्रति दिव्यस्वर्गस्थाने पार्थिव एव स्वर्गः जनैः प्रतीक्ष्यते। अस्य ऐहिकस्वर्गस्य आश्रयभूतं यत्तत्त्वं तस्य अन्वेषणे विभिन्नाः उपायाः प्रयुज्यन्ते। एकोनविंशशताब्दीयस्य विज्ञानस्य मूलाधारतां पदार्थानां कार्यकारणभाव एव आपन्नः। प्रायोगिकीं व्यावहारिकीं च पद्धतिं निगमन-प्रणालीं च आश्रित्य वैज्ञानिकैः जगतः विश्लेषणं कृतम्। विश्वं चेतनम्। चेतनयैव इदं ज्ञातुं शक्यम्, इत्येष विश्वासः कार्यं कुर्वन्नासीत्। इदमपि स्वीकृतं यत् सर्वे व्यापाराः परस्परसम्बद्धाः पूर्वानुवर्तिनश्च सन्ति। ईदृशीं परिस्थितिं निर्मातुं प्रयतितम् यद् यत्र व्यावहारिकरीत्या एव वास्तवं तत्त्वं ज्ञातुं शक्येत, भवेत् तद् भौतिकमेव वा।

उपर्युक्तपद्धतेः प्रयोग आध्यात्मिकविषयेऽपि आरब्धः। कथमिदं भवतीति विचारं दूरीकृत्य, केन कारणेन भवति इत्यादिकार्यकारणभावविषयकमीमांसापरः मनुष्यः सञ्जातः। यथार्थवादस्य एष एव निष्कर्षः पर्यवसितः यत् जीवनस्य मनुष्यस्य वा न किमपि ध्येयम् अस्ति। जीवनमेव प्रारम्भः अवसानञ्च। अस्य न किञ्चित् कारणम्, न वा व्यवहारः, न वा कश्चित् कार्यक्रमः। इदं स्वार्थमेव स्वत एव स्थितम्। एतस्य उत्थानपतनादिभिर्न कश्चित् सम्बन्धः। अस्य एष परिणामः यत् विचारेषु शून्यवादस्य जीवने च अराजकतायाः प्रादुर्भावः। अस्य एष आशयो भवति यद् अतीतयुगे न कश्चिदादर्शः आसीत्, किन्तु केवलं सत्यम्। नापि किञ्चित्कारणं ध्येयं वा आसीत्, अपि तु सत्यमेव सर्वस्वम् आसीत्।

राजनीतिविषये यथार्थवादिनां कथनं यत् केवलम् एष सत्तायाः शक्तेश्च प्राप्तौ उपायः। शक्तिरपि सापेक्षा। अस्य एष आशयो यत् शक्तिः सत्ता च सदा व्यवहारायत्ते एव भविष्यतः। आभ्यां स्वयम् व्यवहारम् अनपेक्ष्य कदापि पूर्णता लब्धुं न शक्यते। तस्य फलम् एतद् भविष्यति यद् राजनीतिः दुरायतिः भविष्यति। समानता,सहिष्णुता,स्वतन्त्रता,एकता इत्यादयः यथार्थवादेन सह स्थातुं नैव शक्नुवन्ति। यतः जीवनसम्बन्धिव्यवहारेण पूर्णतया एतेषां सम्बन्धः एतेषां परित्यागश्च अशक्य एव। विश्वासमन्तरेण व्यवहारपालनम् असम्भवमेव। यथार्थवादे तु विश्वासस्य न किमपि महत्त्वं स्वीकृतम्। फलतः यथार्थवादः राजनीतिं यस्मिन् गर्ते पातयति नैतिकता ततस्ताम् उन्नयति।

आधुनिकराजनीतिज्ञेषु जार्जकैटलिन इत्यनेन आचारशास्त्रं राजनीतिशास्त्रात् पृथक् कर्त्तुं प्रस्तावः कृतोऽस्ति। तदनुसारं मूर्तिकलायाः शिक्षकः कलात्मकाभिव्यक्तेः आदर्शान् तत्त्वानि च न बोधयति। स पद्धतीनां शिक्षकः उपस्थितैः उपकरणैः किं निर्मातुं शक्नोति। किं च, न इत्येतद्बोधनमेव च तस्य कर्त्तव्यम्। राजनीतिशास्त्रस्य वेत्ता अपि श्रेयःप्रतिपादको न स्वीकार्यः। यूनानदेशीयराजनीतिशास्त्रवेत्तृभिः राजनीतिशास्त्रस्य मूलभूताः धारणा एव विस्मरणपदवीं प्रापिता-। परमद्य कैटलिन इत्ययम् हॉब्स इत्यस्य मतम् अनादृत्य गान्धीवादम् आद्रियते। वस्तुतः श्रेयःप्रतिपादनं विना राजनीतिशास्त्रं पङ्गुकल्पम्। एतदावश्यकं यत् श्रेयःप्रतिपादनविषये राजनीतिशास्त्रेण कल्पनावादिना न भवितव्यम्।

अस्य विश्लेषणस्य आधारशिला पाश्चात्त्यः राजनीतिकः इतिहासः आसीत्। तत्र धर्मविषये महान् संघर्षोऽभूत्। युगपदेव सम्पूर्णे युरोपखण्डे बाह्यजातीयैः स्वस्य प्रसारः कृतः। तस्य फलमेतद् अभूत् यत् असभ्यतां विहाय सभ्यता जनैः अनुसृता। धार्मिकी वन्या च प्रवृत्तिः तद्विषये कियतिचिद् अंशे उचिता प्रतिभाति। इत्थं च धर्मः भयपूर्णायां परिस्थितावेव संभवति इति डार्विन मार्क्स इत्येतयोः कथनं तत्रत्यायाः सामाजिकस्थितेः आलोचने क्रियमाणे कियतिचिदंशे उचितं प्रतीयते। परन्तु एतेन राजनीतिः नैतिकतातः पृथक्करणीया इति कथनं सर्वथा अन्याय्यम्।

धर्मम् आधृत्य जायमानाः ध्येयविहीनाः संघर्षास्तु पश्चिमदेशे एव दृश्यन्ते। तस्य मूलमिदं यत्तत्र धर्मं सदाचारात् पृथक् मन्यन्ते। राजनीतिः धर्मसापेक्षा इत्यस्य तात्पर्यं जनाः इत्थम् अवगच्छन्ति स्म यद् राजनीतिः सम्प्रदायविशेषस्य हस्तगता इति। वस्तुतः सदाचारस्य मूलभूतानि तत्त्वानि तु सर्वैरपि सम्प्रदायैः स्वीकृतान्यासन्। अस्य परिणामः एष जातः यत् संघर्षस्तु अभूत् धार्मिकसम्प्रदायेषु, किन्तु विद्रोहः धर्मसदाचाराभ्यां विपरीतोऽभूत्। अत एव संघर्षतः भौतिकवादिनी

राजनीतिः आरब्धा, तत्रैव सार्वत्रिकधर्मनिरपेक्षतायाः प्रस्तावः पुरः उपस्थितः। भारते भारतीयदृष्ट्या एव राजनीतेः सदाचारस्य च पर्यालोचनं भवितुमर्हम्।

वस्तुतः जीवनस्य राज्यस्यच किञ्चिद् ध्येयम्। जीवनस्य ध्येयं न सर्वथा राजनीतिकं भवितुं शक्यते। तत्र जीवनस्य ध्येयप्राप्तौ उपस्थितानां बाधानां दूरीकरणमेव राज्यस्य कर्त्तव्यम्। अस्याम् अवस्थायां राजनीतिः न कदापि उपेयभूता भवितुं शक्नोति, अपि तु उपायभूता एव। नैतिकतया तस्याः राजनीतेः नियन्त्रणं स्वीकार्यमेव। कठोपनिषदि श्रेयोविषये प्रेयोविषये च इत्थं विवेचितम्—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयसे उभे नानार्थे पुरुषं सिनीतः।
ततः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उप्रेयो वृणीते ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥

( १।२।१-२ )

"अञ्ञा हि लाभपनिसा अञ्ञा निब्बाणगामिनी" इत्येतद् विषये धम्मपदे ( ५।१५ ) विवेचितमस्ति। वैदिकपरम्परायां स्वधर्मपालने श्रेयःप्रेयसोः समन्वयः कृतोऽस्ति। श्रीमता कौटल्येन धर्मार्थसाधिकानां विद्यानामेव वास्तवं विद्यात्वं स्वीकृतम्—"ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्" ( १।२ )। अत्र विषये कथमपि राजा हस्तक्षेपं कर्तुं न शक्नोति। यत्र राजा राज्यं च साधनं तादृशं त्रयीशासनमेव प्रेयःश्रेयसोः साधकम्—

तस्मात् स्वधर्मं भूतानां राजानं न व्यभिचारयेत्।
स्वधर्मं सन्दधानो हि प्रेत्य चेह च नन्दति ॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥

( अर्थ० १।३।१६-१७ )

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ॥

( अर्थ० १।४।१९ )

राज्ञः स्वधर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः।
अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डयमतोऽन्यथा ॥

( अर्थ० ३।१।५३ )

राजशक्तिविषयकविचारेण सहैव शीलेन विनयेन च नियन्त्रितायाः शक्तेः प्रयोगः कथं कार्य्यः इत्यपि विचारः जागर्ति। राजनीतिशास्त्रे विनयशब्देन त्रयीशासनम् अभिप्रेतमस्ति। विराट्श्रेयसां साधनायां कर्मयोगमूलकस्वभाव-नियतस्वकर्त्तव्यपालनम् आत्मनिग्रहं विना न शक्यम्। एषा आत्मनिग्रहात्मिका तपस्या एव विनयः। आचार्येण कौटल्येन विनयराजशक्त्योः सम्बन्धः एवं दर्शितः—

"विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः। कृतकः स्वाभाविकश्च विनयः। क्रिया हि द्रव्यं विनयति नाद्रव्यम्। शुश्रूषा श्रावणग्रहणधारणविज्ञानो-हापोहतत्त्वाभिनिविष्टबुद्धिम्। विद्या विनयति नेतरम्। विद्यानां तु यथास्वमाचार्य-प्रामाण्याद् विनयो नियमश्च। ...अस्य। नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद् विनयस्य"। ( कौ० अर्थ० १।५।२-६,११)

मनुना इन्द्रियजयादिरूपस्य विनयस्य राज्ञः कृते आवश्यकत्वं कथितम्। ब्राह्मणानां त्रैविद्यस्य वृद्धानां च सेवायां तत्पर एव विनयशीलः कथ्यते—

ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः।
त्रैविद्यवृद्धान् विदुषास्तिष्ठेत्तेषां च शासने॥
वृद्धाश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते॥
तेभ्योऽधिगच्छेद् विनयं विनीतात्मापि नित्यशः।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित्॥
बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः।
वनस्था अपि राज्यानि विनयात् प्रतिपेदिरे॥
( ७।३७-४० )

वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः।
सुदाः पैजवनश्चैव सुमुखो निमिरेव च॥
( ७।४१ )

इन्द्रियाणां जये योगं समातिष्ठेद् दिवानिशम्।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः॥
( ७।४४ )

एतदेव अर्थशास्त्रे कौटल्येन इत्थं वर्णितम्—

"श्रुताद्धि प्रज्ञोपजायते प्रज्ञया योगो योगादात्मवत्तेति विद्यासामर्थ्यम्। विद्याविनीतो राजा हि प्रजानां विनये रतः। अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहितेरतः" —(१।५।१७-१८)।

"विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः। कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः। शास्त्रार्थानुष्ठानं वा। कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः। तद्विरुद्धवृत्तिरवश्ये-न्द्रियश्चातुरन्तोऽपि राजा सद्यो विनश्यति"—(१।६।१-५)।

छान्दोग्योपनिषदि बलमाहात्म्यविषये उक्तम्—

"स यदा बली भवति, उत्थाता भवति; उत्तिष्ठन् परिचरिता भवति, परिचरन् उपसत्ता भवति, उपसीदन्द्रष्टा भवति, श्रोता भवति, मन्ता भवति, बोद्धा भवति, कर्त्ता भवति. विज्ञाता भवति, बलेन वै पृथिवी तिष्ठति"—(७।८।१)।

किन्तु व्यक्तित्वपूर्णताविषये मुण्डकोपनिषदि कथितम्—

"प्राणो ह्येषयः सर्वभूतैर्बिभाति विजानन्विद्वान् भवते नातिवादी आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः सम्प्राप्येनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीराः युक्तात्मनः सर्वमेवाविशन्ति। तरति शोकं तरति पाप्मानं गुहा ग्रन्थिभ्यो विमुक्तोऽमृतो भवति क्रियावन्तः। श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वतः एकर्षि श्रद्धयन्तः"—(३।१-२)।

व्यक्तित्वं कठोपनिषदि इत्थं व्याख्यातम्—

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं योऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥
नित्योऽनित्यानां चेतनश्चेतनामेको बहूना यो विदधाति कामान्।
तमात्मस्थं योऽनुपश्यन्ति धीरास्तेषां शान्तिशाश्वती नेतरेषाम्॥
(२।१।१२-१३)

राजनीतिनैतिकयोः कः सम्बन्धः? इत्येतदर्थं राज्ञः दिनचर्या आचारः वैयक्तिकः सामाजिकश्च सम्बन्धः इत्यादिकम् आलोचनीयम्। महाभारताद् अर्थशास्त्रं यावत् निर्व्यसन एव राजा निर्धारितः। यत्र तत्र व्यसनिनां राज्ञां

पतनस्य कथाः उपन्यस्ताः सन्ति।[1] द्यूतव्यसनस्यैव फलं महाभारतम्। राज्ञः कर्त्तव्यपालनविषये राजसत्ता न धर्माद् अतिरिच्यते।[2] धर्मः राज्ञा सर्वथा आश्रय-

१. अभिचारान्नरेन्द्राणां धर्मः संकीर्यते महान्।
अधर्मो वर्तते चापि सङ्कीर्यन्ते ततः प्रजाः॥
भेरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च।
क्लीबाश्चान्धाश्च बधिरा जायन्तेऽत्युच्चलोचनाः॥
पार्थिवानामधर्मत्वात् प्रजानामभवः सदा।
(महा० वन० २०७।३५-३७)
कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम्॥
(महा० उद्यो० १२९।२४)
प्रायश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते।
कामवशाः क्षमव्यसननिमित्तमतिव्याधिभिरिति॥
मृगयाक्षास्तथा पानं गर्हितानि महीभुजाम्।
दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु॥
(कामन्दक० १।५६)
महा० उद्यो० ३७।१९, १०५; ३८।५-६; मनु० ९।२२७; अर्थ० १।१५; कामन्दक० १४।४३-४८; १४।५१-५२; शुक्र० १।६०३-८; महा० सभा० ३२; शान्ति० ३२।

२. धर्मयुक्तस्ततो लोकान् पुण्यान् प्राप्स्यति शाश्वतान्।
(महा० आदि० ३०।६)
राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम्।
अथ येषामधर्मज्ञो राजा भवति नास्तिकः॥
न ते सुखं प्रबुध्यन्ति न सुखं प्रस्वपन्ति च।
सदा भवन्ति चोद्विग्नाः तस्य दुश्चरितैः नराः॥
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत्।
अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः॥
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च।
तस्य राज्ञः शुभै राज्यैः कर्मभिः निर्वृताः नराः॥
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः।
(महा० अनु० ६२।४०-४४)

णीयः एव इति यावत्। 'धर्मयुक्तराजा एव सम्मान्यः।[1] "धर्माय राजा भवति न कामकरणाय तु"।[2] "यस्मिन् धर्मो विराजते तं राजानं प्रचक्षते"। सामाजिकतायाः सम्पूर्णं स्वरूप धर्मः इत्यनेन अभिप्रेतम्। राजा कथमपि एवंविधं धर्मं त्युक्तं न शक्नोति। एवंविधधर्मपालनेन स स्थिरां कीर्तिं लभते। स्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्तते। स एव राजधर्मनीतिपरो राजा चिरं कीर्तिञ्चाश्नुते ( शु० ४।५४६। )। धर्ममतिवर्तमान-राजा चौरवत् दण्ड्यो निरूपितः—

धर्मनीतिविहीनार्थदुर्बला अपि वै नृपाः।
सुधर्मंमुग्राज्ञा दण्ड्यास्ते चौरवत्सदा॥
( शु० ४।१२३३८ )

गणतन्त्रीयव्याख्यायां बौद्धानां वैदिकानां च कृते राजनीतेः सदाचारस्य सम्बन्धः समानः आसीत्। तत्र शास्त्रानुसारमेव व्यवहारस्थापना भवति स्म।[3] इन्द्रियनिग्रहेण बुद्ध्या क्षांत्या धन संत्यागेन च गणानां प्रतिष्ठा आसीत्। इन्द्रियनिग्रहादिसम्पादनार्थं च कामक्रोधलोभमोहादिप्रवृत्तीनां निरसनम् आवश्यकम् आसीत्—

नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात्।
नान्यत्र धनसंत्यागाद् गणः प्राज्ञेऽवतिष्ठते॥
( म० शां० ८१।२६ )

गणानां च कुलानां च राज्ञां भरतसत्तम।
वैरसन्दीपनावेतौ लोभामर्षौ नराधिप॥
लोभमेको हि वृणुते ततोऽमर्षमनन्तरम्।
तौ क्षयव्ययसंयुक्तावन्योन्यं च विनाशिनौ॥
( म० शा० १०७।१०-११ )

---

१. शान्ति० ५८।३।

२. शान्ति० ५८।१४।

३. धर्मिष्ठान् व्यवहारांश्च स्थापयन्तश्च शास्त्रतः।
यथावत् प्रतिपश्यन्तो विवर्धन्ते गणोत्तमाः॥
( महा० शा० १०७।१७ )

सर्वदोषास्तथा लोभात् तस्माल्लोभं विवर्जयेत् ।

( महा० शां० १५९।१२ )

अकस्मात् क्रोधमोहाभ्यां लोभाद्वापि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ॥

( महा० शां० १०७।२९-३० )

सदाचारस्य राजनीतेश्च सम्बन्धः परराष्ट्रविषये विपर्ययेण अस्ति । परराष्ट्रनीतौ हि राज्यस्य रक्षा मुख्या, यत्र राज्ये धर्मसमाजादयः समाविष्टाः सन्ति । मन्त्रः उपायश्च शक्तिः उच्यते । अस्याः राजमण्डले षाड्गुण्येन प्रयोगो भवति । अत्र मैत्री शत्रुता सत्यमसत्यञ्चेत्यादीनां सर्वेषामपि प्रयोगो न्यायार्थं सम्मतः । कूटनीतिः न उपायभूता, अपि तु उपायः । यदि साध्यं पवित्रम् उत्कृष्टं चास्ति, तदा तत्प्राप्त्यनन्तरं तत्साधनस्यापि उत्कृष्टत्वमेव भविष्यति । अर्थात् येन केनापि साधनेन निष्पाद्यमानं साध्यं उत्कृष्टं भवति, तदा तत्साधनमपि अवलम्बनीयम् । परिस्थितिविशेषे धार्मिकविषयेष्वपि कूटनीतिराश्रयणीया भवति ।[1] हृदयम्, वाणी, प्रतिज्ञा, तत्पालनम्, मधुरभाषणम्, विश्वासघातः इत्येतेषां यथावसरं प्रयोगो भवति ।[2] यावत्पर्यन्तं न अनुकूलः समयः तावत् शत्रुरपि स्कन्धेन ओढव्यः । समये उपस्थिते सति पाषाणखण्डे प्रक्षिप्तः घटः इव स सद्यः स्फोटनीयः ।[3]

१. अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः ।
लोकान् विश्वासयित्वैव ततो लुम्पेद् यथा वृकः ॥

( महा० आदि० १४०।१९ )

२. शत्रु च मित्ररूपेण सान्त्वनेनाभिसान्त्वयेत् ।
नित्यशश्चोद्विजेत् तस्मात् गृहात् सर्पयुतादिव ॥

( आदि० १४०।१५)

वाचाभृशं विनीतः स्यात् हृदयेन तथा क्षुरः ।
स्मितपूर्वाभिभाषी स्यात् सृष्टो रौद्राय कर्मणे ॥

( महा० आदि० १४०।६६ )

प्रफुल्लवदनेनैव तथा कोमलया गिरा ।
क्षुरधारेण मनसा रिपोश्छिन्द्रं सुलक्षयेत् ॥

( शुक्र० ४।११८२ )

अन्धः स्यादन्धबेलायां बाधिर्यमपि चाश्रयेत् ।

( महा० आदि० १४०।१२ )

३. वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ।
ततः प्रत्यागते काले भिन्द्याद् घटमिवाश्मनि ॥

( आदि० १४०।२१ )

शत्रुनाश एव प्रमुख उद्देश्यभूतः।[1] पुत्रः, सखा, भ्राता, पिता, गुरुर्वा यदि शत्रुत्वम् आचरति, तदा ऐश्वर्यप्राप्त्यर्थं सोऽपि निशङ्कं हन्तव्यः।[2] यद्यपि कस्यचित् व्यसनोद्भावनं पापम् तथापि शत्रुविषये नेदम्। स तु यथा कथञ्चिदपि व्यसने योजनीय एव। तद्यथा कूटनीतेराचार्यः चाणक्यः "व्यसने योजयेत् शत्रून्"।[3] शत्रुविषये कथं व्यवहरणीयम् इत्येतद्विषये शान्तिपर्ववचनं नीलकण्ठीया तट्टीका च महत्त्वपूर्णा—

रमस्व परमामित्रे विषये प्राज्ञसम्मतः।
भजस्व श्वेतकाकीयैर्मित्रधर्ममनर्थकैः ॥
(शा० १०५।१५)

"शत्रुसमीपे श्वेतकाकीयैः श्वा च एतस्य काकश्च तेषामिमे धर्माः क्रमेण नित्यं जागरूकत्वभयचकितत्वपरेङ्गितज्ञत्वानि तैरुपायैः मित्रधर्मं भजस्व।"

शत्रुः समूलम् उन्मूलनीयः, येन तत्सहायकादयः स्वयमेव विनाशम् आप्नुयुः। "मूलमेवादितश्छिन्द्यात् परपक्षस्य नित्यशः"—

ततः सहायांस्तत्पक्षान् सर्वांश्च तदनन्तरम् ॥
छिन्नमूले त्वधिष्ठाने सर्वे तज्जीविनो हताः।
कथं नु शाखा तिष्ठेरन् छिन्नमूले वनस्पतौ ॥
(आदि० १४०।१६-१७)

परराष्ट्रविचारानन्तरं युद्धविषये नैतिकतायाः प्रश्न उदेति। युद्धं स्वर्गप्राप्तेः सर्वोत्तमं साधनम्—"न युद्धाच्छ्रेयान् हि पन्थाः स्वर्गस्य कौरवाः"(३।५७ म० शल्य०)—

यदृच्छयैतत् सम्प्राप्तं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः कर्ण लभन्ते युद्धमीदृशम् ॥
(कर्णपर्व ५७।२)

---

१. सर्वोपायैः निहन्तव्या शत्रवः शत्रुसूदनः।
(महा० सभा० ७४।८)
तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ॥
(महा० शान्ति० २४।१६)
वधमेव प्रशसन्ति शत्रूणामपकारिणाम्।
(आदि० १४०।१०)

२. पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः।
रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ॥
(आदि० १४०।५२)

३. चाणक्यनीतिदर्पणम् ३।३।

विजयविषये कौटल्यः कथयति "त्रयोऽभियोक्तारो धर्मासुरलोभविजयिन इति। तेषामभ्यवपत्त्या धर्मविजयी तुष्यति। तमभ्यवपद्येत परेषामपि भयात्। भूमिद्रव्यहरणेन लोभविजयी तुष्यति। तमर्थेनाभ्यवपद्येत। भूमिद्रव्यपुत्रदारप्राणहरणेनासुरविजयी। तं भूमिद्रव्याभ्युपग्राह्याग्राह्यः प्रतिकुर्वीत" (अर्थ० १२।१।१२-१७)। नीतिवाक्यामृतेऽपि इत्थमेव प्रतिपादितम्—"स धर्मविजयी राजा विधेयमात्रेणैव सन्तुष्टः। प्राणार्थाभिमानेषु न व्यभिचरति। स लोभविजयी राजा यो द्रव्येण कृतप्रीतिः। प्राणाभिमानेषु न व्यभिचरति। सोऽसुरविजयी यो प्राणार्थमानोपयातेन महीमभिलषति" (३०।७०७२)। अन्यत्रापि इत्थमेव व्यवस्था।[1] युद्धविषयकाः नियमाः अन्यत्र उपवर्णयिष्यन्ते। अत्र एतदेव कथनं पर्याप्तं यत् विपक्षानुसारं युद्धनीतिः स्वीकृता अस्ति। कुटिलेन शत्रुणा समं धर्मयुद्धं मौर्ख्यद्योतकमेव। तादृशं शत्रुं निग्रहीतुं तानि साधनानि आश्रयणीयानि यैः विजयप्राप्तिः स्यात्। तत्र अनैतिकता नैतिकता वा न विचारणीया।

आपद्धर्मप्रसङ्गे सदाचारः नैतिकता च बाधिता भवति। देशकालानुसारं धर्मः अधर्मताम्, अधर्मश्च धर्मताम् आपद्यते।[2] पुरुषशक्त्यनुसारमपि धर्मा-

---

१. विजयो धर्मयुक्तश्च तथार्थविजयश्च हि।
आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः॥
(महा० शा० ५९।३८)
विजिगीषुर्धर्मविजयी तथा लोकं वशं नयेत्।
यः स्यादधर्मविजयी तस्मादुद्विजते जनः॥
प्राप्यापि वसुधां कृत्स्नां न चिरमश्नुते॥
(वि० पु० २।१२५।२१)

२. भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि।
कारणाद्देशकालस्य देशकालः स तादृशः॥
(महा० शा० ८८।३२)
आपद्गतेन धर्माणामन्यायेनोपजीवनम्।
(महा० शा० १३०।२५)
अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुमर्हति।
बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत॥
द्वैधमेकस्यैव कर्मणः क्वचित्काले धर्मत्वं क्वचिदधर्मत्वमिति द्विप्रकारत्वं तस्मिन्प्राप्ते तदनभिज्ञः संशयं संकटं प्राप्नोति—नीलकण्ठः।

धर्मयोः विवेचनं भवति।[1] परन्तु आपत्कालेऽपि धर्मं सम्यक् अनुवर्तमानः महापुरुषः भवति। "आपत्सु यो धारयति धर्मं धर्मविदुत्तमः" (१५५।१४)। राज्ञः कृते स्वशरीररक्षणमेव परो धर्मः। एतदर्थं स कान्यपि साधनानि आश्रयितुं शक्नोति। येन केनाप्युपायेन जीवनरक्षा करणीया--

येन येन विशेषेण कर्मणा येन केनचित्।
अभ्युज्जीवेत् साद्यमानः समर्थो धर्ममाचरेत्॥

(म० शा० १४१।६३)

यथा यथैव जीवेद्धि तत् कर्त्तव्यमहेलया।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात्॥

(म० शा० १४१।६५)

स्थाने भवेत्संशयः प्रेत्यभावे निःसंशयः कर्मणा वै विनाशः।
अहं पुनर्व्रतनित्यः शमात्मा मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम्॥

(म० शा० १४१।७०)

अद्याहमेतद्वृजिनं कर्म कृत्वा जीवंश्चरिष्यामि महापवित्रम्।
स पूतात्मा धर्ममेवाभिपत्स्ये..........................।

(म० शा० १४१।८६)

एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत्॥
एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत्।
जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते॥

(म० शा० १४१।१००-१)

प्राणरक्षार्थं राष्ट्ररक्षार्थञ्च शत्रुणापि समं सन्धिः कार्यः। य इत्थं न करोति स मूर्खः। सन्ध्यर्थम् एषः अमित्रः मित्रं वा इति परिज्ञानम् आवश्यकम्। मित्रेण सह, शत्रुत्वाचरणम् अमित्रेण सह च सन्धिः नाशस्यैव मूलम्--

---

१. अन्योधर्मः समर्थानामापत्स्वन्यश्च भारत--(शा० १३०।१४)।
तस्मादापत्स्वधर्मोऽपि श्रूयते धर्मलक्षणम्--(शा० १३०।१६)।

संघातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः ।
अमित्रैरपि सन्धेयं प्राणा रक्ष्या हि भारत ॥

( म० शा० १३८।१५ )

यो ह्यमित्रैर्नरो नित्यं न सन्दध्यादपण्डितः ।
न सोऽर्थं प्राप्नुयात् किञ्चित् फलान्यपि च भारत ॥
यस्त्वमित्रेण संदध्याद् मित्रेण च विरुद्धयते ।
अर्थयुक्तिं समालोक्य सुमहद् विन्दते फलम् ॥

( म० शा० १३८।१६-१७ )

बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः ।
कार्यं इत्याहुराचार्या विषमे जीवितार्थिना ॥

( म० शा० १३८।४६ )

शक्तिमता सह आत्मरक्षायाः एकमेव साधनं सन्धिः —

कृत्वा बलवता सन्धिमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्य नार्थाय कल्पते ॥

राजनीतिक्षेत्रे अविश्वास एव परा नीतिः स्वीक्रियते—

यो विश्वसिति मित्रेषु न विश्वसिति शत्रुषु ।
अर्थयुक्तिमविज्ञाय यः प्रीतौ कुरुते मनः ॥
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ।

( म० शा० १३८।१४३,४)

अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ।
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वसयेदन्यान् परेषां तु न विश्वसेत् ।

( म० शा० १३८।१९३-९६ )

संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।

( म० शा० १३८।९६ )

वर्णधर्मः ईश्वरसृष्टः शाश्वतश्च स्वीक्रियते। तस्य अधिकाराः कर्त्तव्यानि च निश्चितानि सन्ति। तानि च अपरिवर्तनीयानि, परन्तु आपत्काले तत्परिवर्तनं मान्यम् --

यत्राधर्मो धर्मरूपाणि धत्ते धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः।
बिभ्रद् धर्मो धर्मरूपं तथा च विद्वांसस्तं सम्प्रपश्यन्ति बुद्धया॥
एवं तथैवापदि लिङ्गमेतद् धर्माधर्मौ नित्यवृत्ती भजेताम्।
आद्यं लिङ्गं यस्य तस्य प्रमाणमापद्धर्मं सञ्जय तन्निबोध॥
लुप्तायां तु प्रकृतौ येन कर्म निष्पादयेत् तत् परीप्सेद् विहीनः।
प्रकृतिस्थश्चापदि वर्तमान उभौ गर्ह्यौ भवतः सञ्जयैतौ॥
अविनाशमिच्छतां ब्राह्मणानां प्रायश्चित्तं विहितं यद् विधात्रा॥
सम्पश्येथाः कर्मसु वर्तमानान् विकर्मस्थान् संजय गर्हयेस्त्वम्॥

(म० उद्योग० २८।२-५)

भारतीयसमाजरचनाविषये एष आक्षेपः क्रियते यद् वर्णव्यवस्थात एकजातीया जनाः तत्रैव सीमिता भवन्ति। यदा यवनैः देश आक्रान्तः तदा, क्षत्रियाणामेव एतत् कर्त्तव्यम् आसीद् यत्ते युद्धं कुर्युः। वर्णान्तराणां कृते युद्धेन न कश्चित् सम्बन्धः। अस्य फलमेतद् अभूद् यत् क्षत्रियेषु पराजितेषु सम्पूर्णः देशः पराजितोऽभवत्। 'पानीपत' इति क्षेत्रे युद्धमभूत्। देशस्य आयतेः निर्णयस्य अवसरोऽवर्तत। ईदृशे समयेऽपि कृषकाः निःशङ्कं तत्सविधे एव कृषिं कुर्वन्तोऽभूवन्। यतः तेषां युद्धेन न कश्चित् सम्बन्धः, युद्धस्य उत्तरदायित्वं क्षत्रियाणामेव आसीत्। एवंविधा अनेके आक्षेपाः वर्णव्यवस्थाविषये भवन्ति। एतेषाम् आक्षेपाणामिदमेव मूलं यद् आक्षेपकैः वर्णधर्मस्य व्यापकं स्वरूपं न अवबुद्धम्।

इदं सत्यं यत् "युद्धाय क्षत्रियः सृष्टः सञ्जयेह जयाय च" (म० उ० १३५।१३), इदमपि मतमस्ति "ब्राह्मणक्षत्रियवैश्यशूद्राणां तेजःप्राधान्यात् पूर्वः पूर्वः श्रेयान् सन्नाहितुम् इति आचार्याः"; किन्तु कौटल्यः इदमित्थं प्रस्तौति "प्रणिपातेन ब्रह्मबलं परोऽभिहारयेत्। प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः। बहुलं सारं वा वैश्यशूद्रबलम्" इति। राजाज्ञानुसारम् अक्षत्रियैरपि शस्त्रं ग्राह्यम्।[1] यदि देशः दस्युभिः

1. राज्ञो नियोगाद् योद्धव्यं ब्राह्मणेन विशेषतः।
वर्तता क्षात्रधर्मेण ह्येवं धर्मविदो विदुः॥

आक्रान्तः, मर्यादा च विनाशोन्मुखी, तदा सर्वैः अपि जनैः जातिधर्मादिकमविचार्य शस्त्रं ग्राह्यम्।[1] तदानीं शस्त्रग्रहणमेव तेषां कृते परो धर्मः। शक्तिरेव राष्ट्रस्य आधारः। अतः शक्तिसम्पादनं राष्ट्रियाणां सर्वेषामपि कर्त्तव्यम्, न तु केवलं क्षत्रियस्यैव। अस्यां स्थितौ यदि क्षत्रियः असमर्थो भवति, तदा अन्येषां सर्वेषां वर्णानामिदं कर्त्तव्यं यत्ते निःशङ्कं शस्त्रग्रहणं कुर्युः।[2] गौतमेन "प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत" इति प्रतिपादितम्।[3] महाभारते वर्णत्रयस्य रक्षार्थं ब्राह्मणस्य कृते शस्त्रग्रहणं विहितम्।[4] एवमेव वैश्यविषयेऽपि व्यवस्था।[5]

बौधायनोऽप्याह--"गृहीतायां विप्रविशो शस्त्रं धर्मव्यपेक्षया" (२।२।८०)। सर्वेऽपि धर्मशास्त्रकाराः ईदृशीमेव व्यवस्थां मन्यन्ते।[6] किं बहुना, न केवलं क्षत्रिय एव, अपि तु शूद्रोऽपि राजा भवितुं शक्नोति, यदि सः मर्यादां परिपालयति। अधोनिर्दिष्टैः वचनैः वस्तुस्थितिः स्पष्टीक्रियते—

अपारे यो भवेत् पारमप्लवे यः प्लवो भवेत्।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति॥
यमाश्रित्य नरा राजन् वर्तयेयुर्यथासुखम्।
अनाथाः परिकाल्यन्तो दस्युभिः परिपीडिताः॥
तमेव पूजयेयुस्ते प्रीत्या स्वमिव बान्धवम्।
अभीराभीक्ष्णं कौरव्य कर्त्ता सन्मानमर्हति॥

---

१. उन्मर्यादे प्रवृत्ते तु दस्युभिः सङ्करे कृते।
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर॥
(म० शा० ७८।१८)।

२. अशस्त्रं क्षत्रियं मत्वा शस्त्रं गृह्णाद् यथापरः।
त्राणायाप्यसमर्थं तं मन्यमानमतीव च॥

३. गौ० ध० सू० ७।२५।

४. ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति।
आत्मत्राणे वर्णदोषे दुर्दम्यनियमेषु च॥
(म० शा० ७८।३४)

५. "आत्मत्राणे वर्णसंवर्गे ब्राह्मणवैश्यौ शस्त्रमाददीयाताम्"—गौ० ध० सू० ७।२४।

६. मनु० ७।३४८; १०।८१; याज्ञ० ३।३५; शुक्र० ४।११३५-३६।

किं तैर्येऽनडुहो नोह्याः किं धेन्वा वाप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाप्यरक्षता ॥
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यनर्थः षण्ढो वा पार्थं क्षेत्रं यथोषरम् ॥
एवं विप्रोऽनधीयानो राजा यश्च न रक्षिता ।
मेघो न वर्षते यश्च सर्वथा ते निरर्थकाः ॥
नित्यं यस्तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राजा कर्त्तव्यस्तेन सर्वमिदं धृतम् ॥
(म० शा० ७८।३८-४४)।

इत्थमापत्तिकाले वर्णान्तरीयवृत्तेः आश्रयणं विहितमस्ति ।

—❀—

# ४

# सप्ताङ्गराज्यम्

**प्रकृतयः**

"स्वाम्यमात्यजनपद्दुर्गकोशदण्डमित्राणि प्रकृतयः ।[1]" एता एव राज्यस्य सप्त प्रकृतयः । एताः राज्याङ्गशब्देनापि व्यवह्रियन्ते । अपरार्केण ( पृ० ५८८ ) प्रकृतिः इत्थं व्याख्याता—"यतः कार्यमुत्पद्यतेऽवतिष्ठते नियमेन भवति सा प्रकृतिः । हिरण्यं कुण्डलस्य । राज्यं च विना स्वाम्यादिभिः नोत्पद्यते, उत्पन्नमपि न तैर्विना चिरकालमनुवर्तते । ततो भवन्ति स्वाम्यादयो राज्याङ्गानि ।" राजशास्त्रे प्रकृतिशब्दः अन्ताराज्यविधौ ( मण्डलसिद्धान्तविधौ ) अपि प्रयुक्तः । कौटल्येनापि ( ६।२।१ ) अस्मिन्नर्थे प्रकृतिशब्दस्य प्रयोगः कृतः—"राजात्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं विजिगीषुः" (६।२।१६); "तस्य समन्ततो मण्डलीभूता भूम्यनन्तरा अरिप्रकृतिः" (१७)। राष्ट्रान्तरीयं राष्ट्रियं चेति राज्यस्य अस्ति रूपद्वयम् । प्रथमविषय एव कौटल्येन "षाड्गुण्यस्य प्रकृतिमण्डलस्य योनिः" इत्युक्तम् । मनुराह—

एताः प्रकृतयो मूलं मण्डलस्य समासतः ।
अष्टौ चान्या समाख्याता द्वादशैव तु ताः स्मृताः ।।

(७।१५६)

द्वादशभिः प्रकृतिभिः सार्धं राज्यस्य राष्ट्रान्तरीयं स्वरूपम् उपस्थापितमस्ति । एतदनन्तरमेव मनुना राज्यस्य देशगतं स्वरूपमपि प्रास्तावि—

अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ।
प्रत्येकं कथिता ह्येता संक्षेपेण द्विसप्ततिः ।।

( मनु० ७।१५७ )

राज्यस्य देशगताः प्रकृतयः मनुना नवमाध्याये वर्णिताः । तासां प्रकृतीनां परस्परं कीदृशः सम्बन्धः इत्यादि स्पष्टीकर्तुं कानिचिद् मनुवचनानि कुल्लूकभट्टकृता तद्व्याख्या च अत्रोद्ध्रियन्ते—

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ।।

---

१. कौ० अर्थ० ६।१; स्वाम्यमात्यौ जनो दुर्गं कोशो दण्डस्तथैव च । मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते । याज्ञ० १।३५३; मनु० ९।२९४; स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः । विष्णुधर्मसूत्र ३।३३; स्वाम्यमात्यसुहृद्दुर्गकोशदण्डजनाः । गौ० सू०, सरस्वतीविलासे पृ० ४५ अत्र उद्धृताः शान्ति० ६९।६४-६५; मत्स्य० २२५।११,२१९; अग्निपुराणम् २३३।१२; कामन्दक० १।१६ ।

सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम्।
पूर्वं पूर्वं गुरुतरं जानीयाद् व्यसनं महत्॥

( मनु० ९।२९४-९५ )

"आसां राज्यप्रकृतीनां सप्तानां क्रमोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्वस्याः पूर्वस्या विनाशविषये गरीयो व्यसनं जानीयात्। तथाहि—मित्रव्यसनात् सबलव्यसनं गरीयः, सम्पन्नबलस्यैव अमित्रानुग्रहे सामर्थ्यात्। एवं बलात् कोशो गरीयान्, कोशनाशे बलस्यापि नाशात्। कोशाद्राष्ट्रं गरीयः, राष्ट्रनाशे कुतः कोशोत्पत्तिः? एवं राष्ट्राद्दुर्गनाशेऽपि दुर्गादेव यवसेन्धनादिसम्पन्नाद् राज्यरक्षासिद्धिः। दुर्गादमात्यो गरीयान्, प्रधानामात्यनाशे सर्वाङ्गवैकल्यात्। अमात्यादपि आत्मा, सर्वस्य आत्मार्थत्वात्। तस्मादुत्तरापेक्षया पूर्वं यत्नतो रक्षेत्।"

एतासां प्रकृतीनामन्योन्यं कः सम्बन्धः? एतद्विषये च अन्येषामाचार्याणां किं मतम्? इत्यादि कौटल्येन अर्थशास्त्रे व्यसनाधिकरणे ( ८।१ ) उपवर्णितम्। तत्र अन्येषामपि अर्थशास्त्रकृतां मतानि उपन्यस्तानि। तानि मतानि समीक्षमाणेन कौटल्येन स्वीयं मतमपि उपस्थापितम्—

"स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रव्यसनानां पूर्वं पूर्वं गरीय इत्याचर्याः ।५। नेति भारद्वाजः ।६। स्वाम्यमात्यव्यसनयोः अमात्यव्यसनं गरीय इति ।७।...नेति कौटल्यः ।११। मन्त्रिपुरोहितादिभृत्यवर्गमध्यक्षप्रचारं पुरुषद्रव्यप्रकृतिव्यसन-प्रतीकारमेधनं च राजैव करोति ।१२।...स्वामी च सम्पन्नः। स्वसम्पद्भिः प्रकृतीः सम्पादयति ।१५।...अमात्यजनपदव्यसनयोर्जनपदव्यसनं गरीयः इति विशालाक्षः ।१९।...नेति कौटल्यः ।२२। अमात्यमूला सर्वारम्भाः ।२३। जनपददुर्गव्यस-नयोः दुर्गव्यसनमिति पाराशराः ।२५।... नेति कौटल्यः ।२७। जनपदमूला दुर्गकोश-दण्डसेतुवार्तारम्भाः शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यञ्च जनपदेषु ।२८। दुर्गकोशव्यसनयोः कोशव्यसनमिति पिशुनः ।३१। ...नेति कौटल्यः ।३६। दुर्गार्पणः कोशो दण्डस्तूष्णीं युद्धं स्वपक्षनिग्रहो दण्डबलव्यवहार आसारप्रतिग्रहः परचक्राटवी प्रतिषेधश्च ।३७। दुर्गाभावे च कोशः परेषाम् ।३८। दृश्यते हि दुर्गवतामनुच्छित्तिः इति ।३९। कोशदण्डव्यसनयोः दण्डव्यसनमिति कौणपदन्तः ।४०।...नेति कौटल्यः ।४५। कोशमूलो हि दण्डः ।४७।...दण्डमित्रव्यसनयोर्मित्रव्यसनमिति वातव्याधिः ।५६। ...नेति कौटल्यः ।६०। दण्डवतो मित्रं मित्रभावे तिष्ठत्यमित्रो वा मित्रभावे ।६१।"

कौटल्येन राज्ञः स्थानं सर्वोच्चम् अमन्यत। फलतः राज्ञि एव सर्वाः प्रकृतयः पर्यवस्यन्ति—"राजा राज्यमिति प्रकृतिसंक्षेपः" ( ८।२।१ ) इदं सूत्रम् नैकधा व्याख्यातमस्ति। केचन राजा राज्यं चेति द्वेधा प्रकृतिं विभजन्ति। वस्तुतः

राजा स्वयमपि राज्यस्य प्रकृतिः (अङ्गम्)। एतदावश्यकं यद् अङ्गान्तरापेक्षया तस्य अधिकं महत्त्वम्। शुक्रः राज्याङ्गेषु-राजा मूर्धा, अमात्यं नेत्रम्, मित्रं कर्णः, कोशो मुखं, सेना मनः, दुर्गो हस्तः, राष्ट्रं पादः इत्युपवर्णयामास। मनुस्मृतौ एतेषामङ्गानां यथास्थानं यथासमयं च प्राधान्यं स्वीकृतम्। यदा यदङ्गमपेक्ष्यते, तदा तस्य महत्त्वम्।[1] महाभारतानुसारं मनुस्मृत्यनुसारं च सप्तानां राज्याङ्गानाम् आङ्गिकी-एकता एव राज्यम्। परस्परं तेषां समन्वयेन कार्यसञ्चालने एव राज्यस्य साफल्यम्। आधुनिकाः राजनीतिविदः राज्याङ्गेषु सम्प्रभुता, प्रशासनम्, क्षेत्रफलम्, जनसंख्या-एतेषां प्राधान्यं मन्वते। भण्डारकरमहोदयेन इमान्येव चत्वारि तत्त्वानि पुरोधार्य भारतीयराज्यं समीक्षितम्। धर्मशास्त्रादिषु ईदृशानि वचनानि लभ्यन्ते यानि तुलनात्मकदृष्ट्या आलोचयितुं शक्यानि।[2] इदमाश्चर्यं यद् बलंश्लीमहोदयेन राज्याङ्गानि तथैव विवेचितानि, यथा शुक्राचार्येण तानि वर्णितानि। तैः प्रशासनं शिरः, मन्त्रिमण्डलं कर्णः, परराष्ट्रसम्बन्धश्च नासिका इत्यादिरीत्या राज्यसम्बन्धीनि तत्त्वानि उपवर्णितानि।[3]

## राज्यम्

'राज्ञः भावः कर्म वा राज्यम्' इति व्युत्पत्तिमनुसृत्य राज्यपदं राजतन्त्रीयभावनामेव व्यनक्ति। 'राजन्' इति शब्दादेव राज्यशब्दस्य निष्पत्तिं पाणिनिरपि अभिप्रैति(५।१।१२४-१२८), परं राज्यशब्देन उक्तानि सप्तान्यपि अङ्गानि बोध्यन्ते, न केवलं राजैव। एवं च एष राज्यशब्दः अद्यत्वे यादृशेऽर्थे प्रयुज्यते, तमेवार्थं प्रायः संवदति। क्वचिद् एष राज्यशब्दः 'प्रशासन' (government) इति पदवाच्ये अर्थे

---

१. "राजा राज्यमिति प्रकृतिसंक्षेपः" कौटल्य० ८।२।१; तत्कूटस्थानीयो हि स्वामीति कौ० ८।१; सप्ताङ्गमुच्यते राज्यं तत्र मूर्धा नृपः स्मृतः। दृगमात्यः सुहृच्छ्रोत्रं मुखकोशो बलं मनः॥ हस्तौ पादौ दुर्गराष्ट्रौ...शुक्रनीति० १।६१-६२; सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्तितः—राजनीतिप्र०, पृ० १२३; सप्ताङ्गस्य राज्यस्य त्रिदण्डस्येव तिष्ठतः। अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः॥ तेषु तेषु हि कालेषु तत्तदङ्गं विशिष्यते। येन यत् सिध्यते कार्यं तत् प्राधान्याय कल्पते॥ शान्तिपर्व; मनु० ९।२९६,२९७; परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते। मत्स्य० २२९।१।

२. गौ० ११।१; आप० २।९।२५।१०; २।१०।२५।११; २।१०।२६।४।

३. Korkunov; General Theory of Law, (Tr. by W. G. Hastings) NewYork, (1922), P. 274.

प्रयुज्यते, यत्र राजा अमात्यश्चेति द्वयमेव समाविशति। मानसोल्लासेऽपि एष एव आशयः प्रकटीकृतः (२।८।६८८,६८९,६९१)। नीतिवाक्यामृते पृथिवीपरिपालनविषये राज्ञः कर्म भावो वा राज्यमुक्तम्। मनुस्मृतिव्याख्यानावसरे मेधातिथिना "समृद्धाः जनाः एव राज्यम्" इत्युवाच (८।१)। जनपदहीनं राज्यं न कथमपि राज्यं मनुते कौटल्यः—"न ह्यजनो जनपदो राज्यमजनपदं वा भवतीति कौटल्यः (१३।४।५)।" जैमनीयसूत्रव्याख्यानावसरे शबरस्वामिना राज्यशब्दस्य व्यापकविषयकत्वं स्वीकृतम्। एतस्य विवेचितस्य एष एव निष्कर्षो यद् आधुनिकैः यत्र अर्थेषु राज्यशब्दः प्रयुज्यते, न तत्रार्थे तेषामपूर्वः सङ्केतः, अपि तु सोऽर्थः भारतीयसाहित्येऽपि सङ्केतित एव।[१]

## मात्स्यन्यायस्थितौ राज्यस्य आवश्यकता

राजशक्तेः प्रादुर्भावात् पूर्वमराजकतायाः मात्स्यन्यायस्य साम्राज्यमासीत्। प्राचीनभारतीयशास्त्रानुसारं सृष्टेः उद्गमस्थानम् 'ऋतम्'। यद् विराट्पुरुषस्य तपसोऽजायत। तत एव समुद्रसंवत्सरादयः उदपद्यन्त।[२] इत्थं सृष्टेः पूर्वमपि 'ऋतम्' आसीत्। तदेव सृष्टौ विकसितम्। सांख्यदर्शनानुसारं सत्त्वरजस्तमोभ्यः सृष्टेः उपक्रमः। आरम्भदशायां सत्त्वस्य प्राधान्यम्। विकासदशायां रजस्तमसोः सम्बन्धः। स्थावरजंगमात्मकं समस्तेऽपि जगति इमे गुणाः अनुस्यूताः। गुणत्रयस्य विपर्ययेण सर्वत्र परिवर्तनं भवति। समाजस्य आरम्भदशायां सत्त्वस्य प्राधान्यम्, अस्य प्रभावः समाजविषये व्यक्तिविषये च दृश्यते। अत एव अन्यनियन्त्रणमनपेक्ष्यैव धर्मपालनेन समाजः स्वत एव सञ्चाल्यते, अर्थात् स्वत एव धर्मात्मनां सत्त्वप्रधानानां कृते नान्यनियन्त्रणमपेक्ष्यते। अस्य पूर्वस्थितिः स्वस्मिन्नेव पूर्णा। यतः पुरुषः सम्बन्धनिरपेक्षः आसीत्। द्वितीयस्थितौ सम्बन्धस्तु विकसितः; परन्तु न नियन्त्रणम्। तृतीयस्थितौ परस्परसम्बन्धे धार्मिकनियमानां प्रसारः, परन्तु नियन्तुः अभावः आसीत्। वस्तुतः अपेक्षा एव नासीत् तदानीं नियामकस्य। एष एव कालः काश्यपेन आदियुग इति देवयुग इति कृद्युग इति च व्यवहृतः। पुरुषः अपरमितशक्त्या प्रभावेण वीर्येण धर्मेण सत्त्वेन तेजसा च युक्तः आसीत्। तदानीं पुरुषे रागद्वेषादयोऽपि नासन्। कालान्तरे सत्त्वम्

---

१. K. P. Jayaswal: Hindu polity, vol II p., 9.
B. K. Sarkar: Positive Background of Hindu Sociology, Book II, PP. 34-39.
Anjaria: Nature and Grounds of Political Obligations in the Hindu State, ch. II.

२. ऋग्वेद १०।१९।१।

अभिभूय रजस्तमसी वृद्धिं गते।[1] परिणामे कृद्युगे सामाजिकीसभ्यता विकसिता, तद्विकास एव च भारतीयैः मनीषिभिः पतनम् (सत्त्वच्युतिः) अमन्यत। ततः समाजः त्रेतायुगं प्रविष्टः, तत्र च लोभादयो वृत्तयः विकसिताः।[2]

उक्तेन विवेचनेन स्पष्टं यत् पुरुषे स्वसात्त्विकवृत्तिभिः सह जायमानः राजस-तामसवृत्तीनां विकास एव युगपरिवर्तकः। एतच्च महाभारते पराशरेण भीष्मेण च सुस्पष्टं वर्णितम्। पराशरो लिखति यद् धर्मप्रधाने समाजे धर्मन्यायशीलेषु जनेषु दण्डस्य आवश्यकतायां धिक्काररूप एव दण्डः पर्याप्तः आसीत्। अर्थात् तदानीं यदि कश्चित् कञ्चित् प्रति 'धिग्' इति कथयति, तदा साधिक्कृतिरेव तस्य कृते महान् दण्डः आसीत्। किन्तु कालान्तरे रजस्तमसोर्विकासे ताभ्यां पुरुषः प्रभावितः। क्रमशः प्रजासु दर्पमोहक्रोधमदमत्सरादयः प्रादुरभवन्। तदानीम् उक्तः धिग्दण्डः प्रजाः नियमयितुं न प्राभवत्। तेन समाजे अव्यवस्था जाता। जनैः देवानां ब्राह्मणानाञ्च अवज्ञा अपि आरब्धा।[3] इमां स्थितिं भीष्मः इत्थं

---

१. चरकसंहिता—'पुरा खलु अपिरिमितशक्तिप्रमाप्रभावद्धार्य'''धर्मसत्त्वशुद्धतेजसः पुरुषा बभूवुः। तेषां क्रमादपचीयमानसत्त्वानामुपचीयमानरजस्तमस्कानां'''तेजोऽन्तर्दधौ।"
(पराशरकृतज्योतिषसंहितायाः, भट्टोत्पलकृतबृहत्संहितायाः टीका, पृ० १५।)

२. भ्रश्यति तु कृद्युगे ''लोभः प्रादुरासीत्। ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोक चिन्तोद्वेगादयः प्रवृताः।

३. श्रूयन्ते हि पुराणेषु प्रजा धिग्दण्डशासनाः।
दान्ता धर्मं प्रधानाश्च न्यायधर्मानुवृत्तिकाः॥
तं धर्म्ममसुरास्तात! नामृष्यन्त जनाधिप।
विवर्धमानाः क्रमशस्तत्र तेऽन्वाविशन् प्रजाः॥
तासां दर्पः समभवत् प्रजानां धर्म्मनाशनः।
दर्पान्मानस्ततः पश्चात् क्रोधस्तास्तासामजायत॥
ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितम्।
ह्रीश्चैवाप्यनशद् राजन्! ततो मोहोऽभ्यजायत॥
ततो मोहपरीतास्ता नापश्यन्त यथा पुरा।
परस्परावमर्द्देन न वर्धन्त्यो यथासुखम्॥
ताः प्राप्य तु स धिग्दण्डो न कारणमतोऽभवत्।
ततोऽभिगच्छन् देवांश्च ब्राह्मणांश्च'''ताः॥
प्राप्य तु स धिग्दण्डो न कारणमतोऽभवत्।
ततोऽभिगच्छन् देवांश्च ब्राह्मणांश्चावमन्य ह॥
(महा० शान्ति० २६८।८-१४)

वर्णयति—

प्रारम्भकाले न राज्यम्, न च राजा आसीत्। न दण्डः, न च दण्डयिता आसीत्। धर्मेण एव प्रजाः आत्मानं रक्षयन्ति स्म। कालान्तरे क्रमशः मोहादि-वृत्तिभिः धर्मोऽभिभूतः। जनाः लोभवशङ्गताः। ततः कामः रागश्चाजायत। येन किं कर्त्तव्यम्, किञ्च अकर्त्तव्यमिति विवेकः प्रजाभ्यो दूरं गतः। धर्मनाशेन सन्त्रस्ताः जनाः ब्रह्माण शरणं ययुः। ब्रह्मणः अध्यायसहस्रेण धर्मार्थकामविषयकाः नियम-संहितास्तेषां कृते निर्दिष्टाः।[1]

एतेन विशदं यदिदं मानवस्य उत्तरोत्तरं पतनं वद्धमानवस्य प्रवृत्तयम्, एव मूलम्। मन्वादय इममेव सिद्धान्तं समर्थयन्ते। तदनुसारमीर्ष्याद्वेषाद्यात्मिकाभिः प्रवृत्तिभिरेव हेतुभिः स्वार्थभावना मानवे पदं न्यधात्। निर्बला सबलैः पीड्यन्ते स्म। धर्ममर्यादा विनाशोन्मुखा अभूत्। इत्थं मात्स्यन्यायेन समाजः आक्रान्तः। अत एव धर्मस्थापनार्थं जीवकल्याणार्थं च ब्रह्मणा तेजोमयदण्डः व्यवस्थापितः।[2] मात्स्यन्यायं दूरीकर्तुं दण्डविधानं जातमिति सर्वैः मनीषिभिः स्वीकृतम्।[3] वैदिकैः दार्शनिकैः स्वभावतः मनुष्योऽयमुत्तम इति स्वीकृतमस्ति। अत एव तैः स्वर्गे मृत्युलोके वा कुत्रापि ईदृशस्य समाजस्य सत्ता न स्वीकृता, यत्र मनुष्यः ईर्ष्या-

१. न वै राज्यं न राजासीन्न च दण्डयो न दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥
पाल्यमानास्तथान्योन्यं नरा धर्मेण भारत।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत्॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत्॥
नष्टाया प्रतिपत्तौ च मोहवश्या नरास्तदा।
लोभस्य वशमापन्ना सर्वे भरतसत्तम॥
(महा० शान्ति० ५९।१४—१७)

तांस्तु कामवशं प्राप्तान् रागो नामाभिसस्पृशत्।
रक्ताश्च नाभिजानन्त कार्याकार्ये युधिष्ठिर।
ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्।
यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः॥
(महा० शा० ५९।१९,२९)

२. तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः॥
(मनु० ७।१४)

३. शान्तिपर्व १५।३०; ६७।१६, अयोध्याकाण्डम् ६७।३१; कौ० १।४।१७—१८; कामन्दक० २।४०।

द्वेष-घृणादिप्रवृत्तिभिरेव कार्यं चिकीर्षति स्म ।[1] परन्तु तदानीमपि शान्तिस्थापने व्यवधायकानि कानिचित् तत्त्वानि प्रादुरभवन्, येभ्यः परित्राणार्थं राज्यं दण्डश्च व्यवस्थापिते ।[2]

राधाविनोदपालमतानुसारमैतरेयब्राह्मणे उपलभ्यमानानि कानिचिद् वचनानि देवानामनुबन्धविषये द्योतकानि । भूतलवर्तिभिः जीवैः न कश्चिदनुबन्धः, मनुष्येण सामाजिका भावाः आरम्भत एव प्राप्ताः । वैदिककाले प्रायः सामाजिक्याः स्थितेः अस्तित्वं न लभ्यते । समाजस्य राज्यस्य च संघटनेन सममेव वैदिकविचाराणां प्रारम्भः ।[3]

यस्यां सामाजिकस्थितौ दण्डः प्रादुरभवत् तस्याः विश्लेषणम् आवश्यकम् । एतेन सममेव मानवसमाजविषये प्राचीनाः भारतीयसिद्धान्ता अवधेयाः । ऐतरेयब्राह्मणे महीदासेन मनुष्यः ब्रह्माण्डस्य सूक्ष्मं स्वरूपमिति स्वीकृतम् । यत्किञ्चिदेकत्र तदेव सर्वत्रापि ।

मूलभूतप्रक्रियया विश्वं व्याख्यातुं शक्यम् । आत्मज्ञाने सति सम्पूर्णं विश्वं ज्ञातं भवति । विवेकशक्तिरेव मनुष्यं पश्वादिभ्यो विविनक्ति । इयं विवेकशक्तिः न सर्वेषु मनुष्येषु समा, चित्तस्थितिरेव तस्याः विकासिका । कर्त्तव्याकर्त्तव्यविवेचनस्य शक्तिरेव चेतना । सा च मनुष्यमात्रे । मनुष्ये ध्वनिना समं वाणी, मस्तिष्केन समं विवेकशक्तिश्च दृश्यते । स विचारयितुं समर्थः । विवेकार्थमिन्द्रियाणि बुद्धिश्च अपेक्ष्यन्ते । इन्द्रियद्वारेण बाह्यानि वस्तूनि बुद्ध्या विषयीक्रियन्ते । यतो विवेकः उत्पद्यते । मनुष्यः यत्किञ्चित् लभते, ततोऽधिकं लब्धुं सर्वदा चेष्टते । विचारशक्त्या मनुष्यस्य यादृशं स्वरूपमुपस्थापितम्, तादृशमेव स्वरूपं पुराणेष्वपि स्वीकृतम् । पशुपक्षिदेवतादीनां निर्माणेन साधकस्य सम्भावनं न शक्यम् । यतः क्वचित् सत्त्वस्य प्राधान्यं क्वचिच्च तमसः । अतः मनुष्यनिर्माणं विधिना कृतम् । मनुष्ये एव ज्ञानधारणा सम्भूता ।[4]

---

१. पुलनीयो हॉब्स इत्यस्य विचारः । विशेषद्रष्टव्यः—Pulzky; Theory of law and Civil Society. PP. 251-76. Social contract.

२. ऐ० ब्रा० ४।७।८ ।

३. Radhavinoda Pal, the History of Hindu Law, P. 188.

४. विष्णुपुराणम् ५।१।६–१७; कूर्म० १।७।३–१०; अश्वमेधपर्व ४३।२०; वायु-ब्रह्माण्ड-लिंग-मार्कण्डेयादिपुराणेषु सर्गविकाससम्बन्धे समानविचाराः प्राप्नुवन्ति ।

इत्थं समाजविषये शक्तिविषये कृतेन विवेचितेन स्पष्टं यत् पुरुषो मूलतः सात्त्विकः पवित्रश्चास्ति। परिस्थित्याद्यनुसारं तत्र असात्त्विकीनां लोभक्रोधादिप्रवृत्तिनाम् उद्भवः। ताभिश्च प्रवृत्तिभिः सामाजिकसम्बन्धे अव्यवस्था भवति। ईर्ष्यादिप्रवृत्तिभ्यः अपवार्य मानवं कर्त्तव्यनिष्ठायां प्रवर्तयितुं प्रारम्भिकसमाजे न किमपि साधनमासीत्। शिष्टाः इमां परिस्थितिं सम्यक्तया परिचिन्वन्तोऽपि अधिकाररहिता आसन्। समाजे परस्परं व्यवहारः आरभ्यत। परन्तु तत्र निर्णेता नियन्ता वा कश्चिन्नासीत्। इयमेव स्थितिः मात्स्यन्यायस्य मूलम्। इमां परिस्थितिं दूरीकर्तुं ब्रह्मणा प्रशासनं विधानानि च स्थापितानि। विधानपालनार्थमेव दण्डनीतिर्व्यवस्थापिता।

अराजकस्थितिः (राज्यरहितस्थितिः) सांख्यमतानुसारं सत्त्वप्राधान्यदशायामस्ति, या च महाभारते शान्तिपर्वणि धर्मराज्यस्वरूपनिरूपणावसरे निरूपिता, तस्याः सङ्केतो वेदेषु लभ्यते। वेदेषु अपरुद्धः, अराजता, अराजतम्, अराजक इत्येते शब्दाः दृश्यन्ते। पदच्युतराज्यरहितसमाजः अपरुद्ध इति कथितः। शान्तिपर्वणि वर्णितां धर्मराज्यस्थितिम् 'अराजता'शब्देन द्योतयति।[१] दुष्टक्रतुपौंसायनोपाख्याने एष शब्दः प्रयुक्तः।[२] तैत्तिरीयब्राह्मणे ऐतरेयब्राह्मणे चापि एष शब्दः दृश्यते।[3] इयमेव परम्परा मात्स्यन्यायरूपे विकासं प्राप्ता। राजोत्पत्तिविषये एष शब्दः सुस्पष्टं व्याख्यातोऽस्ति।[४] अस्याः एव परम्परायाः विकासः उत्तरकाले मात्स्यन्यायरूपतामापन्नः।[५] राजा दण्डधरः उक्तः।

१. अथर्ववेद० ३।३।४१; काठकसंहिता २८।१; तै० सं० २।३।१; मैत्रा० सं० २।२।१; पञ्चविंशब्रा० १२।१२।६; कौशिकसूत्रम् १७।३०।

२. शत० ब्रा० १२।३।१।४-१३, २६९, २७३; Vedic Inedx, vol. 1, PP. 29, 166, 316, 322,376, 380, 521, vol. II, 6, 63.

३. तै० ब्रा० १।५।९।१; ऐ० ब्रा० १।१४।६; Vedic Index, vol. II. P. 215.

४. अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः॥
(मनु० ७।३)

५. (दण्डः) अप्रणीतो हि मात्स्यन्यायमुद्भावयति।
बलीयानबलं हि ग्रसते दण्डधराभावे॥
(अर्थशा० १।४।१६-१७)

मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे।
(कौ० १।१३।६)

दण्डाभावे परिध्वंसी मात्स्यो न्यायः प्रवर्तते।
विशेषद्रष्टव्यः—रामायण० २।६७; शान्तिपर्व १५।३०; ६७।१६; कामन्दक० २।४०; मत्स्यपुराणम् २२५।९; मानसोल्लासः २।२०।

शतपथब्राह्मणे राजा अपि दण्डेन नियन्त्रितोऽस्ति इत्येतद्द्योतकः दण्डस्पर्शः राज्याभिषेके क्रियत इति अस्माभिरन्यत्र कथितम्। गौतमानुसारं (११।२८) दमाद् दण्डशब्द उत्पद्यते। यस्येदं तात्पर्यं यत् मार्गभ्रष्टान् जनान् दण्डेन राजा नियन्त्रयति।[1] इत्थमेव गौतमेन उक्तं यदाचार्यशिक्षया दण्डेन च वर्णाश्रम-धर्ममर्यादामतिवर्तमानान् जनान् राजा धर्ममार्गे स्थापयति। महाभारते शान्ति-पर्वणि एतदेव विशदीकृतम्—

"यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि।
दमनाद् दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः॥"
(१५।८)

अग्निपुराणे एतदेव अनेन शब्दजातेन व्यञ्जितम्—"दमयत्यदण्ड्यान् दमयत्यपि" २२६।१६)। मत्स्यपुराणे च "दुर्मदान् दण्डयत्यपि" इति पाठभेदः (२२५।१७)।

राज्यरहितस्थितिं मात्स्यन्यायप्रवृत्तिं वा अपोहितुं राजा दण्डश्च व्यवस्थापितौ। दण्डेनैव वर्णाश्रमधर्मस्य सुरक्षा अशक्यत।[2] "भीषास्माद् वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" (२।८) इति तैत्तरीयोपनिषदः वचनं मनुस्मृतौ इत्थं विस्तृतम् -

अद्यात् काकः पुरोडाशं श्वा च लिह्याद्धविस्तथा।
स्वाम्यं च न स्यात् कस्मिंश्चित् प्रवर्तेताधरोत्तरम्॥
लोकः सर्वजितो दण्डो दुर्लभो हि शुचिर्नरः।
दण्डस्य हि भयात् सर्वं जगद् भोगाय कल्पते॥
देवदानवगन्धर्वा रक्षांसि पतगोरगाः।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः॥
दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः।
सर्वलोकप्रकोपश्च भवेद् दण्डस्य विभ्रमात्॥
(७।२१-२४)

१. शान्ति० ६७।१६; कामन्दकः १।१।

२. यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति॥
(मनु० ७।२५)

विशेषद्रष्टव्यानि—मत्स्य० २२५।८; विष्णुधर्मसूत्रम् ३।९५; शान्ति० १२१।१५-१६।

भगवता स्वस्यैव दण्डस्वरूपता प्रतिपादिता। राज्ञः ईदृशं महत्त्वं यत् स्त्रीपुत्रादीन् अपि विधाय प्रजाभिः राजा रक्षणीयः। राज्ञो विनाशे न प्रजाया धनपुत्रादिकं स्थातुं शक्नोति।[१]

एवं राज्ञः राज्यस्य दण्डस्य च किमर्थमावश्यकताभूदित्येतद्विषये शास्त्रकारैः समाजस्य यद् दार्शनिकं स्वरूपमुपस्थापितम्, यस्मिन् स्वरूपे व्यवस्थितः समाज आदिमः सत्त्वप्रधानश्च, य पाश्चात्यैः 'बर्बर' इति असभ्यसमाज इति च उद्घोष्यते, स एव आर्षसिद्धान्तानुसारमादर्शभूतो धर्मनियन्त्रितश्च आसीत्। तदानीं राज्ञो राज्यस्य दण्डस्य च नापेक्षा। स एव आदर्शभूतः समाजो यदा उत्तरोत्तरं स्खलनं प्राप्तः, तदा उक्तस्य राजादित्रयस्य उत्पत्तिः। रागद्वेषादिप्रवृत्तिभ्यः धर्मस्य परित्राणमपि राज्ञा दण्डेनैव कर्तुं शक्यम्। राज्ञोऽभावे एष मात्स्यन्यायस्य प्रवृत्तिः। राज्ञः अभावे कीदृशी स्थितिः संभाव्यते इत्येतद्विषये रामायणेऽयोध्याकाण्डे सप्तषष्टितमे सर्गे सुस्पष्टं वर्णितमस्ति। रागद्वेषयुक्तसमाजो ऽराजकः (राजविहीनस्थितिः), ततः मुक्त्यर्थञ्च राज्ञः आवश्यकता इत्यादिकम् एतत्सर्गस्य पूर्णतया आलोचने विशदं भवति। अत एष सर्ग एव अत्र अस्माभिः उद्ध्रियते—

आक्रन्दिता निरानन्दा सास्रकण्ठजनाविला।
अयोध्यायामवतता सा व्यतीयाय शर्वरी॥
व्यतीतायां तु शर्वर्यामादित्यास्योदये ततः।
समेत्य राजकर्तारः सभामीयुर्द्विजातयः॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च कश्यपः।
कात्यायनो गौतमश्च जाबालिश्च महायशाः॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन्।
वशिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम्॥
अतीता शर्वरी दुःखं या नो वर्षशतोपमा।
अस्मिन् पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे॥
स्वर्गस्थश्च महाराजो रामश्चारण्यमाश्रितः।
लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह॥

---

१. राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम्॥
(शान्ति० ५७।४१)

उभौ भरतशत्रुघ्नौ केकयेषु परन्तपौ ।
पुरे राजगृहे रम्ये मातामहनिवेशने ॥
इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् ।
अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात् ॥
नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो मही दिव्येन वारिणा ॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥
अराजके धनं नास्ति नास्ति भार्याप्यराजके ।
इदमत्याहितं चान्यत् कुतः सत्यमराजके ॥
नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥
नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसम्पूर्णा विसृजन्त्याप्तदक्षिणाः ॥
नाराजके जनपदे ( महा ) ? प्रहृष्टनर्तकाः ।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥
नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरभिरज्यन्ते कथाशीलाः कथाप्रियैः ॥
नाराजके जनपदे तूद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥
नाराजके जनपदे वाहनैः शीघ्रवाहिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥

नाराजके जनपदे बद्धघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जरा षष्टिहायनाः ॥
नाराजके जनपदे शरान् संततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपुण्यसमाचिताः ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्र सायंगृहो मुनिः ॥
नाराजके जनपदे योगक्षेमः प्रवर्तते ।
न चाप्यराजके सेना शत्रून् विषहते युधि ॥
नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च परिमण्डिताः ॥
नाराजके जनपदे नरा. शास्त्रविशारदाः ।
संवदन्तोपतिष्ठन्ते वनेषूपवनेषु च ॥
नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥
नाराजके जनपदे चन्दनागुरुरूषिताः ।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥
यथा ह्यनुदका नद्यो यथा वाऽप्यतृणं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥
नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् ॥
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥

यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥
यमो वैश्रवणः शक्रो वरुणश्च महाबलः ।
विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥

अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥
जीवत्यपि महाराजे तवैव वचनं वयम् ।
नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥
स नः समीक्ष्य द्विजवर्यवृत्तं
नृपं विना राष्ट्रमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं तथान्यं
त्वमेव राजानमिहाभिषिञ्च ॥

(१।३८)

अराजकताविषये इतोऽधिकं साम्प्रतिकराजनीतौ किं वर्णयितुं शक्यम् ? अधोलिखितान् विषयान् स्पष्टीकर्तुं सम्पूर्णसर्गः इह लिखितः—

१. राज्यस्य आवश्यकतायाः पूर्णतया विवरणप्रस्तुतिकरणम्, यस्याः प्रारम्भत एव व्याख्या क्रियमाणास्ति ।

२. राज्ञः कर्त्तव्यानामुपस्थापनम् । राज्ञा निरङ्कुशेन न भाव्यम् । राजा तावदेव राजपदस्य अधिकारी यावत्पर्यन्तं स सम्यक् प्रजां पालयति ।

३. राजपदनिर्णयविषये मन्त्रिपरिषदः कियान् अधिकारः इत्येतद् अनेन सम्यक् स्फुटीभवति । एतदावश्यकं यद् दशरथेन स्वयमेव भरतः राज्यपदाधिकारितया निर्णीत आसीत् । मन्त्रिपरिषत् केवलं दशरथकृतस्य निर्णयस्य कार्यान्वयनमेव कृतवती । एतेन विशदं यद् मन्त्रिमण्डलेन न कश्चित् स्वतन्त्रः स्वीयः निर्णयो दत्तः । एतदवधेयं यद् रामवनगमनम्, दशरथमरणम्, भरतमातरं कैकयीं प्रति प्रजाया भावना इत्यादिकमालोचयन् मन्त्रिमण्डलं शासकविषये नूतनं निर्णयं प्रस्तोतुं शक्नोति स्म ।

४. पुनः पुनः जनपदशब्दस्य प्रयोगेण सम्पूर्णस्य देशस्य जनता बोध्यते, यस्याः सम्बन्धः समस्तेन प्रशासनयन्त्रेण अस्ति ।

५. रागद्वेषादिप्रवृत्तिभिः अभिभूतः समाजः राज्ञोऽभाव क्षणमपि शान्ति-पूर्वं स्थातुं न शक्नोति यतो मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम्।

६. राजदण्डस्यासत्त्वे ज्ञानम्, विज्ञानम्, सम्मानः, समृद्धिरित्यादिकं सर्वम् अशक्यमेव। अथ च सामाजिकी राजनीतिकी च सर्वा अपि व्यवस्था दुरवस्था-मेव आपद्यते।

पाश्चात्त्याः, तदनुयायिनो भारतीयाश्च विद्वांसः हॉब्स्-लॉक-रूसो इत्येतैश्चित्रितां नैसर्गिकीं स्थितिमुक्तया अराजकस्थित्या मात्स्यन्यायेन च तुलयन्ति। अन्ततो गत्वा हॉब्समहोदयेन चित्रितामेव स्थितिं भारतीयसाहित्ये द्रष्टुं यतमानाः ते मन्यन्ते यद् हॉब्समहोदयेन यादृक् मानवस्वभावो वर्णितः, तथैव मनुभीष्मादिभिः धर्मशास्त्रकारैरपि स वर्णित इति। वस्तुतः तेषामियं भ्रान्तिः।

अस्माभिः पूर्वोक्तविवेचनावसरे अराजकस्थितिः द्वेधा प्रदर्शिता। तत्र अराज-कस्थितेः प्रथमे प्रकारे पुरुषः उक्तधर्मराज्यदशायां रागद्वेषप्रवृत्तिभिः रहितः सन् शासकमन्तरेणैव स्वत एव धार्मिकप्रवृत्त्या नियन्त्रितः। तदानीं राज्ञो राज्यस्य दण्डस्य वा नापेक्षासीत्। धर्मेण एव प्रजाः परस्परं रक्ष्यन्ते स्म। परं यदा राग-द्वेषादिप्रवृत्तयः उद्भवन्, तदा उक्तत्रयस्य आवश्यकता जाता। समाजः राजा-दीनामभावे कथं मात्स्यन्याये निमज्जति इत्यादिकमेव अराजकस्थितेः द्वितीयस्य प्रकारस्य विषयः। अस्मिन् प्रकारे राज्ञोऽभावे समाजस्य या या स्थितिर्भवति सा एव हॉब्समहोदयेन चित्रितया नैसर्गिकसमाजस्थित्या तुलयितुं शक्या, किन्तु तयोः स्थित्योः एष महान् विषयो यद् हॉब्स्वर्णितायां नैसर्गिकस्थितौ सर्वे जनाः युद्धपरायणाः भवन्ति। रामायणादिषु वर्णितायामराजकस्थितौ सात्त्विकानां धर्म-निरतानां जनानां न सर्वथा अभावो भवति। केचन रागद्वेषिणः भवन्ति यतः समाजे अराजकता प्रसरति, न तु सर्वे एव तथा भवन्ति। तान् सन्मार्गं प्रापयितुम् एव राज्यादीनामपेक्षा। राजादीनाम् अभावे कीदृशी स्थितिः भवतीति उपरि उद्धृते रामायणसर्गे विशदं वर्णितमस्ति। ततः स्थितेः मुक्त्यर्थमेव राजादयः अपेक्ष्यन्ते।

सप्ताङ्गराज्यविषयकसिद्धान्तस्य यादृशी पूर्णता कौटल्यादिग्रन्थेषु दृश्यते, तस्याः सामान्यः अपि अंशः प्लेटो-ऑरिस्टाटिलप्रभृतिषु नोपलभ्यते। प्लेटो इत्यनेन रिपब्लिक इत्यत्र आदर्शराज्यस्य यत् स्वरूपमुपस्थापितम्, तस्य त्रीणि तत्त्वानि पुरः आयान्ति—(१) दार्शनिकम्, (२) सैनिकम्, (३) सहायकवर्गीयञ्चेति। ऑरिस्टाटिलमतानुसारं गृहस्वामी नागरिकश्च इत्युभौ एव राज्यं निर्मिमाते। राज्यस्वरूपचित्रणविषये कौटल्यादीनां पुरो यूनानदेशीयानां विदुषां न किमपि महत्त्वम्। आश्चर्यं खलु यद् एतान् विषयान् अपर्यालोच्यैव कीथमहोदयेन

दुराग्रहः कृतः यत् प्लेटो इत्यस्य 'रिपब्लिक' ऑरिस्टाटिल् इत्यस्य 'पॉलिटिक्स' इत्येवत्पुरः कौटलीयार्थशास्त्रस्य न किमपि महत्त्वमिति।[1] आधुनिकराज्यसिद्धान्तानुसारं तावत्पर्यन्तं राज्यं पूर्णं न मन्यते यावत् तस्य सम्प्रभुता राज्यान्तरैः न मन्येत। एतदर्थं भारतीयैः मित्रमपि राज्याङ्गतया स्वीकृतम्। आधुनिक्यां राज्यव्याख्यायां सम्प्रभुतायामेव सेनादयः समाविशन्ति। अतः अनियन्त्रितराजविषयकः प्रश्न एव नोदेति। अस्मिन्नप्यंशे भारतीयं राजतन्त्रं न निरङ्कुशम्, यतः कोशबलादयः निरङ्कुशतायाः प्रयोजकास्ते स्वतन्त्राङ्गतया स्वीकृताः। अवधेयमस्ति यत् सप्तसु अपि राज्याङ्गेषु किञ्चिद् धर्मप्रतिनिधेः स्थानं नास्ति। पुरोहितोऽपि राज्याङ्गतया न स्वीकृतः। एवं सत्यपि पाश्चात्त्या विद्वांसः सप्ताङ्गं राज्यं लौकिकीं संस्थां न मन्यन्ते।

राज्यनाशे कौटल्येन ईश्वरेच्छादीनां स्थाने प्रकृतयः एव प्रयोजिकाः अमन्यन्त। अर्थाद् राज्यविनाशे न ईश्वरेच्छादिकं कारणम्, अपि तु प्रकृतय एव राज्यविनाशकारणानि।[2] व्यसनप्रकरणारभमाणेन कौटल्येन सर्वप्रथमं प्रकृतिव्यसनमेव वर्णितम्।[3] ऑरिस्टाटिल इत्यनेन राज्यविनाशे यानि कारणानि उक्तानि, तत्र राज्याङ्गानां चर्चैव न कृता। अग्निपुराणे सचिवस्य महत्त्वं प्रतिपादितम्।[4] कौटल्येन प्रकृतिव्यसनस्य यद् वर्णनं कृतम्, तेन प्रकृतीनां (अङ्गानाम्) पारस्परिकः सम्बन्धः प्रकाशम् आयाति। स आह—मन्त्रिपुरोहितादिभृत्यवर्गमध्यक्षप्रचारं पुरुषद्रव्यप्रकृतिव्यसनप्रतीकारमेधनं च राजैव करोति—(अर्थ० ८।१।१२)। "आमात्यमूलाः सर्वारम्भाः" (८।१।२३); "जनपदमूला दुर्गकोशदण्डसेतुवार्तारम्भाः शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यं च जनपदेषु" (८।१।२८)। इत्थमेव अन्यासां प्रकृतीनां विषये कौटल्येन यत् कथितमस्ति तेन राज्यस्य आङ्गिको विकासो भवति। आङ्गिकं स्वरूपमन्यैरप्याचार्यैः वर्णितम्।[5] इत्थं सप्ताङ्गराज्यस्य वर्णनेन एतत् स्फुटं भवति यत् प्राचीनभारते राज्यस्य राज्ञश्चेति द्वयोरपि स्वरूपे विकसिते आस्ताम्।

१. History of Sanskrit Literature. prefaec p. xviii.

२. अर्थशास्त्रम् ८।२।१-५।

३. अर्थशास्त्रम् ८।१।

४. अग्निपुराणम् २४१।२६-३४।

५. मनु० ९।२९४, ९।२९६, ४।२; शुक्र० १।६२।

# ५

# राजतन्त्रम्

दैवसिद्धान्तः

यूनानदेशीयसभ्यतायाम् ईसाइ-विचारधारायां च राज्यशक्तेः धार्मिकशक्तेश्च मध्ये संघर्षः उद्गच्छन् आसीत्। ईसाइधर्मानुयायिभिः स्वपरम्परां रक्षितुं 'चर्च' इत्यादयः संस्थाः स्थापिता आसन्। मध्ययुगस्य आरम्भकाले उक्तसंस्थानां राज्यस्य च मध्ये संघर्षोत्पादिका स्थितिः समजायत। वर्षाणां परःशतं द्वयोर्मध्ये संघर्षः प्रचलन् आसीत्। मध्यकाले तत्र एषा व्यवस्था स्वीकृता यद् लौकिकविषये राज्यस्य आमुष्मिकविषये च उक्तसंस्थानां तदधीशानाञ्च सम्प्रभुत्वम्, येन राज्य-धर्मयोः परस्परं सम्बन्धः सुरक्षितः। परन्तु एषा व्यवस्था न चिरकालं स्थातुम् अशकत्, पुनरपि संघर्षेण पदम् आहितमेव। अतः सामाजिकस्थितिषु परिवर्तनेन सहैव राज्ये शक्तिः समन्विताभूत्। राज्येन धर्मस्य तत्संघटनस्य च स्वामित्वम् अधिगतम्। राजा शासक इव धर्माध्यक्षोऽपि जातः। १५७४ ईश्वीयवर्षे कैथराइन इत्येतत्कृते विवाहसम्बन्धत्यागानुमतिप्रदानविषये धर्माध्यक्षः (पोपः) विरुद्धः आसीत्। अतः हेनरी इत्येषः स्वयमेव अन्यां 'चर्च' आख्यां संस्थां स्थापितवान्; स्वयमेव च तस्याः अध्यक्षो जातः। राजादेशरूपतयैव धार्मिकादेशानां प्रसारणम् आरब्धम्। अद्यत्वेऽपि इंग्लैण्ड इति देशस्य राजा धर्मरक्षकः स्वीक्रियते। पुराकाले राज्ञि दिव्याः गुणा इति भावनया राजा देवप्रतिनिधिः अमन्यत। सम्प्रति सः समाजस्य व्यक्तेश्च पुरः उत्तरदायित्वं विहाय सर्वथा सम्प्रभुः जातः। धार्मिकीणां राज्यसम्बन्धिनीनाञ्च शक्तीनां तत्र समावेशेन स सर्वथा निरङ्कुशो अभूत्।

राज्ञः एतेन नूत्नेन स्वरूपेण संक्रमणकालस्य स्थितिरुद्भूता। विभिन्नानां राज्यानाम् एकीकरणशक्तिः विलुप्ता, परस्परं स्पर्धाभावनया राष्ट्रियभावः विकासं लेभे। मेकेवलीमहोदयेन राष्ट्रराज्य इत्यादयः शब्दाः प्रायुज्यन्त। नगरराज्यानां स्थाने राष्ट्रराज्यानां धारा प्रसृता। राज्यस्य लौकिकी व्याख्या प्रारब्धा। तेन सहैव सम्प्रभोः शक्तिरपि विकासमापन्ना। मेकेवली-महोदयानन्तरं हॉब्समहोदयेन स्पष्टम् उक्तं यद् बाह्याद् आक्रमणाद् आभ्यन्तराच्च गृहकलहात् सुरक्षार्थम् आवश्यकं यत् सम्पूर्णा शक्तिः कस्मैचिद् एकस्मै पुरुषाय समर्पणीया, यः जनानां भावनाः कथनानि च प्रकटयितुं शक्नोति। नैषा केवलं सर्वेषां सम्मतिरेव, अपि तु एकस्मिन् सर्वेषां तादात्म्यम्। स्पाइनोजा इत्ययं लिखति यत् सर्वेषां शक्तयः एकस्मिन्नेव केन्द्रिताः (समाविष्टाः) स्युः, येन एक एव सर्वं करोति इति प्रतीयेत। अस्याम् अवस्थायां राज्ञः निरङ्कुशा सम्प्रभुता विकासपदवीं प्राप्ता।

अनया सम्प्रभुतया सममेव जनमतस्यापि उद्बोधनं जातम्। रूसो-मतानुसारं 'जनवाणी' एव 'देववाणी'। तदनुसारं जनमतं न कल्पनामात्रम्, अपि तु तत् समाजे सम्मिलितानां जनानाम् इच्छानां समष्टिस्वरूपम्, यद् व्यक्तिगताभ्यः इच्छाभ्यः श्रेष्ठम्। यदा व्यक्तिः स्वीयाः इच्छाः अधिकारांश्च समर्प्य समाजं रचयति, तदा स समाजायत्तः। समाजस्य मतं समाजघटकानां सर्वेषां व्यक्तीनां मतानां समष्ट्यात्मकम्, अतः सर्वैरपि आदरणीयम्। हीगेल इत्यनेन रूसो-मतस्य समालोचनं तु कृतम्, किन्तु समाजस्थाने राज्यं प्रतिष्ठाप्य व्यक्तिः अधिकारविहीना कृता। तेन राज्यस्य दैवाधिकारः प्रतिष्ठितः।

भारतवर्षे दैवसिद्धान्तानां मूलं वेदाद् आरभ्यते। पुरुकुत्सपुत्रेण त्रसदस्युः स्वम् इन्द्रवरुणादिस्वरूपे अमन्यत।[1] अथर्ववेदेऽपि एकत्र स्थले राजा पृथिव्याः इन्द्रः कथितः।[2] शतपथब्राह्मणेऽपि एषा राज्ञः देवस्वरूपता स्पष्टीभवति, येन राजा साधारणजनेभ्यः श्रेष्ठः स्वीकृतः।[3] एतत्कालं यावद् वर्णव्यवस्थायाः पूर्णतया विकासेन क्षत्रियत्वं यज्ञीया शक्तिश्च राजपदस्य आश्रयतया स्वीक्रियते। याज्ञवल्क्यस्मृति (१।३५०) व्याचक्षाणेन विश्वरूपेण आगमम् आश्रित्य इदं साधितं यद् राजा चन्द्रमाः, सूर्यः, वरुणः, विष्णुः, कुबेरः, यमः इत्येतेषाम् अंशभूतः। तेन स्वकार्ये एकः सहायको लब्धः, स च दण्डः।

वेदादारभ्य राज्ञः प्रवर्तमानं दैवं स्वरूपम् उत्तरकाले पूर्णतया प्रकाशमायातम्। राजोत्पत्तिविषये कथितमस्ति यद् ब्रह्मणा विश्वे अराजिका स्थितिः दृष्टा। यत्र बलवान् दुर्बलम् अभिभवति स्म। अतः विश्वस्य परिरक्षणार्थम् इन्द्रः, वायुः, यमः, सूर्यः, अग्निः, वरुणः, सोमः, कुबेरः इत्येतेषां दिक्पालानाम् अंशै राज्ञो रचना जाता।[4] एतत्प्रकटयन् शुक्राचार्यः लिखति यद् राजा स्वतपसः प्रभावेण जङ्गमानां स्थावराणाञ्च स्वामी, प्रजायाः रक्षकः करग्रहीता च भवति। यथा स्वर्गे इन्द्रः, तथैव भुवि स स्वीकृतः। यथा वायुः गन्धं वहति, तथैव स प्रजाम्। दुष्टानां स दण्डयिता, अतः दण्डधारिणा यमेन तुल्यः। यथा सूर्यः तमसो नाशकः, तथैव राजा अधर्मतमसो नाशकः, धर्मस्य प्रवर्तकश्च अस्ति। स अग्निवद् विशुद्धः। यथा सर्वं दहन्नपि

---

१. क्रतुं सचन्ते वरुणस्य देवा राजाभिकृष्टे। ऋग्वेद ४।४२।३।४।

२. अ० वे० ६।८७।१-२।

३. श० ब्रा० ५।१।५।१४।

४. श० ब्रा० ५।१।४।२; ५।२।२।१४।

अग्निः पवित्र एव, तथैव करं गृह्णन्नपि राजा प्रजारक्षणेन पवित्रः। यथा रसेन वरुणः सर्वान् पुष्णाति, तथैव धनेन राजा प्रजाः। यथा चन्द्रः स्वकरैः सर्वान् आनन्दयति, तथैव राजा स्वगुणैः स्वकर्मभिश्च प्रजाः। निधीनां रक्षकतया स कुबेरतुल्यः।[1]

माता, पिता, गुरुः, भ्राता, यमः, कुबेरः इत्येतत्तुल्यः राजा स्वीकृतोऽस्ति। प्रजानां कल्याणसाधने समर्थः कुशलश्च राजा पितृवद् मन्यते। प्रजानां पोषणेन क्षमया च स मातृतुल्यः। हितोपदेशकतया स गुरुसमः। यथा-शास्त्रं पितृधनस्य विभाजकतया स भ्रातृनिभः। स्त्रियः, धनस्य, अन्येषां च गोपनीयानां वस्तूनां रक्षकतया स मित्रकल्पः, धनदातृतया कुबेरसंकाशः, न्यायकर्तृतया च यमप्रतिमः स कथ्यते।[2] एतैः गुणैः सम्पन्नः, उदारः, शूरः, धीरः, शस्त्रप्रयोगे प्रवीणः, शत्रुघ्नः,

---

१. अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चापि मात्रा निर्हृत्य शाश्वतीः॥
जङ्गमस्थावराणां चाहीशः स्वतपसा भवेत्।
भागभाग्रक्षणे दक्षो यथेन्द्रो नृपतिस्तथा॥
वायुर्गन्धस्य सदसत्कर्मणः प्रेरको नृपः।
धर्मप्रवर्तकोऽधर्मनाशकस्तमसो रविः॥
दुष्कर्मदण्डको राजा यमः स्याद् दण्डकृद्यमः।
अग्निश्शुचिस्तथा राजा रक्षार्थं सर्वभागभुक्॥
पुष्यत्यपांरसः सर्वान् वरुणः स्वधनैर्नृपः।
करैश्चन्द्रो ह्लादयति राजा स्वगुणकर्मभिः॥
कोशानां रक्षणे दक्षः स्यान्निधीनां धनाधिपः।
(शुक्र० १।७०-७६; मनु० ७।१-७)

२. गुणसाधनसंदक्षः स्वप्रजायाः पिता यथा।
क्षमयित्र्यपराधानां माता पुष्टिविधायिनी॥
हितोपदेष्टा शिष्यस्य सुविद्याध्यापको गुरुः।
स्वभागोद्धारकृद् भ्राता यथाशास्त्रं पितुर्धनात्॥
आत्मस्त्रीधनगुह्यानां गोप्ता बन्धुस्तु मित्रवत्।
धनदस्तु कुबेरस्स्याद्यमः स्याच्च सुदण्डकृत्॥
(शुक्र० १।७८-८०)

स्वेच्छाचारविहीनः, धीमान्, ज्ञानविज्ञानसम्पन्नः, नीचजनैरनावृतः, दीर्घदर्शी, वृद्धोपसेवी, नीतिज्ञः, गुणवान्, गुणिभिर्भूषितः एव राजा दैवगुणैः भूष्यते। पूर्वोक्तैः गुणैः हीनः राजा राक्षस इव स्वीकृतः। स च नरकभाग् भवति।[1]

वेदादारभ्य स्मृतिकालं यावद् राज्ञः स्वरूपं परिवर्तितम्। राजस्वरूपपरिवर्तनेन सहैव तद्घटकेषु विधिषु च परिवर्तनमभूत्। एतेन राजशक्तिः अपि प्रभाविता अभूत्। वैदिककाले जनैरेव राज्ञो निर्वाचनं क्रियते स्म। स्मृतिकाले च स प्रजायाः शासकानां नियोक्ता जातः। अथ च तदाज्ञापालनं प्रजायाः कृते अनिवार्यमभूत्। एतत्कालपर्यन्तं रत्निस्वरूपे प्रसरतां राजकृतां लोपोऽभूत्। अस्मिन्नेव विकासे राज्ञः स्वरूपस्य स्थापना। तदालोचनेन अन्येषामपि आवश्यकानाम् अंशानां परिज्ञानं भवति।

आरम्भकाले युद्धसमये राजा सेनायाः प्रधानः, जनानां संरक्षकश्च आसीत्।[2] शान्तिसमये स्वमर्यादानां परिपालकः। जनानाम् आदरभाजनं च अभूत्।[3] स ऋतस्य राष्ट्रस्य गोप्ता-ऋतस्य गोपाः, राष्ट्रस्य सुधार्य।[4] विशोऽपि स पालकः-पायुर्विशः।[5] ऋतस्य संरक्षणेन दैवगुणाः राज्ञि प्रतिष्ठाम् अलभन्त इति वर्णितम् ऋग्वेदे। देवतासु वरुणो धर्मरक्षकः। यदि पृथिव्यां मनुष्यः धर्मम् अतिवर्तते, तेन च शान्तिर्भज्यते, तदा राजा वरुण इव धर्मं रक्षति।[6] वैदिकसमाजे ईदृशानि तत्त्वान्यासन् यानि मर्यादामुच्छेत्तुमिच्छन्ति स्म। तेभ्यो रक्षार्थं राजा तत्पर आसीत्। यथा यथा विद्रोहो वर्धते, तथा तथा राज्ञः शक्तिरपि वृद्धिमाप्नोति। राजा एव धर्मरक्षकोऽभूत्। तत्र समाजे धर्मः सर्वत्र प्रसृत आसीत्। अत एव ईदृशसम्मिश्रणे राजशक्तिधर्मशक्त्योः समन्वये च न किमपि काठिन्यं जातम्। अत्र नैसर्गिकता एव आसीत्।

---

१. दान्तः शूरश्च शस्त्रास्त्रकुशलोऽरिनिषूदनः।
अस्वतन्त्रश्च मेधावी ज्ञानविज्ञानसंयुतः॥
नीचहीनो दीर्घदर्शी वृद्धसेवी सुनीतियुक्।
गुणजुष्टस्तु यो राजा ज्ञेयोऽसौ देवतांशकः॥
विपरीतस्तु रक्षोंशः स वै नरकभाजनः॥
(शुक्र० १।८-४८७)

२. ऋ० ३।४३।५।

३. ऋ० १।६७।५; ४।५।८।

४. ऋ० ७।६६।१३; १०।१७३।२।

५. ऋ० ४।४।३।

६. ऋ० ७।९।८५।

ब्राह्मणकालं यावत् सामाजिक्यां स्थितौ इतोऽप्यधिकं परिवर्तनं जातम्। वैदिकसमाजे अवैदिकसमाजस्य सम्मिश्रणं भवदासीत्। अवैदिकसमाजानामाक्रमणस्यापि आशङ्का जागरूका आसीत्। एतेन सामाजिकेन सम्मिश्रणेन कदाचिद् धर्मस्य स्वरूपमपि परिवर्तितं भवेदित्यपि भयमासीत्। अत एव विशेषतो धर्मव्याख्यातॄणां ब्राह्मणानां रक्षणं राज्ञः कर्त्तव्यमासीत्। अस्यां स्थितौ धर्मो राजशक्त्या अधिकम् आवेष्टितो जातः। राजशक्तेः पार्श्ववर्तिनी संस्था वर्गस्वरूपतामापन्ना। राजा च वंशानुगतोऽभूत्। स राजा धर्माध्यक्षोऽभूत्।[1] अतोऽदण्ड्येषु स यत्किञ्चिद् व्यवहरति स तत्सर्वमुचितमेवममन्यत।[2]

ब्राह्मणकालानन्तरं सूत्रकाले पर्यालोच्यमाने एतद् विशदं भवति यद् राजतन्त्रस्य विकासदशायामितस्ततो विकर्णाः सामाजिक्यः सर्वा अपि शक्तयो राजतन्त्रे एव समाविष्टा (केन्द्रिता) अभवन्। सभा-समिति-रत्न्यप्रभृतयः विलुप्ताः, केवलं धर्म एव च राज्ञो नियन्त्रको जातः। राज्ञो दैवशक्तिशालित्वाद् ब्राह्मणोऽपि तस्य पूजार्हतां स्वीकरोति।[3] सूत्रकालेन सहैव बौद्धजैनप्रभृतयो संस्कृतयोऽपि उद्गच्छन्ति स्म। एताभिश्च संस्कृतिभिः वैदिकैः सह महान् संघर्षः कृतः। एतासां संस्कृतीनां प्रसारो न तथा समाजविषये, यथा राजविषये राजशक्तिविषये च आसीत्। अत एव वैदिकैरपि राजशक्तिः आदृता। अस्य कृत्यस्य फलम् एतदभूत् यद् धर्मरक्षायां न समाजः, अपि तु राजा एव समर्थोऽभूत्। अवैदिकानां वैदिकानां च संस्काराणां विधीनामाचाराणाञ्च परस्परं संघर्ष आरब्धः, राजा च तत्र माध्यस्थ्यमकरोत्। सामाजिकशक्तेः राजसहकारितया राजा एव न्यायविषये प्रमाणमभूत्। स साक्षाद् देवत्वं च लेभे।

अर्थशास्त्रकाले समाजस्य स्वरूपमन्यदेव भवति। अत्र काले राजशक्तिः केन्द्रिता आसीत्। चत्वारो वर्णा आश्रमाश्च स्वसंरक्षणार्थं राजानमपेक्षन्ते। अस्य परिणाम एष जातो यत् सर्वेषु धर्मेषु विलुप्तेषु सत्सु राजा धर्मप्रवर्तकः स्वीकृतः।[4] अस्यां स्थितौ न शिष्टा धर्मप्रवर्तकाः, अपि तु राजा धर्मप्रवर्तकः।

---

१. शत० ब्रा० ५।४।२।८; १२।९।३।३।

२. शत० ब्रा० ५।४।४।७।

३. गौतम० ११।७।८; महा० शां० ४०।४१, ४८।

४. चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात्।
नश्यतां सर्वधर्माणां राजा धर्मप्रवर्तकः॥
(अर्थशा० ३।१)

अशोकेन तु बौद्धसंघस्य आध्यक्ष्यमध्यासादितम्। अशोकसमये धर्मचक्रं राज्यस्य अङ्गतामापन्नम्। धर्ममहामात्रस्य स्वतन्त्रः एको विभागो राज्ये कृतः। 'अमृतस्य पुत्राः, इत्येतदनुसारं सर्वेऽपि ईश्वरस्य पुत्राः। यदा राजा ईश्वरांशः स्वीकृतः, तदा स पितृतामापन्नः, प्रजा च तस्य सन्ततिः। पितरि स्थिते सति तस्य सम्पदि पुत्रस्य अधिकारोऽपि सन्दिग्धो भवति। अत एव राजा भूपालः, अर्थात् सर्वसम्पदः अधिकारी स्वीकृतः। अत एव भारतीयार्थशास्त्रानुसारं भूम्यां व्यक्तेः राज्यस्य च अधिकारः स्वीक्रियते। राज्ञो दैवस्वरूपविषये अश्रद्धोद्भावनमपराधतया स्वीकृतम्। कौटल्येन वैयक्तिकसम्पदः नियमेषु संशोधनं कृतम्। तत्र राज्यशक्तिः विकसन्ती दृश्यते। दैवशक्तेः सम्बन्धेन राज्ञः कृते अत्र सौविध्यमभूत्।

मौर्यकाले यवनशुंगकण्वान्ध्रचेटकुशाणवाकाटकभारशिवा इत्यादय ईदृश्यो जातयः आसन्, यासां वैदिकसमाजेन सह सम्बन्धस्य समस्या उद्भूता। अशोकस्य पतनावसरे वैदिकमर्यादायाश्च पुनरुत्थानावसरे वैदिकैः नूतना परिपाटी अङ्गीकृता। याः अवैदिक्यो जातयः, तास्तैः बहिष्कृता आसन्। ताभिः बौद्धधर्मः अवलम्बितः। तासां नायकैः न केवलं बौद्धधर्मस्य प्रचार एव कृतः, अपि तु पूर्णतया वैदिकान् उन्मूलयितुं प्रयतितम्। यस्यां परिस्थितौ पुनरुत्थानावसरे आभ्यः जातिभ्यः कथं वैदिकधर्मो रक्षणीयः इत्यपि समस्या उदिता। अस्मिन् संघर्षे राजा एव माध्यस्थ्यं रक्षां च करोति स्म। अत एव राज्ञो दैवसिद्धान्तो विशेषतः समर्थितोऽभवत्। एतेन ता जातयो राज्ञः पुरः शिरोनमने न आत्मावमाननं मन्यन्ते स्म, येन सामाजिकः समन्वयः सुशकोऽभूत्। राज्ञा साक्षाद् देवत्वमासादितम्। धर्मस्य शक्तेः राज्ञि एव समावेश आरब्धः। राज्ञि सम्प्रभुत्वे आसादिते विभिन्नानां सम्प्रदायानामपि परस्परं सन्धिः अभूत्। इत्थञ्च धार्मिकसम्प्रदायानां पारस्परिकसंघर्ष एव राज्ञः सम्प्रभुत्वप्राप्तौ कारणमभूत्।

बौद्धसम्प्रदायो राज्यद्वारेण सम्प्राप्तः। अतः तस्य प्रतीकारोऽपि तेन द्वारेणैव कर्तुं शक्य आसीत्। वैदिकैः राजा महत्त्वं प्रापितः, स्वानुकूलश्च कृतः। वैष्णवादिभिः सम्प्रदायैः विजातीयानां शुद्धीकरणमारब्धम्। वशिष्ठवेनोः लाङ्गूलतः, अग्निकुण्डतः, अन्येभ्यो वा पवित्रेभ्यः स्थानेभ्यः तेषामुत्पत्तिं स्वीकृत्य भारतीयतया ते संगृहीताः। स्वस्य राज्ञः समक्षमवैदिकसम्प्रदायीयं राजानं नमयितुं दैवसिद्धान्तस्य समर्थनमतीव आवश्यकमभूत्। तदानीमेकं नूतनं स्वरूपमुपस्थापितम्। राजा तदैव देवत्वमाप्तुं शक्नुयात् यदा स वैदिकं धर्मं सम्यक् परिपालयेत्; अन्यथा राक्षस इव सः। अत्र धर्मपदेन वर्णपदेन च केवलं वैदिक एव धर्मः, वैदिका एव च वर्णा गृहीताः, न तु बौद्धा जैना वा। अस्यां स्थितौ स्मृतिकारैः

दैवसिद्धान्तद्वारेण लाभं कर्तुं चेष्टितम्, परन्तु तैः राजशक्तौ एव धर्मशक्तिः समावेशिता। कौटल्येन राजा धर्मप्रवर्तकः स्वीकृतः। स्मृतिकारैः अपि स एव वर्णाश्रमगुरुः अङ्गीकृतः; यतः तत्र देवांशसम्भूतदैवीशक्तिः आसीत्।

वैदिकैः दैवसिद्धान्तः प्रयुक्तः। एतत् तैः एतदर्थं कृतम्, येन समाजेन सह तेषां संघर्षः तत्र राजा एव प्रमुखः आसीत्। अशोकस्तु मातृत्वमिव पितृत्वमिव च देवानां प्रियत्वमपि आप। शकपल्हवादिराजसु 'राजाधिराजः' इत्युपाधिः पारसीकपरम्परातो विकासमाप्तः। तेषां मुद्रासु एतस्य प्रमाण लभ्यते। कनिष्कः परमभट्टारकः महाराजाधिराज इत्येताभ्यां उपाधिभ्यां तुल्यं परमेश्वरो देवपुत्र इति उपाधिद्वयमपि स्वनाम्नः पूर्वमयोजयत्। कुषाणेष्वपि एषा परम्परा आसीत्। एषां यवनोपाधीनां भारतीयसम्पर्के जाते तैः सह धार्मिकभावनानां राजनीतिकभावनानां च समन्वयः प्रारब्धः। देवव्रतो धार्मिक इत्यादीनि विशेषणान्येव अत्र गमकानि। गुप्तानां मुद्रासु अङ्किताः परमभट्टारको परमदैवतप्रभृतयः उपाधयो न वैदिकपरम्परातः प्रचलिताः, अपि तु यवनशासका एव एषां स्रोतांसि। एभिरुपाधिभिः मुद्राः यज्ञेषु ब्राह्मणेभ्यो प्रदत्ताः, ब्राह्मणैश्च सादरं स्वीकृताः। भारतीयस्य दैवसिद्धान्तस्य विकासः यस्मिन् स्वरूपे अभूत्, तत्र नूतनया प्रणाल्या पदं न्यधायि। कौटुम्बिक्याः नैतिकतायाः पवित्रतायाश्च रक्षा राज्ञा एव शक्या आसीत्।[1] सूर्ययमादीनां शक्तिभिः सम्पन्नेन राज्ञा संसारस्य सर्वोच्चा शक्तिरासादिता। बालोऽपि राजा न अवमान्यः आसीत्, तस्य पूजनं सम्पूर्णस्य विश्वस्य कर्त्तव्यमभूत्।[2] स्मृतिषु तच्छक्तेः वैधानिकतापि स्वीकृता। एवं दैव्या वैधानिक्या च शक्त्या सम्पन्नस्य राज्ञः सम्प्रभुत्वं सर्वोपरि जातम्।

दैवसिद्धान्तस्य विकासक्रमेण इदं विशदीभवति यद् वेदादारभ्य स्मृतिकालं यावद् दैवसिद्धान्तः कथं विकसितः। तेषां विकासपरम्परा पाश्चात्त्यपरम्परातो विभिन्नः आसीत्, अतः एषां स्वरूपेऽपि विभेदोऽभूत्। फिग्गिस इत्यनुसारं दैवसिद्धान्तविषये इदमावश्यकं यत् तेन देवप्रदत्तेन वंशानुगतेन च भाव्यम्। केनापि विधिना तदीयोऽधिकारः सीमितः कर्तुं न शक्यते। स केवलमीश्वरं प्रत्येव उत्तरदायी। ईश्वराद् अन्या न काचिदीदृशी संस्था व्यक्तिर्वा आसीद् यत्समक्षं स स्वकर्तव्यं निर्धारयेत्। कस्यामपि स्थितौ राजाज्ञाया अवहेलनं देवेच्छा-

---

१. रामायणे अयोध्याका० ६७ अध्यायः।

२. मनु० ७।३-८।

वहेलनमिवास्ति, महापापकारणं च। राजाज्ञा ईश्वराज्ञा इव।[1] 'चर्च' इत्याख्या धार्मिकानां संस्था आसीत्। राज्ञः तया सह संघर्षोऽभूत्। उक्तसंस्थायाः पराभवेण राज्ञः सार्वभौमत्वं संप्राप्तम्।

भारतवर्षे दैवसिद्धान्तस्य स्वरूपमीदृशं नास्ति। आरम्भिकदैवसिद्धान्तानुसारं राजा असाधारणनागरिक एव स्वीकृतः। उत्तरकालेऽपि स ईश्वरप्रतिनिधिः, ईश्वरो वा न अमन्यत। विधिनिर्माणे तस्य वैधानिकः अधिकारो नासीत्। तस्य अध्यादेशा अपि धर्मशास्त्रीयमर्यादानुसारिण एव आसन्। वस्तुस्थितिस्तु एषा यत् तदीयव्यक्तित्वस्य तथा प्रयोग कृतः, यथा धर्मोपयोगिता स्यात्। अत्रैव तस्य व्यक्तित्वं विकसितम्। अन्यथा स विधिनियन्त्रित एव। अत्र चर्चसदृशी ब्राह्मणानां पुरोधसां वा काचित् संस्था नासीत्। अत एव कीदृशस्यापि संघर्षस्य सम्भावना एव नासीत्। राजा यदि अत्याचारी स्वेच्छाचारी वा भवेत्, तदा प्रजायाः पूर्णतया अधिकार आसीत् यत् सा तं हन्यात्।[2] यथेच्छमाचरितुं राजा नाशकत्। दैवसिद्धान्तस्य प्रतिपादको मनुरपि धर्मविरुद्धमाचरतो राज्ञो जीवन सङ्कटग्रस्तं मनुते।[3] भारतीयसाहित्ये वेनप्रभृतीनां दुराचारिणां वधस्य निर्देशो लभ्यते। तस्मात् प्रजारक्षणे अक्षमो राजा अवश्यं[4] त्याज्यः। ईदृशं राजानमीश्वरो नाशयति।[5] करं ग्रहीतुमपि राजा तदैव प्रभवति, यदा स प्रजाः सम्यक् परिपालयति।[6] राज्ञः प्रजायाश्च परस्परं सापेक्षता अस्ति। यद्यपि पाश्चात्त्यदेश इव दैवं राजतन्त्रमिह नासीत्, तथापि भारतीये राज्ञि दैवशक्तेः समावेश इत्थमभूद् यत् तेन सर्वोच्चशक्तिरूपे 'अहमेव राज्यम्' इति घोषणाया अवसरो लब्धः। फलमेतदभूद्यद् राजतन्त्रविषयका, विभिन्नाः प्रतिबन्धा नैतिकाः सम्पन्नाः। तस्य व्यावहारिकता वैधानिकता च समाप्तप्राया जाता।

---

१. जे० एन० फिग्गिस, दि डिवाइन राइट आफ किंग्स, पृ० ५–६।

२. अरक्षितारं हन्तारं विलोप्तारमनायकम्।
त वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणम्॥
अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः।
स संहृत्य हन्तव्य श्वेव सोन्मादकातरः॥

३. मनु० ७।११, ११२।

४. याज्ञ० १।३३४; शान्ति० ५७।४४–४५।

५. गौ० ११।११; विष्णु० ध० सू० ३।२८; उद्योग० ११२।१२; शान्तिपर्व ६७।२७, २४, १२; ७२।२०; आश्रमवासी० ३।४०; अनुशासन० ६१।३४, ६१।३६; काम० २।१०; रामा० ३।६।१४; आदि० २१३।९;

६. शुक्रनीति० १।१२१।

## नियन्त्रणम्

आक्षिप्यते यत् पुराकाले अद्यत्वे इव लोकसभाप्रभृतयः संस्था नासन्। अतो राजा सर्वथा अनियन्त्रित एव आसीत्, यदिच्छेत् तदेव कर्तुं प्राभवत्। परन्तु नैवं स्थितिः, अत्र राजा कदापि न निरङ्कुशः आसीत्। सर्वप्रथमः प्रधानश्च नियन्त्रको धर्म आसीत्। राजहस्ते दण्डशक्तिः आसीत्, सा दण्डशक्तिः न केवलमन्यान् एव, अपि तु राजानमपि नाशयितुं समर्था आसीत्, यदि राजा धर्मविरुद्धमाचरेत्। मनोः कथनं यद् दण्डो महान् शक्तिशाली। अकृतात्मभिः दुर्धर एव दण्डो धर्मविचलितं राजानं सबान्धवं नाशयति।[१] ईदृशानां वचनानां राज्ञि प्रजासु च प्रभावो भवति।

धर्म इव लोकमतमपि राज्ञो नियन्त्रकमासीत्। तदानीन्तनाः गुप्तचराः केवलं दण्डप्रदानार्थमेव राजविरुद्धान् जनान् ज्ञातुं न अचेष्टन्त, अपि तु एतदपि गवेषयन्ति स्म यत् प्रजाः राजानं कथं समालोचयन्तीति। तच्च राज्ञे निवेदयन्ति स्म। अतो राजा लोकमतानुसारमेव आचरितुं प्रयतमान आसीत्। रामेण कृतः सीतायाः परित्यागः एतद्विषये सुस्पष्टमुदाहरणम्। अद्यत्वे इव निर्वाचिता लोकसभा प्राचीनकाले अवश्यं नासीत्, परन्तु पञ्चायत्तम्, श्रेणी, गणः, पूगः, संघः, पौरजानपदः, राज्ञः मन्त्रिमण्डलम्, विद्वत्परिषद् इत्यादयः सभास्तु आसन्नेव। कौटल्यः कथयति यद् यथा चक्रान्तरं विना केवलमेकचक्रं रथं वोढुमशक्तम्, तथैव अमात्यादीन् विना एकाकी राजा राज्यसंचालने न शक्नोति। अतः राज्ञः कृते आवश्यकं यत् स योग्यान् अमात्यान् कुर्यात्, तदुपदेशांश्च आकर्णयेत्।[२] शुक्रः कथयति यद् मन्त्रिभिः राजहस्तगतैः क्रीडनकैरिव न भाव्यम्। यदि राजा मन्त्रिभ्यो न बिभेति, तदा किं तद्राज्यस्य कदापि संमृद्धिः शक्यते?[३] यो मन्त्र्युपदेशान् न सम्मनुते, स राजा राजच्छद्मना प्रजानां धनस्य हर्ता एव।[४] स्वीकृतिमन्तरेण

१. दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम्॥
(मनु० ७।२८)

२. सहायसाध्यं राजत्वं चक्रमेकं न वर्तते।
कुर्वीत सचिवांस्तस्मात् तेषाञ्च शृणुयान्मतम्॥
(अर्थ० १।७।१५)

३. न बिभेति नृपो येभ्यस्तैः किं स्याद् राज्यवर्धनम्।
(शुक्र० २।८१)

४. हिताहितं न शृणोति राजा मन्त्रिमुखाच्च यः।
स दस्यू राजरूपेण प्रजानां धनहारकः॥
(शुक्र० २।२४७)

कश्चिदपि विधिः कार्यान्वितो भवितु न शक्नोति इति यत् शुक्रेण उक्तं तेन परिज्ञायते यत् प्राचीनसमये राज्ञि वैधानिका प्रतिबन्धाः आसन्। पुरोधाः, प्रतिनिधिः, प्रधान, सचिवः, मन्त्री, प्राड्विवाकः, पण्डितः, सुमन्त्रः, अमात्यः, दूत इत्येते दश राज्ञः प्रकृतयः कथिताः। एतेषां कीदृशी योग्यता कीदृशी च कार्यप्रणाली स्यादिति वर्णितं शुक्रनीतौ। एषां विभागाः पृथक् पृथक् स्वीकृताः। परन्तु शासने सर्वेषामपि उत्तरदायित्वम्। शुक्रस्य कथनं यत् शासने कस्मिन्नपि लेखे मन्त्री, प्राड्विवाकः, पण्डितः, दूतः इत्येतैः एतल्लेख्यं यद् एतल्लेखे अस्मत्स्वीकृतिः, तदुपरि अमात्येन लेख्यं यद् इदमुचितम्। सुमन्त्रेण लेख्यं यदत्र पूर्णतया विचारः कृतोऽस्ति। प्रधानेन लेख्यं यद् इदं सत्यम्। ततः प्रतिनिधिना लेख्यं यद् इदमङ्गीकर्तुं योग्यम्। ततः युवराजोऽपि इत्थमेव लिखेद् यदिदं स्वीकृमभूत्। ततः पुरोहितो लिखेद् यद् एष लेखः मेऽभिमतः। स्वस्वलेखाद् अधः सर्वेषामधिकारिणां मुद्रा अपि भवेत्। अन्ते इदं स्वीकृतमस्तीति विलिख्य राजा स्वमुद्रामङ्कयेत्।[1]

इयदेव प्रत्येकं मन्त्रिणः स्वोपपत्तिकां लिखितां स्वीकृतिमादाय राजा स्वयं न विचारयेद् यद् बहूनां सम्मतं तदेव स्वीकुर्यात्।[2] यदि राजा धर्मानुसारं न आचरति तस्य त्यागे हनने वा न कश्चिद् दोषः। शुक्रस्य कथनं यद् महाकुलोत्पन्नोऽपि राजा यदि गुणानाम्, नीतेः, देशस्य च द्वेष्टा, अधार्मिकश्च भवति, तदा स

१. मन्त्री च प्राड्विवाकश्च पण्डितो दूतसंज्ञकः।
स्वाविरुद्धं लेख्यमिद लिखेयुः प्रथम त्विमे॥
अमात्यः साधु लिखितमस्त्येतत् प्राग्लिखेदयम्।
सम्यग् विचारितमिति सुमन्त्रो विलिखेत् ततः॥
सत्य यथार्थमिति च प्रधानश्च लिखेत् स्वयम्।
अङ्गीकर्तुं योग्यमिति ततः प्रतिनिधिर्लिखेत्॥
अङ्गीकर्त्तव्यमिति च युवराजो लिखेत् स्वयम्।
लेख्यं स्वाभिमतं चैतद् विलिखेच्च पुरोहितः॥
स्वस्वमुद्राचिह्नितं च लेख्यान्ते कुर्युरेव हि।
अङ्गीकृतमिति लिखेन्मुद्रयेच्च ततो नृपः॥
(शुक्र० २।३५५–३५९)

२. पृथक् पृथङ्मतं तेषां लेखयित्वा ससाधनम्।
विमृशेत् स्वमतेनैव यत् कुर्याद् बहुसम्मतम्॥
(शुक्र० १।३६३)

परित्याज्यः, तत्स्थाने च तत्कुलोद्भव एव कश्चित् पुरोहितादीनां सम्मतिमनुसृत्य स्थापनीयः।[1] कौटल्यस्य कथनं यद् राजानः प्रकृतिकोपभाजः सन्तो निहता भवन्ति।[2] महाभारते स्पष्टं कथितं यद् यो राजा 'प्रजां परिपालयिष्यामि' इति[3] प्रतिजानीते, परं न तथा करोति, स उन्मत्तश्वा इव हन्तव्यः। अतो राजा सदैव भीत आसीत्, अन्याय्यं कार्यं कर्तुं च नोत्सहते स्म।

व्यवस्थापनम्, शासनं न्यायश्चेत्येतत्त्रयस्य एकीकरणे अधिनायकवादः स्थापितो भवति। अद्यत्वे शासनस्य यः कश्चिदपि प्रकारो भवेत्, परं सर्वत्र अधिनायकत्वं प्रत्यक्षमप्रत्यक्षं वा अस्ति; तद् ब्रिटेनदेशीयं लोकसभाशासनम्, साम्यवादीयं दलीयशासनं वा भवेत्। संघीयशासनमस्य नियमस्य अपवादतया स्थातुं प्रतिजानीते; यतः तस्य मूलमेतद् यत् तेन व्यवस्थापनं शासनं न्यायश्च पृथक् पृथक् कर्तुं प्रयतितम्। अत्र तेन कियत् साफल्यं प्राप्तमिति तु अमेरिका-कनाडा-आस्ट्रेलिया-इत्यादिदेशीयशासनविधानानां विश्लेषणानन्तरमेव ज्ञातुं शक्यते। परन्तु प्राचीनभारते एतेषां त्रयाणां पृथक्करणं सुस्पष्टं कृतमासीत्।

मनोः कथनं यद् दैवेभ्योंऽशेभ्यो राजा उत्पन्नः, अतः स यं यथा आचरितुं कथयेत् तेन तथैव आचरितव्यम्।[4] एतद्व्याचक्षाणो मेधातिथिः लिखति यदद्य अमुक उत्सवः कार्यः, मन्त्रिविशेषस्य गृहं विवाहोत्सवावसरे गन्तव्यम्, अमुकतिथौ अमुकः पशुः न हन्तव्यः, अमुकः पक्षी न धर्तव्यः-एवं विधान् नियमान् राजा कर्तुं शक्नोति। वर्णाश्रमव्यवस्थायां हस्तक्षेपं कर्तुं न प्रभवति कश्चिदपि।[5]

---

१. गुणनीतिबलद्वेषी कुलभूतोऽप्यधार्मिकः।
नृपो यदि भवेत् तं तु त्यजेद्राष्ट्रविनाशकम्॥
तत्पदे तस्य कुलजं गुणयुक्तं पुरोहितः।
प्रकृत्यनुमतिं कृत्वा स्थापयेद् राज्यगुप्तये॥
( शुक्र० २।२६४-२६५ )

२. प्रायश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते।

३. अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः।
स संहृत्य निहन्तव्यः श्वेव सोन्मादकातरः॥

४. तस्माद्धर्मंमभीष्टेषु स व्यवस्येन्नराधिपः।
अनिष्टञ्चाप्यनिष्टेषु तं धर्मं न विचालयेत्॥

५ न त्वग्निहोत्रव्यवस्थायै वर्णाश्रमिणं राजा प्रभवति। स्मृत्यन्तरविरोधप्रसङ्गादविरोधे वास्मिन् विषये वचनस्यार्थत्वात्।

कौटल्येन अर्थशास्त्रे द्वितीयाधिकरणे दशमाध्याये राज्ञः शासनविषये चर्चितम्। स कथयति यत् लिखिता आज्ञा, सन्देशादिकं च शासनं कथ्यते। अत्र तेन आज्ञाया भाषाविषये लेखनादिपद्धतौ च विचारः कृतोऽस्ति। शुक्रेण स्वनीतिशास्त्रे ते विषयाः प्रतिपादिताः, यत्र राज्ञः आज्ञा शासनं वा प्रवर्तयितुं शक्यन्ते। स कथयति यद् राजा द्वारपालान् नियुञ्जीत; तद्द्वारेण गृहस्थानां कुशलानि जानीयात्। स आज्ञा प्रसारयेत्। दासः, भृत्यः, पुत्रः, शिष्यश्च वाण्यैव दण्डनीयः। परिमाणादिविषये मुद्रादिविषये च कश्चिदपि विश्वासघातं न कुर्यात्। अन्याय्यमार्गेण कश्चिदपि द्रव्यं नाददीत। अपकारिणां साहाय्यं न कर्त्तव्यम्। माता, पिता, पूज्यः, विद्वान् इत्येते न अवमाननीयाः। पतिपत्न्योः, स्वामिसेवकयोः, पितापुत्रयोः, गुरुशिष्ययोः परस्परं विरोधः परिहरणीयः। वापी, कूपः, उद्यानम्, सीमा, धर्मशाला, देवालयः, दीनः इत्येतेषां क्षतिः न कार्या। द्यूतम्, मद्यपानम्, मृगयाशस्त्रधारणम्, सुराकर्षणम्, गृहविक्रयः, क्रयः, विक्रयः, दानपत्रम्, ऋणनिर्णयपत्रमित्यादिकं किमपि राजाज्ञां विना न कार्यम्। कश्चिदपि अधिकारी नवीनान् नियमान्, निर्णयान्, जातिदूषणम्, नास्तिकधनसंग्रहणम्, मन्त्रभेदं च न कुर्यात्। एतद्विषये राजा आज्ञापत्राणि विलिख्य चतुर्मार्गेषु योजयेत्। राजा सर्वथा असाधुपुरुषेषु शत्रुषु च दण्डं प्रयुञ्जीत।[1]

एतदनुसारमेव अशोकप्रभृतीनां लेखाः आदेशाश्च लभ्यन्ते। प्राचीनभारते विधिनिर्माणस्य अधिकारो राज्ञः कस्याश्चित् सभाया वा नासीत्। विधिविषये अधो निर्दिष्टानि प्रमाणानि आश्रयणीयानि—वेदः, धर्मः, पुराणम्, धर्मशास्त्रम्, वेदाङ्गानि, उपवेदाः, देशः, जातिः, कुलधर्मः, (यो वेदानुरोधी); कृषकस्य, वणिजाम्, पशुपालकानाम्, श्रेष्ठिनां शिल्पिनां वर्गेषु प्रचलिताः नियमाः, तर्कः, त्रयीविदां निर्णयश्चेति।[2]

---

१. लिखित्वा शासनं राजा धारयेच्च चतुष्पथे।
सदा चोद्यतदण्डः स्यादसाधु च शत्रुषु॥

२. तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम्।
देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्॥
कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे।
न्यायाधिगमे तर्कोऽभ्युपायो विप्रतिपत्तौ॥
त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत्।
तथा ह्यस्य निःश्रेयसं भवति॥

निर्णयविषये धर्मः, व्यवहारः, चरित्रम्, राजशासनं चेत्येतत् चतुष्टय-मवधेयम्। प्राचीनपरम्परायां वेदेषु परिवर्तनस्य संशोधनस्य वाधिकारः विदुषामपि नासीत्। विद्वत्परिषदोऽपि कार्यं केवलं व्याख्यानमात्रम्, न तु वैदिकेषु नियमेषु कीदृक् परिवर्तनं संशोधनं वा। अतो राजा तदीया काचित् सभा वा यथेच्छं विधिप्रणयनं कर्तुं नाशकत्। सर्वे धर्मशास्त्रीयनियमैः बद्धा आसन्। तदनुसारमेव शासनकार्यं भवति स्म। राजा न व्यवस्थापकः, अपि तु शासक आसीत्। तच्छा-सकत्वमपि सेवाभावनया एव, न तु सम्प्रभुतया। धर्मविरुद्धाचरणे स्वयं राजा अपि दण्डभाग् भवति स्म।

एवं वयं पश्यामो यत् प्राचीनभारते राज्ञो व्यवस्थापनाधिकारो नासीत्। तस्य प्रधानं कर्त्तव्यमिदमेव आसीद् यत् स प्रजां रक्षेत्, धर्मशास्त्रोक्तान् नियमान् प्रजाभिः परिपालयेत्। परन्तु अद्यतने वैधानिकशासने इव तदानीन्तनो राजा काष्ठपुत्तलिकेव नासीत्। प्रजासम्बन्धिषु सर्वेष्वपि कार्येषु तस्य उत्तरदायित्व-मासीत्। राज्ञ उत्तरदायित्वविषयके पर्यालोचने क्रियमाणे प्रकृतविषयपरिज्ञानस्य सारल्यं भविष्यति।

धर्मशास्त्रेषु इतिहासेषु पुराणेषु च राज्ञ उत्तरदायित्वविषये विशदं वर्णितम्। कामन्दकस्य कथनं यदधिकारिभ्यः, चौरेभ्यः, शत्रुभ्यः, राज्ञी-कुटुम्बप्रभृतिभ्यः, स्वप्रियजनेभ्यः, राजपुरुषवल्लभाच्च राजा प्रजाः रक्षेत्।[1]

प्रजापालवद् ब्राह्मणश्रोत्रियप्रभृतीनां साहाय्यमपि राज्ञः कर्त्तव्यम्। मनुः कथयति यद् अध्ययनं सम्पाद्य गुरुकुलाद् निर्गच्छतः स्नातकान् राजा सत्कुर्वीत, यत एष सत्कारो राज्ञामक्षयः कोशः कथ्यते। यस्य राज्ये श्रोत्रिया ब्राह्मणाः क्षुद्व्याकुला भवन्ति, तस्य राज्यमाशु विनश्यति।[2]

---

१. आयुक्तकेभ्यः चोरेभ्यः परेभ्यो राजवल्लभात्।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम्॥
पञ्चप्रकारमप्येतदपोह्यं नृपतिर्भयम्।
(कामन्दक० ५।८०-८१।)

२. आवृत्तानां गुरुकुलाद् विप्राणां पूजको भवेत्।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते॥
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा।
तस्यापि तत् क्षुधा राष्ट्रमचिरेणैव सीदति॥

एवं शिक्षासंस्कृत्यादीनां प्रसारोऽपि राज्ञा कर्त्तव्यः। महाभारते शान्तिपर्वणि उक्तं यत् कृपणानाम्, अनाथानाम्, वृद्धानां विधवानां च जीविकां राजा निर्वहेत्।[१] सभापर्वणि उक्तं यद् अन्धान्, मूकान्, खञ्जान्, अङ्गहीनान्, बान्धवरहितान्, यतींश्च पितृवत् परिपालयेद् राजा।[२] शङ्खलिखितौ कथयतो यद् दीनान्, आतुरान्, अनाथान्, अङ्गहीनान्, विधवाः, बालांश्च औषधनिवासभोजनादिभिः राजा परिपालयेत्। तयोः एतदपि कथनं यद् यः क्षत्रियः, वैश्यो वा स्वकर्मणा जीवनयापनं कर्तुमशक्तः स राज्ञः सविध गच्छेत्; राजा च तं कर्मसु नियुञ्जीत। एवमेव शिल्पिशूद्रादयोऽपि राज्ञः समीपे उपतिष्ठेयुः। राजा च तेषां साहाय्यं कुर्वीत।[३] विष्णुधर्मोत्तरे पतिव्रतायाः पालनं पूजनं चापि राज्ञः कर्त्तव्यमुक्तम्।[४] धर्मशालाः, प्रपाः, तडागान्, ब्राह्मणमन्दिराणि च राजा निर्मिमीत।[६]

मत्स्यपुराणे उक्तं यद् धर्मशालानिवासिनां कृते भोजनपात्रवैलादीनां प्रबन्धोऽपि राज्ञा कार्यः। इदं टीकयता हरदत्तेन लिखितं यदेतानि सौविध्यानि शूद्रेभ्योऽपि प्रदेयानि। कृषिरक्षणविषयेऽपि राज्ञा अवहितेन भवितव्यम्। महाभारते सभापर्वणि उक्तं यद् राजा समस्ते देशे विशालान् तडागान् निर्मिमीत, येन वृष्टेरभावेऽपि कृषिकार्यमव्याहतं भवेत्।[७]

इदं सर्वं केवलं ग्रन्थेषु लिखितमित्येव न, किन्तु एतेषु कार्येषु राजानः कियन्तः अवहिताः आसन्निति विषये बहूनि ऐतिहासिकानि प्रमाणानि समुपलभ्यन्ते। शुक्रनीतिसारे अर्थशास्त्रे च राज्यद्वारेण कृषिसेचनस्य कीदृशी व्यवस्था इति सुस्पष्टं वर्णितम्। चन्द्रगुप्तराज्ये कृतवासस्य यूनानीदूतस्य मेगस्थनीज

---

१. कृपणानाथवृद्धानां विधवानां च योषिताम्।
योगक्षेमञ्च वृत्तिं च नित्यमेव प्रकल्पयेत्॥

२. कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान्।
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि॥

३. कृपणातुरानाथव्यङ्गविधवाबालवृद्धानौषधावसथाशनाच्छादनैर्बिभृयात्।

४. राजन्यवैश्यावप्यजीवन्तौ राजानमुपतिष्ठेयातां तावुभौ शक्तितः।
संविभक्ताबुपकुर्यातां स्वस्वधर्मानुष्ठानेन शिल्पिनः कारवश्च शूद्राः॥

५. साध्वीनां पालनं कुर्यात् पूजनं च महीपतिः।

६. शालाःप्रपातडागानि देवतायतनानि च।
ब्राह्मणावसथाश्चैव कर्त्तव्या नृपसत्तमैः॥

७. कच्चिद् राष्ट्रे तडागानि पूर्णानि च बृहन्ति च।
भागशो विनिविष्टानि न कृषिर्देवमातृका॥

इत्यस्य कथनं यद् देशे सेचनस्य अत्युत्तमा व्यवस्था आसीत्। अर्थशास्त्रे चतुर्थाधिकरणे तृतीयाध्याये कौटल्येन दाहः, जलवृद्धिः, रोगः, दुर्भिक्षम्, मूषकाः, वन्याः पशवः, भूतप्रेतादयः इत्येतेभ्यो रक्षणस्य उपायाः निर्दिष्टाः। बालानाम्, श्रोत्रियाणाम्, वीरपत्नीनाम्, अप्राप्तव्यवहाराणां च सम्पदो राजा रक्षेत्।[1] राज्ञो विषये एष नियम आसीद् यद् यदि चौरैणापहृतं द्रव्यं न लभ्यते, तदा राजा स्वकोशादेव तावद् द्रव्यं दद्यात्।[2]

तात्पर्यमिदं यद् राज्ञः उत्तरदायित्वं शासनविषयकान् प्रतिबन्धांश्च आलोच्य नैतद् वक्तुं शक्यं यद् भारतवर्षे निरङ्कुशं राजतन्त्रमासीदिति। अपि तु इदमेव वक्तुं शक्यते यद् नियन्त्रितराजतन्त्रीयपरम्परया विधिशासनस्य विकासविषये एव प्रयतितम्।

## विकेन्द्रणम्

प्राचीनेषु भारतीयेषु नीतिशास्त्रेषु, अर्थशास्त्रेषु, स्मृतिषु च वर्णितेषु सप्तसु राज्याङ्गेषु राज्ञः एव महत्त्वं स्वीकृतम्। कैश्चित् स्मृतिकारैस्तु देवेभ्यः अंशेभ्य राज्ञो उत्पत्ति कथिता।[3] परन्तु अनेकान् धार्मिकान् वैधानिकान् च प्रतिबन्धान् उपस्थाप्य राजा निरङ्कुशो मा भूदिति चेष्टितम्। राज्यसिंहासने एव राज्यसत्तायाः केन्द्रितत्वाभावाद् राजा यथेच्छं प्रत्येकं कार्यं कर्तुं नाशकत्। एतैः प्रमाणैः विशदमेतद् यद् राज्यसत्ता कुत्रचिद् व्यक्तौ संस्थायां वा न केन्द्रिता आसीत्।

राज्यस्य वेदेषु वर्णिते महत्त्वपूर्णे राज्यस्याङ्गे सभा समितिश्च आस्ताम्। समितेः अस्वीकृतिः राज्ञः कृते महान् अभिशाप आसीत्।[4] सभासमित्योः समाप्त्यनन्तर ब्राह्मणसाहित्ये 'रत्नि'नाम्न्याः संस्थायाः वर्णनं दृश्यते, या संस्था राज्ञः परामर्शदात्री आसीत्। एतस्याः सभासदां महत्त्वमेतेनैव विशदीभवति यद् राज्याभिषेकस्य प्रथमदिने बलि नैवेद्यं वा दातुं राजा स्वयमेतेषां गृहं गच्छति स्म।[5] धर्मशास्त्राणां नीतिशास्त्राणाञ्चालोचनेन परिज्ञायते यदुक्तसंस्थायाः

---

१. रक्षेद् राजा बालानां धनान्यप्राप्तव्यवहाराणां श्रोत्रियवीरपत्नीनाम्।

२. प्रत्याहर्तुमशक्यं स्याद् धन चौरैर्हृत यदि।
तत् स्वकोषात् प्रदेय स्यादशक्तेनोपजीविनः॥

३. मनु० ७।४।

४. अवे० १९।

५. शत० ब्रा० ३।१।

समाप्त्यनन्तरं मन्त्रिणो मन्त्रिपरिषद् वा एतत्स्थानं गृहीतवन्तः। एता अधिकार-सम्पन्नाः संस्थाः आसन्। एतेषां परामर्शो राज्ञः कृते अनिवार्य आसीत्। रामायणे महाभारते च राज्यस्य कृते मन्त्रिणामावश्यकत्वमुक्तम्।[१] एकाकी राजा तथैव शासनं सञ्चालयितुं न प्रभवति, यथा एकं चक्रं रथं वोढुम्।[२] मनुना शुक्रेणापि च मन्त्रिणामावश्यकता प्रतिपादिता।[३]

शासनसौविध्यार्थं विभिन्नाः प्रशासकीयाः विभागाः आसन्। प्रत्येक-विभागस्य च एकोऽध्यक्षो भवति स्म। विष्णुस्मृतौ चतुर्णाम्[४], रामायणे[५] महाभारते[६] च राज्यस्य कृते मन्त्रिणां च अष्टादशानां विभागानामुल्लेखो दृश्यते। कौटल्येन इतोऽप्याधिका विभागाः स्वीकृताः। शुक्रोक्त्यनुसारं विंशति-विभागा आसन्।[७] प्रत्येकम् अध्यक्षस्य सहायकाः कर्मचारिण आसन्, ये स्वाधि-कारिणं प्रति उत्तरदायिनो भवन्ति स्म।

व्यवस्थापिका, कार्यकारिणी, न्यायपालिका चेति तिस्रः शासनस्य शक्तयः सर्वथा विकेन्द्रिता आसन्। व्यवस्थापनस्य अधिकारो न कस्यास्चिद् व्यक्तेः संस्थाया वा आसीत्। वेदेषु प्रतिपादितं यत् समितयोऽपि विधिं निर्मातुं न शक्नुवन्ति।

विधानानि द्विविधानि आसन्-शास्त्रसम्मतानि, परम्परागतानि च। शास्त्रोक्तानां परम्पराप्राप्तानां च विधीनां पालने साधनमात्रं राज्यमासीत्। तद् राज्यम् एतेषु कीदृगपि परिवर्तनं कर्तुं न क्षमम्। परम्परासु परिवर्तनं भवति स्म, परन्तु न तदपि राज्यद्वारेण, अपि तु समाजद्वारेण, तदपि शनैः शनैः अस्फुटतया। कैश्चित् शास्त्रकारैः राज्ञः कृते अध्यादेशस्य अधिकारः कृतः।[८] परन्तु ते अध्यादेशा अपि धर्मविरुद्धाः भवितुं न शक्यन्ते। शुक्रनीत्यनुसारमध्यादेशाः ईदृशा एव आसन्[९] यथा वृद्धानामादरः पारिवारिकी एकता, असत्यस्य असमर्थन-मित्यादयः। एतान् अध्यादेशान् धर्मशास्त्रविहितविधीनां पालनार्थं राजशासन-

१. अयोध्याकाण्डम् १०।७१।
२. कौटल्य० १।३।
३. मनु० ७।५३१; शुक्र० २।५, ७, ८।
४. ३।१६।
५. अयो० का० १००।
६. ४।५।३८।
७. २।११७।
८. कौटल्य० ३।१; मनु० ७।१३।
९. १।२९२–३११।

भूतान् कथयितुं शक्नुमः। अशोकस्य शिलालेखेषु ईदृशाः आदेशाः दृश्यन्ते। धर्मशास्त्रेषु निर्दिष्टस्य धर्मस्य परिपालनं राज्ञः कर्त्तव्यमासीत्।[1] स स्वयं तत्र किमपि परिवर्तनं कर्तुं न प्रभुः। एवं वयं पश्यामो यद् व्यवस्थापनस्य अधिकारः कस्यापि नासीत्।

कार्यकारिण्याः न्यायपालिकायाश्चापि शक्तयो विभाजिता आसन्। राजा एतासां प्रधानः आसीत्। अतः केवलं निरीक्षणस्य अधिकारो राज्ञः। शुक्रेण दश मन्त्रिणः निर्दिष्टाः, ये एकैकस्य विभागस्य प्रधाना भवन्ति स्म।[2] प्राड्-विवाकः, प्रतिवेदको वा न्यायविभागस्य सर्वोच्चन्यायालयस्य च प्रधान आसीत्। अस्य अधिकारे अन्ये अपि सहायकाः कर्मचारिणो भवन्ति स्म। ये स्वीयोच्चाधिकारिणं प्रति उत्तरदायिनो निम्नस्तरीयकर्मचारिणां निरीक्षकाश्च अभूवन्। स्थानीयाः शासकाः युद्धसन्धिघोषणादिकार्यविशेषातिरिक्तेषु शासनीयेषु सर्वेषु कार्येषु पूर्णतया स्वतन्त्रा आसन्, किन्तु न अनियन्त्रिताः।

शास्त्रकारैः नीतिकारैश्च शासनसम्बन्धिनां विभागादीनां नामावली निर्दिष्टा। कौटल्येन ग्रामाणां शताष्टकं 'स्थानीय' इति, ग्रामाणां शतचतुष्टयं 'द्रोणमुख' इति, ग्रामाणां शतद्वयं 'कार्वटिक' इति, ग्रामदशकं 'संग्रहण' इति नामोक्तम्। स्थानीयस्य प्रधानः स्थानिकः कथ्यते स्म। मनुना दशानां ग्रामाणाम्, विंशतेः ग्रामाणाम्, शतस्य ग्रामाणाम्, सहस्रस्य ग्रामाणां च समूहाः निर्दिष्टाः। शुक्रेण दशसहस्रग्रामाणानामपि समूहः उल्लिखितः। येषां समूहानामद्यतनैः "प्रान्त - कमिश्नरी - जिला-ग्राम" इत्यादिभिः तुलना कर्तुं शक्यते।

प्रान्तीयाः शासकाः प्रायः उच्चजातीयाः राजपरिवारीयाश्च भवन्ति स्म। परराष्ट्रसम्बन्धं विहाय आन्तरिकशासनविषये ते स्वतन्त्राः आसन्। तेषां स्वीयाः सदस्या अमात्याश्च अभवन्। अशोकसमये तक्षशिलास्थैः जनैः तत्रत्यानां मन्त्रिणामेव विरोधः कृतः। शान्त्यर्थं सुरक्षार्थं च प्रान्तीयाः सेना आसन्, येषां प्रयोगो यदावश्यकतानुसारं केन्द्रं कर्तुं शक्नोति स्म। राज्यनीतेः पालनार्थं ते केन्द्रस्य उत्तरदायिन आसन्। प्रान्तीया अपि सर्वे विभागाः केन्द्रनिरीक्षणे आसन्। येषामध्यक्षाः प्रान्तीयाया अर्थव्यवस्थायाः, न्यायव्यवस्थायाः, करव्यवस्थायाश्च अध्यक्षा आसन्। शासनसम्बन्धिनामुपविभागानामपि उत्तरदायित्वमेषामासीत्।

१. वशिष्ठधर्मसूत्रम् १९।४।४।
२. शु० नी० २।६९–७०।

आधुनिककमिश्नरसदृशाः शासनविभागाः गुप्तयुगे प्रतिहारयुगे च भुक्तिरिति, राष्ट्रकूटेषु राष्ट्रमिति, चोलचालुक्येषु मण्डलमिति व्यपदिश्यन्ते स्म। अशोकीयशिलालेखेषु उल्लिखिताः राजुकाः, ये परसहस्रं जनान् शासति स्म। सम्भाव्यते यत्ते एतेषां कमिश्नरी-पदव्यपदेश्यानामेव शासका भवेयुः। ते कस्यापि कृते प्रसन्ना भवितुम्, कमपि वा विध्यनुसारेण दण्डयितुं शक्ता आसन्।[१] ते निम्नस्तरीयेषु अधिकारिषु राज्यनीतेः प्रतिबन्धं कर्तुमशकन्। स्वयं च एतदर्थं प्रान्तद्वारेण केन्द्रस्योत्तरदायिनः आसन्। राजुकशब्द एव भूमि-मापनं बोधयति। एते स्वक्षेत्रीयस्य अर्थविभागस्य करविभागस्य च प्रधाना आसन्। तेषां कियान् अधिकार आसीदिति एतेनैव स्पष्टीभवति यत् प्रजायाः सुखसौविध्यादीनि न बाधनीयानि इति ये अधिकारिणोऽनुरुद्धाः, तेषु राजुकस्यापि उल्लेखोऽस्ति। अशोकेन एतेभ्यः न्यायविषयका अधिकारा प्रदत्ताः।[२] येन स्पष्टं यदेते न्यायव्यवस्थायाः प्रधाना आसन्। क्वचित् क्वचित्त् विषयपतेः अपि नियुक्तेः उल्लेखो दृश्यते।[३] क्वचित् क्वचिद् राष्ट्रमहत्तराणामपि निर्देशो लभ्यते। प्रायः एते शासकानां कृते विमर्शसमितेः प्रातिनिध्यं कुर्वन्ति स्म।[४]

शासनस्य द्वितीयः घटकः 'विषयः' आसीत्। अस्य शासको विषयपतिः कथ्यते स्म। अशोकीयशिलालेखेषु राजुकानन्तरमेतस्य उल्लेखो दृश्यते। स्मृतिषु उक्तः सहस्राधिपः[५], यो ग्रामसहस्रस्य प्रधान आसीत्। सम्भाव्यते यदेष एव विषय-पतिर्भवेत्। तत्साहाय्यार्थमायुक्तनियुक्तादीनामुल्लेखो दृश्यते। प्रायः एते करविभागेन सम्बद्धा आसन्।[६] कौटल्येन एते 'गोपः' इत्यपि कथिताः। विषयपतिः[७] विषयसम्बन्धिन्याः आन्तरिकव्यवस्थायाः पूर्णतया उत्तरदायी आसीत्। विषयसम्बन्धी उच्चो न्यायालयः प्रधाननगरे आसीत्।

गुप्तकाले विषयसम्बन्धिन्याः जनप्रतिनिधिसभायाः अपि उल्लेखो लभ्यते। अस्याम् एको नगरश्रेष्ठः, एकः शिल्पिवर्गस्य नेता, एको वणिग्वर्गस्य प्रधानः, एकश्च लेखकवर्गस्य नायको भवति स्म। अतोऽन्येषां (फरीदपुर, ताम्रलेख-संख्या ३)

---

१. स्तम्भलेखः ४।

२. तदेव।

३. एपिग्राफिका इण्डिका १५, पृ० १३०।

४. तदेव ८, १८६।

५. मनु० ७।११५, विष्णु० ३।७-१०।

६. इण्डियन एण्टि० १३, पृ० १५, २-२, पृ० ३६।

७. इण्डियन एण्टि० १९५२, १९५।

विंशतेः सदस्यानामपि निर्देशो लभ्यते ।[1] सम्भाव्यते यदेतेषु सम्पूर्णं शासनं निर्भरमासीत् । विषयसमितेः अधिकारा विस्तृता आसन् । राज्यस्य भूमेः विक्रयार्थं समितेः परामर्शः आवश्यक आसीत् । स्वयं विषयपतयोऽपि यदि क्रेतु-मिच्छेयुः, तदा तेषां कृतेऽपि एष प्रतिबन्ध आसीत् ।[2]

विषयान् ग्रामांश्च अन्तरा पठकस्यापि निर्देश उपलभ्यते, यः प्रायो मनूक्तो ग्रामशतकस्य समूहः, कौटल्योक्तः कार्वाटिको वा स्यात् । सर्वेषां विषयाणा-मधिकाराः पठकानामासन् । चोलराज्येषु पठकानां समितेः उल्लेखोऽस्ति । आवश्यकतानुसारमिमाः समितयः कराणां न्यूनतां कर्तुमशकन् ।[3] न्याय-सम्बन्धिनोऽपि अधिकाराः आसाम् आसन् । परिस्थितिविशेषवशेन कृतायाः नरहिंसायाः विषये विचारमपि इमा एव परिषदः कुर्वन्ति स्म ।[4]

शासनस्य सर्वतो लघुः, किन्तु महत्त्वपूर्णः, राज्यसत्तासम्पन्नश्च विभागो ग्राम आसीत् । ऋग्वेदे ग्रामाणां समृद्ध्यर्थं प्रार्थना विहिता अस्ति । रत्निसभायाः सदस्येषु ग्रामणीरप्यासीत् । वेदे अर्थशास्त्रे च ग्रामप्रधानो ग्रामणीरुक्तः । स ग्रामस्य मुख्योऽधिकारी आसीत् । गढवालशासकैः ग्रामग्रहणावसरे ग्रामणीभिः सह परामर्शः कृत इति उल्लिखितमस्ति । ग्रामीणरक्षादलस्य स प्रधान आसीत् । स स्वक्षेत्रीयराज्यकराणां ग्रहीता आसीत् । स ग्रामसभानां प्रधानोऽप्यासीत् । शुक्रनी-त्यनुसारं ग्रामे एको न्यायाध्यक्षः, भागहरः, प्रतिहारश्चेत्यादयोऽपि आसन् । सम्पूर्णस्य ग्रामस्य एका ग्रामसभा आसीत् । अस्यां सर्वेषां परिवाराणां सदस्याः भवन्ति स्म । लघुसभा ग्रामपञ्चायत्तनाम्नी स्थानीयशासनार्थम् , अनेका उपसमित-यश्च आसन् । मन्दिरप्रबन्धस्य, भूमिसीमानिर्धारणस्य अधिकारो ग्रामपञ्चायत्ता-ख्यानां संस्थानामासीत् । एताः संस्थाः स्थानीयान् अपराधान् गवेषयन्ति, तद्विषये दण्डनिर्धारणं च कुर्वन्ति स्म ।[4] अपराधविषये स्थानीयानामुत्तर-दायित्वमासीत् । अपराधिनोऽप्राप्तौ स्थानीयाः अधिकारिण एव अपराधिनो मन्यन्ते स्म । उच्चन्यायालये तेषामेव अपराधानां विचारो भवति स्म, ये अति-गम्भीराः । ग्रामसभा धनालयानामपि ( Bank ) कार्यमकुर्वन् । आपत्तिकाले

---

१. एपिग्रफिका इण्डि० ७, ११५ ।

२. इण्डि०, एण्टि०, १९१९, पृ० १९५ २०४ ।

३. साउथ इण्डियन एपिग्राफिकल रिपोर्ट १९१९, सं० ५५६ ।

४. अर्थशास्त्रम् ४, पृ० १३ ।

करं दूरीकर्तुम्, राज्यमनुरोद्धमेता क्षमा आसन्। अस्वामिकायाः ग्रामभूमेः अधिकारिण्य एता एव आसन् यस्याः भूमेः विक्रयविषये एतासामनुमतिः राज्यस्य कृते अपेक्षितासीत्। महत्या अपि सम्पदो निर्णयोऽत्रैव भवति स्म। केषाञ्चिद् विदुषामिदं कथनं यदुक्तसंस्थानां यदेते अधिकारा आसन् तत्र अराजकता एव मूलम्, परन्तु एतदयुक्तम्। वस्तुतः राज्यसम्बन्धिषु महत्स्वपि कार्येषु ताः संस्थाः साहाय्यं कर्तुमशकन्। अतोऽन्यत्र कलादिविषयेऽपि तासां महत् साहाय्यमासीत्। शासनार्थं प्रतिशतं दशतः पञ्चदश यावत् सा राज्यकराद् ग्रहीतुमशकत्। राज्यकरादतिरिक्तमपि करं ग्रहीतुं समर्था आसीत्। अपराधिभ्यो गृह्यमाणोऽर्थोऽपि एतत्कोषेष्वेव सम्मिलितो भवति स्म।

करविषये नासीद् राज्यं स्वतन्त्रम्। करविषये स्मृतिकृतां नानामतानि सन्ति। ते प्रतिशतम् अष्टतः त्रयस्त्रिंशत् पर्यन्तं करं व्यवस्थापयन्ति। राज्ञा तत्र किञ्चिदेव परिवर्तनं शक्यमासीत्। विशेषान् करान् ग्रहीतुं ग्रामपञ्चायत्तसंस्थाः स्वीयामस्वीकृतिमपि प्रकटयितुं शक्ता आसन्। केषाञ्चित् स्मृतिकाराणां कथनानुसारमुक्तसंस्थाः स्वविषये राज्ञः स्वशक्तिं लब्धुमशकन्।[1] परन्तु वस्तुतः तासां शक्तिः ताभिः परम्परातः प्राप्ता आसीत्। अत्र न कश्चित् सन्देहो यत् तासु राज्यस्य नियन्त्रणमासीत्। राज्यस्य अधिकारिद्वारेण एताः समाहर्तारं प्रति उत्तरदायिन्यः। परमान्तरिकशासनविषये एताः स्वतन्त्राः आसन्।

राजसत्ता विकेन्द्रिता, विभिन्ना राज्यविभागाश्च प्रशासनविषये स्वतन्त्रा आसन्। परं सर्वे विभागाः परस्परं नासम्बद्धाः। केन्द्रतो ग्रामं यावत् शासनस्य एकसूत्रता आसीत्, यामाधृत्य सर्वाणि कार्याणि प्रचलन्ति स्म। सर्वे अधिकारिणः स्वापेक्षया उच्चाधिकारिणं प्रति उत्तरदायिन आसन्। व्यवस्थापनस्य अधिकारस्तु न कस्यापि। कार्यकारिण्याः न्यायपालिकायाश्च प्रधानो राजा। राजसत्ता यद्यपि विकेन्द्रिता, तथापि न विकीर्णा आसीत्। राज्यं शासनार्थं पञ्चायत्तसंस्थाः आश्रयत्। प्रशासकाः स्थानीयसंस्थाः नियमयन्तोऽपि ताः आद्रियन्ते स्म। परन्तु अस्याः आदर्शव्यवस्थायाः साफल्यं नैतिकतामीश्वरविषयकश्रद्धां च अपैक्षत।

-कल्याणकारी

पीगू (इकनॉमिक्स ऑफ वेल्फेयर) - बेवरिज (फुल इम्प्लायमेण्ट ऑफ फ्री सोसायटी) इत्यादिभिः विद्वद्भिः कल्याणकारिराज्यस्य कृते केचन सिद्धान्ताः स्थापिताः। तदनुसारं वैयक्तिकोद्योगविकासेन नियोजितार्थिकविकासेन सहैव

---

१. याज्ञ० २।३०।

भाव्यम्। उत्पादनम्, क्रयः, विक्रयः, आपण इत्यादीनां राज्येन तथा नियन्त्रणं स्यात्, येन उद्योगपतयः, वणिजो वा जनकल्याणप्रतिकूलं न व्यवहरेयुः। उत्पादनकर्तारम्, उपभोक्तारं च अन्तरा ईदृशः सम्बन्धः स्थापनीयः, येन असहयोगः, कार्यावरोधः, अन्या वा तादृश्यः स्थितयो मा भूवन् याभिः उत्पादनकार्ये क्षतिः स्यात्। जनकल्याणं राज्यसमृद्धिं च लक्ष्यीकृत्य विदेशीयेषु उद्योगेषु नियन्त्रणं कार्यम्। जनानां कल्याणस्य आयतिसुरक्षायाश्चैव तेषां स्वास्थ्यस्य शिक्षाया आवासस्य च व्यवस्था, समाजस्थानां निर्धनविकलाङ्गानां सहायता च अवश्यमवधेया। राज्यमावश्यकतानुसारं कृष्यादिव्यवस्थायां हस्तक्षेपं कर्तुं शक्नोति।

एतदाधृत्य यदा कौटल्योक्ता राज्यव्यवस्था पर्यालोच्यते, तदा परिज्ञायते यत् कौटल्येन व्याख्याता, प्रयोगपदवीं च प्रापिता राज्यव्यवस्था पूर्णतया कल्याणकारिस्वरूपमापन्ना आसीत्। खनिजशक्तौ राज्यस्य सर्वाधिकार आसीत्; तच्च राष्ट्रियेषु राष्ट्रान्तरीयेषु च उद्योगेषु राष्ट्रियसुरक्षां जनकल्याणं च लक्ष्यीकृत्य उपयुङ्क्ते स्म (२।१२।१९)। कृषिविषये समाजवादिनियन्त्रणमिव राज्यनियन्त्रणं नासीत्, येन राज्यं कृष्यादेः स्वामित्वमपि कल्पयेत्। केवलं राज्यमुत्पादनवृद्ध्यर्थं कृष्यादौ साहाय्यमकरोत्। राज्यमुत्तमबीजानाम्, अन्येषां च आवश्यकानां कृष्युपकरणानां संयोजनं करोति स्म। कृषिविषये कृषकाः राज्येण निर्दिश्यन्ते स्म, येन उत्पादनवितरणोपभोगेषु समन्वयः स्यात्, राष्ट्रियोत्पादनं च वृद्धिं यायात्। कृष्यङ्गभूतानां स्वामिनां सेवकानां पशूनां च कृते उचिताः राज्यनियमा आसन्। समाजसेवायां राष्ट्रसेवायां च निरतैः भूमिः, कृष्युपकरणानि च निःशुल्कं प्राप्यन्ते स्म। एतदवश्यमासीद् यदीदृश्यां भूमौ व्यक्तिः स्वत्वं नामन्यत (२।२४।१९)। ऊषरभूमौ यदि कृषकः कृषिं कर्तुं वाञ्छेत्, तदा राज्यं तस्य साहाय्यं प्रदाय स्वामित्वमपि स्वीकुरुते स्म (२।१।११)।

जनकल्याणमिव राष्ट्रियोत्पादनस्य वृद्धिः अपि कृषेः ध्येयमासीत्। यदि कृषको भूमिमादाय कृषिं न कुर्यात्, तदा राज्यं ततो भूमिमाच्छिद्य कृषकान्तराय ददाति स्म। भूमिं गृहीत्वा कृषिमकुर्वन् दण्डनीय आसीत्। सिञ्चनसौविध्यार्थं राज्यद्वारेण तडागसेतुबन्धनादीनामपि व्यवस्था आसीत्। तडागादिनिर्माणे जनानां साहाय्यमपि अकरोद् राज्यम् (३।९।३६-४०)। तीर्थस्थानानि विहाय आवश्यकतानुसारं कुत्रापि भूमौ कृषिः शक्या आसीत्। राज्यं स्वीयां कृषिं तदा कारयति स्म, यदा वैयक्तिकी कृषिक्षमता न भवेत्। यत्र कृषका आवश्यकानामुपकरणानामभावेन कृषिं कर्तुमशक्ताः, तत्र राज्यस्य स्वीया कृषिः भवति स्म। यदि तत्र वैयक्तिकीं कृषिं कर्तुं कृषकः समर्थः स्यात्, तदा राज्यं निजां कृषिं परिहरति स्म, अर्थात् कृषकायैव कृष्यधिकारान् अददात् (२।१)।

उद्योगक्षेत्रेऽपि राज्यस्य अर्जनदृष्टिः नासीत्। यत्र उद्योगक्षेत्रे वणिक् स्वीयं धनं योजयितुम् अशक्तः, तत्र राज्येन एव उद्योगाः सञ्चाल्यन्ते स्म। व्यापार-दृष्ट्या स्थितेः आनुकूल्ये सम्पद्यमाने उद्योगसमृद्धिसंभावनायां च राज्यम् उद्योग-क्षेत्रात् प्रत्यावर्तते स्म (२।१।२१)। भ्रष्टाचारपरिमापनविषये न्यायादिवत् मूल्यनिर्धारणे अपि राज्यनियन्त्रणम् आसीत्। वैयक्तिकानाम् उत्पादनक्षेत्राणां सत्त्वेऽपि निरङ्कुशता नासीत्। उन्मुक्तप्रतियोगितायाः नियन्त्रणम् उत्पादनह्रासादि-विषये अवधानम्, मूल्यनिर्धारणशक्तीनां समाजहितदृष्ट्या नियन्त्रणम् उपयोक्तुः सौविध्यार्थं स्थितेरानुकूल्यसम्पादनञ्चेत्यादिकं राज्यकर्त्तव्यम् आसीत् (२।१९)। आपणस्य मूल्यस्य लाभस्य च विषये राज्यव्यवस्था आसीत् (२।१६)। जनहितमेव लक्ष्यीकृत्य व्यापारः, तल्लाभश्च व्यवस्थापितः आसीत् (२।१६)।

स्थानीयोत्पादकानां कृते क्षतिकराणां वस्तूनाम् आयातनिर्यातादिकं न भवति स्म। विदेशीयानाम् उद्योगानां प्रोत्साहनं परन्तु स्वदेशीयानां व्यापाराणां सम्यक् संरक्षणम् आसीत्। उद्योगिनां प्रोत्साहनं ध्येयम् आसीत् (४।२)। कियान् व्ययः इत्यपि मूल्यनिर्धारणसमये विचार्यते स्म। व्यापारम् उन्नमयितुमेव राज्यम् उद्योगक्षेत्रे हस्तक्षेपम् अकरोत् (२।२१)। राष्ट्रिये राष्ट्रान्तरीये च व्यापारे न निरङ्कुशता, अपि तु नियन्त्रणम् आसीत्। उद्योगस्य संचालनं लाभं लक्ष्यीकृत्य नासीत्, अपि तु जनकल्याणम्। विदेशीयैः उद्योगपतिभिः तादृशान्येव सौविध्यानि अधिगतानि आसन् यतः देशीयानाम् उद्योगानां कापि क्षतिर्न स्यात् (२।३४)। सामु-न्द्रिकस्य उद्योगस्य संरक्षणे सुव्यवस्थायां च विशेषतो राज्यस्य दृष्टिरासीत्।

वेतनं योग्यतानुसारम् आसीत्। कार्यानुकूलं वेतनम् अदन्तः दण्डभाजः भवन्ति स्म। कर्मकारिणः कार्यविषये प्रोत्साह्यन्ते स्म। कर्मकराणां जीवनव्यवस्था सम्यक् सञ्चालितासीत्। वेतनविषयकविवादेषु कौटल्येन व्यवस्थापितमस्ति (३।१३।१४)। उद्योगस्वामिनाम् अनुचितव्यवहारे राज्यं कर्मकरेषु पक्षपातम् अकरोत् परन्तु निर्धारितानाम् नियमानाम् उल्लङ्घने कर्मकराः अपि राज्येन दण्ड्यन्ते स्म। कार्यसमयं कार्यं च आश्रित्य वेतननिर्धारणम् आसीत्। महार्घाणां वस्तूनाम् उत्पादने वेतनव्यवस्था संतोषप्रदा आसीत्। कर्मकरो यदि अल्पसमयार्थमेव कार्यं करोति चेत्तदा अपि सः पूर्णसमयस्य वेतनभाक् भवति स्म। यदि कर्मकरः कार्यभ्रंशं करोति तदा स कठोरदण्डभाक् अभवत्। राष्ट्रसंघे ग्रामतः केन्द्रं यावत् राष्ट्रिय-सेवायाः यः क्रमः आसीत्, तत्र अनियन्त्रितता नासीत्, अपि तु राष्ट्रसेवाभावः। स्थानीयकार्यं प्रायः वेतनं विनैव भवति स्म।

राज्यं सार्वजनिकेषु कार्येषु उचितं साहाय्यम् अकरोत्। तत्र जनैः सर्वविधं साहाय्यं क्रियते स्म। ये सामाजिकाः सदस्याः सार्वजनिकेषु कार्येषु सहायतां न

अकुर्वन् ते तत्फलभागिनो नासन्। राज्यकार्ये सार्वजनिककार्ये च असहकारी दण्डयः आसीत् (।२।१ )। ग्रामेषु शिक्षौषधवासव्यवस्थादिविषये राज्यतो निर्देशा अलभ्यन्त जनैः। नागरिकाणां ग्रामीणानां च भवनानां निर्माणविषये राज्येन विविधाः योजनाः प्रास्तूयन्त। ताः एव आधृत्य भवनानि निर्मीयन्ते स्म, तदुल्लङ्घने च दण्डो दीयते स्म। ओषधं लता औद्योगिकं काष्ठं विक्रेया· पशव सामान्यपशव इत्यादीनां संरक्षणसंवर्धनोपयोगादिविषये राज्यं व्यवस्थापकम् आसीत् ( २।२९ )। जनानां नैतिकक्षमतायाः विकासे पूर्णतया राज्यस्य दृष्टिरासीत् (२।२५)। स्वच्छताविषये जनानां राज्यस्य च उत्तरदायित्वम् आसीत्। धर्मशालानां व्यवस्था, मृतपशूनां मृतमनुष्याणां वा व्यवस्था, नदीकूपतडागादीनां स्वच्छता इत्यादिविषये समाजस्य राज्यस्य च मिलितं उत्तरदायित्वम् आसीत्। गृहाणां निर्माणावसरे शौचालये पुरीषालये भोजनालये अन्यासु च अपेक्षितासु व्यवस्थासु अवधानं दीयते स्म। कारागृहेऽपि रुग्णानां विकलानां वृद्धानां वा स्वास्थ्यस्य उत्तरदायि राज्यम् आसीत्, शुभेषु अवसरेषु तेषां कारागृहात् मुक्तिरपि (२।३६।५७)।

बालकाः वृद्धाः अनाथाः विधवाः सधवाश्च इत्येतेषां जीविकाया न प्रबन्धश्चेत् तदा राज्यमेव तेषां पोषकम् आसीत्। दैवसम्पदः बालसम्पदश्च उत्तरदायित्वं स्थानीयसंघटनानाम् आसीत्, राज्यस्य तत्र निरीक्षणम् (२।१।३२-३३)। बालानां स्त्रीणां पितॄणां बालभ्रातॄणां विधवानां भगिनीनां जीविकाया व्यवस्थां तत्सम्बन्धिद्वारेण राज्यं कारयति स्म ( २।१।३४ ३५ )। अग्निप्रकोपदुर्भिक्षादिसमयेषु राज्यं सहायकम् आसीत्। नदीभ्यो दूरे गृहाणि निर्मातुं राज्यं योजनां प्रसौति माहाय्यं च करोति स्म। दुर्भिक्षावसरे जनानां साहाय्यमपि राज्यम् अकरोत्। मनुष्याणाम् इव पशूनामपि कृते राज्यसम्बन्धिनः औषधालया आसन्। आपत्काले अन्नसञ्चयम् अधिकमूल्येन च विक्रयं कुर्वन्तो दण्डभाजः आसन्। (४।३)। राष्ट्रियापत्तिसमये राज्यं धनिकेभ्यः ऋणमादातुं शक्तम् आसीत्। समृद्धिसमये च वृद्धिसहितं तद् ऋणम् राज्यं प्रत्यावर्तयति स्म। तात्पर्यम् इदं यज्जनकल्याणमेव राज्यस्य ध्येयम् आसीत् ( २।१ )।

एवं वयं पश्यामो यद् राज्यस्य कल्याणकारिस्वरूपं पूर्णतया विकासम् आप्तम्। अद्यतनस्य कल्याणकारिराज्यस्य अपेक्षया तस्य वैशिष्ट्यम् एतद् आसीत् यत् तदानीं राज्यं व्यक्तेः समाजस्य वा संरक्षकम् आसीत्, न तदीयस्य स्वत्वस्य नियामकम्। कृष्युद्योगादिषु जनकल्याणार्थमेव राज्यस्य हस्तक्षेप आसीत्। स्वलाभार्थम् उद्योगादिषु न राज्यस्य प्रवृत्तिरासीत्, अपि तु जनकल्याणार्थम्। अद्यतनया राज्यव्यवस्थया कौटिल्योक्तायाः राज्यव्यवस्थायाः समन्वयः क्रियेत चेत् तदा जनतन्त्रात्मिकानां शक्तीनां पोषणं भवेत्।

## राजोत्पत्तिः

निरुक्ते दीप्त्यर्थकात् 'राज्' धातोः राजशब्दः व्युत्पादितः, किन्तु महाभारते शान्तिपर्वणि (५९।१२५) 'रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते' इत्थं राजशब्दो व्याख्यातः। कर्त्तव्यपालने प्रकाशमानः, प्रजारञ्जकश्चेति अर्थद्वयमपि आश्रित्य राज् धातोः रञ्जधातोश्च राजशब्दस्य निष्पत्तिः अङ्गीकृता।[1] उक्तार्थद्वय-तात्पर्येण राजशब्दस्य प्रयोगोऽपि दृश्यते—"बलेन चतुरङ्गेण यतो रञ्जयति प्रजाः। दीप्यमानः स वपुषा तेन राजाभिधीयते॥"

राजोत्पत्तिविषये विभिन्नाः सिद्धान्ताः सन्ति। ऋग्वेदीयाम् एकाम् ऋचम् आधृत्य[2] जायसवालप्रभृतिभि विद्वद्भिः राज्ञः निर्वाचनसिद्धान्तः प्रतिपादितः।[3] म० म० पी० वी० काणे-महोदय एतद्विषये सन्दिग्धे। अथर्ववेदे राजनिर्वाचन-विषये प्रमाणानि लभ्यन्ते।[4] तैत्तिरीयब्राह्मणे 'रत्निन्' इत्यसौ 'राजकृत' इत्युक्तः।[5] एतैः प्रमाणैः एतावदेव कथयितुं शक्यते यद् रत्निसूतग्रामणीप्रभृतीनां स्वीकृतौ सत्यामेव राजा राजपदं लब्धुं शक्नोति। राज्ञा दशरथेनापि वंशानुगतस्यापि युवराजपदस्य कृते मन्त्रिणां पौराणां जानपदानाञ्च पुरः प्रस्तावः कृतः।[6] परम् एतस्य नैतत्तात्पर्यं यद् अद्यत्वे इव यया कयाचित् संस्थया राज्ञो निर्वाचनम् भवति स्म। दशरथमरणानन्तरं वशिष्ठस्य उपस्थितौ मार्कण्डेयेन वामदेवेन च सभायाम् उद्घोषितं यद् रामलक्ष्मणौ वनं गतौ; भरतशत्रुघ्नौ च केकयदेशस्थौ; अस्यां स्थितौ कश्चिद् इक्ष्वाकुवंशीयः पुरुषः राजपदे स्थापनीय इति। एते 'राज-कर्तारः' इत्युक्ताः सन्ति।[7] एतत्सिद्धान्तविषये कानिचिद् ऐतिहासिकानि प्रमाणानि लभ्यन्ते। क्षत्रपः रुद्रदामनः सुराष्ट्रस्य नागरिकैः राजपदे निर्वाचनद्वारा स्थापितः। एतेन आप्तराजपदेन या प्रतिज्ञा (शपथः) कृता सा जूनागढस्थशिलालेखे लिखिता

---

१. रघुवंशम् ४।१२; २।५३; शान्तिप० ५९।१२६; राजधर्मकोशः १ पृ० ५।

२ ऋग्वेद० १०।१७३।

३. Hindu Polity, P. 7.

४. त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्चदेवीः। अथर्व० ३।४।२।
ये राजानो राजकृतः सूता ग्रामण्यश्च ये।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्॥
(अथर्व० ३।५।७)

५. तै० ब्रा० १।७।३।

६. अयोध्या० अध्यायः १; २।

७. अयोध्या० ७९।१।

अस्ति—"आगमीत् प्रभृत्यविहितसमुदितराजलक्ष्मीधारणगुणतः सर्ववर्णैरभिगम्य रक्षणार्थं पतित्वे वृतेन आप्राणोच्छ्वासात् पुरुषवधनिवृत्तिकृतसत्यप्रतिज्ञेनान्यत्र संग्रामेषु ( E. I. Vol. viii, P. 36 at P. 40 )।

अन्यदप्येकमुदाहरणम्–"मात्स्यन्यायमपोहितुं प्रकृतिभिर्लक्ष्म्याः करं ग्राहितः श्रीगोपाल इति क्षितीशशिरसां चूडामणिस्तत्सुतः"। अस्य सम्बन्धो बङ्गदेशीयपाल-वंशस्थापकेन गोपालेन सह अस्ति। राज्यस्य सुव्यवस्था स्यादिति राजकर्तृभिः राज्ञो निर्वाचनं कृतम्। कल्हणस्य राजतरङ्गिण्याम् एतद्विषये बहूनि साधकानि समुपलभ्यन्ते। ह्वेनसाङ्गमहोदयेन लिखितं यद् राजवर्धनस्य मरणानन्तरं हर्षवर्ध-नस्य राज्याभिषेकावसरे महामात्येन भण्डिना परिषद् आमन्त्रिता। तत्र च हर्षवर्धनस्य राज्याभिषेकार्थं प्रस्तावः कृतः, यश्च सर्वैरप्यनुमोदित इति। पल्लव-वंशीय-परमेश्वरवर्मणः नृपतेः मृत्योरनन्तरं जनैः राजा निर्वाचितः।[१]

केचन सामाजिकमनुबन्धं सिद्धान्तरूपेण अनुमन्यन्ते। कौटल्येन लिखितं (१।१३) यत् वैवस्वतो मनुः प्रजाभ्यो लब्धस्वीकृतिः सन् राजपदं लेभे। यत्र राजनि प्रजासु च परस्परम् अनुबन्धो (Contract) भवति। महाभारते शान्तिपर्वणि एतदित्थं वर्णितम्—

प्रतिज्ञां चाभिरोहस्व मनसा कर्मणा गिरा।
पालयिष्याम्यहं भौमं ब्रह्मेत्येवाह चासकृत्॥
यश्चात्र धर्मो नीत्युक्तो दण्डनीतिव्यपाश्रयः।
तमशङ्कः करिष्यामि स्ववशो न कदाचन॥

( शा० ५९।१०६-८ )

काशीप्रसादजायसवालमतानुसारं राज्ञोऽनुबन्धसिद्धान्त एव प्राक्तनोऽस्ति। दैवसिद्धान्तस्य स्थापनं मनुस्मृतौ ब्राह्मणजातीयस्य राज्ञः पुष्यमित्रस्य समर्थनावसरे कृतम्। वस्तुगत्या ईदृक्मतं भ्रमोत्पादकमेव। वैदिकयुगे दैवसिद्धान्तः प्रतिष्ठितोऽ-भवत्। दैवसिद्धान्तविषये अन्यत्र विस्तरेण मया विचारितम्।

महाभारते स्थलद्वये राजोत्पत्तेश्चर्चा अस्ति। शान्तिपर्वणः एकोनषष्टितमः सप्तषष्टितमश्च एतद्विषये प्रमुखौ अध्यायौ—

---

१. Dr. C. Minakshi; Administration and Social life under the Pallawas, 1930, P. 38.

युधिष्ठिर उवाच

य एष राजन् राजेति शब्दश्चरति भारत।
कथमेष समुत्पन्नस्तन्मे ब्रूहि परन्तप॥५॥

भीष्म उवाच

नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत्॥१३॥
न वै राज्यं न राजासीन्न दण्डो न दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥
पाल्यमानास्तथान्योन्यं नरा धर्मेण भारत।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत्॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत्॥
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम॥
अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो॥
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत्।
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर॥१९॥
नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत्।
ते त्रस्ता नरशार्दूलं ब्रह्माणं शरणं ययुः॥२२॥
अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह।
त्वत्प्रभावसमुत्थोऽसौ स्वभावो नो विनश्यति॥२७॥
ततोऽध्यायसहस्राणां शतञ्चक्रे स्वबुद्धिजम्।
यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः॥२९॥
अ० ६७– अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते।
परस्परञ्च खादन्ति सर्वथा धिगराजकम्॥३॥

अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥१७॥
समेत्य तास्ततश्चक्रुः समयानिति नः श्रुतम् ॥
वाक्शूरो दण्डपरुषो यश्च स्यात् पारजायिकः ॥
यः परस्वमथादद्यात् त्याज्या नस्तादृशा इति ।
विश्वासार्थं च सर्वेषां वर्णानामविशेषतः ॥
तास्तथा समयं कृत्वा समयेनावतस्थिरे ॥
सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम् ॥
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥
यं पूजयेम सम्भूय यश्च नः प्रतिपालयेत् ।
ततो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ॥२२॥

मनुरुवाच

बिभेमि कर्मणः पापाद्राज्यं हि भृशदुस्तरम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥

भीष्म उवाच

तमब्रुवन् प्रजा मा भैः कर्तृनेनो गमिष्यति ।
पशूनामधिपं चाशद्धिरण्यस्य तथैव च ॥
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ।
कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च ॥२४॥
कृतज्ञो दृढभक्तिः स्यात् संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु वल्गु च सुष्ठु च ॥३६॥
एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्युः राजानमेवाग्रे प्रजानुग्रहकारणात् ॥३३॥

उदाहरणद्वयेन स्फुटमेव यदेतदनुसारं दैवसिद्धान्त एव समर्थितो भवति, नानुबन्धसिद्धान्तः। अनुबन्धसिद्धान्तस्य यत् व्यावहारिकं स्वरूपं पाश्चात्यदेशेषु दृश्यते, ततो भारतीयपद्धतौ महान् भेदः। केचन सामान्याः विषयाः परस्परं तुलां लम्भयितुं शक्यन्ते ।

पाश्चात्त्या अनुबन्धवादिनो नैसर्गिकस्य राजनैतिकस्य सामाजिकस्य च समाजस्य क्रमशः विकासं मन्वते। महाभारतेऽपि मात्स्यन्यायः वर्णितोऽस्ति। हॉब्स-लॉक-रूसो महोदयैः मानवी स्थितिः यादृक् चित्रिता, न सा भीष्मसम्मता। यदा प्रजा धर्माचरणेऽशक्ता तदा धर्मपरिरक्षणार्थं विधानानां कार्यपालिकायाः न्यायपालिकायाश्च अपेक्षा भवति। मात्स्यन्यायः आदर्शेभ्यः पतनम्। पुरुषो मूलतः सर्वज्ञानमयः, शुचिः, धर्मनियन्त्रितश्चास्ति। उक्ते कार्यत्रये विधिः शाश्वतः अपौरुषेयश्चास्ति। विधेः निर्माणस्य सशोधनस्य वा अधिकारः न कस्यापि लौकिकस्य पुरुषस्य। विधिविरुद्धाचरणेनैव वेनः ऋषिभिः हतः, पृथुश्च राजपदं प्रापितः। देवैः देवराजेन च समं हरिः पृथुं राज्येऽभिषिषेच। अधोनिर्दिष्टनियमान् आधृत्यैव राजपदम् आसीत्—

तमूचुस्तत्र देवास्ते ते चैव परमर्षयः।
नियतो यत्र धर्मो वै तमशङ्कः समाचर॥
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु।
कामं क्रोधञ्च लोभञ्च मानञ्चोत्सृज्य दूरतः॥
यश्च धर्मात् प्रविचलेल्लोके कश्चन मानवः।
निग्राह्यास्ते स्वबाहुभ्यां शश्वद् धर्ममवेक्षता॥
प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत्॥
यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः।
तमशङ्कः करिष्यामि स्ववशो न कदाचन॥
अदण्ड्या मे द्विजाश्चेति प्रतिजानीहि हे विभो।
लोकञ्च सङ्करात् कृत्स्नं त्रातास्मीति परन्तप॥

(शा० ५९।१०३-११०।)

भीष्मोक्तं वचनद्वयम् एकवाक्यतयैव व्यवस्थापयितुं शक्यते। वचनद्वयस्य अर्थद्वयाङ्गीकारः सर्वथा असङ्गतः। उपर्युक्तवचनद्वयस्य एकवाक्यतया एष एव निष्कर्षः लभ्यते यत् कृतयुगे वेदशास्त्रैः तदुक्तज्ञानसदाचारादिभिश्च सम्पन्नाः पुरुषाः राजादिरहिते धर्मराज्ये सन्ति स्म। अर्थात् सर्वे स्वतः एव नियन्त्रिताः वेदज्ञाः धर्मब्रह्मज्ञाश्च आसन्। न तेषां कृते नियन्त्रकस्य राज्ञः अपेक्षा आसीत् तदानीम्। सर्वेऽपि सुखिनो विविधवैभवसम्पन्नाश्च आसन्। कालक्रमानुसारं

रागद्वेषप्रवृत्तीनाम् उद्भवेन मात्स्यन्यायः जनेषु पदं न्यदधात्। तमपाकर्तुं राज्ञः उत्पत्तिः सञ्जाता। यदि राजा कर्त्तव्यम् अतिवर्तते, तदा स त्याज्यः पञ्च अन्य-जना इव—

षडेतान् पुरुषो जह्याद् भिन्नां नावमिवार्णवे।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम्।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥
( म० शा० ५७।४४-४५। )

## राजा कः ?

मनुना राजधर्माध्यायस्य प्रथमश्लोके ( ७।१ ) 'नृप' इति शब्दः प्रयुक्तः। तद्व्याख्यानावसरे च कुल्लूकभट्टेन लिखितं यत् क्षत्रियेतरोऽपि नृपो भवितुं शक्नोति। परन्तु द्वितीयश्लोक एव क्षत्रियशब्दः प्रयुक्तोऽस्ति। क्षत्रियपर्यायोऽपि राजशब्दः अस्ति। राजधर्मकौस्तुभे राजनीतिप्रकाशिकायां नीतिमयूखे च पूर्वमीमांसायाः स्थलमेकम् उपन्यस्य एष विषय· विशदीकृतः। 'राजा राजसूयेन यजेत' इति वेदवचनम्। यज्ञकाण्डे अवेष्टयाख्या एका इष्टिरस्ति। यदि क्षत्रियः ताम् इष्टिं करोति तदा मध्याहुतिः इन्द्राय देया, यदि च ब्राह्मणः करोति तदा सा आहुतिः बृहस्पतये। तत्र एष पूर्वपक्ष· यद् रक्षकेषु सर्वेष्वपि राजपदप्रवृत्तिः, राजसूयाङ्गभूताम् अवेष्टिं क्षत्रिय एव कर्तुं प्रभवति इति च सिद्धान्तः। आन्ध्रदेशीयम् उदाहरणम् उपन्यस्य शबरस्वामिना उक्तं यत् तत्र देशे प्रशासनसम्बद्धाः सर्वेऽपि राजानः कथ्यन्ते। कुमरिलभट्टेन च[१] ब्राह्मणादीनामपि कृते राजशब्दस्य प्रयोगः स्वीकृतः।

"लोके यो यस्य प्रसङ्गे भवति लभतेऽसौ तत्कार्याणि। तद्यथा उपाध्यायस्य शिष्यो राज्यकुलानि गत्वा अग्रासनादीनि लभते" इति महाभाष्यमाधृत्य याज्ञवल्क्यस्मृतिव्याख्यावसरे ( १।३३६ ) अपरार्केण लिखितम्—"एतत् सर्वं क्षत्रियस्य राज्यं कुर्वतः प्रविहितम्। यदा पुनः अक्षत्रियः क्षत्रियकार्यं कुर्यात् तदा अनेनापि

---

१ अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते। जै० २।३।३।ननु जनपदपुरपरिरक्षणवृत्तिमनुपजीवत्यपि क्षत्रिये राजशब्दमान्ध्रा. प्रयुञ्जते प्रयोक्तारः। शबर, पृ० ५८०। तच्च राज्यमविशेषेण चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते। तस्मात् सर्वे राजानः। तन्त्रवा० पृ० ५८०।

एतत्सर्वम् अनुष्ठेयम्। तत्कार्योपस्या तद्धर्मलाभः, इति न्यायात्, करादानप्रयुक्तत्वाच्च प्रजापालनस्य। सर्वो हि धनं प्रयच्छन् आत्मसमवायिप्रयोजनम् उद्दिशति। न च करदानस्य स्वगुप्तेरन्यत् प्रयोजनमस्ति। तस्मात् करमाददानेन प्रजापालनं विधेयमिति सिद्धम्।" राजनीतिप्रकाशिका एतद् इत्थं प्रस्तौति—"नृपग्रहणेन जनपदैश्वर्यवतोऽधिकारमाह। प्रमाणान्तरमूला ह्यत्र धर्मा उच्यन्ते, न सर्वे वेदमूलाः (मनु० ७।१ मेधा०)"। "तथा विज्ञानेश्वरोऽपि अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परो धर्मः। तथापि नृपग्रहणसमभिव्याहारादनभिषिक्तेऽपि जनपदैश्वर्यवति लोकप्रसिद्धया राजशब्दो वर्तते।" विष्णुधर्मसूत्रस्य (३।४४) व्याख्यावसरे "अवेष्टि न्यायेन राज्ञां क्षत्रियाणां न पार्थिवानामेव" इति वैजयन्तीमतम्।

मनुस्मृतिभाष्ये (७।१) मेधातिथिना उट्टङ्कितं यत् "यो जनपदः शूद्रवशवर्ती तत्र न वसेत्। मन्त्रिसेनापतिदण्डकारिकाद्याः सप्त प्रकृतयो राज्यम्, यत्र सर्वाः शूद्रजातीयास्तत्र निवासनिषेधोऽयम्।" परन्तु क्षत्रियेतरेऽपि राजानः आसन् इत्यत्र बहूनि साधकानि लभ्यन्ते। अनेकैः विप्रपरिवारैः राज्यस्थापना कृता। शुङ्गवंशस्य स्थापकः राजा पुष्यमित्रः विप्र एवासीत् (हरिवंश० ३।२।२५)। काण्वायनवाकाटककदम्बप्रभृतयः राजवंशा ब्राह्मणजातीया आसन्। कौटल्यः (९।२) चातुर्वर्ण्यस्यापि सेनां निर्दिशति। आपस्तम्बः एतन्मतं नानुमन्यते "परीक्षार्थोऽपि ब्राह्मणः आयुधं नाददीत (१।१०।२९।७)" किन्तु अन्येषाम् आचार्याणां मतानुसारं ब्राह्मणोऽपि परिस्थितिविशेषे शस्त्रम् आदातुं शक्नोति। प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत (गौ० ७।२५)" अथाप्युदाहरन्ति—"गवार्थे ब्राह्मणार्थे वापि सङ्करे। गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया (बौ० ध० २।२।८०)।" "आत्मत्राणे वर्णसंवर्गे ब्राह्मणवैश्यौ शस्त्रमाददीयाताम् (वशिष्ठ० ३।२४)।" अन्या अपि युक्तयः सन्ति याः आधृत्य एतत्कथयितुं शक्यते यद् अक्षत्रियोऽपि राजा भवितुं शक्नोति।[1]

**स्त्री शासिका ?**

प्रायः पुरुष एव राजपदम् अधिष्ठातुं शक्नोति। मन्यते स एव च शासने क्षमः। किन्तु यदि दायादवर्गे पुरुषो न लभ्यते तदा स्त्री अपि राजपदस्य अधिकारिणी भवति।[2] राजतरङ्गिण्यां निरङ्कुशराज्ञ्याः सुगन्धायाः दिद्दायाश्च

१. मनु० ८।१; हरिवंश० ३।३।६; मत्स्यपु० १४४।४०, ४३; लिङ्गपु० ४०।७,४२।

२. तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः।
भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय॥
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय॥
(शा० ३३।४३, ४५)

शासनं वर्णितम् ( ४।२४९;६।३३२ )। शुभाकरस्य निधनानन्तरं तस्य राज्ञ्या, ततः पश्चाच्च तत्कन्यया राजपदं लब्धमिति गञ्जमताम्रलेखे उल्लिखितम्, यद्विषये "परमभट्टारिका महाराजाधिराजपरमेश्वरी" इति उक्तमस्ति।[१] रघुवंशे अग्निवर्णस्य पत्न्या राजपदं लब्धमिति वर्णितमस्ति ( १९।५५,५७ )।

## उत्तराधिकारः

ज्येष्ठापत्यमेव राज्याधिकारि इति सामान्यतो नियमः—"तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति ( तै० सं० २।५।२।७ )।" ऋग्वेदे ज्येष्ठतामेव आधृत्य इन्द्रस्य अधिकारित्वम् उक्तम् ( १।५।६; ३।५०।३ )। तैत्तिरीयसंहितायामपि ज्येष्ठतैव आदृता ( तै० सं० २।२।११।५ )। किन्तु ऐतरेयब्राह्मणानुसारं न ज्येष्ठता, किन्तु यज्ञविशेष एव इन्द्रपदस्य आधारः १।९।४ )। शान्तनुदेवाप्योः कथे उद्धरता निरुक्तकृता उक्तं यत् सति ज्येष्ठापत्ये कनिष्ठस्य राज्याभिषेकोऽन्याय्यः ( २।१० )। एषा एव कथा बृहद्देवतायां विस्तरेण वर्णिता ( ७।१५६-१५७; ८।१-९ )। यदा ज्येष्ठमतिक्रम्य कनिष्ठाय पूरवे राज्यं दातुं ययातिः इयेष, तदा विप्रवर्गेण उक्तम् "कथं ज्येष्ठानतिक्रम्य कनीयान् राज्यमर्हति" मतापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः। स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु" ( आदिपर्व ८५।२१, २५; वा० पु० ९३।७९-८१ )। अयोध्याकाण्डे एतद्विषये बहूनि उदाहरणानि दृश्यन्ते यत्र ज्येष्ठस्यैव अधिकारः समर्थितः।[२] कौटल्येनाप्युक्तम्—"अन्यत्रापद ऐश्वर्यं ज्येष्ठभागी तु पूज्यते ( १।१७ )।" कल्किपुराणम् आधृत्य राजधर्मकौस्तुभे उत्तराधिकारविषये नियमचतुष्टयं निर्दिष्टम्। तत्र प्रथमो नियमः—एकादशविधेषु पुत्रेषु औरस एव उत्तराधिकारी, द्वितीयः—यदि कनिष्ठराज्ञ्याः पुत्रः ज्येष्ठराज्ञीपुत्रात् ज्येष्ठः तदा स ज्येष्ठ एव राज्याधिकारी। तृतीयः—युग्मपुत्रयोः यः पूर्वं जायते स एव राज्याधिकारी। चतुर्थश्च—यदि द्वेऽपि राज्ञ्यौ युगपदेव पुत्रौ जनयतः, तदा ज्येष्ठराज्ञ्याः पुत्र एव राज्यभाक्।

---

१. E. I, vol. vi, P. 133

२ ज्येष्ठायामपि मे पत्न्यां सदृश्यां सदृशः सुतः।
उत्पन्नस्त्वं गुणज्येष्ठो मम रामात्मजः प्रियः॥
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि।
( अयोध्या० २।३।३९-४१ )
इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः।
पूर्वजेनावरः पुत्रो ज्येष्ठो राजाभिषिच्यते॥
( अयोध्या० ११०।३३ )

मनुमतानुसारं यदि ज्येष्ठः मानसेन शारीरेण वा रोगेण ग्रस्तः, तदा कनीयान् एव राज्याधिकारी (९।२०)। "धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत (आदि० १०९।२५)।" "ज्येष्ठोऽपि बधिरः कुष्ठी मूकोऽन्धः षण्ढ एव च। स राज्यार्हो भवेन्नैव भ्राता तत्पुत्र एव हि॥" (शुक्र० १।३४३-३४४)। राजधर्मकौस्तुभानुसारं ज्येष्ठे मानस्या शारीरिक्या वा अक्षमतया राज्यपदाय अयोग्ये सति तत्पुत्र एव तदधिकारी। भीष्मेणोक्तम् "तवापत्यं भवेद्यत्तु तत्र नः संशयो महान्" (आदि० १००।९२)। बालम्भट्टीव्याख्यायां (याज्ञ० १।३०९) राजनीतिप्रकाशिकायाञ्च (पृ० ५०) इदमेव मतं व्यवस्थापितम्। यदा ज्येष्ठस्य राज्यपदानर्हतया कनीयान् तल्लभते, तदा तस्यैव पुत्रः तदनन्तरं राज्याधिकारी। "सुतसोदरसपत्नपितृव्यकुल्यदौहित्रागन्तुकेषु पूर्वपूर्वाभावे भवत्युत्तरस्य राज्यपदावाप्तिः" इति नीतिवाक्यामृते उक्तम्।

## विशिष्टाः गुणाः

राज्ञि के के गुणाः आवश्यका इत्येतद्विषये नीतिग्रन्थेषु विस्तरेण वर्णितम्।[१] कौटल्येन सूक्ष्मेक्षिकया राजगुणाः इत्थं व्याख्याताः—"महाकुलीनो दैवबुद्धिः सत्त्वसम्पन्नो वृद्धदर्शी धार्मिकः सत्यवागविसंवादकः कृतज्ञः स्थूललक्ष्यो महोत्साहो अदीर्घसूत्रः शक्यसामन्तो दृढबुद्धिरक्षुद्रपरिषत्को विनयकाम इत्याभिगामिका गुणाः। शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः। शौर्यममर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः। वाग्मी प्रगल्भः स्मृतिमतिबलवानुदग्रः स्ववग्रहः कृतशिल्पो व्यसने दण्डनाभ्युपकारापकारयोर्दृष्टप्रतीकारी ह्रीमानात्प्रकृत्योर्विनियोक्ता दीर्घदूरदर्शी देशकालपुरुषकारकार्यप्रधानः सन्धिविक्रमत्यागसंयमपणपरच्छिद्रविभागी संवृतोऽदीनाभिहास्यजिह्मभ्रुकुटिक्षणः कामक्रोधलोभस्तम्भचापलोपतापपैशुन्यहीनः शुक्लः स्मितोदग्राभिभाषी वृद्धोपदेशाचार इत्यात्मसंपत् (कौ० ६।१।१-६)।

कामन्दकीयनीतिसारे गुणा इत्थं व्याख्याताः—

नयविक्रमसम्पन्नः स्वुत्थानश्चिन्तयेच्छ्रियम्।
नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः॥
विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति।
तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः॥

---

१. कौटल्य० ६।१; मनु० ७।३२-३४; याज्ञ० १।३०९-३११; राज० कौस्तुभ० ३ पृ० १४; राज० प्र० पृ० ११६; शान्ति० ५७।१२; काम० १।२१-२२; ४।६,२६; मानसोल्लास० २।१।१-६; शुक्र० १।७३-८६; विष्णुधर्मोत्तर० २।३।

शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता।
उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता ॥
प्रभावः शुचिता मैत्रीत्यागः सत्यं कृतज्ञता।
कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः ॥
आत्मानं प्रथमं राजा विनयेनोपपादयेत्।
ततोऽमात्यांस्ततो भृत्यांस्ततः पुत्रांस्ततः प्रजाः ॥
सदानुरक्तप्रकृतिः प्रजापालनतत्परः।
विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥

(११२१-२६)

शान्तिपर्वणि भीष्मेण षट्त्रिंशत्संख्याकाः राजगुणा वर्णिताः—

अयं गुणानां षट्त्रिंशत् त्रिंशद्गुणसंयुतः।
यान् गुणांस्तु गुणोपेतः कुर्वन् गुणमवाप्नुयात् ॥
चरेद्धर्मानकटुको मुञ्चेत् स्नेहं न चास्तिकः।
अनृशंसश्चरेदर्थं चरेत् काममनुद्धतः ॥
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः।
दाता नापात्रवर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः ॥
सन्दधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः।
नाभक्तं चारयेच्चारं कुर्यात् कार्यमपीडया ॥
अर्थं ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चात्मनः।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥
नापरीक्ष्य नयेद् दण्डं न च मन्त्रं प्रकाशयेत्।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥
अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः।
स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥
स्तब्धः पूजयन् मान्यान् गुरून् सेवेदमायया।
अर्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ॥

सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् ।
सांत्वयेन्न च मोक्षाय अनुगृह्णन्न चाक्षिपेत् ॥
प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥
एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥
(७०।२-१२)

एत एव गुणाः मिताक्षराकृता अन्तरङ्गबहिरङ्गतया द्वेधा विभाजिताः (याज्ञ० १।३०९-३११)। मानसोल्लासे चतुश्चत्वारिंशत् गुणाः निर्दिष्टाः। अग्निपुराणे (२३९।२-५) एकविंशतिगुणानाम् आवश्यकत्वम् उक्तम्। सभापर्वणि (५।१०७) रामायणे च (२।१००।६५-६७) राज्ञा चतुर्दशदुर्गुणवर्जनेन आत्मा रक्षणीयः।

## शिक्षा

गौतमेन त्रय्याः आन्वीक्षिक्याश्चाध्ययनं राज्ञः कृते आवश्यकम् अमन्यत। आन्वीक्षिक्याः किं तात्पर्यम् इत्यत्र अस्ति विवादः। कौटल्येन—"साङ्ख्यं योगो लोकायतं चेत्यान्वीक्षिकी। बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति व्यसनेऽभ्युदये च बुद्धिमवस्थापयति प्रज्ञावाक्यक्रियावैशारद्यं च करोति।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥

इति आन्वीक्षिकीस्वरूपम् अभ्यधायि (कौट० १।२)। एषैव आन्वीक्षिक्या व्याख्या पाठभेदेन न्यायभाष्ये वात्स्यायनेनापि उक्ता (न्यायसूत्र० १।१।१)। महाभाष्ये "वर्णिका भागुरी लोकायतस्य" इति लिखितमस्ति (पाणिनि० ७।३।४५)। अत्र भागुरी इत्यस्य लोकायतस्य व्यवस्थायामेव तात्पर्यम्। द्वितीयलोकायतशब्देन नास्तिकदर्शनम् अभिप्रेतम्। लौकायतिकानां मतम् उपन्यस्यता शङ्कराचार्येण ब्रह्मसूत्रभाष्ये उक्तम् यत् लौकायतिकाः चैतन्यं शरीरधर्मतया मन्वते, न तु चैतन्याश्रयस्य अतिरिक्तस्य आत्मनः सत्ता अस्तीति (वेदा० सू० २।२।१; ३।३।५३-५४)। तन्त्रवार्तिके लौकायतिकानां कृते मूर्खशब्दस्य कपिशब्दस्य च प्रयोगः कृतः (जै० १।३।३)। रामायणे रामेण भरतः सावहितः कृतः—

कच्चिन्न लोकायतिकान् ब्राह्मणान् तात सेवसे।
अनर्थकुशला ह्येते बालाः पण्डितमानिनः॥

धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः।
बुद्धिमान्वीक्षिकी प्राप्य निरर्थं प्रवदन्ति ते ॥
(अयो० १००।३८-३९)

कामसूत्रे इत्थ लिखितम्—"वरं सांशयिकान्निष्कादसांशयिकः कर्षापण इति लौकायतिकाः (१।२।३०)।" काव्यमीमांसायां राजशेखरेण लौकायतिकानां भौतिकवादः उल्लिखितः। नीतिवाक्यामृते राज्ञः कृते उक्तम्—ऐहिकव्यवहारप्रसाधनपरं लोकायतिकम्। लोकायततो हि राजा राष्ट्रकण्टकानुच्छेदयति।

अन्यत्र आन्वीक्षिकी आत्मज्ञानोपयोगिनी न्यायविद्या स्वीकृता—"आन्वीक्षिकी वेदाद्यविरुद्धा आत्मज्ञानोपयोगिनी न्यायविद्या (राजनीतिप्रकाश० पृ० ११८)।" "आन्वीक्षिक्यां तर्कशास्त्रं वेदान्ताद्यं प्रतिष्ठितम्" (शु० नी० १।१५३)। "आन्वीक्षिकी समस्तसान्दृष्टिकनिरूपणक्षमा हेतुविद्या" (याज्ञ० १।३०६ इत्यत्र विश्वरूपः)। पाणिनीयव्याकरणानुसारम् आन्वीक्षिकीशब्दस्य एषा व्युत्पत्तिः, अन्वीक्षा प्रयोजनम् (कलम्) अस्य इत्यान्वीक्षिकी (पा० ५।१।१०९)। अमरकोशव्याख्यायां क्षीरस्वामिना आन्वीक्षिकीशब्दः एवं व्युत्पादितः—"प्रत्यक्षागमाभ्यामीक्षितस्य पश्चादीक्षणम् अन्वीक्षा, सा प्रयोजनम् यस्याः।" न्यायसूत्रभाष्यानुसारं (१।१।१) "श्रवणादनु पश्चात् ईक्षा अन्वीक्षा उन्नयनम्, तन्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते।" हरदत्तादिभिः तर्कविद्यैव आन्वीक्षिकी इत्युक्ता। नीतिमयूखे आन्वीक्षिक्यां वेदान्तविद्या अपि समावेशिता। राज्ञा न लौकायतिकमेव, अपि तु कापालिकमपि शास्त्रम् अवश्यमध्येयमिति बार्हस्पत्येऽर्थशास्त्रेऽभिहितम्—"सर्वथा लौकायतिकमेव शास्त्रमर्थसाधनकाले। कापालिकमिव कामसाधने (२।५-६)।"

वस्तुगत्या आन्वीक्षिकी त्रयी वार्ता दण्डनीतिः इत्येतत्विद्याचतुष्टयस्यापि अध्ययनं राज्ञां कृतेऽऽवश्यकम्।[1] गौतमानुसारं (११।१९) प्रजापालने वेदाः, धर्मशास्त्राणि, अङ्गानि, उपवेदाः, पुराणानि चेत्यादिकम् राज्ञा आश्रयणीयम्। रामायणे (१।१८।२४,२६, २।१।२०; २।२।३४-३५; ५।३५।१३-१४) राज्ञां कृते वेदाः, वेदाङ्गानि, धनुर्वेदः, गन्धर्ववेदः, राजविद्या चेत्यादिकम् आवश्यकम् इति प्रतिपादितम्। हाथीगुम्फा इति ताम्रलेखे "शब्दार्थगान्धर्वन्यायाद्यानां विद्यानां महतीनां पारणधारणविज्ञानप्रयोगाप्तविपुलकीर्तिना तुरगगजरथचर्यासिचर्मनियुद्धाद्य ··· बललाघव-

१. मनु० ७।४३; शान्ति० ५९।३३; कौ० १।२; याज्ञ० १।३११; काम० २।२; शुक्र० १।१५२; अग्नि० २३८।८।

सौष्ठवक्रियेण" अस्यापि उल्लेखो वर्तते। नीतिवाक्यामृतानुसारेण 'शिक्षालापक्रियाक्षमः राजपुत्रः सर्वासु लिपिसु प्रसंख्याने पदप्रमाणप्रयोगकर्मणि नीत्यागमेषु रत्नपरीक्षायां सम्भोगप्रहरणोपवाह्यविद्यासु च" इत्युक्तम्। अग्निपुराणानुसारेण धर्मशास्त्रार्थशास्त्रकामशास्त्रधनुर्वेदादीनाम् अध्ययनं राजकुमारस्य कृतेऽऽवश्यकम्। अर्थशास्त्रे प्रथमाधिकरणे पञ्चमाध्याये अध्ययनपरम्परादिकं कौटल्येन इत्थं वर्णितम्—"विद्यानां तु यथा स्वमाचार्यप्रामाण्याद् विनयो नियमश्च। वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत। वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च विशिष्टेभ्यो वार्तामध्यक्षेभ्यो दण्डनीतिं वक्तृप्रयोक्तृभ्यः। ब्रह्मचर्यं चाषोडशाद् वर्षात्। अतो गोदानं दारकर्म चास्य। नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं च तन्मूलत्वाद् विनयस्य। पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत्। पश्चिममितिहासश्रवणे पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः। शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात्। अगृहीतानामाभीक्ष्ण्यश्रवणं च। श्रुताद्धि प्रज्ञोपजायते प्रज्ञया योगो योगादात्मवत्तेति विद्यासामर्थ्यम् (१।६।६-१७)।

## दुर्व्यसनम्

प्रथमपरिच्छेदस्य षष्ठाध्याये ते दुर्गुणाः कौटल्येन वर्णिताः, यैः अनेके राजानो विनाशमाप्ताः। राज्ञः कृते इन्द्रियाणां वशीकरणं परमावश्यकम्। अवशीकृतेन्द्रियस्य राज्ञो नाशोऽवश्यम्भावी—

"विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः। कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरसरूपगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः। शास्त्रानुष्ठानं वा। कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः। तद्विरुद्धवृत्तिरवश्येन्द्रियश्चतुरन्तोऽपि राजा सद्यः विनश्यति। यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश। करालश्च वैदेहः कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तस्तालजङ्घश्च भृगुषु। लोभादैलश्चातुर्वर्ण्यमत्याहारयमाणः सौवीरश्चाजबिन्दुः। मानाद् रावणः परदारान् अप्रच्छयन्। दुर्योधनो राज्यादंशं च। मदाड्डम्भोद्भवो भूतावमानी हैहयश्चार्जुनः। हर्षाद् वातापिरगस्त्यमत्यासादयन् वृष्णिसङ्घश्च द्वैपायनम् इति एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः। सबन्धुराष्ट्रा राजानो विनेशुः अजितेन्द्रियाः (१।६।१-१४)।"

एवमेव अन्यत्रापि वर्णनम् उपलब्धम्।[1] यथा च मनुः—

---

१. काम० १।५५-५८; शुक्र० १।१४४-१४६; मार्कण्डेय० २७।१२-१३; उद्योग० ७४।१३-१८।

इन्द्रियाणां जयो योगं समातिष्ठेद् दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥
दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजे स्वात्मनैव तु ॥
मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत् त्रिकं सदा ॥
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद् व्यसनमात्मवान् ॥

(७।४४-५२)

अस्मिन् सम्पूर्णे वर्णने अर्थशास्त्रे अष्टमाधिकरणे पुरुषव्यसनवर्गे तृतीयाध्यायो महत्त्वपूर्णः। अत्र पूर्ववर्तिनाम् आचार्याणां मतोपन्यासपुरःसरं तेषां पक्षाः कौटल्येन प्रास्तूयन्त । उक्तविवरणे व्यसनीयविभिन्नपक्षाणाम् प्रभेदा अपि वर्णिताः । यद्यपि साकल्येन तदुद्धरणमत्र परमावश्यकम्, तथापि विस्तरभिया तत्रत्यः उपसंहारभूतो निष्कर्ष एव अत्रोपस्थाप्यते—

असतां प्रग्रहः कामः कोपश्चावग्रहः सताम् ।
व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम् ॥
तस्मात् कोपं च कामं च व्यसनारम्भमात्मवान् ।
परित्यजेत् मूलहरं वृद्धसेवी जितेन्द्रियः ॥

(८।३।७०-७१)

विष्णुधर्मोत्तरे अर्थदोषाः विशिष्य विवेचिताः—

अर्थस्य दूषणं राम द्विप्रकारं विवर्जयेत् ।
अर्थानां दूषणं चैकं तथा चार्थेन दूषणम् ॥
प्राकाराणां समुच्छेदो दुर्गादीनां समक्रिया ।
अर्थानां दूषणं प्रोक्तं विप्रकरणत्वमेव च ॥
अदेशकाले यद्दानमपात्रे दानमेव च ।
अर्थैस्तु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥

( २।६५।१२-१५ )

कामन्दकीयनीतिसारे इन्द्रियजयप्रकरणे आलङ्कारिकभाषया दुर्व्यसनानि विशदं वर्णितानि । एवं सर्वत्र दुर्व्यसनानां सूची प्रायः समाना । व्यसनिनो राज्ञः नाशोऽवश्यम्भावी इत्यत्र कस्यापि आचार्यस्य न वैमत्यम् ।

## कर्त्तव्यमुत्तरदायित्वञ्च

प्रजापालनं राज्ञः प्रथमं कर्त्तव्यम् । अत्र विषये न मतद्वयम् । धर्मः प्रजानामेव पालनम् । निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ( मनु० ७।१४४ ) । बृहस्पतिना त्रेधा प्रजापालनम् उक्तम्—

तत्प्रजापालनं प्रोक्तं त्रिविधं न्यायवेदिभिः ।
परचक्राच्चौरभयाद् बलिनो न्यायवर्तिनः ॥
परानीकस्तेनभयमुपायैः शमयेन्नृपः ।
बलवत्परिभूतानां प्रत्यहं न्यायदर्शनैः ॥

( राज० प्र० पृ० २५४-५५ )

प्राणिमात्ररक्षा वर्णाश्रममर्यादारक्षणम्, दुष्टदमनं यथाशास्त्रं शासनञ्चेत्यादिकं राज्ञः कर्त्तव्यं गौतमेन निर्दिष्टम् ( १०।७-८ ) । वशिष्ठेन यज्ञधर्मवत् प्रजारक्षणम् अमन्यत ( १९।१-२ ) । बृहस्पतेरेव गाथां भीष्मः शान्तिपर्वणि इत्थं प्रास्तौत्—

भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥

( २३।१५ )

एतदेव वचनं "द्वाविमौ ग्रसते भूमिः सर्पः" इति पाठविपर्यासेन उशनसो नाम्ना अन्यत्रापि ( शान्तिपर्वणि ५७।३ ) उद्धृतम्। शुक्रनीतिसारे ( ४।७।३०३) एषैवोक्तिः लभ्यते। विष्णुधर्मोत्तरे राज्ञः 'पञ्चयज्ञाः' इत्थं वर्णिताः—

दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च सम्प्रवृद्धिः।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञा कथिता नृपाणाम्॥
( ३।३२३।२५ )

कुमार्गात् ब्राह्मणानां वारणमपि राज्ञः कर्त्तव्यं शान्तिपर्वणि निर्दिष्टम् (७७।३३)। बालधनस्य रक्षा राज्ञि निर्भरा। रक्ष्यं बालधनम् आव्यवहारप्रापणात्। समावृत्तेर्वा ( गौ० १०।४८-४९ )। रक्षेद्राजा बालानां धनान्यप्राप्तव्यवहाराणां श्रोत्रियवीरपत्नीनाम् ( शङ्खलिखितौ वि० र० पृ० ५९८ )। बालधनं राज्ञा स्वधनवत् परिपालनीयम्। अन्यथा पितृव्यादिबान्धवा मयेदं रक्षणीयं मयेदं रक्षणीयमिति विवदेरन् (मेधा० मनु० ८।२७)। यः कश्चिद् अनाथस्तस्य सर्वस्य धनं राजा यथावत् परिरक्षेत्। तथा चोदाहरणमात्रं वशादयः ( मनु० ८।२८ ) इति मेधातिथिः। उक्तवचनैः राज्ञः जनकल्याणकारिणि तस्मिन्नंशे प्रकाशः आयाति यत्र बालकानां विद्वत्परिवाराणां च रक्षणं राज्ञो धर्मः।[१] नारदेन षोडशवर्षानन्तरं पुरुषस्य व्ययस्कता स्वीकृता। मनुः जनकल्याणस्य सीमाम् इत्थं प्रस्तौति—

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च॥
जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः।
ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः॥
( मनु० ८।२८-२९ )

नारदेन राजकर्त्तव्यविषये एवं प्रत्यपादि—'विनियोगात्मरक्षासु भरणे च स ईश्वरः। परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये। तत्सपिण्डेषु वाऽसत्सु पितृपक्षः प्रभुः स्त्रियाः। पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रियाः (नारददायभाग० २८-२९ )। कौटल्येन ( २।१ ) ग्रामवृद्धेषु बालद्रव्यस्य रक्षा निक्षिप्ता—बालद्रव्यं ग्रामवृद्धा वर्धयेयुराव्यवहारप्रापणात्। देवद्रव्यञ्च।

कामन्दकेन चौरेभ्यः इव राजकर्मचारिभ्योऽपि रक्षायाः आवश्यकत्वं प्रतिपादितम्। तदनुसारं पञ्चविधं भयम्—आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम्॥ पञ्चप्रकारमप्येतदपोह्य

१. बौ० ध० सू० २।२।४३; वि० ध० सू० ३।६।५।

नृपतिर्भयम् ( काम० ५।८१-२ )। राज्ञा रक्षणीयासु प्रजासु आचार्यपुरोहितश्रोत्रियच्छात्रादीन् समावेशयता कौटल्येन नामावली इत्थं प्रास्तूयत–ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत्। ·· बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्। स्त्रियमप्रजातां प्रजायाश्च पुत्रान् ( २।१ )। शङ्खलिखिताभ्याम् अस्यां सूच्यां व्यवसायिशिल्पिशूद्रादीनाम् अपि समावेशः कृतः। राजन्यवैश्यावप्यजीवन्तौ राजानमुपतिष्ठेयातां तावुभौ शक्तितः संविभक्तावुपकुर्यातां स्वस्वधर्मानुष्ठानेन शिल्पिनः कारवश्च शूद्राः ( राज० प्र० पृ० १४१ )। एवं विधाः अन्या अपि उक्तयः अन्यत्र लभ्यन्ते।[1]

## आदर्शः

भारतीयं राजतन्त्रं पाश्चात्यात् राजतन्त्रात् सर्वथा भिद्यते। इदं राजतन्त्रं न केवलेऽधिकारे एव निर्भरम् अपि तु आदर्शानां पालनम् अस्य आधारः। राज्ञः आदर्शाः लौकिका उत्कृष्टतमाश्च सन्ति। कौटल्यः लिखति—

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम्।
दक्षिणावृत्तिसाम्यश्च दीक्षितस्याभिषेचनम्॥
प्रजासुखे सुखं राज्ञः प्रजानाञ्च हिते हितम्।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥

( अर्थ० १।१९ )

विष्णुधर्मसूत्रेऽपि इत्थमेव व्यवस्थापितम्–"प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः। स कीर्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते।" शान्तिपर्वणि तु एतावदुक्तं यद् यः राजा प्रजाः सम्यग् रक्षति न तस्य तपोयागादीनामपेक्षा—"कृत्वा सर्वाणि कार्याणि सम्यक् सम्पाल्य मेदिनीम्। पालयित्वा तथा पौरान्

---

१. कृपणानाथवृद्धानां विधवानां च योषिताम्।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत्॥

( शान्ति० ८६।२४ )

मत्स्य० २१५।६२; अग्नि० २२५।२५।

कृपणातुरानाथव्यङ्गविधवाबालवृद्धानौषधावसथाशनाच्छादनैर्बिभृयात्। शङ्खलिखितौ राजनीतिप्रकाशिकायाम् पृ० १३८; कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान्। पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि॥ सभा० ५।१२४; साध्वीनां पालनं कुर्यात् पूजनं च महीपतिः। एकपत्न्यः स्त्रियः सर्वा धारयन्ति जगत्त्रयम्।

( राज० प्र० पृ० १३० )

परत्र सुखमेधते। किं तस्य तपसा राज्ञः किं तस्याध्वरैरपि। सुपालितप्रजो यः स्यात्सर्वधर्मविदेव सः (६९।७२-३)।" प्रजापालनं राज्ञो व्रतम्। लोकरञ्जनमेव राज्ञो धर्मः।[१] लोकरञ्जनमात्रमेव तस्य सनातनधर्मः।[२] यथा गर्भिणी स्वेन रक्तेन गर्भं पुष्णाति तथैव राजा अपि स्वहितमनपेक्ष्य प्रजाहितं कुरुते।[३] मार्कण्डेयपुराणानुसारं राज्ञः शरीरं न भोगाय अपि तु क्लेशान् अनुभूयापि पृथिवीपालनाय स्वधर्मरक्षणाय च।[४] पिता भ्राता गुरुः शास्ता वह्निः वैश्रवणः यमः इत्येतेषां सप्तानामपि गुणा राज्ञि विद्यन्ते।[५]

## राज्याभिषेकः

ऐन्द्रमहाभिषेकद्वारा भोज, स्वराट्, सम्राट्, विराट् इत्येतत्संज्ञाचतुष्टयं कथम् उत्पद्यते इति ऐतरेयब्राह्मणे (३९।१) विवृतमस्ति। अग्रिमविवरणे तस्य प्रक्रिया सङ्केतिता–"एतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वा अभिषिञ्चेत्...स ब्रूयात् सह श्रद्धया यां च रात्रीमजायेहं यां च प्रेतास्मि तदुभयमन्तरेण इष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति।" एतद्विषये राजसूयस्य विवरणम् आवश्यकम्। राजसूयः सोमयागपर्यन्तमेव न सीमितः एषः वर्षद्वयं प्रचलति। अत्र अनेका इष्टयः भवन्ति। ताश्च विस्तरेण वर्णिताः परमत्र विस्तरभिया तत्रत्याः प्रमुखा एव विषयाः वर्ण्यन्ते ये अस्मत्प्रतिपाद्येन विषयेण सम्बद्धाः।

---

१. आप० १०।१२-१५; बौ० ६।६।

२. लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः।

(शान्ति० ५७।११)

३. यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम्।
गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम्॥
वर्तितव्यं कुरुश्रेष्ठ सदा धर्मानुवर्तिना।
स्वप्रियं तु परित्यज्य यद्यल्लोकहितं भवेत्॥

(शा० ५६।४५-४६)

धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति।

(शा० ९०।५)

४. राज्ञां शरीरग्रहणं न भोगाय महीपते।
क्लेशाय महते पृथ्वीस्वधर्मपरिपालने॥

(मार्क० १३०।३३-३४)

५. शान्तिप० १३९।१०४-१०५।

राजसूयशब्दः शबरस्वामिना ( जै० ४।४।१ ) इत्थं व्याख्यातः—"राजा तत्र सूयते तस्माद् राजसूयः। राज्ञो वा यज्ञो राजसूयः"। अस्य उद्देश्यद्वयं स्वीकृतं राज्यं स्वर्गश्च। "राजा राजसूयेन यजेत" ( लाट्या० श्रौ० ९।१।१ )। "राजसूयेन स्वाराज्यकामो यजेत ( जै० ११।२।१२ )।" "तथो एवैतद् यजमानो यद्राजसूयेन यजते सर्वेषां राज्यानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति" ( शां० १५। १३।१ ) इत्यादीनि वचनानि ( सत्याषाढ० १३।३; आप० १८।८।१; कात्या० १५। १।१ ) अत्र गमकानि। राजसूयवाजपेययोर्विषये अस्ति वैमत्यम्। कात्यायनमतानुसारं ( १५।१।२ ) राजसूयस्तेनैव अनुष्ठेयः येन वाजपेयो नानुष्ठितः। आश्वलायनः श्रौतसूत्रे वाजपेयानन्तरमेव राजसूयस्य कर्त्तव्यतां प्रतिपादयति ( ९।९।१९ )। शतपथब्राह्मणे ( ९।३।४।८ ) स्पष्टं निगदितं यद् राजसूयेन राजपदं वाजपेयेन च 'सम्राट्' इति पदं लभ्यते। फाल्गुनमासे आद्यदिनस्य अर्धभागे यजमानस्य दीक्षा भवति, या च पवित्रसंज्ञां लभते। यया च सह अग्निष्टोमः सम्पद्यते। दीक्षादिविषये विवादः अस्ति। पावित्र्यसंस्कारानन्तरम् अभिषेचनीयः। तदुत्तरम् अवभृथस्नानात्पूर्वं 'देवयजनं' कर्त्तव्यं भवति ( लाट्या० ९।१।२३-२४ )। पवित्रयज्ञानन्तरं पञ्चयज्ञस्य विधिः। फाल्गुनपूर्णिमायाम् अनुमतीष्टौ पुरोडाशो विहितः ( कात्या० १५। १।९ )। अस्यां प्रक्रियायां विभिन्नसंस्कारानन्तरं 'रत्निनां हवींषि' इत्येतस्य महत्त्वम् अस्ति। अस्य विवरणम् आवश्यकम्।

भारतीयराजनीतिशास्त्रे रत्नहवींषि इत्यस्य यावन्महत्त्वं न तावद् राजत्वप्राप्तिविषये अन्यस्य कस्यापि धार्मिककार्यस्य। अनेनैव पुरुषे राजत्वमायाति। "राज्ञ एव राजसूयम्।" "राजा वै राजसूयेनेष्ट्वा भवति।" रत्नहवींषि इत्यत्र राजा रत्निनां सविधे गच्छति। रत्निनां सङ्ख्याविषये भेदः लभ्यते। तादृशभेदानुसारेण रत्निनां स्थितिः विभिन्नेषु ग्रन्थेषु इत्थं वर्णिता :—

| तै० सं० ( १।८।६ ) | मै० सं० (२।६।५;४।३) | काठक सं० (१५।४) |
|---|---|---|
| (१) ब्राह्मणः | (१) ब्राह्मणः | (१) बृहस्पतये पुरोहितः |
| (२) राजन्यः | (२) राजन्यः | (२) इन्द्राय राजा |
| (३) महिषी | (३) महिषी | (३) अदित्यै महिषी |
| (४) परिवृक्तिः | (४) परिवृक्तिः | (४) नैर्ऋतये परिवृक्तिः |
| (५) सेनानी | (५) सेनानी | (५) अग्नये सेनानी |
| (६) सूतः | (६) संगृहीता | (६) अश्विनीकुमाराभ्यां संगृहीता |
| (७) ग्रामणीः | (७) क्षत्ता | (७) सवित्रे क्षत्ता |
| (८) क्षत्ता | (८) सूतः | (८) वरुणाय सूतः |

| | | |
|---|---|---|
| (९) संगृहीता | (९` वैश्यग्रामणीः | (९) मरुते वैश्यग्रामणीः |
| (१०) भागदुघः | (१०) भागदुघः | (१०) पूषदेवतायै भागदुघः |
| (११) अक्षावापः | (११)+(१२) =तक्षा रथकारः | (११) अक्षावापः |
| | (१३)+(१४)अक्षावापः गोविकर्ता च | (१२) रुद्राय गव्यच्छः |

शत० ब्रा० [५।३।१)

(१) सेनानी
(२) पुरोहितः
(३) यजमानः
(४) महिषी
(५) सूतः
(६) ग्रामणीः
(७) क्षत्ता
(८) संगृहीता
(९) भागदुघ
(१०) अक्षावापः
(११) गोविकर्तनम्
(१२) पालागलः
(१३) परिवृक्तिः

तै० ब्रा० (१।७।३)

(१) ब्राह्मणः
(२) राजन्यः
(३) महिषी
(४) वावाता
(५) परिवृक्तिः
(६) सेनानी
(७) सूतः
(८) ग्रामणीः
(९) क्षत्री
(१०) सङ्गृहीता
(११) भागदुघः
(१२) अक्षावापः

रत्निषु प्रथमं ब्राह्मणः गण्यते। एकत्र ब्राह्मणः पुरोहिततया उक्तः। अस्य देवता बृहस्पतिः। राजत्वस्थापनायां प्रथमं ब्राह्मणस्य स्वीकृतिः अपेक्ष्यते स्म। स समाजस्य प्रमुखः। यदि तत्स्वीकृतिर्न लभ्यते तदा राजसूयकार्यम् अवरुद्धमेव भवति स्म। ब्राह्मणानन्तरं राजन्यस्तत्र गणितः। कुत्रचिद् राजन्यस्थाने राजशब्द एव निर्दिष्टः। शतपथब्राह्मणे काठकसंहितायां राजैव रत्नी कथितः परं तत्र राज्ञः तृतीयं स्थानं स्वीकृतम्। वस्तुगत्या तत्र राजन्यशब्देन राजशब्देन वा प्रशासनिकवर्गस्य प्रतिनिधिः अभिप्रेतः। प्रायः स क्षत्रियो भवति। शतपथब्राह्मणं विहाय अन्यत्र सर्वत्र गणनायां तृतीयं नाम महिष्याः अस्ति। महिषी अदितेः प्रतिनिधिरिति स्वीकृतमस्ति। पत्न्याः स्वीकृतिं विना किमपि कर्मकाण्डीयं कार्यं न सम्पद्यते इति स्पष्टमेव। राजा एकाकी राज्यासनम् अधिरोढुं नार्हति। तदर्थं महिषी अपेक्षणीया ( श० ब्रा० ५।२।१।१० ) एष विषयः रामायणस्य अयोध्याकाण्डे ( १२८।५९ ) सुस्पष्टं वर्णितः। महाभारते शान्तिपर्वणि उक्तम्—उपवेश्य महात्मानं

कृष्णां च ३९।४१ )। महिष्या इव वावातायाः परिवृक्तायाश्च उल्लेखोऽस्ति। राज्ञः प्रिया राज्ञी वावाता मध्यमा च परिवृक्ता इत्युक्ता – परिवृक्ता मध्यमपत्न्याः ( तै० सं० ३ पृ० १४६ मैसूरसंस्करणम् )। शूद्रजातीया राज्ञी पालागलशब्देन निर्दिष्टा ( शत० ब्रा० १३।५।२।२८, रामा० वा० १४।३५ )। संस्कारार्थम् एतासां सर्वासामपि अनुमतिः यजमानाय अपेक्षिता। वस्तुतः राजत्वं न शक्तौ किन्तु जनस्वीकृतौ आधृतम्।

संहितात्रये पञ्चमं सेनान्यः नाम अस्ति। एकत्र तु प्रथमम् एव तस्य नाम, अन्यत्र षष्ठम्। शतपथब्राह्मणे ( ५।३।१।१ ) सः न वर्गविशेषप्रतिनिधित्वेन अपि-तु सेनापतित्वेन निर्दिष्टः। सायणेन तु सेनान्यः शूद्रस्थानीयता स्वीकृता। सूत-ग्रामणी क्षत्री संग्रहीतृ भागदुघ अक्षावाप एतेषां सर्वत्र साम्यं प्रतिपादितम् किन्तु एषां क्रमः भिन्नः। सूतः उत्तरकाले कथावाचकतया ख्यातिम् अगमत् किन्तु वस्तु-गत्या स सारथितया रथशिल्पितया वा प्रसिद्धः आसीत्। सूतः सदा सारथिरूपे एव प्रतिष्ठित आसीत्। शतपथब्राह्मणे ग्रामण्या सार्धं तस्य उल्लेखः दृश्यते। संहिताद्वये ग्रामणीः वैश्यग्रामणीस्वरूपे निर्दिष्टः। रामायणे सुमन्त्रः वस्तुगत्या मन्त्री आसीत् परं सः सारथेरपि कार्यं करोति स्म। कृष्णशल्यप्रभृतयः मान्याः अपि पुरुषाः सारथ्यम् अकुर्वन्निति प्रसिद्धमेव। ग्रामण्यः सम्बन्धः रणक्षेत्रेणापि आसीत् परन्तु ग्रामप्रतिनिधित्वं ग्रामसञ्चालनमेव च तस्य मुख्यं कार्यमासीत्। भागदुघस्य सम्बन्धः नागरिकैः सह आसीत्। अर्थशास्त्रे सः समाहर्ता उक्तः। सूतजातिः क्षत्तृजातिश्च मनुना ( १०।११,१६ ) सङ्करजातिः स्वीकृता। राजच्छत्र धारणमेव क्षत्तृसंज्ञस्य पुरुषविशेषस्य कार्यम्। परन्तु सवित्रा तस्य सम्बन्ध इत्यस्य किं तात्पर्यम् इति अस्फुटमेव।

सङ्ग्रहीतृस्थानविषये वैमत्यमस्ति। एषः अर्थशास्त्रे सन्निधातृतया स्वीकृतः, यः कोषाध्यक्षेण समानः। रथचालकः इत्यपि अस्याभिप्रायः। अस्यां स्थितौ अस्य ( सङ्ग्रहीतुः ) स्थानं सूतस्थानापेक्षया अपकृष्टं भवति। यातायातसाधनैः युद्धसाधनैश्च सम्बद्धानां पुरुषाणां प्रातिनिध्यम् अधिकमासीत् इति स्पष्टम्। भाग-दुघशब्दस्य अर्थः भागवितरकः इत्यपि दृश्यते। अयम् अर्थशास्त्रे समाहर्ता इति निर्दिष्टः। एतस्य कार्यं करसंग्रहणमासीत्। जातकेषु स बलिसाधकः उक्तः (५।१०६)। संस्कृतवाङ्मये करपर्यायतया बलिशब्दः प्रयुक्तः। सः पशुदेवतायाः पूष्णः प्रतीकतया स्वीकृतः। रत्निषु एकादशः अक्षावापः सर्वेषु वर्णेषु लभ्यते। अस्यार्थः अक्षक्षेपकः। एष द्यूताध्यक्षतया स्वीकर्तुं शक्यः। शतपथब्राह्मणे ( ५।३।१।१० ) असौ अक्षक्षेपक एव कथितः। अधिकादधिकम् अयं क्रीडाध्यक्षः इति स्वीकर्तुं शक्यते। नातः उत्कृष्टं कथमप्यस्य पदम्। अन्येषां चतुर्णां रत्निनां गणना न सर्वेषु वर्णनेषु प्राप्यते। किञ्चिद्वैषम्येण गोविकर्तनस्य उल्लेखः वर्णनत्रये दृश्यते।

अस्यार्थः 'गोघ्नः'। एष वनाधिकारीति सम्भाव्यते। तक्ष्णः रथकारस्य संहिताद्वये निर्देशो लभ्यते। तक्ष्णः कार्यं धातुपरीक्षणं रत्नपरीक्षणम् च आसीत्। यज्ञे सर्वविधा धातवः अपेक्ष्यन्त (मै० सं २।६।५; आ० श्रौ० स० १८।१०।१७)। पालागलस्य लेखः अवसाने वर्तते। एषः शतपथब्राह्मणे दूततया निर्दिष्टः, यः एकस्मात् स्थानात् स्थानान्तरं सन्देशं प्रापयति। स शूद्रजातीयः भवति स्म। तदीयपरिधानं च रक्तम्।

राजसूयस्य अभिषेचनीयकार्यविषये पक्षद्वयम्। एकः पक्षः धार्मिकः अपरश्च सामाजिकः। प्रथमपक्षे पुरोहितः राजानमभिषिञ्चति, द्वितीयपक्षे च समाजप्रतिनिधयः तमभिषिञ्चन्ति। इत्थम् अस्मिन् संस्कारे धर्मस्य समाजस्य चेति द्वयस्यापि स्वीकृतिरपेक्षिता। तैत्तिरीयब्राह्मणे राज्याभिषेको वर्णितः। प्रथमं सप्त आहुतयः प्रक्षिप्यन्ते। नृपः व्याघ्रचर्म अध्यास्ते। तदनन्तरं दूर्वाभिसिक्तेन जलेन स अभिषिच्यते। ततः मन्त्रोच्चारणपूर्वकं राजा रथम् आरोहति। रथस्य चक्रचतुष्टयमपि स्पृश्यते। ततः पुरोहितं रथकारं च सम्बोधति पृथिवीञ्च प्रार्थयते। तत्र इत्थं मन्त्राः—

'अथानुमत्याऽष्टाकपालेन पुरोडाशेन प्रचरतीयं वा अनुमतिः स यस्तन् कर्म शक्नोति कर्त्तुं यच्चिकीर्षतीयं हास्मै तदनुमन्यते तदिमामेवैतत् प्रीणात्यनयानुमत्यानुमतः सूया इति (श० ब्रा० ५।२।३।४)।

मन्त्रेऽस्मिन् दैवशक्त्यपेक्षया लौकिकशक्तेः प्राधान्यम्। रत्निनः विभिन्नानां देवतानां प्रतीकभूतान मत्वा तेषाम् अनुमतेः आवश्यकत्वम्। रत्निनाम् अनुमतिग्रहणानन्तरं पृथिव्यादीनाम् अनुमतिग्रहणम्। अत्र पृथ्वी मातृस्वरूपा स्वर्गश्च पितृस्वरूपः स्वीकृतः। ततः राजा सूर्यं ततश्च प्रजाम् अवेक्षते। तदुत्तरम् औदुम्बरे पीठे उपविश्य क्षौरार्थम् अभ्यन्तरं गच्छति।

नीतिमयूखे राजनीतिप्रकाशिकायां राजधर्मकौस्तुभे च गोपथब्राह्मणस्थानि अभिषेकविषयकाणि उद्धरणानि इत्थम् उद्धृतानि—

"आथर्वणगोपथब्राह्मणे—अथ राज्ञोऽभिषेकविधिं व्याख्यास्यामः। बिल्वप्रभृतीन् सम्भारान् सम्भृत्य षोडशकलशान् षोडश बिल्वानि बल्मीकस्य च मृत्तिकां सर्वान्नं सर्वरसान् सर्वबीजानि। तत्र चत्वारः सौवर्णाश्चत्वारो राजताश्चत्वारस्ताम्राश्चत्वारो मृन्मयाः कुम्भाः। तान् ह्रदे सरसि वोर्ध्वस्रुतो नामैनाम इत्युदकेन पूरयित्वा वेदिपृष्ठे संस्थाप्य कुम्भेषु बिल्वमेकैकं दद्यात्। सर्वान्नं सर्वरसान् सर्वबीजानि च प्रक्षिप्याभयैरपराजितैरायुष्यैः स्वस्त्ययनैः सौवर्णेषु संपातान्, संस्राव्यैः संसिक्तीयैश्चैव राजतेषु, भैषज्यरंहोमुच्यैस्ताम्रेषु, संवेशसंवर्गाभ्यां शन्तातीयैः प्राणसूक्तेन च मृन्मयेषु। ततस्तान् कलशान् गृहीत्वा श्रोत्रियैः पवित्रतमै राजानमभिषिञ्चेत्।

भूमिमिन्द्रश्च वर्धयित्वा क्षत्रियं म इति सिंहासनमारूढमभिमन्त्रयेत्। एवमभिषिक्तस्तु रसान् प्राश्नीयाद् विप्रेभ्यश्च दद्याद् गोसहस्रं सदस्येभ्यः कर्त्रे ग्रामवरम्। विपुलं यशः प्राप्नोति भुङ्क्ते धरां जितशत्रुः सदा भवेत्" इति ( राज० प्र० पृ० ४२–४३; राज० कौ० ३३५।३३६; नीति० म० पृ० ४-५; कौशिकसूत्र० १७।२८ )।

सामविधानब्राह्मणेऽपि—"राजानमभिषेचयेत् तिष्येण श्रवणेन वा। व्रीहियवैस्तिलमाषैर्दधिमधुसुमनोजातरूपैर्यशस्विनीभ्यो नदीभ्यः समुद्राच्चोदकान्याहृत्यौदुम्बरे भद्रासने वैयाघ्रे चर्मणि उत्तरलोम्न्यासीनं जीवन्तीनां गवां शृङ्गकोशैरभिषिञ्चेद् अभ्रातृव्य इति रहस्येन। यं कामयेतैकराजः स्यादिति नास्य चक्रं प्रतिहन्येतेत्येकवृषेण अभिषिञ्चेत्। अभिषेक्त्रे दद्याद् ग्रामवरं दासीशतं सहस्रं तदधीनञ्च भवेत्।" इति ( सामविधानब्राह्मणम् ३।५।१-३ )।

बौधायनश्रौतसूत्रे अभिषेकस्य प्रक्रिया यथा निर्दिष्टा, तथैव याज्ञवल्क्यस्मृतौ ( १।३०९ ) मिताक्षरायां सा प्रक्रिया दर्शिता। अथर्ववेदीयकौशिकसूत्रे ( १७।१।१० ) युवराजस्य माण्डलिकस्य सेनापतेश्च लघ्वभिषेकस्य राज्ञो बृहदभिषेकस्य ( १७।११-३४ ) च उल्लेखः। रामायणे अनेकत्र अभिषेको वर्णितः। युद्धकाण्डे अभिषेकविषये विस्तरेण वर्णितमस्ति। अयोध्याकाण्डे रामस्य यौवराज्यपदाभिषेकार्हवस्तूनां सङ्कलनम् उल्लिखितम्। सभापर्वणि ( ३३ ) राजसूयस्य यद् वर्णनम् उपलभ्यते, तत्र सर्वजातीयैर्जनैः कार्यं कृतमासीत्। शान्तिपर्वणि ( ४०।९-१३ ) आदिपर्वणि च ( ४४,८५,१०१ ) अभिषेको निर्दिष्टः। बहुत्र अभिषेकस्य वर्णनं विस्तरेण लभ्यते, यत्र वास्तविकं साम्यमस्ति।[१]

## राज्याभिषेकस्य वैशिष्ट्यम्

उपर्युक्तेन अभिषेकवर्णनेन राजनीतिशास्त्रसम्बन्धिन्यः काश्चिद् विशेषताः प्रकाशमायान्ति। तद्विषयेऽवश्यं विचारणीयम्। अभिषेके सर्वतो अधिकं महात्म्यं रत्निनाम्। वेदे उक्ताः पलाशमणिप्रदातारः उत्तरकाले 'राजकर्तारः' अभवन्। पुरोहितः ब्राह्मणः, राजन्यः क्षत्रियः, वैश्यग्रामणीः ग्राम्यजनानां प्रातिनिध्यं समाचरन्ति। वेदे विट्शब्देन सामान्यजनता बोध्यते। तक्षरथकारादयः शिल्पिशूद्रादीनां प्रतिनिधयः। एषैव परम्परा महाभारतकालं यावद् विकासम् आयाता, यत्र परम्परायां चातुर्वर्ण्यप्रतिनिधयः साम्येन अभिषेककार्ये समा-

---

१. अग्निपुराणम् २१८, २१९; शान्तिपर्व ४१; उद्योग० १५५।२६-३२; द्रोण० ५।३९-४३; शल्यपर्व ४५; राजनीतिप्रका० पृ० ४९-८३; राजधर्मकौस्तु० पृ० ३१८-३६३; नीतिमयूख० पृ० १-१४; विष्णुधर्मोत्तर० २१-२२।

विशन्ति। परं प्रतिवर्णं मन्त्रकलशाभिषेकानां प्रकारः विभिन्नोऽस्ति। इत्थं च शूद्राणां राजनीतिकी प्रतिष्ठा नासीदिति कथनं निराकृतमेव भवति। मन्त्रिमण्डलतः राजत्वनिर्माणं यावत् तेषां वर्णान्तराणामिव अधिकार आसीत्। अर्थान्मन्त्रिमण्डलराजत्वनिर्माणादिषु सर्वत्र तेषामपि स्वीकृतिः अन्येषामिव अपेक्षिता आसीत्। रामायणे रत्निनः 'राजकर्त्तारः' कथिताः "समेत्य राजकर्त्तारो भरतं वाक्यमब्रुवन्" (अयो० ७९।१)। अत्र टीका—"राजकर्त्तारः मन्त्रिणः" इति। अधोनिर्दिष्टमन्त्रेण अभिषेकस्य सामाजिकता स्पष्टीभवति—

"ग्रामण्यो गृहान् परेत्य मारुतं सप्तकपालं पुरोडाशं निर्वपति विशो वै मरुतो ग्रामणीस्तस्मान् मारुतो भवत्येतद्वा अस्यैकं रत्नं यद्ग्रामणीस्तस्मा एवैतेन सूयते तम् स्वमनपक्रमिणं कुरुते।" (श० ब्रा० ५।३।१।६)।

वैदिककाले सभासमितीत्यादयः संस्थाः समग्रायाः राजनैतिकशक्तेः केन्द्रण्यासन्। तत एव राजतन्त्रस्य विकासः आरभ्यत। ततः राजनियन्त्रणार्थमेव रत्निनो व्यवस्थापिताः, ये न केवलं राजनियन्त्रणमेव कुर्वन्ति, अपि तु तेषां स्वीकृतौ सत्यामेव राजत्वप्राप्तिः शक्या आसीत्। अत्र धर्मेण सामाजिकशक्त्या च नियन्त्रितैव राजशक्तिः विकसति। अत एव अभिषेकः द्विधा विभक्तः—धार्मिकः सामाजिकश्च। अभिषेकः धार्मिकं कर्मकाण्डम् अपेक्षते। कर्मकाण्डीयविधानसम्पत्तिं विना कोऽपि आत्मानं राजतया उद्घोषयितुं न शक्नोति स्म। कर्मकाण्डीयकार्यं च ब्राह्मणैरेव सम्पाद्यते स्म। इमे ब्राह्मणाः स्वतन्त्रा आसन्। अभिषेकं विना न पुरुषे राजत्वसम्पत्तिः, यया स किञ्चित् कर्तुं प्रभवेत्। कर्मकाण्डीयकार्यारम्भेऽपि रत्निनां साहाय्यम् अपेक्षितम्। एवञ्च समाजशक्तिः धर्मनियन्त्रिता सत्येव कार्योपयोगिनी। इमां च राजा अन्यः कश्चित् पुरुषो वा न तिरस्कर्तुं प्रभवति। रत्निषु सेना, राजवंशः, बौद्धिकवर्गः, श्रमिकाः, शिल्पिनः, व्यापारिण इत्यादीनां सर्वेषामपि प्रातिनिध्यमस्ति।

अभिषेकार्थं व्यक्तिविशेषाणाम् 'अनुमतिः' अपेक्षिता। या भूः राज्ञा शासनीया, सा मातृतया तेन मन्यते। अत एव तदनुज्ञां राजा अपेक्षते। एतेन स्पष्टं यत् स पुत्र इव पृथ्वीं शास्ति। स तस्याः रक्षकः, नोपभोक्ता। वरुणपूजनेन स धर्मसंरक्षको भवति। धर्मसंरक्षक इत्यस्य एष एव आशयः यत्स धर्मं सर्वोच्चतया सम्मनुते। राज्ञि शक्त्याधानं धर्मेण क्रियते। तत्र एवं मन्त्रः—

"अथ वरुणाय धर्मपतये वारुणं यवमयं चरुं निर्वपति। तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति। परमता वै सा यो धर्मस्य पतिरसद्यो हि परमतां गच्छति। तं हि धर्मं उपयन्ति तस्माद् वरुणाय धर्मपतये।" (श० ब्रा० ५।३।३।९)।

अभिषेकार्थम् आनीतं जलं राज्यप्रदं कथितम्। इदं जलं राज्याभ्यन्तरतः, राज्यसीमातः समुद्रतश्च समाह्रियते स्म। येन तदीया सीमा सम्प्रभुता च बोध्यते। शतपथब्राह्मणस्य वाक्यद्वयम् उल्लेखनीयम् अस्ति—"स्वराजस्थराष्ट्रदा राष्ट्रममुष्मै दत्त" (५।३।४।२१), "वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि" इति (५।३।४।६); मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति" स्थावराणामनपक्रमणीं करोति···(५।३।४।१४)।

उपर्युक्तैरुद्धरणैः स्पष्टं यद् राजत्वं प्रजापृथिव्यादिसापेक्षम्। देवाः राजत्व-योग्यतां दातुं शक्नुवन्ति, किन्तु पृथिविसम्बन्धिराजत्वं धर्मेण समाजेन लौकिक-शक्तिभिश्चैव लभ्यते।

पुरोहितः एकं धनुः शस्त्रं च तस्मै प्रयच्छति। राजा व्याघ्रचर्मणि तिष्ठति। तदानीम् इत्थम् उद्घोष्यते—"आविर्मर्य्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्ध-श्रवा आवित्तौ मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्वदेवा आवित्ते द्यावा-पृथिवी विश्वशम्भुवावावित्तादितिरुरुशर्मा।" (वा० सं० १०।९)।

शतपथब्राह्मणे (५।३।५।३१-३७) स्पष्टमुक्तं यद् घोषणा पूर्णतया प्रतीकात्म-कैव। तत्र मूलम् अनुमतिरेव 'तैरनुमतः सूयते' 'उद्घोषणानन्तरं सः व्रत गृह्णाति' (श० ब्रा० ५।३।५।२)। ऐतरेयब्राह्मणे राजा भविष्यन् पुरुषः कथयति—"याञ्च रात्री-मजायेयाहं याञ्च प्रेतास्मि तदुभयमन्तरेणेष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथाः यदि ते द्रुह्येयम्" इति (८।१५)। अत्र राज्ञः प्रजायाश्च साक्षादेव सम्बन्धः स्थाप्यते, न तत्र काचिद् दैवी शक्तिः अपेक्षते। ऐतरेयब्राह्मणस्याग्रिमोंऽशः एवमस्ति—

"स य इच्छेदेवंवित्क्षत्रियमयं सर्वा जितीर्जयेतायं सर्वाँल्लोकान् विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आऽन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति तमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वा अभिषिञ्चेत्" (८।१५)।

अत्र व्रते पुरोहितः सम्पूर्णस्य समाजस्य प्रातिनिध्यम् आचरति। तत्समक्षं भावी राजा स्वकर्त्तव्यविषये प्रतिजानीते। राज्यासनारोहणावसरे स्वर्णमये पाद-पीठे चरणौ स न्यस्यति। पुरोहितश्च जलेन तमभिषिञ्चति। तत्र इत्थं मन्त्राः—

"सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसा इन्द्रियस्येन्द्रियेण। क्षत्राणां क्षत्रपतिरेध्यतिदिद्यून् पाहि। इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमो अस्माकं ब्राह्मणानां राजा" (वा० स० ९।४०; १०।१७)।

काष्ठासने पदत्रयं चलनानन्तरं स सम्बोध्यते—

"इयं ते राट्। यन्तासि यमनो ध्रुवोऽसि वरुणः। कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा" ( श० ब्रा० ५।२।१।२५ )।

एतेन स्पष्टं यद् राजत्वं न वंशानुगतम्, अपि तु तत् प्रदीयते। अस्य सर्वा अपि व्यवस्था समाजम् अपेक्षते। अभिषेकानन्तरं यदा राजा राज्यासनमारोहति तदा तत्पृष्ठभागे दण्डस्पर्शं पुरोहितः कुरुते "अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति। स दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति। तस्माद्राजा दण्ड्यो यदेनं दण्डवधमतिनयति" ( श० ब्रा० ५।४।७ )।

भाष्यकारमतानुसारं राजा न कदापि दण्डमर्हति। परन्तु राजतन्त्रविषये उपलभ्यमानानि प्रमाणान्याधृत्य इदं वक्तुं शक्यं यद् धर्मम् अतिवर्तमानो राजा अवश्यं दण्डभागिति। ईदृशः कश्चिदपि नास्ति यः कदापि दण्डं नार्हति। दण्डविधानस्य इदं तात्पर्यं यद् राज्ञा दण्डशक्तिः शासने प्रयोक्तव्या। स्वयं च राजा तया शक्त्या नियमितोऽस्ति। अभिषेकावसरे क्रियमाणां प्रतिज्ञाम् अतिवर्तमानो राजा दण्डभाग् भवति। राजत्वं व्रतसापेक्षमस्ति। अर्थाद् राजत्वमपि व्रतसापेक्षमेव। तत्पालने सत्येव तदुपभोगः राज्ञा शक्यः। उपर्युक्तदण्डस्पर्शनस्य इदमेव रहस्यम्।

दण्डस्पर्शानन्तरं रत्निनः राजानं सम्मन्यमानाः किञ्चित् कथयन्ति। तत्र सर्वप्रथमं पुरोहितः कथयति "पृथिवी मातर्मा मा हिंसीर्मो अहं त्वाम्।" "नहि माता पुत्रं हिनस्ति न पुत्रो मातरम्" ( श० ब्रा० ५।४।३।२० )। "मेयं नान्वधून्वीत" इति टीकाकारः। एतद्व्याख्यानुसारं स्पष्टं यद् राजपृथिव्योः पुत्रमातृभावः। यस्य भूभागस्य स शासकः, तस्य कस्याप्यंशस्य हानिः मात्रङ्गहानिरिव। तस्यां च सत्यां सः राजा राजपदादेव प्रच्युतो भविष्यति। पृथिव्याः राजभोग्यत्वम् इत्येतद्विषयकस्य दैवसिद्धान्तस्य लेशोऽपि नात्र भासते।

वाजसनेयिसंहितायाम् (१०।२८) इत्थं वर्णितं यद् राजा ब्राह्मणं कथयति—भवान् ब्राह्मणः; तदनु ब्राह्मणो ब्रवीति—वरुणस्य शक्तिर्भवान् इत्युक्तिः ईदृशी शतपथब्राह्मणे ( ५।४।४।१५ ) भवान् ब्राह्मणविट्शक्त्या सर्वशक्तिमांश्च इति। पञ्च विप्राः राजानम् एवंरूपेण सम्बोधयन्ति। एतेन विवेचितेन स्पष्टं यद् राजतन्त्रं न निरङ्कुशम्, अपि तु सामाजिकधार्मिकराजनैतिकशक्तिभिः नियमितमासीत्।

राज्याभिषेकीया उक्ताः विशेषता उत्तरकालेऽपि अनुवर्तमाना आसन्। युधिष्ठिरः सभासदां तादृशीं पूजां व्यधात् ( अर्चयित्वा सभासदः–सभापर्व १३।४)। शतपथब्राह्मणे यथा राजा रत्निनां विदधाति स्म रामायणकाले महाभारतकाले च रत्निनां पदम् अन्यैः सभासद्भिः गृह्यते स्म—"उदतिष्ठत रामस्य समग्रमभिषे-

चनम् । पौरजानपदाश्चापि नैगमश्च कृताञ्जलिः ( रामा० २।१४।५२ ); "आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान् भूमिपानथ । विशश्च मान्यान् शूद्रांश्च सर्वानानयेति च ।।" (महा० सभा० ३३।४१७)। ऋत्विग्भिः ब्राह्मणैः पूर्वं कन्याभिः मन्त्रिभिस्तथा। यौधैश्चैवाभ्यषिञ्चंस्ते सम्प्रहृष्टैः सनैगमैः ।। ( युद्ध० १२८।६२ ) । अत्राभिषेके कन्यायाः अपि समावेशः दृश्यते । महाभारतशान्तिपर्वव्याख्यायाम् अभिषेकावसरे चतुर्णां वर्णानां चत्वारोऽमात्याः भागं गृह्णन्ति स्म । ' मुख्यामात्यचतुष्टयम् । शूद्राश्चावरमुख्याश्च नानातीर्थसमुद्भवैः" इति नीलकण्ठेन प्रत्यपादि । अद्यावधि रत्निनां स्थाने समाजप्रतिनिधीनां सम्मानस्य परम्परा प्रचलत्येव "प्रदक्षिणीकृत्य पुरं प्रविश्य च पुरं गृहं समस्तान् पौरमुख्यांश्च कृत्वा पूजां विसृजेत् ।" ततस्तु दर्शनं देयं ब्राह्मणानां नृपेण तु श्रेणीप्रकृतिमुख्यानां भोजनं च नमस्करेत् । आशिषस्ते दास्यन्ति । हृष्यत्पञ्चालवृद्धो धृतकनकमयस्वाभिषेकोदककुम्भो दत्तः श्रीकान्यकुब्जः"। अभिषेकस्य प्रतिज्ञायाः स्वरूपमपि तदेव--

प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ।।
यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ।।
( शा० ५९।१०६-७ ) ।

राजत्वोत्पत्तिविषये महाभारते महत्त्वपूर्णं विवरणं लभ्यते—

य एष राजन् राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि परन्तप ।।
तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः ।।
तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च ।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ।।
समानजन्ममरणः समः सर्वैगुणैर्नृणाम् ।
विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति ।।
( शां० प० ५९।५-८ )

एवं युधिष्ठिरप्रश्नानन्तरं भीष्मेण राजोत्पत्तिर्वर्णिता । स्पष्टीकृतमेतद् राजोत्पत्तिनिरूपणप्रस्तावे । अत्र प्रतिज्ञामहत्त्वविषये पुनः वचनद्वयम् उपस्थाप्यते येन राज्ञः स्थितिः सम्यक्तया प्रकाशं नीयते—

अरक्षितारं हन्तारं विलोप्तारमनायकम्।
तं वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणम्॥
अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः।
स संहत्य निहन्तव्यः श्वेव सोन्मद आतुरः॥

(अनुशासन० ६१।३२-३३)

## अन्याः प्रकृतयः

### अमात्यः

अमात्यः, सचिवः, मन्त्री चेति शब्दत्रयम् एकार्थकम्। ऋग्वेदे राजवदेव अमात्यस्यापि स्थानं स्वीकृतम् "कृणुष्व पाजः प्रसितिं न पृथिवीं याहि राजेवामवाँ इभेन" (ऋ० ४।४।१)। अत्र निरुक्ते इत्थं वर्णितम्—"याहि राजा इव अमात्यवान् अभ्यमनवान् स्ववान् वा" (६।१२)। अमात्यशब्दः ऋग्वेदे प्रयुक्तः (७।१५।३), परन्तु न तत्र तस्य मन्त्रिरूपोऽर्थः। बौधायनपितृमेधसूत्रे (१।४।१३; १।१२।७) अमात्यशब्दः प्रयुक्तः। आपस्तम्बधर्मसूत्रे (२।१०।२५।१०) मन्त्रिरूपेऽर्थे अमात्य-शब्दः उल्लिखितः। तत्र हि राज्ञः कृते मन्त्रिण आवश्यकत्वमुक्तम्। एष च मन्त्री अमात्यशब्देन निर्दिष्टः। सचिवशब्दः ऐतरेयब्राह्मणे (१।२।९) दृश्यते। तत्र हि मरुद् इन्द्रस्य सचिव इति कथितम्। अर्थशास्त्रे धर्मशास्त्रे च मन्त्रिणः आवश्यक-त्वं बहुशः प्रतिपादितम्।[1] कौटल्यः अमात्यसम्पद्येव सम्पूर्णस्य जनपदस्य जीवनं मन्यते—

"जानपदोऽभिजातः स्वावग्रहः कृतशिल्पश्चक्षुष्मान् प्राज्ञो धारयिष्णुः दक्षो वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिः मैत्रो दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितः सम्प्रियो वैराणामकर्त्तेत्यमात्य-सम्पत्" (१।९।१)।

जूनागढस्थशिलालेखे रुद्रदामनस्य सचिवः इत्थं वर्णितः—"अस्मिन्नर्थे महाक्षत्रपस्य मतिसचिव-कर्मसचिवैरमात्यगुणसमुद्युक्तैरतिमहत्त्वाद् भेदस्यानुत्साह-विमुखमतिभिः प्रत्याख्यातारम्भम्।" अत्र परामर्शदातारः कार्यकर्तारश्चेति द्विविधाः सचिवाः। अमात्यसचिवशब्दौ प्रायः पर्यायतया प्रयुक्तौ। अमरकोशेऽपि

---

१. मनु० २।५४; शुक्र० २।१; मत्स्यपुराणम् २१५।२; वि० ध० सू० २।२४।२-३; शा० प० १०६।११; राजनीतिप्रका० पृ० १७४; कामन्दक० ४।२५, २७; १३।२४-६४।

मतिसचिवः कर्म सचिवश्चेति द्वौ सचिवौ उक्तौ "मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः" (क्ष० वर्गः)। रामायणे (१।७।३; १।८।४) सुमन्त्रः अमात्यशब्देन परामर्शदातृतया च निर्दिष्टः। परञ्चायोध्याकाण्डे (११२।१७) इदं भेदद्वयमपि व्यवस्थापितमस्ति। कौटल्येन अमात्याद् मन्त्री पार्थक्येन निर्दिष्टः—

विभज्यामात्यविभवं देशकालौ च कर्म च
अमात्याः सर्व एवैते कार्याः स्युर्न तु मन्त्रिणः।
(१।८)

कौटल्येनोक्तम् (१।१०) अमात्याः उपधाद्वारा परीक्षणीयाः। नीतिवाक्यामृते (मन्त्रिसमुद्देशः १४) उपधा इत्थं लक्षिता "धर्माधर्मकामेषु व्याजेन परचित्तपरीक्षणमुपधा।" कामन्दकेन (४।२७) उपधा एवं व्याख्याता—उपेत्य धीयते यस्माद् उपधा इति ततः स्मृता। उपाया उपधा ज्ञेयास्तयामात्यान् परीक्षयेत्॥

मन्त्रिणां संख्याविषयेऽस्ति वैमत्यम्। मनुमतानुसारं द्वादश, बार्हस्पत्यमतानुसारं षोडश, औशनसमतानुसारं विंशतिः मन्त्रिणः। कौटल्यस्तु 'यथा सामर्थ्यम् (आवश्यकतानुसारम्) मन्त्रिणां संख्यां स्वीकरोति (कौ० १।१५; कामन्दक० ११।६७-६८)। दशरथस्य अष्टमन्त्रिणः बालकाण्डे निर्दिष्टाः (७।२-३)। मानसोल्लासानुसारम् (२।२।५७) सप्तभिः अष्टभिर्वा मन्त्रिभिर्भवितव्यम्। शिवाजीमहोदयस्य अष्टौ प्रधानानि एवमासन्—मुख्यः प्रधानः (प्रधानमन्त्री) पन्तः अमात्यः (वित्तमन्त्री), पन्तः सचिवः (महालेखपरीक्षकः), सेनापतिः, मन्त्री (राज्ञः निजसचिवः), सुमन्तः (परराष्ट्रसचिवः), पण्डितावः (धर्माध्यक्षः), न्यायाधीशश्च। राजतरङ्गिण्याम् एत एव मन्त्रिणः उल्लिखिताः। शुक्रनीतिसारे प्राप्तायाः नामावल्याः प्रयोगः शिववीरस्य अष्टसु प्रधानेषु अभूत्। शान्तिपर्वणि ईदृग् विवरणं लभ्यते।

चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकान् शुचीन्।
क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः॥
वैश्यान् वित्तेन सम्पन्नानेकविंशतिसंख्यया।
त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके॥
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा।
पञ्चाशद् वर्षवयसं प्रगल्भमनसूयकम्॥
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम्।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम्॥

वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥

(८५।७-१२)

अनेन विवरणेन वस्तुस्थितिः प्रकाशम् आयाति। सचिवानां संख्या सप्तत्रिंशत् मन्त्रिणां च अष्ट। न्यूनातिन्यूनं त्रिभिर्मन्त्रिभिर्भाव्यम्। रामायणे रामः भरतम् अपृच्छद् यत् किं त्रयः चत्वारो वा मन्त्रिणः तेन परामृष्टाः (२।१००।७१)? कौटल्योऽपि ईदृशमेव मन्त्रिमण्डलं निर्दिशति—"मन्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत्" (१।१५।३७)। त्रयाणां चतुर्णां सप्तानां वा मन्त्रिणां मण्डलेन भवितव्यमिति उपपादयता नीतिवाक्यामृतकृता (मन्त्रिसमुद्देशः) उक्तं यद् अतोऽधिकानां मन्त्रिणां करणे निर्णयस्य सर्वसम्मतिः सन्दिग्धा भवति। एतेन विवेचनेन स्पष्टं यत् त्रयाणां चतुर्णां वा सङ्कटनं मन्त्रिमण्डले यत्र नीतिविषयको निर्णयः भवति। द्वितीया मन्त्रिपरिषद् अस्ति अत्र अष्ट, ततो अधिका वा सदस्याः भवन्ति। सर्वतो महत् सङ्कटनम् अमात्यमण्डलस्य भवति, यत्र सप्तत्रिंशत् ततोऽधिका वा सदस्याः भवन्ति।

अमात्ययोग्यताविषये सर्वेषाम् आचार्याणां प्रायः मतैक्यमस्ति।[1] गुणानां न्यूनाधिकत्वम् आश्रित्य कौटल्यः अमात्यान् त्रेधा विभाजयति—"अतः पादार्धगुणहीनौ मध्यमावरौ।" मन्त्रिणां गुणाः शान्तिपर्वणि इत्थम् उक्ताः—

कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः।
सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति ॥
ज्ञानविज्ञानसम्पन्नः प्रकृतिज्ञः परात्मनोः।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति।
सत्यवाक् शीलसम्पन्नो गम्भीरः सत्रपो मृदुः ॥
पितृपैतामहो यः स्यात् स मन्त्रं श्रोतुमर्हति।

(८३।४१-४३)

---

१. कौ० १।६; मनु० ७।५४; याज्ञवल्क्य० १।३१२; काम० ४।२५-३०; शा० प० ११८।२-३; ८०।२५-२८; रामा० बाल० ७।७-१४; अयोध्या० १००।१५; रा०नी० प्र० पृ० १३-१४; अग्निपु० २३६।११-१५; नीतिवा० पृ० १०८; मानसोल्लासः २।२।५२-५६; राजधर्मकौ० पृ० २५१-२५४।

पौरजानपदा यस्मिन् विश्वासं धर्मतो गताः ।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥
(८३।४६)

इदमवधेयं यद् उपर्युक्तवचनं मन्त्रिमण्डलविषयकम्। वस्तुतः भीष्मः "मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः" इत्याह। इदमपि स्वीकृतं यद् वंशानुगत एव मन्त्री भवेद्[1] येन राजा सहसा तं मन्त्रिपदात् निष्कासयितुं न प्रभवेत्। परन्तु एतद्रीत्या अयोग्योऽपि पुरुषः वंशानुगतमाहात्म्यात् मन्त्रिपदं कदाचिल्लभेत। यदि एतत्कथ्येत यद् वंशानुगतोऽपि पुरुषः तदैव मन्त्रितामासादयितुं शक्नोति यदा सुयोग्यो भवति तदा योग्यत्वमेव अस्तु मन्त्रित्वे प्रयोजकम्; कृतं वंशानुगतत्वेन; यदि वंशानुगतवंशाननुगतौ द्वावपि योग्यौ स्यातां तदा वंशानुगत आदरणीय इत्यन्यत्। एतद्विषये राजनीतिप्रकाशिकायाः उद्धरणम् उल्लेखनीयमस्ति—"मत्स्यपुराणेऽपि। गुणहीनानपि तथा विज्ञाय नृपतिः स्वयम्। कर्मस्वेव नियुञ्जीत यथायोग्येषु भागशः। अत्रायं वाक्यार्थः। यदि मौलाः कुलीना अपि तथा पितृपैतामहपदयोग्यगुणहीनास्तथाविधगुणहीनानपि विज्ञाय यथायोग्येष्वेव कर्मसु स्वयं भागशः कर्मविभागेन नियुञ्जीत न तु तत्तत्पितृपैतामहपदेषु तत्र तत्र तेषामयोग्यत्वात्" (पृ० १७६)। जैनसिद्धान्ते वर्णव्यवस्था अनादृता, परन्तु सोमदेवसूरिः नीतिवाक्यामृते लिखति—'ब्राह्मणक्षत्रियविशामेकतमं स्वदेशजमाचाराभिजनविशुद्धमव्यसनिनमव्यभिचारिणमधीताखिलव्यवहारतन्त्रमस्त्रज्ञमशेषोपाधिविशुद्धं च मन्त्रिणं कुर्वीत। समस्तपक्षपातेषु स्वदेशपक्षपातो महान्" (पृ० १०८)।

मन्त्रिमण्डलस्य मन्त्रणायाः गोपनीयता विशेषतः प्रतिपादिता[2] "मन्त्रपूर्वाः सर्वारम्भाः। तदुद्देशः संवृतः कथानामनिस्रावी पक्षिभिरनालोक्यः स्यात्। श्रूयते हि शुकसारिकाभिः मन्त्रो भिन्नः श्वभिरन्यैश्च तिर्यग्योनिभिः" (अ० शा० १।१५)। "नागकुलजन्मनः सारिकाश्रावितमन्त्रस्य आसीन्नाशो नागसेनस्यपद्मावत्याम्। शुकश्रुतरहस्यस्य च श्रीरशीर्यत श्रुतवर्मणः श्रावस्त्याम्" (हर्ष चरितम् ४)। "नास्यच्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात्। गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः" (शा० ८३।४९)। मन्त्राणां गोपनीयत्वम् इव इदमप्यावश्यकम् यत् सर्वं

---

१. मनु० ७।५४; याज्ञ० १।३१२; रामा० २।१००।२६; सभापर्व ५।४३; अग्नि० २२०।१६-१७; शुक्र० २।११४; मत्स्य० २१५।८३-८४।

२. मनु० ७।१४७-१५०; याज्ञ० १।३४४; काम० ११।५३; ११।६५-६६; अग्निपु० २२५।१६; मानसोल्लासः २।६।७००-७०५।

कार्यजातं मन्त्रिपरिषदेव निर्णयेत् । तत्स्वीकृतिं विना किमपि कार्यं विधातुं राजा नोत्सहेत । यदि निर्णयः सर्वसम्मत्या स्वीकृतो भवति तदा तु अतीव शोभनम् । सर्वसम्मतेरभावे तु बहुमतम् आश्रयणीयम् । राज्ञा कथमपि नोपेक्षणीयाः । ते न केवलं राज्ञो मित्राणि अपि तु गुरवोऽपि—

सज्जमानमकार्येषु निरुन्ध्युर्मन्त्रिणो नृपम् ।
गुरूणामपि चैतेषां शृणुयाद् वचनं नृपः ॥
नृपस्य ते हि सुहृदस्त एव गुरवो मताः ।
य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥
सज्जमानमकार्येषु सुहृदो वारयन्ति ये ।
सत्यं न ते हि सुहृदो गुरवो गुरवो हि ते ॥

( काम० ४।३९-४३ )

राज्ञः जनपदस्य च हितैषिणः दुष्प्राप्यस्य मन्त्रिणः विषये इत्थम् सूक्तिः—

"नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः । इति महति विरोधे वर्तमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ।" इदमत्र ध्येयम्—यदेतद् वचनं तादृशस्य दुष्टस्य राज्ञ एव विषये यः जनहिताद् अन्यदेव स्वहितं मन्यते । जनहितमेव स्वहितं मन्यमानस्य आदर्शभूतस्य राज्ञः कृते कथमेतद् वक्तुं शक्यम् ?

मनुना एतदपि निर्दिष्टं यन्मन्त्रिमण्डले के के विषयाः विचारणीयाः—

तैः सार्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मनः ॥
सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥

( ७।५६-५८ )

याज्ञवल्क्येनाप्येवमेव उक्तम् ( १।३१२ ) । एतद्विषये कामन्दक इत्थमाह—
मन्त्रो मन्त्रफलावाप्तिः कार्यानुष्ठानमायतिः । आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनम् । व्यसनस्य प्रतीकारो राजराज्याभिरक्षणम् । इत्यमात्यस्य कर्मेदं हन्ति स व्यसना-

न्वितः ( काम० १३।२३-२४ )। अग्निपुराणेऽपि ( २४१।१६-१८ ) इत्थमेव निर्दिष्टम्। नीतिवाक्यामृते एतानि अमात्यकार्याणि उक्तानि—"आयोऽव्ययः स्वामिरक्षा तन्त्रपोषणञ्चामात्यानामधिकारः" ( अमात्यसमुद्देशः )।

याज्ञवल्क्यानुसारम् ( १।३४३ ) यदि राज्यं पूर्णतया मन्त्रमेव आश्रयते तदा फलावाप्तिपर्यन्तं मन्त्रो राज्ञा गोपनीयः। फलेनैव मन्त्रो अनुमेयः स्यात्। तदुक्तं दिलीपवर्णनावसरे कालिदासेन—"तस्य संभृतमन्त्रस्य गुप्ताकारेङ्गितस्य च। फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव।" मन्त्रस्य गोपनीयतायाः माहात्म्यं कौटल्येन इत्थम् उपवर्णितम्-"एकं हन्यान्न वा हन्यादिषुः क्षिप्तो धनुष्मता। प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि" ( अ० शा० १०।६ )। अयोध्याकाण्डे सभापर्वणि च मन्त्रस्यैव विजयप्रयोजकता उक्ता—"मन्त्रो विजयमूलं हि राज्ञां भवति राघव" ( अयोध्या १००।१६ )। "विजयो मन्त्रमूलो हि राज्ञां भवति भारत" ( सभा० ५।२७ )। कौटल्येन नीतिवाक्यामृतकृता च मन्त्रफलम् एवं प्रतिपादितम् "अनुपलब्धस्य ज्ञानम् उपलब्धस्य निश्चयबलाधानमर्थद्वैधस्य संशयोच्छेदमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रसाध्यमेतत्। तस्मात् बुद्धिवृद्धैः सार्धमासीत् मन्त्रम्" ( अ० शा० १।१५ )। "उपलब्धस्य निश्चयो निश्चितस्य बलाधानम्" इत्युक्तम् नीतिवाक्यामृते। कौटल्येन मन्त्रस्य पञ्चाङ्गता उक्ता—"कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः" ( अर्थ० १।१५ )। कामन्दकेनापि स्वस्य आचार्यः अनुसृतः—"सहायाः साधनोपाया विभागो देशकालयोः। विपत्तेश्च प्रतीकारो मन्त्रः पञ्चाङ्ग इष्यते" ( ११।५६ )।

## पुरोहितः

पुरोहितपदं[1] 'पुरोधा[2]' इति पदं वा बृहस्पतिसत्रद्वारा लभ्यते।[3] पुरोहितः ऋत्विग् यज्ञस्य आचार्यः इत्येते भिन्नाः। पुरोहितः आर्त्विज्यमपि कर्तुं शक्नोति।[4] वस्तुतः स धार्मिकविषये राज्ञो निर्देशकः।[5] धर्मस्य सर्वकार्यविषयतया सर्वोच्चतया च तन्निर्देशकस्य पुरोहितस्य स्थानम् अतीव उच्चम्। धार्मिक-

---

१. ऋग्वेद० ७।६०।१२; ८।३।४।

२. अथर्व० ५।२४।१।

३. तै० ब्रा० २।७।१।२; पञ्चविंश० १७।११।४; २५।१।१।७; काठ० सं० ३७।७।

४. ऋग्वेद० ५।१।१।११३-११४; ५।१।२।७८।

५. ऋग्वेद० ५।१।१।११३।

विषयेषु इव राजनीतिकार्थिकसामाजिकादिष्वपि कार्येषु निर्देशकत्वं तस्य उपलभ्यते ।[१] एतेन राज्ञः कृते पुरोहितस्य परमावश्यकत्वं सिध्यति । राजा जनकल्याणविषये पुरोहितस्य निर्देशम् अपेक्षमाणः आसीत् ।[२] पुरोहितेन भारद्वाजेन राज्ञो दिवोदासस्य प्राणाः सङ्ग्रामे रक्षिताः ।[३] राज्ञा सार्धं पुरोहितोऽपि युद्धस्थलं गच्छति स्म ।[४] एवमेव वशिष्ठेनापि सुदासस्य साहाय्यम् आचरितं यदा विश्वामित्रेण सुदासः आक्रान्तः आसीत् ।[५] एषा परम्परा भारतवर्षे सदैव आसीत् । एतद्विषये हिन्दूराजतन्त्रावसानं यावत् प्रमाणानि लभ्यन्ते । परं नेदम् अस्य तात्पर्यं यन्नृपः पुरोहितस्य दासः । विषयविशेषेषु राजपुरोहितयोः वैमत्यं संघर्षश्चापि भवतःस्म ।[६] इत्यपि यत्र तत्र दृश्यते । यद्यपि कार्यविशेषे राजपुरोहितयोः संघर्षः क्वचिद् दृश्यते तथापि सामान्यतया एतत् निर्विवादं यद् राजनीतिककार्यविषयेऽपि पुरोहितस्य अधिकारा जनकल्याणविषयकाः आसन् । फलतः पुरोहितस्य पदं धार्मिकम् इव राजनीतिकमप्यभवद् येन सः शक्तिशाली अभूत् । क्वचिद् ईदृशान्यपि उदाहरणानि दृश्यन्ते यद् राज्ञैव पुरोहितस्य कार्यं सम्पादितम् ।[७] एतस्य आशयः पाश्चात्त्यैः इत्थमवगतः यद् राजा धर्मविषये शासनविषये च स्वयमेव प्रमाणम् अतएव निरङ्कुशो भवति । वस्तुतः राज्ञः पौरोहित्याचरणस्य यानि उदाहरणानि लभ्यन्ते न तैः धार्मिकविषयेषु राज्ञा पुरोहितस्थानं गृहीतमिति सिध्यति अपि तु राजनीतिके क्षेत्रे पुरोहितस्य यत् कर्त्तव्यं तद् राज्ञैव अनुष्ठितमित्येव तत्र तात्पर्यम् । तद्यथा विश्वामित्रेण पौरोहित्यं सेनापतित्वञ्च उभयं निर्वाहितम् इति मनुस्मृतौ उल्लिखितम् ।[८] एतदेवाधृत्य आधुनिका विद्वांसः सेनापतेः पुष्यमित्रस्य समर्थनार्थं द्वितीयशताब्द्यां मनुस्मृतेः रचना अभूदिति मन्यन्ते ।

---

१. ऋग्वेद० ५।१; २।६०।२१४ ।

२. वाज० स० २२।२२; तै० सं० ७।५।१८; मै० सं० ३।१२।६; काठ०सं० ५।५।१४; ऋगवेद० १०।६८; ऐ० ब्रा० ७।२४,२५ ।

३. अथर्ववेद० ३।१८; ऋगवेद० ७।१८।१३; पञ्च० ब्रा० १५।३।७ ।

४. ऋग्वे० ३।५३।१२, १३; १।१२६।४; ७।८३।४; १०।३८।१०३ ।

५. ऋग्वेद० ७।१८ ।

६. ऐ० ब्रा० ७।२७।३५; जै० ब्रा० ३।१६७; ऐ० ब्रा० ७।२७।३५; पञ्चविंश० ६।६।८; तै० सं० २।२।११।२; मै० सं० १।६।५; २।१।६; ३।३।१०; काठकसंहिता २६।५; मै० सं०३।३।१० ।

७. ऋग्वेद० १०।६८; द्रष्टव्यम् यास्क, निरुक्त० २।१० ।

८. पञ्च० ब्रा० २१।१२; ऐ० ब्रा० ७।१७।६।७ ।

राजा श्रोत्रियश्चेति उभावपि धृतव्रतौ कथितौ ।[1] तेन उभावपि अन्योन्यम् आद्रियेताम् इत्यावश्यकम्—"तस्माद् क्षत्रियेण कर्म करिष्यमाणेन उपसर्त्तव्य एव ब्राह्मणः । स है वास्मै तद् ब्रह्मप्रसूतं कर्मर्ध्यते" ( श० ब्रा० ४।१।४।६ ) । पुरोहितं विना न राज्ञः स्थितिः ।[2] देवानां कृतेऽपि पुरोहितः आवश्यकः आसीत् "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणाम्" ( तै० सं० ११।५।१।१ ) । अग्निः पुरोहिततया निर्दिष्टः ।[3] शतपथब्राह्मणे "यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति" ( ५।४।४।१५ ) । एतेन विवेचितेन स्पष्टं यत्पुरोहितस्य पदं प्रतिष्ठितं शक्तिसम्पन्नं च आसीत् । अयं न केवलं धार्मिककार्याणामेव कारयिता अपि तु यथा समाजकल्याणं भवेत् तथा निर्देशकोऽपि आसीत् । ऐतरेयब्राह्मणे ( ४०।२ ) पुरोहितः 'राष्ट्रगोप्ता' उक्तः । एतदाशयकमेव शुक्रनीतिसारेऽपि उक्तं तत्र हि पुरोहितः 'राष्ट्रभृत्' कथितः ( २।७४ ) । "भारतजनाः" विश्वामित्रेण रक्षिताः ।[4] तेन हि राजानः युद्धोन्मुखी कृताः स्वयं च युद्धक्षेत्रे उपस्थितम् ( ऋ० ६।७५।१७ ) ।

उत्तरवर्त्तिसाहित्ये इत्थं पुरोहितविषये व्यवस्था—"वेदेतिहासधर्मशास्त्रार्थकुशलं कुलीनमव्यङ्गं तपस्विनं पुरोहितं वरयेत्" ( विष्णुधर्मसूत्रम् ३।७० ) । याज्ञवल्क्यस्मृतौ इत्थम् उक्तम्—"पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् । दण्डनीत्याञ्च कुशलमथर्वाङ्गिरसे तथा" ( याज्ञ० १।३१३ ) । "पुरोहितम् उदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणामथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत । तमाचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनमिव चानुवर्तेत ।········ ब्राह्मणेनैधितं क्षत्रं मन्त्रमन्त्राभिमन्त्रितम् । जयत्यजितमत्यन्तं शास्त्रानुगतशस्त्रितम्" ( कौ० १।९ ) । "राजा पुरोहितं कुर्यादुदितम् ब्राह्मणं हितम् । कृताध्ययनसम्पन्नमलुब्धं सत्यवादिनम् ( सरस्वतीविलासे पृ० २० कात्यायनवचनम् ) ।

---

१. ऋग्वेद० १।२५।८,१०; १।२५।६; निषसाद धृतव्रत इति धृतव्रतौ वै राजा·· एष च श्रोत्रियश्च तौ ह वै द्वौ मनुष्येषु धृतव्रतौ ( शत० ब्रा० ५।४।४।५ ); द्वौ लोके मनुष्येषु धृतव्रतौ ( गौ० ८।१ ); मनु० ९।३२२; नारद० प्रकीर्णक० ४२ ।

२. अर्धात्मो ह वा एष क्षत्रियस्य यत्पुरोहितः—ऐ० ब्रा० ३४।८; न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरोदधीत देवा मेऽन्नमदन्निति । ऐ० ब्रा० ४०।१; तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं तस्माद्राजन्यो ब्राह्मणवानत्यन्यं राजन्यम् । तै० सं० ५।१।१०।३ ।

३. ऋग्वेद० १।१।१; १।४४; ३।२।८ ।

४. विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम्—ऋ० ३।५३।१२ ।

राज्याङ्गपुरोहितः कर्मकाण्डीयः पुरोहितश्च इत्युभावपि भिन्नौ।[१] राज्यसम्बद्धः पुरोहितः मन्त्रिसमः।[2] कौटल्येन ईदृशः अधिकारी निर्दिष्टः यः धार्मिकेण दैवेन वा कोपेन सम्बद्धोऽस्ति। दैवान्यष्टौ महाभयानि। अग्निरुदकं व्याधिर्दुर्भिक्षं मूषिका व्यालाः सर्पाः रक्षांसि च इति। तेभ्यो जनपदं रक्षेत्" (अर्थ० ४।३)। इत्थमेव सोमदेवेनापि व्यवस्थापितम्—"अमानुष्योऽग्निवर्षमतिवर्षं मरकी दुर्भिक्षं सस्योपघातो जन्तुसर्गो व्याधिर्भूतपिशाचशाकिनीसर्पव्यालमूषकाश्चेत्यापदः" (नी० वा० पृ० १६०)। इदृगेव मन्त्रिविभागः अशोकेन देवताध्यक्षरूपेण स्थापितः यस्य सम्बन्धः राज्यधर्मेण नैतिकतया च आसीत्। मनुमतानुसारम् (७।७८) श्रौतसूत्रीयाणां गृह्यसूत्रीयाणां च सर्वेषां विधीनाम् अधिकाराः पुरोहितस्य आसन्। आपस्तम्बमतानुसारम् (२।५।१०।१४–१७) धर्मविषयकाणामपराधानां निर्णेता दण्डविधाता च पुरोहितः। वशिष्ठकथनानुसारम् (१९।४०–४२) यदि निरपराधः दण्ड्यते तदा प्रायश्चित्ततया राजा एकदिवसीयं व्रतं पुरोहितश्च दिनत्रयीयं व्रतं कुर्यात्।

सभायाः अङ्गदशके पुरोहितः न गण्यते परन्तु राजा विद्वद्भिः ब्राह्मणैः मन्त्रिभिः प्राड्विवाकेन पुरोहितेन च सार्धं सभायां प्रविशेदिति निर्देशः लभ्यते।[3] निर्णयविषये मन्त्रिणः[4] इव पुरोहितोऽपि राज्ञा आदरणीयः[5]। विष्णुधर्मोत्तरे पञ्चानां विधीनां ज्ञानं पुरोहितस्य कृते आवश्यकमित्यभ्यधायि—"पञ्चकल्पविधानज्ञं वरयेत्तु सुदर्शनम्। नक्षत्रकल्पौ वैतानस्तृतीयः संहिताविधिः। चतुर्थः शिरसा कल्पः शान्तिकल्पस्तु पञ्चमः। पञ्चकल्पविधानज्ञमाचार्यं प्राप्य भूपतिः। सर्वोत्पात् प्रशान्तात्मा भुनक्ति वसुधां चिरम्" (वि० २।५।३-५)। एतेन विवेचितेन राज्ये पुरोहितस्य किं स्थानमिति स्फुटं भवति।

## राष्ट्रम्

वेदेषु शास्त्रेषु नीतिग्रन्थेषु च राष्ट्रशब्दस्य योऽर्थः निर्दिष्टः सः न साम्प्रतिकं राष्ट्रपदार्थं संवदति। वेदाद्यनुसारं राज्यं जनपदः देशो वा राष्ट्रशब्दस्य अर्थः। वेदे

---

१. मनु० ७।७८; याज्ञ० १।३१४; मानसोल्लासः २।२।६०; राजनीतिप्रकाशिका पृ० १६–१७। वि० ध० सू० २।५; अग्निपु० २३६।१६-१७।

२. याज्ञवल्क्यस्मृतौ १।३५३ विज्ञानेश्वरः; शु० नी० २।६६–७०।

३. १ याज्ञवल्क्यस्मृतिः १।३५३; विज्ञानेश्वरः। शु० नी० २।६९-७०।

४. याज्ञ० १।३१२।;

५. याज्ञ० १।३१३।

बहुत्र राष्ट्रशब्दः प्रयुक्तः ।[१] सायणमहीधरप्रभृतिभिः व्याख्यातृभिश्च उपर्युक्ता एव राष्ट्रशब्दस्य अर्थाः स्वीकृताः ।[२] मन्वादिभिः राज्यं सप्ताङ्गम् उक्तम् ।[३] तत्र च अङ्गसप्तके राष्ट्रमपि एकम् अङ्गम् । अत्र राष्ट्रशब्दस्य जनपदार्थकत्वम् । मेधातिथिः जनपदसमूहमेव राष्ट्रं कथयति । एवं च राष्ट्रशब्दस्य क्वचिद् राज्यार्थकतापि स्वीकृता ।[४] मनुयाज्ञवल्क्य[४]पराशरादिभिः[६] राष्ट्रशब्दस्य देशपर्यायता प्रति-

---

१. ऋग्वेदसंहिता 'यम द्विता राष्ट्र क्षत्रियस्य" ( ४।४२।१ ); "युवो राष्ट्रं बृहदिन्वति द्यौः" ( ७।८४।२ ); "अहं राष्ट्री सङ्गमनी वसूनाम्" ( १०।१२५।३ ), "राजा राष्ट्राना देशो नदीनाम्" (७।३४।११) तथा (१०।१०६।३; १०।१२४।४; १०।१७३।१-२; १०।१४३।५; १०।१७४।१; ८।१००।१०; ६।४।५ ), यजुर्वेदवाजसनेयिसहिता "वृष्ण उर्मिरसि राष्ट्रदा राष्ट्रं मे" ( १०।२ ); "पृष्ठी मे राष्ट्रमुदर " (२०।८); ' प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे (२०।१०) एवम् (१०।३, ६।२३; १२।११) तथा अथर्वसंहिता–ये देवा राष्ट्रभृत. (१३।१।३५); "आ ते राष्ट्रमिह रोहितः ( १३।१।५ ); "आत्वागन् राष्ट्र सहवचस." ( ३।४।१ ); समहमेषा राष्ट्र स्यामि ( ३।१६।२ ); "तद्वै राष्ट्रमास्रवति" (५।१९।८); "ऋत सत्य तपो राष्ट्रम्" ( ११।७ १७ ); 'उत्तर राष्ट्र प्रजयः" (१२।३।१ ); "ब्रह्म च क्षत्र च राष्ट्रं च" ( १२।५।८ ) इत्यादय· ।

२. द्विता—क्षितिस्वर्गभेदेन द्वित्वापन्न राष्ट्रम् ( ऋ० ४।४२।१ ), राष्ट्र राज्यम् ( ऋ० ७।८४।२ ), "राष्ट्रे स्वकीये देशे" ( महीधर यजुः ६।२३ ); 'राष्ट्रं जनपदसमूहः" ( उव्वटः यजुः १२।११ ); "राष्ट्रदा राष्ट्रदात्र्यः" ( महीधरः यजुः १०।३ ); राष्ट्रं राज्यम् ( अथर्व० ३।४।१ ); "राष्ट्रं जनपदम्" ( अथर्व० ३।३६।२ ) इत्यादयः ।

३. स्वाम्यमात्यौ पुर राष्ट्रं कोशदण्डौ सुहृत्तथा । सप्तप्रकृतयो ह्येता सप्ताङ्ग राज्यमुच्यते" ( मनु ६।२९४ ) अत्र कुल्लूकभट्टः राष्ट्रं देश, मेधातिथिः राष्ट्र जनपदा ।"

४. "उपरुद्ध्यारिमासीद् राष्ट्रं चास्योपपीडयेत्' ( मनु० ७।१९५ ) अत्रटीका—अस्य च देशमुत्सादयेदिति ।

५. ये राष्ट्राधिकृतास्तेषां चारै र्ज्ञात्वा विचेष्टितम् । साधून सम्मानयेद्राजा विपरीतांश्च घातयेत्" ( राजधर्म०१।३३८ ); "अन्यायेन नृपो राष्ट्रात्स्वकोश योऽभिवर्धयेत् । सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः" ( १।३४० ) ।

६. "जारेण जनयेद्गर्भं मृतेऽव्यक्ते गते पतौ । तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम्" ( अ० १० ) । माधवटीका—अत एव पतितां तादृशी स्वराष्ट्रादुत्सार्य परराष्ट्रे प्रेषयेत् ।

पादिता। कामन्दकोऽपि राष्ट्रस्य राज्याङ्गता स्वीकृतवान्।[1]

दीप्त्यर्थकाद् राज्धातोः कर्मणि ष्ट्रन् प्रत्यये राष्ट्रशब्दो निष्पद्यते। तेन विविधैः उपकरणैः दीप्तः सज्जितः देश एव राष्ट्रपदार्थः।[2] करणे ष्ट्रनि तु येन देशेन करणभूतेन राजा राज्यं वा राजते स देशविशेषः राष्ट्रपदवाच्यः।[3] देशस्य दीप्तिश्च धार्मिकाणां सांस्कृतिकानां शिष्टभाषाभाषिणां च जनानां स्थितिरेव। अर्थाद् ईदृशैः जनैः अलङ्कृतः एव देशः दीप्तः इति कथयितुं शक्यते, अतः स एव राष्ट्रव्यपदेशभाक्।

उच्यते च यथा नानाविधैः पुष्पैः मण्यादिभिश्च माला शोभते एवं नानाजातीयैः विविधधर्मैः विविधभाषादिभिश्च देशः अलङ्क्रियते यद्यपि एवंविधस्य विभिन्नजातीयादीनां सङ्करस्य उपयोगिता प्रमाणान्तरैः वक्तुं शक्या तथापि राष्ट्रपदव्युत्पत्त्यनुसारं नैतल्लभ्यते। यतः परमेश्वरस्य विराट्स्वरूपे नानाजातीयानां नानादेशानां च अस्तु समावेशः। अत एव स ईश्वरः विविधै रूपैः राजमानत्वात् विराड् इत्युच्यते।

कौटल्यानुसारं धार्मिकजनाः विद्वान् राजा च इत्यादयः राष्ट्रपदार्थे समाविशन्ति। एवमेव कामन्दकोऽपि मनुते। कौटल्येन अनेकत्र देशे एव राष्ट्र-

---

१. स्वाम्यमात्यश्चराष्ट्रश्च दुर्गकोशो बल सुहृत्।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते॥ कामन्दकीय (४।१)।
अत्रैव ४८ श्लोकतः ५४ श्लोकपर्यन्तं राष्ट्रविषयकनिरूपणं वर्तते। जनपदपर्यायतया राष्ट्रशब्दः प्रयुक्तः।

२. राजृ दीप्तौ (राष्ट्रम्) ष्ट्रन्निति ष्ट्रन् नितुत्रेति इणिनषेधः इति माधवीयधातुवृत्तिः।

३. ष्ट्रन्प्रत्ययः "धः कर्मणिष्ट्रन् तथा दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" इति द्वाभ्यां सूत्राभ्यां भवति। अतोऽन्यत् ष्ट्रन् प्रत्ययविधायकं सूत्रं नास्ति। अतो राजते शोभतेऽनेन इति विग्रहे राजधातोः करणे ष्ट्रनि अनुबन्धलोपे सेट्कत्वात् प्राप्तस्य इटः "तितुत्रथसिसुसरकसेषु च" इत्यनेन निषेधे "व्रश्चभ्रस्ज" इत्यादिना जस्यषत्वे राष्ट्रशब्दः सिध्यति। स्त्रियां षित्वात् ङीपि राष्ट्री इत्यस्य स्वामिनी इत्यर्थः। अत्र राजते द्योत्यतेऽनेन देशेन इति राष्ट्रम्। राजते शोभते अनया स्वामिन्या इति राष्ट्री। अत्र उभयत्र ष्ट्रन् इति। योगविभागेन करणे ष्ट्रन् प्रत्ययः"।

शब्दः प्रयुक्तः।[1] राष्ट्रे कानि कानि वस्तूनि आवश्यकानि इति प्रतिपाद्य गौणवृत्त्या तेषां वस्तूनामपि राष्ट्रपदार्थत्वं कौटल्येन स्वीकृतम्। एतेषु च राष्ट्रस्य कृते आवश्यकेषु वस्तुषु कृषिः, धान्यम्, उपहाराः, करः, वाणिज्यलाभः, नदीतीर्थलाभः, पत्तनादिजन्यलाभः इत्यादयः गणिताः।[2] राष्ट्रे येषां वस्तूनामावश्यकत्वं तैर्विशिष्ट एव देशः राष्ट्रव्यवहारमर्हति। पर्वतनदीसमुद्रादिभिः भौगोलिकैः साधनैः यस्य रक्षा सुशक्या स देशः "स्वतो रक्षितम्"स्वारक्षः इत्युच्यते। यत्र देशे जनाः सुखं जीवेयुः सः "स्वाजीवः" इति उच्यते। शत्रुद्वेषी सामन्तवर्गः यस्य राज्ञो वंशगतः तेन राज्ञा अधिष्ठितो देशः "शक्यसामन्त" इति कथ्यते। इत्थं च यो देशः पङ्कपाषाणमयभूमिविषमकण्टकश्रेणीव्यालमयाटव्यादिभिः रहितः सः कमनीयः। कृषिखनिजद्रव्यादिभिः युक्तः जनानां हितावहः पशुपालनयोग्यभूमियुक्तः विविधैः पशुभिः सम्पन्नः यत्र च यथासमयं वृष्टिर्भवति, यत्र च विविधाः जलमार्गाः स्थलमार्गाश्च स देशो राष्ट्रम्। अद्भुतैः पवित्रैः तीर्थादिभिः समलङ्कृतः, बुद्धिमता धार्मिकेण च राज्ञा अधिष्ठितः वैश्यशूद्रादिभिः समेतः, राजभक्तैः धार्मिकैश्च

---

१. ब्राह्मणकन्यामभिमन्यमानः सम्बन्धुराष्ट्रो विननाश। सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः। कर्षकोदास्थिताः राष्ट्रे राष्ट्रान्ते व्रजवासिनः। (राष्ट्रान्ते राष्ट्रसीमायाम्)। पुरराष्ट्रमुख्यैश्च प्रति संसर्गं गच्छेत्। दुर्गराष्ट्रप्रमाणम् (दुर्गराष्ट्रयोरियत्ताम्) चतुर्दण्डान्तरा रथ्या अष्टदण्डो राष्ट्रपथः। न च बाहिरिकान् कुर्यात् परराष्ट्रोपघातकान् (कितव-वञ्चकनटनर्तकादीन्...पौरान् जानपदांश्च कापथं प्रवर्तयन्)। पुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम्। राष्ट्रविनीतपथं साहस्रः। सर्वज्ञख्यापनं राज्ञः कारयन् राष्ट्रवासिषु। दुर्गराष्ट्रदण्डकोपकम्। राष्ट्रपालमन्तपालं वा स्थापयितुम् (प्रकरण १६२)।

२. "सीता (कृषिः) भागः (धान्यषड्भागः) बलिः (उपहारो भिक्षा वा) करः (फलवृक्षादिसम्बद्धं राजदेयम्) वणिक् (वणिग्द्वारेण देयम्) नदीपालः (तीर्थरक्षकद्वारेण देयम्) तरः (नदीतरणवेतनम्) नावः (नावध्यक्षद्वारेणदेयम्) पट्टनम् (अल्पनगरलभ्यम्) विवीतम् (विवीताध्यक्षद्वारेण देयम्) वर्तनी (अन्तपालद्वारेण लभ्यम्) रज्जुः (विषयपाललभ्यम्) चोररज्जुश्च (चोरग्रहाय ग्राम देयम्) राष्ट्रम् (प्र० २४)। पिण्डकरः, षड्भागः, सेनाभक्तम्, बलिःकरः उत्सङ्गः, पार्श्वम्, पारिहीणिकम्, औपायनिकम्, कौष्ठेयकञ्च राष्ट्रम् (प्र० ३३)

जनैः अध्युषितो देशः राष्ट्रम्।[१] कामन्दकादिभिरपि राष्ट्रविषये इत्थमेव उपवर्णितम्।[२] वाल्मीकिरामायणे[३] अमरकोशे च[४] राष्ट्र इति शब्दोऽन्यार्थे प्रयुक्तः।

राष्ट्रनाम्ना जनपदनाम्ना वा कस्यापि जातिविशेषस्य बहिष्कारः कर्तुं न शक्यते अतः यवनादयः यदा स्वं हिन्दुत्वेन उद्घोषयेयुः तदैव ते राष्ट्रियाः भवितुं शक्नुयुः नान्यथा इत्यादिकं न सिद्ध्यति। समानभाषाभाषिता यदि एकराष्ट्रियतायाः प्रयोजिका स्वीक्रियेत तदा बिहारीबङ्गलाउडियातमिलतेलगुकन्नडमलयालममराठीत्यादिविभिन्नभाषाभाषिषु एकराष्ट्रियता न स्यात्। यतः न तेषां भाषा समानाः। एवम् एकधर्मता एकराष्ट्रियतायाः साधिका इत्यपि वक्तुमशक्यम्। जैनबौद्धवैदिकादिधर्मवादिषु धर्मभेदेऽपि एकराष्ट्रियतायाः सर्वसम्मतत्वात्। ब्राह्मणक्षत्रियादिषु भिन्नजातीयतायाः स्फुटत्वेन एकजातीयता अपि न तत्प्रयोजिका।

शास्त्रेषु एष देशः भारतवर्षनाम्ना अजनाभवर्षनाम्ना च व्यपदिष्टः। ब्रह्मावर्त, आर्यावर्त, काश्मीरकुरुकोशलपाञ्चालमद्रवाल्हीक-आनर्त इत्यादिनाम्ना प्रसिद्धाः प्रदेशविशेषा एतदन्तर्गताः सन्ति। भारतवर्षस्य विस्तारः नवसह-

---

१. मध्ये चान्ते च स्थानवानात्मधारणः परधारणश्चापदि स्वारक्षः, स्वाजीवः शत्रुद्वेषी, शक्यसामन्तः, पङ्कपाषाणोषरविषमकण्टकश्रेणीव्यालमृगाटवीहीनः कान्तः सीताखनिद्रव्यहस्तिवनवान् गव्यः पौरुषेयो गुप्तगोचरः पशुमान्, अदेवमातृकः वारिस्थलपथाभ्यामुपेतः सारचित्रबहुपण्यः दण्डकरसहः कर्मशीलकर्षकः अबालिशस्वामी अवरवर्णप्रायो भक्तशुचिमनुष्य इति जनपदसम्पत् ( कौटलीयार्थशास्त्रम् , प्रकरणम् ९६ )

२. भूगुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृद्धये। तस्माद्गुणवतीं भूमिं भूत्यै नृपतिरावसेत् ॥ ४८ ॥ सस्याकरवती पण्यखनिद्रव्यसमन्विता। गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ॥ ४९ ॥ रम्या सकुञ्जरबना वारिस्थलपथान्विता। अदेवमातृका चेति शस्यते भूविभूतये ॥५०॥ स्वाजीवो भूगुणैर्युक्तः सानूपः पर्वताश्रयः। शूद्रकारुवणिक्प्रायो महारम्भकृषीवलः॥ ५२ ॥ सानुरागो रिपुद्वेषी पीडाकरसहः पृथुः। नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् धनी ॥ ५३ ॥ ईदृग्जनपदः शस्तोमूर्खव्यसनिनायकः। तं वर्द्धयेत्प्रयत्नेन तस्मात् सर्वं प्रवर्तते ॥ ५४ ॥ ( कामन्दकीयनीतिसारः अ० ४ )।

३. राष्ट्राणि नगराणि च ( वाल्मीकि० )

४. राजश्यालस्तु राष्ट्रियः ( अमरकोशः )

स्त्रयोजनपरिमितोऽस्ति। एतद्रीत्या सम्प्रति उपलभ्यमाना सम्पूर्णा पृथिवी एव भारतवर्षे सङ्गृहीता भवति। परन्तु अद्यत्वे भरतखण्डप्रदेश एव भारतनाम्ना व्यपदिश्यते। एतद्देशनिवासी कोऽपि पुरुषः भारतराष्ट्रिय इति वक्तुं शक्यः।

कामन्दकमतानुसारं राज्यस्य मूलं राष्ट्रमेव अतस्तत् सर्वथा रक्षणीयम्—राज्याङ्गानान्तु सर्वेषां राष्ट्राद् भवति सम्भवः। तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं समुन्नयेत् (६।३)। राज्यक्षेत्रफलविषये विस्तरेण विचारितमस्ति। जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम्। रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् (७।६९) इति मनुः। अत्र व्याख्याकारकुल्लूकः— "अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः। स ज्ञेयो जाङ्गलो देशो बहुधान्यादिभिर्युतः। प्रचुरधार्मिकजनं रोगोपसर्गाद्यैरनाकुलं फलपुष्पतरुलतादिमनोहरं प्रणतसमीपव्यास्तव्याटविकादिजनं सुलभकृषिवाणिज्याद्याजीवनमाश्रित्यावासं कुर्यात्।" राजनीतिप्रकाशिकायामपि एवमेव वर्णितम्—"स्वल्पवृक्षोदकपर्वतो बहुपक्षिमृगः प्रचुरवर्षातपश्च जाङ्गलो देशः" इति। याज्ञवल्क्यस्मृतिव्याख्यानावसरे मिताक्षराकृदित्थं लिखति—"यद्यल्पोदकतरुपर्वतोद्देशो जाङ्गलस्तथाप्यत्र सजलतरुपर्वतो देशो जाङ्गलशब्देनाभिधीयते" (१।३२१)। एवंविधा भूमिः राज्यार्थमपेक्षिता इति विषये सर्वेषां सम्मतिः।[1]

मनुवचनानुसारं राष्ट्रवासिनः आर्याः स्युः। विष्णुधर्मोत्तरे (३।५) शूद्राणां विशाम् च निवासस्यप्राशस्त्यम् उक्तम्। मनुः कथयति "यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजम्। विनशत्याशु तत्कृत्स्नं दुर्भिक्षव्याधिपीडितम्॥" (८।२२)। एवंविधमेव निरूपणम् मत्स्यपुराणविष्णुधर्मोत्तरमानसोल्लासनीतिवाक्यमृतप्रभृतिषु ग्रन्थेष्वपि दृश्यते। उपर्युक्ताः सर्वा अपि विशेषताः न राष्ट्रे सम्भाव्यन्ते। अतः कौटल्यस्य एष विचारः—भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्। शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशाद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत्।" (अर्थशास्त्र २।१)।

---

१. याज्ञवल्क्य० १।३२१; काम० ४।५०-५६; विष्णु० ३।४-५;।

# ६

# बौद्धजैनराजनीतिः

## अशोकः

मुकर्जीमहोदयानां सिद्धान्तानुसारं मौर्यराजवंशः राजतन्त्रस्य शक्तिशालिनी संस्था आसीत्। देवानां प्रियः[१] अशोकः राजतन्त्रस्य नूतनं प्रतिमानं स्थापयति। स राजरूपे मगधदेशस्य राजा प्रियदर्शकरूपे जम्बूद्वीपस्य सम्राड् आसीत्। मौर्य-परम्परानुसारं राज्ञि मन्त्रिमण्डले च वैधानिकी सम्प्रभुता आसीत्।[२] अस्यां सरण्यां मन्त्रिणः राज्ञा नियुज्यन्ते स्म, व्यवहारे तैः राज्ञः उत्तरदायित्वम् ऊह्यते स्म। यद्यपि राज्ञः मन्त्रिपरिषदश्च अन्योन्यसम्बन्धे परिवृत्तिर्भवति स्म।[३] अत एव अशोकस्य राजतन्त्रं 'ब्रिटेनीय' नियन्त्रितराजतन्त्रस्य रूसदेशस्य निरङ्कुशायाः जारवंशीय-राज्यपद्धतेश्च मध्यवर्ति कथयितुं शक्यते। भाण्डारकरमहोदयस्य विचारानुसारं राज्ञः महामात्यानां च मध्यस्थीभूता संस्था परिषद् इत्युच्यते स्म। एकतः इयं कर्मचारिषु प्रवर्तमानान् राज्ञः लिखितान् आदेशान् निरैक्षत। अपरतः राज्ञः मौखिकानामादेशानां पालनम् निरीक्षते स्म। एवं परिषद् वस्तुतः राजप्रजयोः परमा मध्यस्था संस्था आसीत्।[४]

अशोकः गौतमबुद्धो वा क्वापि एतन्न कथयति यत् ते नूतनधर्मं नूतनमर्यादां वा प्रतिष्ठापयन्ति। बुद्धमतानुसारं प्राचीनस्य तथा शाश्वतस्य (पौराणधर्म-स्थितिता) यावान् सम्बन्धोऽस्ति सः स्वयं सञ्चालितः (धर्म-नियामता) अस्ति। तथात्वेन भूततया सत्यतया च युक्तोऽस्ति। एतत्सर्वं बाह्यप्रमाणानामगोचरं स्वस्वरूपे स्थितमस्ति (प्रत्यात्मधर्मस्थितिता)। विचारकाः दार्शनिकाः नैतत्स्थापयन्ति अपि तु एतत्प्राप्तिमार्गं निर्दिशन्ति।[५]

---

१. शिलालेखः, १, स्तम्भलेखः, ७। पतञ्जलिना अस्यार्थो भवानिति कृतः। पाणि-निना दीर्घायुष, आयुष्मानिति ( पा० ५।४।१४ ), कात्यायनेन च मूर्ख इति कृतः— देवानां प्रिथ् इति च मूर्खे।

२. परिसा शि० ६। अर्थशास्त्र० १।१५।

३. बरुआ, इन्स्क्रिप्शन्स २ पृ० २१२।

४. अशोक, पृ० ६७।

५. लंकावतारसूत्रम् पृ० १४३-४। कथावत्थु ६।१। रिज् डेविड्स, बुद्धिज्म पृ० ३३।

अशोकः जीवहत्यां निवारयितुं नानाविधं प्रयासं विधत्ते—"अनारम्भो प्राणानाम्"। सः एतदर्थं विधिं निर्मातुं प्रभवति स्म किन्तु समाजतः ईदृशाः अधिकाराः तेन नोपलब्धाः यादृशाः धर्मशास्त्रकारैरधिकृता आसन्। अत एव जीवहत्यां वारयितुं तेन राजाज्ञा प्रसारिता। अस्यां घोषणायां तेन द्वे नूतने धारणे वैधतया विहिते। स्मृतिकारैः स्वयं भगवता बुद्धेन च ईदृशी एका पशुपक्षिणां नामावली प्रस्तुता यस्यां भक्ष्याणामभक्ष्याणां च पशुपक्षिणां गणना आसीत्। परन्तु अशोकेन न कापि एतादृशी नामावली स्वीकृता किन्तु तिर्यङ्मात्रस्य बधो निषिद्धः। स्मृतिकृतां विधानव्यवस्था उपयोगिताम् अनुरुद्धय आसीत्। अशोकेन सा स्वीयादेशेन मानवतावादितां प्रापिता। स्मृतिकारा द्विजजातिपर्यन्तमेव आसन् परन्तु अशोकेन एष नियमः मानवमात्रे प्रवर्तितः।

भारतीयपद्धतौ धर्मो राजनैतिके क्षेत्रेऽपि आदृतो भवति। उपनिषत्सु धर्मः राज्ञोऽपि नियन्ता स्वीकृतः। एतदेव स्वशब्दैः भगवान् गौतमः कथयति "धम्मो रन्नो चक्कवत्तिस्स राजा"। अशोकोऽपि स्वशासने धर्मम् आदर्शं मनुते। "धम्मेन हि पालना धम्मेन विधाने धम्मेन सुक्खियना गोति"। वेदतः उपनिषत्पर्यन्तं वर्णितो धर्मः जीवनस्य नियामकः आसीत्। तस्य अधिलोक अधिज्योतिष अधिप्रज अधिविद्य अध्यात्म इत्येतेषां पञ्चानाम् अङ्गानां जीवदयया कर्त्तव्यनिष्ठया च समम् धर्मे समन्वयो भवति।[1] ईदृशस्य धर्मस्य पालनं राज्ञः परमं कर्त्तव्यम्।[2] अशोकः दयां कर्त्तव्यं सम्मनुते। सहैव प्रजायाः नैतिकीम् उत्तरदायितां स्वीकुर्वन् विधेः नूतनं स्रोतोऽपि न निर्मिमीते।[3]

गौतमः अग्रे कथयति अहं यत् किमपि कथयामि तत्सर्वं सनातनधर्मः अस्ति—"एष धम्मः सनातनः।" सः धर्ममविनाश्यैव तं पूरयितुं प्रयतते। तेन धर्मचक्रं प्रवर्तितं किन्तु देशकालपरिस्थित्याद्यनुसारं धर्मप्रवृत्तौ नूतनं स्वरूपमाहितम्। परिस्थितयः परिवर्तिताः आसन्। अत एव परम्परागते धर्मे परिस्थितिवशात् परिवृत्तिरभूत्। तेषां विधानानि धम्मसुत्तनामके ग्रन्थे संगृहीतानि सन्ति। विनय आणत्ति इत्यादौ नैयायिकप्रशासनस्य मूलानि निहितानि सन्ति। परिस्थितिपरिवृत्तिवशेन विधौ नियमे व्यवस्थायाञ्च परिवर्तनम् अपेक्षितम् आसीत्। परिणामे नागरिकनियमेषु धार्मिकविधिषु च परिवर्तनं सञ्जातम्। एषा परिवृत्तिः धार्मिकक्षेत्रे सामान्यीकरणप्रयासः आसीत्। एतद् रूपे समवेते बुद्धस्य चक्रवर्तिरूपम् धर्मराजरूपञ्चेति द्वे रूपे विशदी भवतः।

---

१. तै० उ० १।१।१; १।३।१; १।११।२।
२. अंगुत्तर० ३ पृ० १४७।
३. मुखर्जी, अशोक पृ० ४७।

अत्रायं विचारः यत् किं तत्र भगवान् बुद्धः ईदृशपरिवर्तनेषु विधेः धर्मस्य वा व्यवस्थापको नाभूत् ? एष एव विचारः अशोकविषयेऽपि जागर्ति। यथा बुद्धः प्राचीनमतं समर्थयितुं चेष्टते तथैव अशोकेनापि जीवदयादिविषयकविधानानि प्राचीनपरम्परानुरोधिकर्त्तव्यतया कथितानि।[1] सः स्वसाम्राज्ये धर्मविधेः प्रसारम् अभिलषति। एतदर्थं मार्गद्वयम् अङ्गीकृतम्—दुवेहि एव आकालेहि धम्मनियमेन च निज्झतिया च। अस्मिन्मार्गद्वये द्वितीयो मार्गः प्रशस्ततया स्वीकृतः। तेन स्वयमेव दयाविषयका नियमाः नियन्त्रिताः—बहूकानि धम्मनियमानि यानि ये कतानि। यदि आयङ्गारमतानुसारमेतत्स्वीक्रियते यद् अशोकेन विधिनिर्माणं न कृतं तदाप्येतत् स्वीकार्यमेव यदाभिः घोषणाभिः विधिनिर्माणे बलमासादितम्।

अशोकस्य शासनप्रणाली एकात्मिका आसीत्। शासनविषयिणी शक्तिः राज्ञि मन्त्रिमण्डले च सन्निहिता आसीत्। राज्ञः प्रतिनिधयः विभिन्नेषु प्रान्तेषु शासनं कुर्वन्ति स्म, परं तेषां सञ्चालनं केन्द्रतः भवति स्म। राज्ञा मन्त्रिमण्डलेन च विधानानि निर्मीयन्ते स्म। विषयस्थापनस्य अन्तिमनिर्णयस्य च अधिकारः राज्ञः एवासीत्। अशोकेन रज्जुकाय प्रान्तीयनैतिकप्रशासनस्य अधिकारः प्रदत्तः। स एव च अन्तिमं न्यायस्थानम् आसीत्। नगराणां प्रधानन्यायाधीशः, 'नगलवियो हालकः नगलकः इत्येतौ आस्ताम्। अर्थशास्त्रे तौ पौर व्यावहारिकः नागरकः इत्युक्तौ।[2] अशोकस्य प्रशासनकाले परिषदः उत्तरकालीना स्थितिः समाप्तिम् अगमत् सापि च राज्ञि एव समाविष्टा।

कार्यपालिकाया अपि प्रमुखो राजा एव आसीत्। मौखिकेषु लिखितेषु वा आदेशेषु मार्गदर्शने नीतिनिर्धारणे प्रशासने च स एव प्रधानः आसीत्। अमात्यपरिषदपि अन्तिमनिर्णयात् पूर्वं तन्निर्णयम् अपैक्षत। तन्निर्दिष्टा नीतिः युक्तिद्वारा प्रारूपिता भूत्वा रज्जुके प्रान्तेषु च प्रसारिता भवति स्म। बौद्धसङ्घा अपि एवमेव निर्दिष्टा आसन्। लिखिताः अध्यादेशाः राजधानीतः अवान्तरमण्डलेषु प्रासार्यन्त। ते अध्यादेशाः शिलासु स्तम्भेषु चापि अङ्किताः। वन्यजातिषु मौखिकानामेव आदेशानां प्रसारणं भवति स्म।

अशोकस्य काले शासनसम्बन्धिनः नियमाः अतिकठोरा आसन्। बन्धन-कारावासादीनां सामान्यतो दण्डाः दीयन्ते स्म। यतः आरण्यकानां दस्यूनां च भीतिर्भवति स्म। तथाविधं कर्त्तव्यमासीत्, येन दण्डद्वारा तद्भयस्य निराकृतिः स्यात्। प्रजा च राज्यकर्मचारिभ्यो विद्रोहिभ्यश्च रक्षिता आसीत्। एवं च जन-

१. एसा चराणा यकिति दिद्यावुसे च एसा हेवं एस कतवीये।

२. अ० शा० १।१२; ३।३६; ४।३।

हितार्थम् अपेक्षितानां सर्वेषाम् अङ्गानां व्यवस्था अपि समपद्यत। जनकल्याणार्थ-निजहृतिना समं पलिनिज्जहति इत्युपरि विशेषरूपेण ध्यानं दीयते स्म। अत्र शिलालेखद्वारा दयायाः विस्तारः उत्सवादिद्वारा स्वोद्देशस्य प्रसारः ( दिव्यानि रूपानि दसयित्पाजनम् ) 'धम्मथम्भानि' वैयक्तिकम् आचरणं सर्वधर्मसहिष्णुता च प्रधाना आसीत्। अप्रमादेनैव उत्थानस्य सम्भवः। उद्यमाः उत्साहाः पराक्रमाश्च उपेक्षिता आसन्।

अशोकेन धर्मचक्रं विशेषनिर्देशने प्रवर्तितम्। सेवकं प्रति व्यवहारः, पित्रोः आज्ञापालनम्, वयस्यान् प्रति सहिष्णुता। ब्राह्मणश्रमणैः एवं साधुसंन्यासिभिः यज्ञीय-कर्मकाण्डनियन्त्रणम् एवं बलिनिषेधादीनां न निरीक्षणञ्च राज्यविभागस्य कार्यम् आसीत्।[1] सम्प्रदायाः सम्प्रदायान्तरस्य विरोधं न कर्तुं शक्ताः परन्तु सम्प्रदायान्तरीय-गुणदोषान् विवेचयितुं शक्ता आसन्।[2] प्रमाणार्थं वैदिकपरम्परायाः प्रतिवादं बौद्धाः कुर्वन्ति स्म। एतेषां कृते प्रचारस्य सौविध्यं दीयते स्म। तैः तथा तत्सहयोगिभिश्च राज्यद्वारा विशेषसंरक्षणं प्राप्यते स्म। अशोकेन विवाहादिसंस्कारावसरे क्रियमाणाः विभिन्नाः कार्यक्रमाः अपि नियमिताः।[3]

अशोकः स्वीयां विचारणां प्रजासु प्रचारयितुं सचेष्टः दृश्यते। एतत्कार्यस्य सरलतया सम्पादनार्थं राज्यद्वारा धर्ममहामात्यानां महिलाध्यक्षमहामात्यानाम् अन्यान्यविभागादीनां व्यवस्थां कृतवान्।[4] एतद्विषये राज्यकर्मचारिणः अशोकेनैव निर्दिश्यन्ते स्म।[5] संस्थानां ब्राह्मणानाम् आजीविकानां निर्ग्रन्थानां च संघटनं व्यवहारञ्च निरीक्षयितुं महामात्यः नियुक्तोऽऽसीत्।[6] अशोकश्च स्वयमपि निरीक्षितुं गच्छति स्म। भारतीयेतिहासे प्रथमोऽययमवसरः यद् राजनिर्देशने धर्मस्य नैतिकतायाः धार्मिकसंस्थानां च नियमनम् अभूत्।[7] वस्तुतः तस्मिन् राज्ये धर्मोऽशोकस्य आदेशतः अतिरिक्तो नासीत्। अत एव तस्य राज्यं न धर्मराज्यं किन्तु राजधर्मः कथितः।

---

१. शब्जगढ़ी शिलालेखः ११; कालसी शिला० ६।

२. गिरनार शिला० १२।

३. कालसी शिला० ६।

४. गिरनार शिलालेखः १२।

५. गिरनार शिलालेखः ६।

६. रूपनाथशिलालेखः १; ससराम शिला० २; गिरनार शि० ३।

७. गिरनार शि० ४, १२, ६, ७।

अशोकात्प्राक् बुद्धस्य आदर्शः कौटल्यस्य परम्परा च आसीत्। कौटल्यः राज्ञो राज्यस्य च आदर्शं मौर्यवशाय प्रदाय वैदिकीं परम्परम् उपस्थापितवान्। अशोकेन उक्तादर्शद्वयस्य समन्वयनं कर्तुं चेष्टितम्। यतो हि कौटल्यतः आगतां परम्परां समूलतया उन्मूलयितुं न अशोकस्य सामर्थ्यम् आसीत् अतः प्रसङ्गतः उभयोरपि सिद्धान्तान् आधारतया अङ्गीकृतवान्। अस्य साधारणपरिवर्तनस्य प्रभाव· राजनीतौ धर्मे च महान् अभूत्। वैदिकपरम्परायां न व्यक्तेर्महत्त्वं किन्तु धर्माधिष्ठितपरम्पराप्राप्तशासनस्य महत्त्वम्; बुद्धधर्मे शासनापेक्षया व्यक्तेरेव महत्त्वासीत्। नानाशिलालेखद्वारा अशोकः स्वीय धर्मचक्रं प्रजासु प्रसारितवान्। अशोकेन यत्किमपि कृतं तत्सर्वं स्वादेशरूपेण न तु बुद्धनाम्ना।

नैतिकतां परिपाल्य प्रसारयितुमधिकारिणोऽपि आज्ञप्ताः। ते च अधिकारिणः प्रजाभ्यः निर्देशन साहाय्यम् उपदेशञ्च ददति स्म।[१] अशोकस्य कार्यं दृष्ट्वा कथयितुं शक्यते यत् "विकास एव मानवस्य उद्देश्यः स च अवश्यं कर्त्तव्यः।" तदर्थं 'नियन्त्रणम्' 'प्रोत्साहनम्' सहायता च आवश्यिका इति। तेन स्वयमेव कथितं यन्न केवलं पशुवधात् निवृत्ति·, किन्तु "अन्येऽपि बहवो नियमा जनैः स्वीकृत्य परिपालनीया इति'।[२] एतेन स्वीयां विचारधाराम् आचारसंहिताव्याजेन जनानां कृते प्रक्षिप्ता इति स्पष्टमेव। यद्यपि अशोकस्य सर्वाण्यपि कार्याणि मानवकल्याणार्थमेव जातानि, तथापि धर्मस्य नैतिकतायाश्च संशोधने परिवर्धने परिवर्तने च राज्यस्य अधिकार· विकसितो जातः। राज्यप्रधाने न कस्यापि नियन्त्रणम् आसीत्।

तेन प्रशासने नैतिकतायाः विकासः कृत·। जनेष्वपि नैतिकतायाः कल्याणं ध्येयञ्च किमस्तीति तेनैव निर्णेतुम् अशक्यत। जनानां नैतिकतायाः तद्व्यवस्थायाश्च अशोक एव न्यायाधीश· निर्देशकश्च सञ्जातः। धर्ममहामात्यस्य नियुक्तेः नान्यत्कारणं वक्तुं शक्यते। एतेन प्रजा राज्यादेशेन सम्प्रभाविता जाता। परिस्थित्यनुसारं सः धर्मसहिष्णुतायाः वार्तां करोति स्म। परन्तु एतेन स्वीयानाम् आदर्शानां व्यवहारे साहाय्यमेव लब्धम्। कांश्चित् संस्कारान् विधीन् व्यवस्थांश्च अनावश्यकतया अशिष्टतया च घोषमाणं तं सर्वधर्मसहिष्णुरिति कथं कथयितुं शक्नोति लोकः? तेन च वैदिकजनतायाः कर्मकाण्डे हस्तक्षेपः कृतः। इयदेव न महामात्रद्वारा बौद्धसंघानां श्रमणानाम् आजीविकानां ब्राह्मणानां जैनभिक्षूणां च नियन्त्रणमपि अभवत्। अस्य एष एव निष्कर्षः यद् अशोकः राजशक्तिद्वारा धर्मं नियन्त्रितवान्।

---

१. गिर० ८।

२. दिल्ली, शि० ३०७।

एवं रीत्या अशोकः सर्वतोभावेन प्रजां निरोद्धुम् इयेष। कौशाम्ब्याः महामात्राय बौद्धसङ्घाय च आदेशाः प्रदत्ताः।[1] अन्ततोगत्वा सः स्वयमेव बौद्धसङ्घस्य प्रधानपदं गृहीत्वा धर्मस्य प्रशासने हस्तक्षेपं कृतवान्।

बौद्धधर्मस्य इव नान्येषां धर्माणां नेतृत्वम् आसादितम्, तथापि हस्तक्षेपस्तु कृत एव ; तेन स्पष्टमेव उक्तम् यद् ये 'देवताभिः' न सम्बद्धाः सन्ति ते ताभिः सह सम्बन्धं कुर्युः। अनेन स पूर्णरूपेण 'जनता नैतिकी स्यादिति' इच्छति स्म ; किन्तु तत्स्वरूपं स्वीयमासीत्। नैतिकतायाः परिभाषा स्वीयसम्प्रदायतो न, किन्तु अशोकेनैव उपस्थापिता आसीत्। भारतीयेतिहासेऽशोकोऽस्ति प्रथमो राजा यस्य शासने राजपुरुषाः जनतायाः नैतिकतां निरदिशन् निरैक्षन्त च। पुरुषः कथं वसति, जीवनयापनं करोति, किं वदति, कदा स्वपिति जागर्ति च इत्यादिकं राजपुरुषैः सूचनीयम् आसीत्। इदं कार्यम् अकबरेण राज्ञा अपि न कृतमस्ति, यद्यपि तेनापि अतिरिक्तो धर्मः प्रचालितः। १९१७ ईस्वीयः रूसदेशीयाधिनायकवादस्थापनातः विश्वेऽस्मिन् ईदृशः महान् सम्प्रभुः प्रायः कश्चिदपि न जातः। अशोकः राजनीतिक एव न, किन्तु नैतिकोऽपि अधिनायकः आसीत्।

अशोकात्प्राग् राजतन्त्रम् एका प्रणाली आसीत्। वैदिकपरम्परातः कौटल्यं यावद् राजतन्त्रमेव व्यवहारे आसीत्। कौटल्यः मौर्यवंशाय आदर्शम् उपास्थापयत्। एवञ्च कौटल्येन प्रशासनस्य जनतायाः नैतिकपक्षं राज्यतः पार्थक्येन स्थापयितुं प्रयतितम्। तत्रेदं वैशिष्ट्यम् आसीद्यत्समाजे धर्मं पुरस्कृत्य जायमानानामनर्थकारिणां दुर्व्यवहाराणां नियन्त्रणाय राज्यस्य सामर्थ्यम् आसीत्। तत्र अशोकः बौद्धान् आदर्शान् पुरस्कृत्य वैदिकीं मर्यादां त्यक्तवान्। शासनद्वारा बौद्धसन्देशान् प्रसारयता अशोकेन धर्मतोऽपि शासनस्य माहात्म्याधिक्यं प्रतिष्ठापितम्। एवंविधपरिवर्तनाय यद् राज्ञा कृतं तदर्थं शासनस्य सम्मतिरपि अपेक्षिता आसीत्। राज्ञः सम्बन्धे कौटल्यः उक्तवान् यद् राजानः 'प्रजानां विनये रताः', महाभारतकारस्तु 'राजा कालस्य कारणम्' इत्युक्तवान्। परम् अशोकस्तु इदमुक्तिद्वयमपि अधः कुर्वन् धर्मस्य राजनीतेश्च समन्वयमपि कुर्वन् धर्मम् राज्याधीनं व्यदधात्।

उपरि लिखितमेव यत् कौटल्यस्य प्रशासनप्रणाली अशोकेन स्वविचारानुसारमेव उपस्थापिता किन्तु धर्ममहामात्रद्वारा स धर्मनियन्त्रणविषये कौटल्यम् अनुसरति। नैतिकविकासार्थं कौटल्यः देवताध्यक्षस्य नियुक्तिं कृतवान्। एतत्साम्यसत्त्वेऽपि उभयोः व्यवस्था मूलतो भिन्ना एव प्रतिभाति। कौटल्यस्य देवताध्यक्षस्तु

---

१. कौशाम्बीस्तम्भलेखः।

प्रधानः पुरोहितः आसीत्। सर्वेष्वपि सम्प्रदायेषु तत्रत्याः आचार्या एव प्रमाणभूता आसन्। ते एव स्वीयसम्प्रदायविशेषस्य व्याख्यां तत्पालनं च कुर्वन्ति स्म कारयन्ति स्म च। राज्ञः सम्बन्धस्तु प्रशासनतः एव आसीत् न तु धर्मस्य सूक्ष्मविवेचने। तत्रेदं कौटल्यस्य तात्पर्यं यत्सर्वेभ्योऽपि सम्प्रदायेभ्यः स्वविकासाय अवसरोऽवश्यं देय। येन स्वीयाया मान्यतायाः यथानुकूलं निर्विघ्नं पालनं स्यात्। नैतिकतायां धर्मे वा प्रशासनस्य हस्तक्षेपो न वाञ्छितः कौटल्येन। न वा एतत् कार्यं राज्ञः कर्त्तव्यतया स्वीकृतम्। अशोकेन तावत् कौटल्यस्य तावानेव अंशः स्वीकृतः येन स्वमतस्य पुष्टिः सञ्जायते। एवञ्च पूर्वपरम्परया अभिन्नतां प्रदर्शयन् अशोकः धर्मस्य नैतिकतायाश्च प्रेरकः संशोधकः संरक्षकश्च अभवत्। तेन बौद्धसंघस्य अध्यक्षता स्वीकृता। उक्तरीत्या अशोकेन शास्त्राणि सम्प्रदायश्च स्वाधिकारे कृतानि।

इत्थं वयं पश्यामो यद् अशोकेन राजतन्त्रे अन्यान्यविशेषाधिकाराणां समावेशः कृतः। समाजस्य सर्वाधिकारः स एव सञ्जातः। राजनीतेः समाजस्य नैतिकतायाश्च सर्वा अपि शक्तयः राज्यसापेक्षाः अभूवन्। सर्वशक्तीनां प्रधानस्तावद् अशोक एव आसीत्। मौर्यसाम्राज्यस्य संस्थापकः कौटल्यः यस्य शासनविधेः परम्परां स्थापितवान् तत्र यथेच्छम् आमूलतः परिवर्तनं कृत्वा मौर्यसाम्राज्यस्य सर्वाङ्गीणसम्प्रभुता अशोकेन अधिकृता।

## धर्मः

डॉ० फ्लीटमहोदयानुसारम् अशोकस्य धर्मः राजधर्मस्य एकः प्रकारः। तेन च नैतिकता राजनीतौ समावेशिता। विसेण्टस्मिथमहोदयस्य मुकर्जीमहोदयस्य च मतानुसारम् अशोकस्य धर्मः शाश्वतो विश्वधर्मश्च अस्ति। स च केनापि धर्मेण सम्प्रदायविशेषण वा बद्धो नासीत्। सेनार्ट महोदयस्य धारणा अस्ति यद् अशोकेन बुद्धस्य धार्मिकस्थापनायां स्वीयानाम् आदर्शानां व्याख्या कृता। मुकर्जीमतेन रायचौधरीमतेन च अशोकेन बौद्धानां पूजकस्य उपासकस्य वा धारणातः अग्रे पदं विधाय बुद्धोक्तस्य कर्त्तव्यनिष्ठस्य चक्रवर्त्तिनो व्यवहारः उपस्थापितः। चक्रवर्त्तिनः स्थितौ बौद्धधर्मस्य लौकिकांशानामेव प्रभावः राजनीतिद्वारा व्यक्तोऽभवत्। उपासनादयोऽदृष्टपक्षे गौणतां प्रापिताः। अस्यां नूतनव्याख्यायां धर्मः राजधर्मताम् अलभत। डॉ० फ्लीट, रिज् डेविडमहोदयाभ्यां स्पष्टमेव लिखितं यद् अशोकेन ईश्वरः आत्मा बुद्धः बौद्धधर्म इत्येतद्विषये न किञ्चिदपि चर्चितम्।[१] फलतः अशोकः विश्वजनीनस्य शाश्वतस्य च धर्मस्य स्थापनायां बौद्धदर्शनेन सह स्वीयं व्यक्तित्वमपि स्थापयति।

---

१. बुद्धिस्ट इण्डिया, पृ० २९७।

कौटल्यसमयपर्यन्तं राजधर्मः पूर्णतया विकासं प्राप्तः। तस्य प्राग्वर्तिनी आचार्यपरम्परा बार्हस्पत्यौशनसमानवादिषु अन्यतमा अमन्यत। किन्तु कौटल्येन आन्वीक्षिकी-निर्देशने एव राजधर्मस्य विकासः स्वीकृतः।[1] अङ्गुत्तरनिकायस्य राजवग्ग-अग्गञ्ञ-चक्कवत्तिसिंहनादः, इत्येतेषाम् लक्खणञ्च, दीघनिकायादीनां राज्ञाइतिवृत्तमपि आदर्शभूतराजधर्मः आसीदित्यवगम्यते। तस्य प्रतिबिम्बनम् अशोके दृश्यते। धर्मस्य राजधर्मस्य च अन्योन्यं सम्बन्धः अस्ति। उपनिषदि धर्मस्य वशीभूतो राजा इति प्रतिपादितम्।[2] एतदेव बुद्धः कथयति 'धम्मो रञ्ञो चक्कवत्तिस्स राजा'।[3] उपनिषत्सु धर्मात् परं नास्ति किञ्चित् तेन दुर्बलोऽपि रक्षितो भवति।[4] एतदेव बुद्धोऽपि समर्थयते[5] किन्तु लोकव्यवहारस्य सञ्चालने क्षात्र-शक्तिः सर्वेषामुपरि स्वीकृता। अत एव ब्राह्मणोऽपि सम्प्रभुतास्थापनार्थं क्रियमाणे राजसूये क्षत्रियात् निम्नं पदं लभते।[6]

'ऋतम्' धर्मश्च इत्येतद्द्वयं परस्परस्य पूरकम् उपनिषत्कालं यावद् आसीत्। अस्यां स्थितौ धर्मः सामाजिकनैतिकतायाः स्थितिं द्रढयति यः ईश्वरेच्छारूपेण सांसारिकविषयतया वा व्यक्तो भवति। सामाजिकनैतिकतायाः दयायाः कर्त्तव्यस्य च आधारः निर्देशकश्च धर्मोऽस्ति। यदा धर्मो राजधर्मेण सम्बद्धोऽभूत् तदा स विधिरूपे सङ्कुचितोऽभवत्। फलतः राजशासनं धर्मस्य आश्रयताम् अगच्छत्। एवञ्च धर्मविधीनां कृते काचिद्दैवीच्छा राजप्रोत्साहनं वा मा भूत् किन्तु 'सम्प्रभोरिच्छा' तु अवश्यं क्रियाशीला दृश्यते। सा च 'सम्प्रभोरिच्छा', या सामूहिकेच्छा, समुदायस्य समाजस्य वा या धारणा, राज्ञः शासनस्य च या अभिव्यक्तेच्छा, एतासु अन्यतमा सर्वात्मिका वा भवितुं शक्नोति। द्वयोर्लक्ष्यम् एकमेव वा अस्ति। राजनिर्मितः राजप्रोत्साहितो वा विधिः दैवेच्छायाः पवित्रविधेर्वा साहाय्यमेव आचरत्। बौद्धधर्मं मूलतया स्वीकुर्वतापि तेन विधेः समाजस्य च मध्यतः तृतीया दैवीशक्तिः दूरीकृता; तत्र च 'महाजनसम्मतिः' आधारतया अङ्गीकृता या राज्यस्यापि आधारतां

---

१. प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥
(अर्थ० १।२।१२।)

२. बृ० उप० १।३।१४।

३. राजवग्ग, अंगुत्तर ३ पृ० १४७।

४. बृ० आ० उप० १।४।१४।

५. अग्गञ्ञ सुत्तन्त, दीघ० ३ पृ० ६५।

६. क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते—बृ० आ० उ० १।४।११।

प्रापिता।[१] फलत· सामाजिकनैतिकतायाः मूलं समाजे जातम् किन्तु द्वयोरपि विचारयोः विधेः स्थानं राज्ञः उपरि न स्वीकृतम्। तदपेक्षया राज्ञोऽधिकं महत्त्वं भवितु नाशकत्। वैदिकपरम्परायां बौद्धेषु च शिष्टानां श्रमणानां च समन्वयोऽभूत्। वैदिकपरम्परायाम् आचारस्य धर्मस्य च विषये प्रमाणं शिष्टा आसन्, बौद्धेषु च श्रमणाः। तेषामेव आचारो धर्मः परम्परा च समाजे मान्यताम् अलभन्त।[२]

धर्मस्य स्रोत· ब्राह्मणानाम् अनुसारं 'ब्रह्मवेद', बौद्धानुसारं च 'धम्मवेदः' 'अत्थवेदो' वा आसीत्।[3] जातकानुसारम् आदर्शपरम्परैव धर्मः (चरितो पुराणो)।[४] फलतः दयायाः दाक्षिण्यस्य कर्त्तव्यस्य च परम्परैव धर्मतया अमन्यत। बुद्धेन 'पोराणवज्जिधम्मा' इत्यस्य वैशाल्याः वृजेः राष्ट्रियपरम्परया समं समन्वयः कृतः, यः आदर्शपुरुषाणां सदाचारः परम्परा चासीत्।[५] राज्ञा शासनेन राज्येन वा प्रभावितो विधि· ईदृशस्य धर्मस्य विकासार्थम् आसीत्। अशोकोऽपि राजधर्मे 'पोराणा पकिति' सम्मनुते किन्तु तस्य परम्परा प्राचीना (दीघावुसे)।

परम्परात· प्रजारञ्जक एव राजा कथ्यते। बुद्धेन स धर्मेण विशेषितः— 'धम्मेन पजारञ्जनम्'।[६] रञ्जेति पदस्य अर्थः प्रासादसुखकल्याणादीनां प्रदानमस्ति। प्रजारञ्जनं च धर्मेणैव स्यात् न तु अधर्मेण। धर्मपालकेन राज्ञा धर्मरक्षा सम्भाव्यते। तत्र धर्म प्रति आदरस्य श्रद्धायाः विश्वासस्य धर्मपताकायाः प्रसारस्य धर्मसेवायां च स्वीकृतिः अवश्यम् अङ्गीकृता। खन्ति—( Moral Fortitude ) अविहिंसा ( Non-horming mental attitude ) मेत्तचित्तता ( Freindly heart ) अनुदया ( Compassion ) इत्येतत् चतुष्टयं रक्षाशब्दस्य अर्थः। आवरणस्य तात्पर्यं दुःखनिवृत्तिः। गुत्ति इत्यस्यार्थः जनकल्याणम्। यत्र चौरात्

---

१. उलूकजातक सं० २७०।

२. तै० उ० १।११।३-४; दीघ० ३, पृ० ६५, १६१; जातक ३ पृ० २१२।; सम्पसादनीय सुत्तन्त, दीघ० ३ पृ० ९८।

३. मज्झिम० १ पृ० ३७।

४. चरितो पुराणो—जातक ५ पृ० ४७६; एस धम्मो सनातनो—जात० ५ पृ० ४८८; एस धम्मो सनातनो च, धम्मपद ५; चिरकालप्पवत्तो सभावो—जा० ३ पृ० २१२।; एसा ते पोराणीयापकिति—जा० ६ पृ० १५१।

५. दीघ० २ पृ० ७४; विशेषरूपेणद्रष्टव्यम्—सुमंगलविलासिनी २ पृ० ५१६ (पोराण वज्जिधम्मा)।

६. प्रशाधि पृथिवी राजन् प्रजा धर्मेण पालयन्—महाभा० १३।१४२।३०, धम्मेन परे रञ्जेति राजा, दीघ० ३ पृ० ९३।

शत्रोश्च रक्षा भवेत्।[1] अस्यैव प्रतिबिम्बनम् अशोके एतद्रूपे व्यज्यते "धम्मेन पालना, धम्मेन विधाने, धम्मेन सुखियना, धम्मेन गोति।" सः 'प्रशासकाः धर्ममार्गेण शासनं कुर्वन्तु' इति कामयते स्म। सुत्तनिपाते व्यक्ता बुद्धस्य वाक्—'धम्मे थितो अज्जवे मद्दवे सतो, धम्मं हि सीलंहि तिष्ठन्तो धम्मम् अनुशासिसन्ति।'[2]

धर्मेण प्रजारञ्जने परम्परायाः महत्त्वम् अशोकेन स्वीकृतम् किन्तु परम्परायां संशोधनमपि कृतम्। यज्ञीयपशुबलिः, समाजः, रथशोभायात्रा, राजकीयशोभायात्रा इत्यादिषु प्रतिबन्धः कृतः। चन्द्रगुप्तः प्रतिवर्षम् एकदा पशूनां युद्धं कारयति स्म। अश्वानामश्वैः सह वृषाणां च वृषैः सह परस्परं युद्धस्पर्धा भवति स्म। वृषभगजादीनां प्रतियोगिता सार्वजनिकतया युद्धरूपेण कार्यते स्म। नृत्यगीतोत्सवा अपि भवन्ति स्म। रामायणानुसारम् उत्सवेन समाजेन च राज्यस्य वृद्धिर्भवति—"उत्सवश्च समाजश्च वर्धने राष्ट्रवर्धनम्।" कौटल्येन यात्रायाः समाजस्य उत्सवस्य प्रवहणस्य च अनुमतिरकारि।[3] तेषु दिनचतुष्टयं यावत् सुरापानमपि स्वीकृतमासीत्।[4] एकस्मिन् स्थाने तेन विजितराष्ट्रोत्सवस्य समाजस्य धार्मिकव्यवहाराणां विहाराणां प्रसारणस्य च आदेशो दत्तः।[5] सर्वकामप्रदायिकायाः विहारयात्रायाः राजभोजनादिषु पशुमांसस्य आखेटस्य च वर्णनं महाभारते दृश्यते।[6] ब्राह्मणाः श्रमणाश्चापि एतैः न अस्पृष्टा आसन्। एतेन बुद्धः महद् अग्लायत्।[7] विभिन्नेषु जातकेषु राज्ञो मृगया वर्णिता।[8]

अशोकेन पशुवधो निषिद्धः किन्तु सामाजिका उत्सवाः सर्वथा न वर्जिताः। वधप्रयुक्त-पशुप्रदर्शनं तेन धम्मानुसथिनि, धम्मसावनानिश्च समं न स्वीकृतम्। विहारयात्रास्थाने 'धम्मयात्रा' विहिता।[9] उच्छावमङ्गलस्थाने धम्ममङ्गलं व्यवस्था-

---

१. सुमंगलविलासिनी ३ पृ० ८५० ।

२. तुलनीयः—चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत् ।
प्रवर्त्तयेन्न न चाधर्म्यं कृतं चान्यैः निवर्तयेत् ॥
(अर्थ० १३।५।३५)

३. अर्थ० १।२१ ।

४. अर्थ० २।२५ ।

५. अर्थ० १३।५ ।

६. महा० ३।२०७।८-१० ।

७. ब्रह्मजालसुत्त, दीघ० १ पृ० ४ ।

८. निग्रोधमिग जातक सं० ४४५; रुरुजातक सं० ४८२ ।

९. जातक ५ पृ ३३०।; बरुआ; इनिक्रप्शन्स २ पृ० ३०५ ।

पितम् ।[1] कौटल्येन मृत्युदण्डं तीक्ष्णदण्डञ्चान्तरा यथार्थदण्डः समर्थितः ।[2] अशोकेन स्वयं बौद्धधर्मस्य रूढौ उदारवादिधारणायां च मध्यममार्गः अवलम्बितः। तस्यैव प्रशासने प्रयोगः कृतः। अशोककौटल्ययोर्मध्यममार्गे भेदोऽस्ति। विश्व-कल्याणार्थं विकासार्थं च कौटल्येन उद्यतदण्डस्य व्यवस्था अङ्गीकृता। महा-भारते कणिकेन भारद्वाजेन च इदमेव मतं समर्थितम् ।[3] कौटल्येन च अपराधा-नुसारं दण्डप्रदानेन तच्छमनस्य, सदाचारिणे पुरस्कारप्रदानस्य च व्यवस्था दत्ता—'उपकारापकारयोर्दृष्टापकारी'। परन्तु अशोकेन अपराधिने क्षमाप्रदानरूपः मध्यमो मार्गः स्वीकृतः। तस्मै सदाचारसम्पादनस्य अवसरः प्रदत्तः।

रामायणस्य महाभारतस्य अर्थशास्त्रस्य बुद्धस्य अशोकस्य च मध्यममार्गे तात्त्विको भेदोऽस्ति। महाभारते धर्मविजयः आसुरविजयश्चेति द्वेधा विजयः प्रतिपादितः। कौटल्येन च धर्मविजयः लोभविजयः आसुरविजयश्चेति त्रेधा विजयो निर्दिष्टः।[4] रघुदिग्विजयवर्णनप्रस्तावे धर्मविजयं व्याचक्षाणेन कालिदासेन उक्तम्—श्रियं जहार न तु मेदिनीम् (रघु० ४)। कौटल्यस्य धर्मविजयोऽपि शस्त्रत एव सम्भवति। अशोकः एनं शरविजयम् (सायकविजयम्) मन्यते। परिस्थितिविशेषे सः इममपि सम्मनुते। धर्मविजये शस्त्रप्रयोगं कथमपि स नानु-मन्यते। तत्र दण्डप्रयोगोऽपि न कर्त्तव्यः। "इमां पत्थवीं सागरपरियन्तमदण्डेन असत्थेन धम्मेन अभिविजिय" ।[5] बुद्धघोषानुसारम् 'दण्डस्य' अर्थः दण्डः वधस्यआज्ञा इत्यादिरस्ति। पालिग्रन्थेषु 'धम्मेन अभिविजिय' इत्यस्य एषः अर्थः स्वीकृतः यत्पराभूताय राज्ञे कीदृगपि संकटं न देयमिति। चक्रवर्तिनः धर्मविजयस्य बौद्धग्रन्थेषु या व्याख्या कृता[6] सा अशोकेन अधिकं स्पष्टीकृता। अस्य द्वौ पक्षौ स्वीकृतौ निषेधात्मकः सकारात्मकश्चेति। तत्र आद्यस्य एषः अर्थः कस्य-

---

१. जी० पी० मजूमदार; सम आस्पेक्ट्स ऑफ इण्डियन सीविलाइजेशन, पृ० २६७।

२. अर्थ० १।४; महाभा० १२।५६।४०-४१।

३. नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः।
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः॥
नित्यमुद्यतदण्डस्य भृशमुद्विजते नरः।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत्॥
(महा० १२।१४०।७-८)

४. महा० ११।५८।३८-३९; अर्थ० १२।१।

५. दीघ० ३ पृ० ५६।

६. दीघ० ३ पृ०-५६; चक्कवत्ति सिंहनाद सुत्तन्त।

चिद् राज्यस्य भूमौ आक्रमणं न कार्यम्, तत्र युद्धगतं संकटं न आनेयम्। द्वितीयपक्षे च पार्श्वस्थराज्यानां सहानुभूतिम्, तदीयं क्षेत्रीयगौरवं च स्वीकुर्वन् शान्तिदूतैः सांस्कृतिकशिष्टमण्डलैश्च जीवनस्य आदर्शेषु परिवृत्तिं कृत्वा विजयं प्राप्नोति।

अशोकः प्रजाः पुत्रवदमन्यत। धर्मविजयी अशोकः स्वराज्यस्थानामेव न, अपितु मानवमात्रं स्वप्रजाम अमन्यत। अत एव पार्श्वस्थराज्यानां प्रजा अपि तस्यैव जनता आसीत्—'सव मुनिसा पजा ममा।' महासुतसोमजातकः राजानं पितृतुल्यम् अपश्यद् अशोकश्च तदन्ववदत्।[१] कौटल्यस्य धर्मचक्रप्रवर्तको राजा यं धर्मं प्रवर्तयते तस्य मूलं न व्यक्तिः किन्तु शास्त्रम्। बुद्धस्य चक्रवर्ती अपि धर्मचक्रप्रवर्तकोऽस्ति[२] किन्तु तस्य मूलं न धर्मशास्त्रम् अपितु पुरुषविशेषः।

स यस्य धर्मचक्रस्य प्रवर्तयिता आसीत्, तस्य बौद्धधर्मस्य स्रोतः बुद्धस्य वागासीत्। जैनागमेष्वपि चक्रवर्तितीर्थंकरस्य वाण्याः चक्रस्य प्रवर्तकोऽस्ति।[3] निज्झतिः धम्मनियमः इत्यनयोः कृते अशोकेन राजधर्मे तदेव स्थानं दत्तं यद् धर्मेण विनयेन च बुद्धशासनतो लब्धमासीत्। वैदिकपरम्परायां राजा पूर्वपरम्परायाः संस्थापक एवासीत्। तत्र किञ्चिन्नावीन्यं कर्तुं राज्ञः अधिकारो नास्ति।[४] वर्णाश्रमाणां नियमाः परम्पराप्राप्ताः शास्त्रीयविधिनिषेधैः नियन्त्रिताश्चासन्। बुद्धस्य सामाजिकं दर्शनम् आत्मप्रेरणायामाधृतमासीत्।[५] यद्यपि ब्राह्मणधर्मस्य सत्त्वं बुद्धः अशोकश्चेत्युभावपि स्वीकुरुतः तथापि अशोकः राजधर्मे तस्य न किमपि महत्त्वं मनुते। अनुशासकत्वेन अशोकः जनतायाः कल्याणं नैतिकतां च निर्दिशति। बौद्धधर्मः ईदृशीं व्याख्यां स्वीकरोति यया लाभान्वितो भूत्वा अशोकः जनानां नैतिकतायाः धार्मिकमर्यादायाश्चापि संस्थापकोऽभूत्।

वैदिकपरम्परायां सामदानभेददण्डाश्चेति उपायचतुष्टयं स्वीकृतम्। बौद्धधर्मे एतस्य चतुष्टयस्य कृते दान, पेय्यवज्जा, अत्थचरिया, समानत्तता इत्येतेषां शब्दानां प्रयोगः कृतः।

सर्वविधायाः कूटनीतेः निन्दा कृता अस्ति।[६] उपायचतुष्टयस्य स्थाने 'संगहः' अथवा 'सङ्गहवत्थुस' इति स्वीकृतम्। अत्र मानवहृदयमधिकर्तुं प्रयतितम्। अशोकस्य

१. जातक ५ पृ० ५०४ ; शिला० २ ;

२. दीघ० ३ पृ० १४६, वत्तेति चक्कम्।

३. औपपातिकसूत्र ५५, अर्हन्ता-चक्कवत्ती।

४. चतुर्वर्णाश्रमस्यास्यं लोकस्याचाररक्षणात्।
नश्यतां सर्वधर्माणां राजा धर्मप्रवर्त्तकः॥
(अर्थ० ३।१)

५. सुत्तनिपाते वासेत्थ सुत्त ५।११५६।

६. जातक० ३ पृ० २६२; संगाहको सखिलो सण्हवाचो।

नीतिः संग्रहचतुष्टयेन निर्दिष्टा आसीत्। एतद्द्वारा स मानवमात्रस्य प्रेमाणं लब्ध्वा मानवमात्रं विजेतुं काङ्क्षते स्म—'पनयं गच्छेम सु मुनिसानम् ।' प्रशासने परराष्ट्रविषये च नियुक्तानां कर्मचारिणां कृते इदमावश्यकमासीद् यत्ते कटु-भाषिणः कुटिलस्वभावाश्च मा भूवन् किन्तु कारुणिकाः स्युः ।

अर्थशास्त्रं 'सर्वभूतहिते रताः'[१] इति उद्घोषयति। परन्तु कौटल्यःशाक्यान् आजीवकांश्च वृषलाः कथयति।[२] बुद्धेन श्रमणाः ब्राह्मणेभ्योऽधिकम् आदृताः। तदीयसमाजव्यवस्थायां च श्रमणा एवासन्। अत एव सर्वेषां स्वस्वधर्मविषये स्वातन्त्र्यस्य इदमेव तात्पर्यमासीद् यदयमेव धर्मः स्वीकार्यः इति राजकीयः प्रतिबन्धो नासीत्। परन्तु स्वीयविचारणायाः पोषणार्थं विचारान्तराणां दमनम् अवश्यम् आसीत्। बुद्धेन अशोकेन वा ये विचाराः प्रसारिताः तत्र श्रुति-धर्मस्य खण्डनं प्रतिवादश्च आसीत्। अत एव विश्वकल्याणं प्राणिमात्रस्य प्रसादो वा तदुद्देशः स्यात् किन्तु व्यवहारे तेन वर्गीयरूपमेव धृतम्। जातकेषु सर्वे निर्भयाः कृताः।[३] महामङ्गलजातकेन स्वर्गः भूः नरकश्चेति त्रयमपि विश्वे समावेशितम्।[४] निकायस्य जातकानां च राजचक्रवर्तिधर्मः स्वर्गप्राप्तौ मनुष्यस्य साहाय्यं करोति। यद्यपि एतत् साहाय्ये जातिवंशादीनां बन्धनं नास्ति, तज्जीवमात्रस्य कृतेऽस्ति, तथापि बुद्धस्य अशोकस्य वा मार्गस्तु भविष्यत्येव। यतः कल्याणमार्गः तयोरेव अस्ति अत एव अत्रापि साम्प्रदायिकवर्गीयभावनया पदं लभ्यते एव।

विश्वकल्याणविषये अशोकस्य सकारात्मकधारणा अस्ति। तदनुसारं सर्वे जीवाः पापात् मुक्ताः भवन्तु, एतदेव कल्याणाय 'सकले अपपरिस्रवे अस' आसीत्। कल्याणार्थं प्रसादार्थं च समे सम्भूय प्रयतेरन्—'सवेन हितसुखेन हिद लोकिक-पललोकिकेन युजेवु ति'। ते विकासं कुर्युः 'अभ्युंनमिसति।' अशोकः 'हितिविपरीते' अर्थे 'वढि' शब्दं प्रयुङ्क्ते। अत्र गीतायाः 'धर्महानिः' इत्यस्य प्रभावः।

---

१. हितार्थं सर्वलोकाय—अर्थ० १।२; सर्वलोकहिते रताः—महा० १२।३६।२६; १२।६३।५; १२।६७।५;

२. अर्थशास्त्रम् ३।२०; बार्हस्पत्यसू० २।५३५; ३।८-१६; ३।२१-५०; ३।६०-६१।

३. अभयं च यो सब्बभूतेसु देति—महामोरजातक ४ पृ० ३३८; जातक ४ पृ० ७६; यो सब्बलोकस्स निवातवुत्ति। सब्बप पणभूत-हितानुकम्पि—दीघ० १ पृ० ४।

४. जातक ४ पृ० ७५।

ईदृशोत्थानार्थं वैदिकपरम्परा राज्यस्य आवश्यकतां मनुते ।[१] अशोकोऽपि उत्थानार्थं राज्यम् आवश्यकं मन्यते[२]—तस च पन इयं मुले उत्थाने च अत्थसमति-लना च । नाम्ति हि मे तोसो । उत्थानार्थम् अप्पमाद ( Earnestness )दल्ह-परक्कम् (Strong powar of action) अत्तकार पुरिसकार ( self willed action ) बल ( Strength of will ) विरिय (Mental energy ) इत्यादय आवश्यकाः । एवमेव पराक्रम, पकम, उसाह, उयाम, धिति, पतिम्ना अचला आदिकम् आवश्यकम् अमन्यत ।[3] प्रशासनीयव्यवस्थायां कर्म आदृतमस्ति । मानव-कल्याणार्थं च निज्झिति' 'धर्मनियम' इति द्वयं साधनं स्वीकृतम् । निज्झितौ विवेको भवति ।

विश्वनियमार्थं कानिचित्तत्त्वानि सन्ति तान्येव बौद्धसाहित्ये 'दशराज-धम्मा' इति 'दशराजवट्टा' इति वा उच्यन्ते । वैदिकपरम्परायां राज्यस्य सप्त प्रकृतयः स्वीकृताः । अशोकेन सर्वाङ्गीणं राजकर्त्तव्यम् इत्थम् अमन्यत यद् 'आत्मवत् सर्वेषु व्यवहर्त्तव्यम्'—'अथा अतानम् अनुकम्पति' । पालिसाहित्ये अपि ईदृग् वचनम्—'अत्तानम् अनुकम्पामि ।' ईदृशीं स्थितिम् आसादयितुं-बुद्धवंश-चरियापिटक-जातक-निदान-कथाग्रन्थेषु स्तरत्रयम् अङ्गीकृतम्—आत्मानं प्रति, आत्मीयान् प्रति, विश्वं प्रति च कल्याणभावः । प्रथमो व्यक्तिगतः, द्वितीयो राष्ट्रियः, तृतीयश्च शाश्वतः । अशोकः एतत्त्रयस्यापि स्थाने मानवमात्रे आत्मभावम् उद्बोधयति-धम्मंहि सीलम्हि तिष्टन्तो धम्मं अनुसासिसन्ति ।[४]

---

१. उत्थान हि नरेन्द्राणां राजधर्मस्य मूलम्—महाभा० १२।५७।१३ ।

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम् ॥

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥

तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥

अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ।
प्राप्यते फलमुत्थानाल्लभेत चार्थसम्पदम् ॥

( अर्थशा० १।१९।३८-४१ )

२. धम्मपद ३ ।

३. शिलालेखाः १०, १३, ११ ।

४. शिलालेखः ४ ।

राज्ञे नियमानाम् आवश्यकत्वं मन्यमानेन कौटल्येन लिखितं यद् विनीत एव नृपतिः प्रजारञ्जने प्रभवति।[१] आत्मकामवादः गौतमात् पूर्वम् उपनिषत्सु प्रतिष्ठाम् अलभत।[२] आत्मवादः गीतायां विवृतः—"आत्मनस्तु प्रतिकूलानि परेषां न समाचरेत्"। अशोकः बौद्धपरम्परापेक्षया वैदिकपरम्परायाः व्याख्यां व्यावहारिकताम् अनीत्वा स्वीयतां प्रापयितुं चेष्टते। गीताव्याख्यानुसारम् आत्मकामवादस्य आलोचने क्रियमाणे बौद्धानां रत्नत्रयं नावश्यकतामेति। बुद्धेन अशोकेन च यदपि कृतं तन्नैककालिकम् आसीत्। अशोकपूर्ववर्तिना कौटल्येन यादृशी राज्यस्थितिः चित्रिता सा अशोकस्य कृते निकटतरा आसीत्। अशोकेन प्रतिपादितानि करुणायाः, दयायाः, कर्त्तव्यस्य च सर्वाणि तत्त्वानि सन्ति; यानि कौटल्येऽर्थशास्त्रे विद्यन्ते, मांसपशवादीनां विक्रयविषये अवश्यं विशेषोऽस्ति। अर्थशास्त्रे वृषाणाम् अवस्थाम् आधृत्य वृषमांसविषये उत्तममध्यमाधमदण्डानां या व्यवस्था निर्दिष्टा[३] सा अशोकेन पशुमात्रविषये कालविशेषपरिहारेण स्वीकृता।[४]

अर्थशास्त्रीया कल्याणकारिणी राज्यव्याख्या वैदिकपरम्परात एवासीत्।[५] पशुमनुष्यादीनां कृते चिकित्सायाः व्यवस्था आसीत्। अनाथादीनां विषये राज्यस्यैव उत्तरदायित्वम् आसीत्।[६] बौद्धग्रन्थेष्वपि राज्यसम्बन्धी कल्याणकारी अंशः मानवतावादिदृष्टिकोणं पुरोधाय विचारित आसीत्।[७] अर्थशास्त्रे धार्मिककार्याणां निरीक्षणं व्यवस्था च राज्यस्य कर्त्तव्यं निर्दिष्टम्।[८] बौद्धग्रन्थेषु राज्यस्य

---

१. विद्या विनीतो राजा हि प्रजानां विनये रतः—अर्थशा० १।५; तुलनीयः—पुब्बंगमो सुचरितेसु धम्मेसु। धम्मचरियाभिरतो अन्वायिकस बहुजनस्स, दीघ० ३ पृ० १६६।

२. न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति। बृ० उ० ४।५।६।

३. अर्थशा० २।२६; २।२९।

४. बरुआ; इन्स्क्रिप्शन्स २ पृ० ३६६; महाभा० ३।२३३।४-६।

५. औषधानि च सर्वाणि मूलानि च फलानि च।
चतुर्विधांश्च वैद्यान् वै सङ्गृह्णीयाद् विशेषतः॥
(महाभा० १२।६२।६४)

६. अर्थशा० २।६; २।३०; २।३१।

७. सुमंगलविलासिनी १ पृ० ३६, जातक ४ पृ० ३४, ५३; देवपुत्त संयुत्त ३।३; कोशलसंयुत्त ३:१।

८. देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्। कार्यगौरवाद् आत्ययिकवशेन वा। अर्थ० १।१९ ३३-३४।

एषः अंशः स्वीकृतः, अशोकेन च एतदंशद्वारा लाभो लब्धः, बौद्धसंघस्य आध्यक्ष्यञ्च आसादितम्। अत्र अर्थशास्त्रीयपरम्परां बौद्धीयया व्यक्तिवादिन्या परम्परया सह समन्वयं कृत्वा स्वीया सम्प्रभुता स्थापिता। अस्यां स्थितौ तस्य अर्थशास्त्रेण नैकट्यं यथावदवतिष्ठते। अर्थशास्त्रे पशुवधार्थम् अनुमन्यमानासु तिथिषु[1] एकैव तिथिः तेन पशुवधार्थम् अनुज्ञाता।[2] अर्थशास्त्रे तासां तिथीनां निर्देशः धर्मशास्त्रम् आधृत्य आसीत्। अशोकेन च स्वराज्याभिषेकतिथिरेव उक्तकार्यार्थं निर्धारिता। इत्थम् अशोकः स्वाभिषेकतिथिमेव सर्वोत्तमं कालम् अमन्यत। इदं तदीयसम्प्रभुतायाः परिचायकम् यत्र धर्मः राज्यासनस्य प्रतीकतया अवतिष्ठते।

## धर्मविजयः

अशोकस्य कृते धर्मः केवलम् उपासना जीवनदर्शनमेव वा नासीत्। तस्य ध्येयं मनुष्यमात्रस्य मनोऽधिकृत्य तथा विभिन्नानां देशानां पारस्परिकसम्बन्धस्थापनद्वारा धर्मसाम्राज्यस्थापनम् आसीत्। सामान्यमानवीयकल्याणार्थं विश्वसाम्राज्यस्य आश्रयः धर्म आसीत्। तस्यैव प्रवर्तनार्थं राज्यम्। परम् अस्याम् अवस्थायाम् अशोकेन राज्यनिर्दिष्टे पथि धर्मचक्रं सञ्चालितम्। अस्मिन् कार्ये क्वचिद् धर्मः राज्यस्य उपयोगितां यातः, अशोकश्च तस्य सम्प्रभुताम्।

अशोकात् प्रागपि दिग्विजयस्वरूपमासीत्। अनया भावनया विश्वस्य विभिन्नेषु राज्येषु पदं न्यधायि। विश्वविजिगीषया सम्प्राप्तेन सम्राट्सिकन्दरेण क्रियमाणायां स्थितावेव मौर्यसाम्राज्यं प्रारभत। यस्य तृतीयो वंशः अशोकः। अनेकेषु महत्त्वाकाङ्क्षिषु राज्यविस्तारलोभादीनां भावना आसन्। एतदर्थं तैः शस्त्रस्य आश्रयणं कृतम्, यल्लोभविजय[3] इति, आसुरविजय इति वा अमन्यत।[4] एतद्विपर्यस्तः धर्मविजयः भारतीयैः घोषितः[5] यत्र मानसिकम् अनुशासनं सदाचारस्थापनं मानवतायाः उद्बोधनञ्चेत्यादिकम् आवश्यकम् अमन्यत। अर्थशास्त्रार्थानुसारं लोभविजये भूम्यादीनाम् अपहरणं भवति। आसुरविजये च स्त्रीपुत्रसम्पदादिभिः सह प्रजानामपि अपहरणं भवति। धर्मजये मानवकल्याणार्थं निर्धारितानां विधीनां स्वीकारपूर्वकं सख्यस्थापनं भवति।[6] राष्ट्रेषु पारस्परिकं

---

१. अर्थशा० १३।५।

२. बरुआ; ईन्स्क्रिप्शन्स २ पृ० ३३२, ३७२।

३. महाभा० १२।५८।३३।

४. महाभा० १२।५८।३८।

५. महाभा० १२।५८।३८; अर्थशा० १३।१; हरिवंश० १।१४१।११;

६. अर्थशा० १३।१।

सख्यं भवति; मानवकल्याणे च साहाय्यं सर्वैः क्रियते। बौद्धग्रन्थेषु धम्मविजयः, अधम्मविजयो विभाजितः।[2] अशोकः धर्मविजयशरसायकविजययोरेव उक्तं विजयत्रयमपि समावेशयति।[3] येन विजयेन हृदयपरिवृत्तिः, तमेव अशोकः सम्मनुते। अशोकः धर्मविजये स्वस्वराष्ट्रियविधानानुसारमेव वर्तनम् अनुमन्यते। जनकल्याणार्थं पारस्परिकसहयोगदयादीनां विकासे योगदानं क्रियते।

राजसूय, विश्वजित्, अश्वमेध इत्यादयः क्रतवः दिग्विजयविषयकाः। अत्र विविधैः उपायैः राज्ञो वशीकृत्यापि तेषां स्वातन्त्र्यं नापह्रियते। बुद्धः शस्त्रं विनैव[5] मानवीयादर्शमहिम्ना एतत्कार्यं चिकीर्षति।[6] कर्त्तव्यनिष्ठस्य राज्ञः अन्तरङ्गा बहिरङ्गा वा शत्रवः न भवन्तीति स मन्यते।[7] अशोकः धर्मविजयविषये वैदिकपरम्परास्थाने बुद्धम् आदर्शतया मनुते। परं राज्यरक्षार्थं सैनिकशक्तिं न अपाकरोति। स राज्यं साधनतया मन्यते, लघुदण्डताञ्च स्वीकरोति। कस्मिन्नपि शिलालेखे बौद्धभिक्षूणां शासनस्य शान्तिसन्देशादेर्वा प्रसारणं नोल्लिखितम्। सेनादीनां सुव्यवस्था आसीत्। दण्डविधाने सर्वा अपि विधाः आदृताः। अस्यैष आशयः यद् अशोकः स्वयं बौद्धानां धर्मविजयं कल्पनाप्रसूतं मन्यते। अशोकेन वैदिकपरम्परातः कौटल्यं यावद् आगच्छता धर्मविजयेन सह बौद्धीयधर्मविजयः स्वीयं व्यक्तित्वम् आधृत्य समन्वितः।

पाण्डवानां राजसूयस्य अश्वमेधस्य रघुदिग्विजयस्य कृष्णविजयस्य च हेतुः राज्यविस्तृतिः कोशवृद्धिश्च आसीत्। अर्जुनेन कथितायां दिग्विजयसूच्यां वन्यजातीनां भारतेतरदेशानां निर्देशो लभ्यते। कालिदासं यावद् वर्णितः दिग्विजयः

---

१. रघुवंशः ४।४।

२. दीघ ३ पृ० ६२; जातक ४ पृ० १०२।

३. शिलालेखः १३।

४. शिलालेखः २; १३।

५. दीघ० ३ पृ० ५९।

६. धम्मपद १ पृ० ३४६।

७. दीघ० ३ पृ० ५९, १४६।

८. तत्र कृत्यमहं मन्ये कोशस्य परिवर्द्धनम्।
करमाहरयिष्यामि राज्ञः सर्वान् नृपोत्तम॥
(महाभा० २।२५।३)

विभिन्नेषु रूपेषु स्पष्टीकर्तुं शक्यते। धर्मविजयः ( ग्रहणमोक्षः ) महाभाग्यः, प्रसभ-उद्धरणम् ( आसुरविजयस्य एकं रूपम् ) लोभविजयः, आसुरविजयः, ( आत्मनिवेदनकन्योपायनदानादयः ) अत्र समाविशन्ति।

युधिष्ठिरस्य साम्राज्यं स्थापयितुं जायमाने राजसूये कृष्णस्य अग्रपूजनं चैद्येन व्यरुद्धयत। अत्र विषये पितामहेन भीष्मेण युक्तित्रयम् उपस्थापितम्। तदनुसारं क्षत्रियः क्षत्रियं विजित्य विजयी भवति। वशीकृत्यापि यो मुञ्चति स वशीभूतस्य गुरुः।[1] राजसूययज्ञे उपस्थिताः राजानः कृष्णेन युधिष्ठिरेण वा विजिता आसन्। अत एव तौ तेषां गुरू, तत एव च पूज्यौ अभूताम्। यः नैतिकतायां व्यक्तित्वे च महान् सः पूज्यः। कृष्णः वेदशास्त्रादिविषये ब्राह्मणेभ्योऽपि परः आसीत्। क्षत्रियेषु च बलिष्ठः। तस्मिंश्च श्रीकृष्णे विविधाः वैयक्तिक्यः विशेषताः आसन्। अस्यामवस्थायां क्षत्रियोऽपि गुरुः सम्भवति।[2] भीष्मस्य तृतीया युक्तिः एषा आसीत् यत् कृष्णः भगवान् अर्थाद् अलौकिकोऽस्ति।

शिशुपालेन कृष्णस्य नीतिः प्रकटिता। तदनुसारं स्वीयसम्प्रभुतास्थापनमेव राजसूयस्य रहस्यम् आसीत्।[4] स्वविरोधे जायमानां निन्दां समापयितुं विरोधिपक्षस्य नेता शिशुपालः कृष्णेन निहतः। तस्य मातुः क्षमाप्रदानेन अनुकूलां स्थितिं

---

१. क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः॥
( महा० २।३८।७ )

२. गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः।
दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा।
सन्ततिः श्रीर्धृतिः तुष्टिः पुष्टिश्च नियताच्युते॥
तमिम लोकसंपन्नमाचार्यं पितरं गुरुम्।
अर्घ्यमर्चितमर्चार्हं सर्वे संक्षन्तुमर्हथ॥
( महा० २।३८।१७-२१ )

३. कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः
कृष्णस्य हि कृते विश्वमिदं भूतं चराचरम्॥
ऊर्ध्वं तिर्यगधश्चैव यावति जगतो गतिः।
सदेवकेषु लोकेषु भगवान् केशवो मुखम्॥
( महा० २।३८।२३-२६ )

४. अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे।
हविषः प्राप्य निष्यन्दं प्राशिता श्वेव निर्जने॥
( महा० २।३७।२७ )

कर्त्तुं प्रायतत। कुरुक्षेत्रयुद्धानन्तरं समाजस्य प्रमुखाः ब्राह्मणाः दक्षिणाद्वारा युधिष्ठिरेण वशीकृताः। एकेन विप्रेण युधिष्ठिरीया नीतिः भर्त्सिता, स्पष्टमेव कथितञ्च यदेवं बन्धून् निहत्य राज्यप्राप्तिर्न न्याय्या इति। लब्धदक्षिणाकैः ब्राह्मणैः स विप्रः निन्दितः चार्वाकपदवीं प्रापितश्च। इत्थं यथाकथञ्चिज्जनान् वशंवदान् कृत्वा नूतनाभिः व्याख्याभिः नीतिमत्तया च आसुरविजयमपि धर्मविजयतां नीत्वा तत्र दिव्यगुणाः योजिताः।

साधवः, संन्यासिनः, ब्राह्मणाः आजीवकाश्चेत्यादयः समाजस्य सहजनेतारः आसन्। तैः गौतमस्य धर्मप्रसारे साहाय्यं व्यधायि। राजनीतेः दयामूलिका अशोकीया घोषणा नूतनाम् आत्मप्रेरणाम् उद्भावयत्। कौटल्यतः मौर्यसाम्राज्यं यावत् "कृण्वन्तो विश्वमार्यम्" इति सिद्धान्तस्य यादृग् प्रसारः आसीत्, सः सिद्धान्तः धर्मं नैतिकतां संस्कृतिं च आधृत्य अशोकेन प्रतिष्ठापितः। अस्य एषा परिणतिर्यच्छ्रमणैः ब्राह्मणैश्च जीवनमान्यता नूतनरीत्या व्याख्याता। दार्शनिकक्षेत्रे विभिन्नाः सम्प्रदायाः प्रतिष्ठाम् अलभन्त। अशोकः इमां स्थितिं नियन्त्रयितुं नूतनं धर्मं महामात्रविभागं स्थापयामास। परिणामे व्यक्तिवादिबौद्धधर्मद्वारा लाभाधिक्यस्य आशा अभूत्। तस्मिन् समये बौद्धाः प्रबुद्धाः आसन्।

बौद्धानां पुरो नैतिकः आदर्शः, पृष्ठतश्च बुद्धस्य व्यक्तित्वमासीत्। यद्यपि बुद्धः उपनिषद्विषये सम्यक्तया परिचितः, तथापि तेन अन्यथैव औपनिषदोऽर्थः व्यवस्थापितः। औपनिषदस्य 'ब्रह्मवेद' स्थाने 'धर्मवेदः' तेन उपस्थापितः। बौद्धानाम् आत्मस्वरूपम्, आन्तरिकप्रेरणा, विवेकः, विश्वमानववादः, जातिविहीनता, राजतन्त्रतो गणतन्त्रपर्यन्तं मान्यता च इत्येतानि औपनिषदं सिद्धान्तं नानुवर्तन्ते। वैदिकपरम्परायां राजधर्मेण समं क्षात्रशक्तिर्न कदापि परित्यक्ता। तेनैव सार्धं धर्मविजयः समन्वितः। अशोकेन बुद्धसिद्धान्तमाश्रित्य पारस्परिकसहिष्णुता प्रसारिता। येन सांस्कृतिकसम्पर्कः, परस्परबिमर्शः, विचारविनिमय इत्यादिभिः स्थानं लब्धम्। प्रशासनविषये अविश्वासादीनाम् अपाकरणपूर्वकं शान्तिम् आधृत्य प्रशासनस्य व्यवस्था चेष्टिता। राजदूताः सामदानदण्डभेदादिस्थाने दयाकर्त्तव्यसख्यभावादिषु शिक्षिताः आसन्, येषां दयादीनां प्रचारः तैः विदेशीयेषु देशीयेषु च जनेषु कृतः। मानवकल्याणार्थम् एष नूतनः प्रयोगः अमन्यत। बुद्धेन प्रतीकारात्मिका प्रवृत्तिः भर्त्सिता।[१] अशोकेन प्रतीकारस्थाने विवेकादिद्वारा क्रियमाणः एव विजयः धर्मविजय इति स्वीकृतः।

---

१. दीघनिकाये अगञ्ञ सुत्तन्त २।

अशोकेन बौद्धधर्मः न राज्यधर्मरूपेण उररीकृतः, अपितु स्वतन्त्र एव तस्य धर्मः स्वीयः आसीत्। परन्तु स धर्मः तेन अशोकधर्म इति नोद्घोषितः। विभिन्नेषु स्थानेषु बुद्धसन्देशानां प्रसारं बौद्धसङ्घानां सुव्यवस्थां च कुर्वता तेन तेषाम् आध्य-क्ष्यमपि आसादितम्। तेन यः आदर्शः व्यवस्थापित स बौद्धदर्शनमाधृत्यैव। अशोकेन इममेव आदर्शं पुरोधाय बिभिन्नेषु देशेषु दूतान् सम्प्रेष्य धर्मविजयः व्यावहारिकतां नीतः। पञ्च यूनानराज्यानि, पाण्ड्य-चोल-सतिपुत्र-केरलपुत्र-ताम्रपर्ण्य-योनस काम्बोज-गान्धार-नाभक-राष्ट्रिक-भोज-आंध्र-परिन्द-पारदइत्यादयः तदीयधर्मविजयस्य विषया आसन्। धर्ममहामात्रः धार्मिकान् उपदेशान् समर्थकांश्च रक्षति स्म। अशोकस्य धर्मविजयतः एशियादेशे बुद्धधर्मः प्रसारम्, विश्वसंस्कृतौ भारतवर्षम् माध्यस्थं च अलभत। विश्वेऽस्मिन् भारतेन सहिष्णुता-दीनि शान्तितत्त्वानि संस्थाप्य नूतनः सन्देशः विस्तारितः।[१]

अशोकस्य परराष्ट्रनीतिः द्विविधराष्ट्रसम्बन्धे आसीत्। तयोरेकं पार्श्ववर्ति-मित्रराष्ट्रं येन सह दौत्यसम्बन्धः आसीत्, अपरं लब्धप्रशासनिकस्वातन्त्र्यं राष्ट्रञ्च।[२] प्रथमस्तरीयराष्ट्रेषु देवानां प्रियेण अशोकेन धर्मविजयद्वारा विजयो लब्धः।[3] एवंविधः विजयः वास्तविकः विजयः। योनस-कम्बोज-नाभक-नाभ-भोज-पितिनिक-आन्ध्र-पुलिन्दादीनि लब्धस्वातन्त्र्याणि द्वितीयस्तरीयराष्ट्राणि उद्दिश्य तेन स्पष्टं कथितं यत् मत्तो न भेतव्यम्, मयि विश्वसनीयम्, मत्तो भवतां कल्याण-मेव भविष्यति, नामङ्गलम्। तैः स्मर्तव्यं यद् देवानां प्रियः सर्वं क्षन्तुं शक्नोति। परं मन्निर्दिष्टा नीतिः अवश्यं पालनीया।[४] अत्र अशोकेन अनिवार्यमैत्रीव्याजेन राष्ट्रान्तराणि दासीकर्तुं चेष्टितम्। तानि तदैव क्षन्तव्यानि आसन् यदा तैः अशोक-निर्दिष्टा नीतिः यथावत् पाल्येत, नान्यथा। तेन मानवकल्याणार्थं पार्श्वस्थराज्यानां साहाय्यमपि कृतम्। मानवकल्याणार्थं साहाय्यभावनापि उद्बोधिता।

परराष्ट्रविषयेऽपि अशोकस्य उभयपक्षीया सम्प्रभुता प्राप्यते। एकतः स राजनैतिकः सम्प्रभुः, अपरतश्च नैतिकनेता। स प्राणिमात्रविषये एकामेव नैतिकतां विदधाति। स विभिन्नाः मानवीयाः प्रवृत्तीः कौटल्यवद् अध्येतुं नाशकत्। अशोकः राजसु नैतिकनिर्देशकेषु चेत्युभयत्रापि स्वप्राधान्यं वाञ्छति। अशोकेन सामाजिकी नैतिकता धर्मश्चेत्युभयं राज्याधिकारेणैव निर्दिष्टम्। परिणामे तेन सार्वभौमसम्प्रभुता

---

१. डाक्टर ओटो स्टेन; इण्डियन कल्चर, खं० ४ पृ० २९६।

२. शहबाजगढ़ी शिलालेखः १३।

३. तदेव।

४. तदेव।

प्राप्ता । स राजा धर्मनिर्देशकश्च अभूत् । अर्थशास्त्रे कौटल्येन परराष्ट्रविषये षाड्गुण्य-नीतिः प्रतिपादिता । तत्र राजनीतेः व्यापकं व्यावहारिकञ्च स्वरूपम् आसीत् । तेन राज्ञः धर्मप्रवर्तकत्वं च उक्तम् । परन्तुः तदीयो धर्मः न वैयक्तिकः किन्तु शास्त्रपरम्परादीन् अनुरुद्धय । राजा केवलं धर्ममार्गे उपस्थिताः बाधाः निराकृत्य तस्य धर्मस्य प्रवर्तनं पुनः प्रतिष्ठापनं च कर्तुं शक्नोति । अशोकेन धर्मशास्त्रपरम्परादीन् अनादृत्य धर्मविषये स्वस्यैव प्रामाण्यं व्यवस्थापितम् । बौद्धादर्शानां प्रभावः आसीत्, परं तस्य वैयक्तिकः एव धर्मः । फलतः अशोकेन सार्वभौमसम्प्रभुत्वम् अनायासतयैव आसादितम् । ईदृशमेव च धर्मविजयं स सम्मनुते स्म ।

## नीतिवाक्यामृतम्

### राजतन्त्रम्

श्रीसोमदेवसूरिविरचितस्य नीतिवाक्यामृतस्य प्रतिपाद्यो विषयः राजनीतिः । सम्पूर्णः ग्रन्थः गद्यशैल्यां द्वात्रिंशत् समुद्देशेषु सूत्रपद्धत्या लिखितोऽस्ति । कौटलीयार्थशास्त्रस्य भूमिकायां श्रीयुतशामशास्त्री लिखति यद्यशोधरराजसमकालिकेन सोमदेवसूरिणा यन्नीतिवाक्यामृतं व्यरचि, तस्य पदानां वाक्यानां शैल्याश्च निःसन्देहमेतत्कथयितुं शक्यं यद्यथा कामन्दकीयनीतिसारः अर्थशास्त्रस्य सारभूतस्तथैव नीतिवाक्यामृतमपि अर्थशास्त्रस्य संक्षिप्तं स्वरूपम् । यशोधरस्तु जैनानां पुराणपुरुषः । अस्य उल्लेखः सोमदेवादपि पूर्ववर्त्तिना पुष्पदन्तेन बच्छरायेण च कृतः । यद्यपि कौटलीयार्थशास्त्रीयाणि कानिचिद् वाक्यानि यथानुपूर्वि सोमदेवेन गृहीतानि , तथापि नेदं कथयितुं शक्यं यन्नीतिवाक्यामृतम् अर्थशास्त्रस्य सारमात्रम् । सोमदेवेन स्वरचिते एव यशस्तिलकचम्पू-नाम्नि ग्रन्थे गुरुशुक्रविशालाक्षभारद्वाजानां नीतिशास्त्रकृतां निर्देशः कृतः ।[२] नीतिवाक्यामृतेऽपि तेन स्मृतिकाराः स्मृताः ।[३] सूरिणा स्वपूर्ववर्त्तिनां सर्वेषामपि आचार्याणां मतानि अधीतानि सङ्गृहीतानि च । क्वचित् क्वचित्तु जैनमतानां स्पष्टीकरणार्थं प्राचार्याणां विरोधोऽपि कृतः । परम् एतद्वैमत्यं प्रासङ्गिकम् । एतेन भारतीयराजनीतेः एकात्मकतायां कापि बाधा न दृश्यते ।

---

१. नीतिवा०–९।४; १२।२८; ११।१; १४।६; १०।३२,३३;३।११; अर्थशा० पृ० ९, १०, १५-१६, १८, २६, १५४ ( शामशास्त्री ) ।

२. यशस्तिलके आ० ४, पृ० १०० अत्रत्यश्लोकस्तुमनु० ६।६६ इत्येवास्ति । इत्थमेव आश्वासः ४ पृ० ६०, ६१, ११६, १२७, १४६ अत्रत्याः सर्वे श्लोकाः मनोरेव ।

३. ३१।२७ ।

सम्पूर्णो ग्रन्थोऽत्र न शक्यते विवेचयितुम्। तदीये राजतन्त्रविषये राज्य-क्षेत्रविषये चेह परिचयो दीयते। अत्र च तद्विषये कमपि स्वीयं विचारम् अप्रदर्श्यैव अस्माभिः तत्रत्यो विषयः तदनुसारमेव उद्ध्रियते।

अनुकूले मित्रवत्प्रतिकूले च शत्रुवदाचरेद् राजा।[1] स परो देवः।[2] वाय्वात्ममनःपृथ्वीप्रभृतीनां तत्त्वानां साम्यप्राप्तिः 'अध्यात्मयोगः' कथ्यते।[3] ईदृक् साधनाशीलो राजा 'अध्यात्मज्ञ' इति कथितः। अत एव तस्य कृते सहज शारीर-मानसागन्तुकानां दोषाणां बन्धनं न भवति।[4] इदमत्रावधेयं यद् एष नियमः आध्यात्मिकस्य राज्ञो विषये एव। सामान्यानां राज्ञां विषये तु दोषप्रतिबन्धः अस्त्येव। राज्ञि ब्रह्मविष्णुमहेशाः साक्षान्निवसन्ति।[5] स पृथिव्यां देवकल्पः।

दुष्टनिग्रहः शिष्टपरिपालनं च राज्ञो धर्मः।[6] इत्थं स्वधर्मं परिपालयन् राजा सर्वेषां गुरुः।[7] स वर्णाश्रमधर्मस्य षष्ठं भागम् आददाति।[8] संन्यासिनः यतयः तपस्विनश्च उञ्छस्य षष्ठं भागं राज्ञे ददति।[9] राजाज्ञा अलङ्घ्यप्राकारोऽस्ति।[10] युवराजोऽपि राजाज्ञां लङ्घयितुं न क्षमते।[11] इत्थं सर्वोच्चा शक्तिः राजहस्ते एव आसीत्।[12] एवं दैवसिद्धान्तप्रतिपादनं सोमदेवः करोति। एवंविधा एव स्वीकृतिः अन्यैरपि हिन्दूराजनीतिज्ञैः प्रदत्ता। परन्तु एतेन सहैव अस्य पक्षान्तरमप्यस्ति, येन पाश्चात्यसम्मतस्य दैवसिद्धान्तस्य तुलनायाः प्रश्न एव नोदेति। राज्ञः कर्त्तव्यानाम् आलोचनानन्तरम् एतत्सुस्पष्टं ज्ञातुं शक्यम्।

---

१. ५।१।

२. राजा हि परमं दैवतं नासौ कस्मैचित्प्रणमत्यन्यत्र गुरुजनेभ्यः—५।६७।

३. ६।२।

४. अध्यात्मज्ञो हि राजा सहजशारीरमानसागन्तुभिर्दोषैर्न बाध्यते—६।२।

५. २६।१६।

६. चित्रगतमपि राजानं नावमन्येत; क्षात्रं हि तेजो महती सत्पुरुषदेवतास्वरूपेण। ३२।६६।

७. ५।२।

८. ७।२२।

९. ७।२३।

१०. ७।२४।

११. १७।२५।

१२. १७।२६।

प्रजापालनमेव राज्ञो यज्ञः ।[१] स गुणदोषविवेचने तुलादण्डायते। स्वीयैः गुणैः दोषैश्च स प्रजासु गौरवं लाघवञ्च प्राप्नोति। स राजकुले उत्पन्नः, अत एव ब्रह्मविष्णुमहेशात्मक इति न, अपितु यदि स ब्रह्मचर्याश्रमम् आश्रित्य ब्रह्मनिष्णाते गुरुकुले सम्यग् अध्ययनं सम्पादितवान् तदा विष्णुकल्पः, राज्याभिषेकानन्तरं यदि स प्रजाः सम्यग् रञ्जयति तदा ब्रह्मसमः, यदि विजयद्वारेण स परमैश्वर्यम् प्राप्नोति, दुष्टानां राष्ट्रकण्टकानाञ्च उच्छेदं करोति तदा पिनाकपाणिना महेश्वरेण सदृशः ।[२] एवं वयं पश्यामः यत् 'जन्मसिद्धाधिकारस्य' लेशोऽपि न उपर्युक्त-सिद्धान्ते। एतत्तु निश्चितं यत् कर्त्तव्यपालक एव राजा देवसदृशः। सोमदेवेन तु सैव भूमिः सनाथा स्वीकृता यत्र आसुरवृत्तिः नास्ति ।[३] स्वयम् अविचार्य परमतानुसारेण एव कार्यसञ्चालनम्, सम्यग् अपरीक्ष्य दण्डदानञ्च च आसुरी वृत्तिः ।[४]

न केवलम् उत्तमकुलोत्पत्त्या एव राजा नायकपदम् अधिगन्तुं शक्नोति। मूर्खस्य राज्ञः स्थित्यपेक्षया संसारस्य अराजकता एव श्रेयसी ।[५] स राजा व्यर्थः यः प्रजाः न रक्षति ।[६] राज्ञो दुर्विनीततायां प्रजायाः नाशो निश्चप्रचः ।[७] विद्या-वृद्धसंयोगविहीनो राजा निरङ्कुशो गज इव विनाशं याति। अत एव इदम् आवश्यकं यद् राज्ञः (राजकुमारस्य वा) शिक्षायाः व्यवस्था कार्या। सोमदेवेन एष विषयः आलोचितः परन्तु विस्तरभिया नात्र विविच्यते अस्माभिः।

उत्तराधिकारार्थं नैतदावश्यकं यत् स राजवंशे एव उत्पद्यते। शिक्षासदाचार-हीनः राजपुत्रः नायकपदं प्राप्तुं न प्रभवति ।[९] जातीयसंस्कारहीनः न राज्या-धिकारी ।[१०] योग्यस्य पुत्रस्य अभावे अङ्गहीनायापि राज्याधिकारो देयः यावद् द्वितीयः

---

१. २८।१।

२. २६।१७, १८, १६।

३ २६।६६।

४. २६।६७।

५. वरमराजकं भुवनं न तु मूर्खो राजा—५।३७।

६. ७।२१।

७. ५।३८।

८. ५।६२।

६. असंस्कारं रत्नमिव सुजातमपि पुत्रं न नायकपदायामनन्ति साधव.—५।३८।

१०. २४।६६।

सुलक्षणः पुत्रो न जायेत ।[१] राजपुत्रेण विनीतेन साधुसङ्गतिमता च भाव्यम् ।[२] अन्यथा स स्वयं नश्यति राजवंशश्च विनाशयति ।[३] आप्तपुरुषेभ्यः विद्यावृद्धेभ्यश्च लब्धशिक्षाः राजकुमाराः पित्रोः हर्षहेतवो भवन्ति ।[४] तेषां कृते पितरौ एव परे देवते ।[५] तयोः प्रसादेनैव राज्यं लभ्यते ।[६] पुत्रः, भ्राता, विमातृपुत्रः, पितृव्यः, गोत्रीयः, कन्यापुत्रः, आगन्तुकश्च ये सन्ति तेषां पूर्वस्य पूर्वस्य अभावे परः परः राज्याधिकारी ।[७] . औरसः, क्षेत्रजः, दत्तः, कृत्रिमः, गूढोत्पन्नः, अपविद्धः एते षट् पुत्राः दायभागस्य पिण्डदानस्य च अधिकारिणः ।

सोमदेवेन वर्णानां वृत्तिविभागः स्वीकृतः । यदि वर्णधर्मः लोपम् आयाति तदा तच्छुद्धयर्थं स त्रयीम् आश्रयति ।[८] प्रजानां संस्कारः, साङ्कर्यतः धर्मस्य रक्षणम्, वर्गत्रये समन्वयश्च इत्यादिकं राज्ञः कर्त्तव्यम् ।[९] यः राजा एवं प्रजाः न रक्षति स न वस्तुतो राजा[१०] ; स्वधर्मपालको राजा सर्वेषां गुरुः ।[११] राजा कालस्य कारणम् । यदा स धर्मं न परिपालयति तदा राष्ट्रं विप्लवदुर्भिक्ष्यादिभिः आक्रम्यते ।[१२] यदि राजा स्वार्थपरायणो भवति तदा जनकल्याणं न सम्भाव्यते । यदि समुद्र एव पिपासितो भवति तदा संसारे जलान्तरस्य का गतिः ?[१३] अत एव वृद्धानाम्, बालानाम् आतुराणां पशूनाञ्च सुरक्षायाः दायित्वं राज्ञे निहितमस्ति । राज्ञः कर्त्तव्यं यत् स तान् बन्धून् इव पोषयेत् ।[१४] चौराः चरटाः ( देशनिष्कासिताः ) मन्नपाः

---

१. २४।७० ।

२. २४।७१ ।

३. २४।७२ ।

४. २४।७३ ।

५. २४।७४ ।

६. २४।७५ ।

७. २४।८६ ।

८. वर्णाश्रमाणां स्वाचारप्रच्यवने त्रयीतो विशुद्धिः—७।१९ ।

९. ७।२० ।

१०. स किं राजा यो न रक्षति प्रजाम्—७।२१ ।

११. ७।२२ ।

१२. ८।६ ।

१३. ८।७ ।

१४. ८।९ ।

( मापकारकाः ) आटविकाः ( अरण्यवासिनः ) तलाराः ( स्थानरक्षकाः ) अक्षशालिकाः, ग्रामकूटाः, वार्धुषिकाश्च राष्ट्रकण्टकाः।[१] राज्ञः कर्त्तव्यं यत् स एतान् उन्मूलयेत्।[२] राष्ट्रकण्टकानां विध्वंसनार्थं स लौकायतिक इव व्यवहरेत्।[३]

राज्ञः दण्डनीतिः प्रजारक्षणे उपयुक्ता स्यान्न तु स्वसम्पत् समृद्धौ।[४] स तु नैव राजा यः स्वजीवनरक्षणार्थं प्रजासु दोषान् गवेषयति।[५] दुष्प्रणीतेन दण्डेन कामेन क्रोधेन अज्ञानेन च विद्वेषमेव वर्धयति राजा। दुष्प्रणीताद् दण्डात् मात्स्यन्यायः उत्पद्यते।[६]

राज्ञः पूर्णतया विवरणार्थम् मन्त्रिपरिषद्, न्यायसभा, प्रजा, पुरोहितः, अमात्याः, कर्मचारिणः, वैदेशिक-सम्बन्धः, कुटुम्बश्च ये सन्ति तेषां पर्यालोचनम् आवश्यकम्। परन्तु अत्र एतेषां स्पष्टीकरणार्थं नावसरः, यद्यपि एते विषयाः महत्त्वपूर्णाः ्आकर्षकाः आवश्यकाश्च सन्ति। अत्र अस्माभिः राज्ञः स्वरूपस्य कर्त्तव्यानां च संक्षिप्तं स्वरूपम् उपस्थापितम् अस्ति। नात्र अस्माभिः प्राचीनानाम् आधुनिकानां च राजनीतिशास्त्राणां तुलना कृता।

### राज्यं तत्क्षेत्रञ्च

राष्ट्र, देश, विषय, मण्डल, जनपद, दरत्, निगम इत्येतेषां संघटनेन राज्यं पूर्णताम् आप्नोति।[७] सोमदेवेन पूर्वाचार्यान् अनुरुद्धयैव एतेषां व्याख्या कृता। अमात्यादयः प्रकृतयः स्वामिना विना निष्क्रियाः।[८] राजा तासां स्वामी। पृथ्वीपालनोचितं राज्ञः कर्म राज्यम् उच्यते।[९] पृथिवीपदेन वर्णाश्रमवती धान्यपशुकुप्यादीनां प्रदात्री पृथ्वी अभिप्रेता। अत्र व्याख्याकारैः उपयुक्तगुणविशिष्टा पृथ्वी अपि राज्यम् इत्युक्तम्,[१०] भृगुवाक्येणापि यत्समर्थ्यते।[११] अत्र इदमवधेयम्

---

१. ८।२१।
२. ८।२२।
३. ६।३३।
४. प्रजापालनाय राज्ञा दण्डः प्रणीयते न धनार्थम्—९।३।
५. ९।४।
६. ९।७।
७. जनपदसमुद्देश. १९।
८. २४।५।
९. ५।४।
१०. ५।५।
११. १९।५।

अस्ति यज्जैनराजनीतिविदा वर्णाश्रमधर्मः राज्यस्य महत्त्वपूर्णम् अङ्गम्; जनपद-शब्दं व्याचक्षाणेन तेन जनपदघटकजनशब्देन वर्णाश्रमा एव गृहीताः।[१]

क्रमः विक्रमश्च राज्यस्य मूलम्।[२] क्रम इत्यस्य तात्पर्यम् एतद् यत् परम्परा-प्राप्तं राज्यम्। विक्रमशब्दस्य अर्थः शौर्यम् लोकव्यवहारपालनेन क्रमो वर्धते।[३] अहम्भावाभावः विनयवृद्धिश्च विक्रमस्य भूषणम्।[४] यदि एतत्पालनं न जातं तदा अस्य फलम् अत्यन्तम् दारुणं भवति।[५] केवलेन शौर्येणैव न कल्याणम्।[६] तत्र फलसिद्धिः न दृष्टिगोचरा भवति। एतद्विषये शास्त्रमेव तृतीयं लोचनम्।[७] यः शास्त्रं नाधीतवान् सोऽन्धः।[८] इत्थं सोमदेवोऽपि शास्त्रं राज्याद् व्यक्तेश्च श्रेष्ठतमं मनुते। अध्यात्मविषये आन्वीक्षिक्याः, यज्ञादिषु त्रय्याः, कृषिकर्मादिषु वार्तायाः साधुपालनदुष्टनिग्रहादौ च दण्डनीतेः प्राधान्यं स्थापनीयम्।[९] दण्डनीतौ स्थिरं राज्यम् आन्वीक्षिकीत्रयीवार्तासु हस्तक्षेपं न कुर्यात्। बालान् आतुरान् पशूंश्च बन्धून् इव राजा परिपालयेत्।[१०] प्राचीनराज्यव्यवस्थायाम् उत्पादनसाधनेषु राज्यस्य अधिकारो नासीत्। क्वचिदंशे नियन्त्रणम् अवश्यम् आसीत्। महाभारः दीर्घमार्गश्च अकाले पशूनां मरणस्य कारणम्। तत्र राज्यनियन्त्रणं स्यात्।[११] शुल्क-वृद्ध्या बलात् पण्यग्रहणेन च अन्तर्देशीयानाम् राष्ट्रान्तरीयाणाञ्च उद्योगानां क्षतिः भवति।[१२] वणिजः तुलायामपि चौर्यं कुर्वन्ति। तेषां व्यवहाराः स्थानीयान् आगन्तुकांश्च तुदन्ति।[१३] अत एव तेषु राज्यनियन्त्रणं स्यात्।[१४] स्पर्धया मूल्यवृद्धिः

१. वर्णाश्रमसमोपेता सर्वकामान् प्रयच्छति।
या भूमिर्भूपते राज्यं प्रोक्ता साऽन्या विडम्बना॥

२. ५।२३।

३. ५।२७।

४. ५।२८।

५. ५।२९।

६. ५।३२।

७. ५।३४।

८. ५।३५।

९. ५।६०।

१०. ८।९।

११. ८।१०।

१२. ८।१२।

१३. ८।४।

१४. ८।१६।

जायते। राज्यस्य कर्त्तव्यं यद् राज्यं यथोचितं मूल्यं निर्धारयेत्।[१] वणिजा चौर्येण प्राप्तं धनं राज्यस्य भवति।[२] सर्पदंशेन पीडितो मानवः स्वीयामेव अङ्गुलीं छिनत्ति।[३] तथैव समाजविरोधिनां तत्त्वानां विनाशं राज्यं कुर्यात्। दण्डद्वारेण, अपराधिभ्यः गृहीतम्, द्यूतद्वारेण प्राप्तम्, मृतकस्य विस्मृतम्, चौरेण प्राप्तम्, पारदारिकम्, प्रजाविप्लवद्वारेण च प्राप्तं द्रव्यं राजा स्वकोशे न स्थापयेत्।[४] देवद्विजवणिगादीनां धर्मकार्ये भोगे च अनुपयुक्तं परिजनादिभ्यः वितरणानन्तरम् अवशिष्टं च यद्धनं तेनैव कोशं वर्धयेत्। एवमेव विधवानां धर्माधिष्ठानकारिणां ग्रामकूटानां वेश्यासंघातानां दम्भिनां च सम्पदा कोशं संवर्धयेत्। अतिरिक्त सम्पद्यपि प्रत्यादानयोजना अपेक्षिता। प्रार्थनापूर्वकं समाजेन जनपदेन अतिरिक्तस्य विभाजनं कारयित्वा तेन कोशवृद्धिं कुर्वीत। मन्त्रिणां पुरोधसां सामन्तभूपालानां च येषां सम्पदि अतिरिक्तायाः योजनायाः सम्भवः तद्द्वारेण कोशवृद्धिः कर्तुं शक्यते।[५] देशानुरूपः करो ग्राह्यः।[६] राज्यनियुक्तेभ्यः वेतनं यदि राजा न ददाति तदा दण्डनीयः।[७]

दुष्टेभ्यः साधूनां रक्षा राज्यस्य प्रथमं कर्त्तव्यम्।[८] परक्षेत्रेषु यः कृषिं करोति स न सम्पूर्णस्य फलस्य अपितु स्वभागस्यैव अधिकारी भवति।[९] सामाजिकमर्यादायाः रक्षणं राज्यस्य कर्त्तव्यम्। यदि देशे वर्णसाङ्कर्यं प्रसरति तदा तादृशे राज्ये नैव स्थेयम्। यत्र देशे जीविकायाः प्राप्तिः न, स देश एव न।[१०]

इत्थम् अस्माभिः राज्ञः स्वरूपं क्षेत्रञ्च ग्रन्थोक्तदिशा एव उपस्थापयितुं प्रयतितम्। अत्र विषये अधिकं जिज्ञासुभिः नीतिवाक्यामृतं द्रष्टव्यम्। सम्पूर्ण-विवेचनानन्तरं प्रकृतविषयस्य स्पष्टीकरणम् अनुभूयते अस्माभिः। अस्य निष्कर्षः स्व-स्व-दृष्टिकोणानुसारं विद्वद्भिः समुपस्थाप्यते।

---

१. ८।१८।
२. ८।३६।
३. ८।२९।
४. ९।५।
५. २१।१४; २६।४२।
६. २२।२१।
७. २४।७७।
८. २४।२५।
९. २६।५५।
१०. स किं देशो यत्र नास्त्यात्मनो वृत्तिः २७।८।

—:०:—

# ७

# काश्मीरराजनीतिः

## राजतरङ्गिण्यां भारतीयराजनीतिः

### राजतन्त्रम्

राज्योत्पत्तिविषये राजोत्पत्तिविषये च हिन्दुराजनीतिविदां नानामतानि सन्ति। ऋग्वेदीयं त्रस्यदस्यूपाख्यानम् इन्द्रवरुणयोः देवत्वञ्चाधृत्य घोषालमहोदयः राजतन्त्रस्य सिद्धान्तं दैवमेव मन्यते। एतेन सहैव वेदेषु राजतन्त्रस्थापनस्याधारः शक्तिवाद एव इत्यपि स मनुते। काशीप्रसादजायसवालमहोदयैः राज्याभिषेकीयान् मन्त्रानाधृत्य एतत्स्वीकृतमस्ति यद् राजतन्त्रं निर्वाचितमासीत्। अपरतश्च दैवासुरसङ्ग्रामतः नेतृत्वचर्चामुपस्थाप्य तेन शक्तिवादसिद्धान्तः स्वीकृतः। एतदवश्यं मन्तव्यं यत्ते राजतन्त्रविषये द्वाररूपतया निर्वाचनम् आद्रियन्ते। दीक्षितारमहोदयेनाङ्गीकृतमस्ति यत्पुराकाले निर्वाचनमेवाश्रित्य राज्यस्थापनं भवति स्म, परन्तु पश्चाद् राजपदं वंशानुगतं जातम्। डॉ० बेणीप्रसादमहोदयस्य एतन्मतं यज्जनैः शासकानां निर्वाचनं पुरा भवति स्म, इत्यत्र न किञ्चित् प्रमाणम्। आयङ्गारमहोदयैः भण्डारकरमहोदयैश्चापि अद्यत्वे राजतन्त्रस्य यादृशः अर्थः स्वीक्रियते, तत्तु भ्रममात्रमेव। रुद्रदमनस्य हर्षवर्धनस्य च राजतन्त्रं निर्वाचनमूलकम् आसीदिति खण्डयता डॉ० अल्तेकर महोदयेन इदं साधितं यद् अद्यत्वे इव निर्वाचितराजतन्त्रस्य सत्ता तदानीं नासीत्।

जर्मनदेशीयः जिम्मरमहोदयः मनुते यद् वैदिककाले निर्वाचनमेव राजतन्त्रस्याधार आसीत्।[१] एवंविधः एष विचारो वेवर महोदयेनाप्युपस्थापितः।[२] यद्यपि महाकाव्येषु वंशपरम्परैव राजतन्त्रस्य मूलतया निर्दिष्टा अस्ति, तथापि धर्मशास्त्राणाम्, कुटुम्बस्य, कुलस्य, लौकिकपरम्परायाः, प्रजायाश्च ईदृशं नियन्त्रणं भवति, येन राजा तान् उल्लङ्घयितुं न शक्नोति। गेल्डनरमहोदयेन तु एतदेवाधृत्य स्वीकृतं यद् राजतन्त्रं निर्वाचनापेक्षमासीदिति।[३] निरुक्ते[४] देवापिशान्तन्वोः कथा यास्केन यथा वर्णितास्ति तेनैतत्सिद्ध्यति यद् राजमतापेक्षया प्रजामतमेव आदरणीयमिति। अर्थाद् राजा प्रजाविरुद्धं नाचरितुमशकत्।

१. अटइण्डिशेज लेबेन, पृ० १६२।
२. इण्डिशे स्टडीज १७।८८।
३. वेदिशे स्टडीज १।३०३।
४. २।१०।

फलतः वंशपरम्पराऽनुसारं राज्याधिकारिणापि ज्येष्ठपुत्रेण न राजपदं प्राप्तम्। अस्याः कथाया उल्लेखः ऋग्वेदेऽपि दृश्यते।[१] इयं कथा महाभारते[२] इत्थं वर्णिता, "राज्ञः प्रतीपस्य त्रयः पुत्रा आसन्—देवापी, वाल्हीकः, शान्तनुश्च। राजा संक्रामकरोगेण ग्रस्तमपि ज्येष्ठपुत्रं देवापिनं राज्यपदे स्थापयितुं कामयते, किन्तु मन्त्रिणाम्, ब्राह्मणानाम्, पुरोहितानाम् जनतायाश्च एतद्विषये विरोध आसीत्; येन स राजा इत्थं कर्तुं नाशकत् अपि तु शान्तनुरेव राजपदं लेभे"। एतद् वर्णनं श्रीमद्भागवतेऽपि[३] दृश्यते। महाभारतीयं[४] ययातेरुपाख्यानमपि एतत्प्रमाणयति, यद् राजतन्त्रे राजा न पूर्णतया स्वायत्तः आसीत्। विष्णुपुराणेन[५], वायुपुराणेन[६] हरिवंशेनैव[७] एषः सिद्धान्तः समर्थितोऽस्ति।

डॉ० अल्तेकर महोदयेन राजतरङ्गिण्याः हर्षदेवस्य पक्षे जनविप्लवस्य तत्समाप्तेश्च विषये विचारयता लिखितमस्ति यज्जनमतस्य महत्त्वहीनं विलक्षणञ्च स्थानमासीत्, अर्थात् जनमतस्य न तदानीं किमपि महत्त्वमासीत्।[८] परन्तु राजतरङ्गिण्यां निर्वाचितस्य राजतन्त्रस्य विस्तरेण निरूपणं कृतमस्ति। वंशानुगते परम्परायाः अत्यधिकं निरसनं कृतमस्ति। निर्वाचितराजतन्त्रस्य विषये पर्याप्तानि प्रमाणानि राजतरङ्गिण्यामुपलभ्यन्ते। राज्योत्पत्तिविषयकस्य सिद्धान्तस्य यद्यपि न पूर्णतया स्पष्टीकरणं तत्र, तथापि राजतन्त्रविषये हिन्दुराजनीतेः पूर्णतया प्रयोगः दृश्यते।

राज्याधिकारः राज्याभिषेकतः आरभ्यते। कल्हणेन राज्याभिषेकस्य यत्स्वरूपमुपस्थापितं[९] तदद्यत्वे भारतवर्षे न दृश्यते। केवलं नेपालदेशे तत्स्वरूपं सुरक्षितमस्ति। स्याम, कम्बोडिया, हिन्दचीन, मलाया, जापान इत्येतेषु देशेषु अद्यापि

१. ऋ० १०।९८।११।
२. महा० ५।१४९।१४-२७।
३. श्रीमद्भाग० ९।२२।१२-१३।
४. महा० १।८५।१७-३५।
५. वि० पु० ४।१०।
६. वा० पु० ३।७४-८७।
७. हरिवंश० ३० अध्यायः।
८. State and Government in Ancient India, P. 54 ff.
९. अन्तर्वत्नीं तस्य पत्नीं तदा यदुकुलोद्वहः।
राज्ये यशोवतीं नाम द्विजैः कृष्णोऽभ्यषेचयत्॥१।७०।
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः।
कथमपि स कृतज्ञो राजजामातुरुच्चैर्व्यधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम्॥
(३।५२८)।

राज्याभिषेकस्य कानिचित् चिह्नानि दृश्यन्ते, तत्रापि मलायाजापानदेशयोर्विशेषतः। राज्याभिषेके काश्मीरदेशीयानां जनानां महत्त्वपूर्णं स्थानमासीत्। आर्यराजस्य विरक्ततया प्रजा अन्यं राजपदे स्थापयितुमियेष। फलतः मन्त्रिमण्डलेन राज्यशासनार्थं मेघवाहनः निमन्त्रितः। द्वितीयदिने एव समस्ताः प्रजाः आहूय आर्यराजेन राज्यं निक्षेपवत् प्रजायाः हस्ते प्रत्यावर्तितम्।[1] अत्र विषयद्वयमवधेयमस्ति। प्रथमन्तु इदं यद् राज्यं राजा निक्षेपवत् मन्यते स्म, न तु राज्ये स्वत्त्वम् राजा अमन्यत। द्वितीयमिदं यदयं निक्षेपः न ईश्वरीयः अपि तु जनानाम्। जयादेव्या अजितापीडः हठाद् राज्यासने स्थापितः।[2] परन्तु मम्मपक्षपतिभिः अजितापीडः राज्यपदात् निष्कासितः अनङ्गपीडश्च तत्र स्थापितः।[3]

काश्मीरदेशे तन्त्रिमण्डलस्य पदातिमण्डलस्य च राजकर्त्तृतया वर्णनं दृश्यते। सुगन्धादेव्या एतयोरेव साहाय्येन वर्षद्वयं यावत् शासनभारः ऊढः।[4]

---

१. शमव्यसनिनस्तस्य राजकार्याण्यपश्यतः।
तस्मिन्काले प्रकृतयो विरागं प्रतिपेदिरे॥
(२।१४३)

दिष्टया सदैव वैमुख्यमुच्चैरुद्घोषयाञ्छ्रियः।
त्यागक्षणे न भीतोऽस्मि विकत्थन इवाहवे॥
(२।१५७)

इति सचिन्तयन्नंतः सर्वत्यागोन्मुखो नृपः।
मनोराज्यानि कुर्वाणो दरिद्र इव पिप्रिये॥
(२।१५८)

अन्येद्युः प्रकृतीः सर्वाः सन्निपत्य सभान्तरे।
ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यसुरक्षितम्॥
(१५९)

२. अथ मेघावलीदेव्यां जातो बप्पियभूपतेः।
ज्येष्ठोऽप्यचाक्रिकतया योऽभूद्राज्यविवर्जितः॥
सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत्।
राजानमजितापीडं तं बलादुत्पलो व्यधात्॥ युग्मम्॥
(४।६८९-६९०)

३. मम्मोत्साहसहिष्णुत्वात्सभृतामर्षवैकृतः।
तस्य राज्यं द्विषन्नासीत्सुखवर्मोत्पलात्मजः॥
(४।७०८)

४. सुगन्धया पाल्यमानः सत्यसन्धो वसुन्धराम्।
(५।२२८)
सुगन्धा विदधे राज्यं सा मित्रत्वेन तन्त्रिणाम्॥
(५।२४९)

पश्चात्तन्त्रिणः सामन्तान्, मन्त्रिणः एकाङ्गान् चाहूय कस्मैचिद् योग्याय पुरुषाय शासनभारः प्रदेय इति विचारितम्।[१] परन्तु तन्त्रिभिः पदातिभिश्च स्वेच्छानुसारं निर्जितवर्मणः दशवर्षीयः पुत्रः पार्थः राज्यपदे प्रतिष्ठापितः।[२] कल्हणेन एषां तन्त्रिणां पदातीनाञ्च स्वार्थपरायणता अत्यन्तं भर्त्सिता। तस्य एष हेतुर्यद् एतैः जनविरुद्धमपि आचारितमासीत्। मन्त्रिपदस्य राजपदस्य च एते विक्रेतार एव आसन्। चक्रवर्मणा एतेभ्यः धनं न प्रदत्तम्। अतएव स राजपदाद् भ्रष्टः।[३] जनविरुद्धमाचरतां तेषां तन्त्रिणां पदातीनाञ्च अन्ततः सर्वथा विनाशोऽभूत्।[४]

ईदृशमपि वर्णनं लभ्यते यद् राजनिर्माणविषये ब्राह्मणपरिषत्सु बहुदिनव्यापिविचारः प्रचलित आसीदिति। कमलवर्धनस्य निष्कासनानन्तरं गोकुलनामके मन्दिरे ब्राह्मणानां सभाऽभूदित्यपि निर्देशो लभ्यते।[५] बहुकालपर्यन्तं विचारानन्तरमवन्तिवर्मा राजपदे स्थापितः।[६] राजेच्छामनादृत्य मन्त्रिभिः

---

१. योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा।
मन्त्राय मन्त्रिसामन्तांस्तन्व्येकाङ्गान् अढौकयत्॥
(५।२५०)

२. राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोऽभवत्।
(५।२५२)

३. निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः।
अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुताम्॥
(५।२६३)

४. उदयं संहता एव संहता एव च क्षयम्।
प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन्॥
(५।३३७)

५. अभ्रृङ्गोक्षनिभा विप्राः समगंसत गोकुले।
(५।४६१)

धूमनिर्दग्ध कूर्चानां राज्ञस्तास्तांश्चिकीर्षताम्॥
राज्यव्यवस्थोपन्यासस्तेषां चिरमवर्धत।
(५।४६२)

वैमत्येन मिथस्तेषां नान्यः कोऽप्यभिषिच्यत॥ ।
(५।४६३)

६. दृष्टैव तं दैववशादैकमत्यस्पृशो द्विजाः।
ध्वनिं राजाऽयमेवास्त्वित्युच्चकैरुदचारयन्॥
(५।४७६)

हर्षः राज्यासने प्रतिष्ठापितः। इत्थममात्येच्छानां जनमतानाञ्च पुरः राजेच्छायाः न किमपि महत्त्वमासीत्। गुप्ततमेष्वपि कार्येषु राजा मन्त्रिणां विचारान् स्वीकृतिञ्च अपेक्षते स्म।[१] यद्यपि ईदृशा अपि निर्देशा लभ्यन्ते यैः राज्ञा मन्त्रिणाम् अनादरः व्यज्यते। परन्तु ईदृशी अवहेलना कार्यान्विता भवितुं नाशकत्; अथवा जनानमुदासीनतयैव राज्ञा ईदृशी अवहेलना क्रियते स्म।[२]

प्रकृतविषयस्य उत्तराधिकारसम्बन्धिभिः प्रमाणैरपि पर्याप्तं परिज्ञानं भवति। स्वपुत्राणाम् उत्तराधिकारविषये ललितादित्येन समन्त्रिभ्यः यत्किञ्चित् कथितं तद् राजनीतिकदृष्ट्या महत्त्वपूर्णम्। तेन कथितं यत् "मम ज्येष्ठपुत्रः एव राज्यपदे स्थापनीयः। परन्तु यदि सः क्रोधी कष्टदश्च भवेत्तदा तद्विरुद्धमाचरणं कृत्वा सः राज्यपदात् निष्कासनीयः। एतेन सन्तप्तः सन् यदि सः प्राणान् देशं वा त्यजति तदा केनापि तत्र विषये न शोचनीयम्। एष एव मे आदेशः।" ललितादित्यस्य मृत्योः पश्चान्मन्त्रिणः प्रजाः आहूय ताभ्यः राजसन्देशं न्यवेदयन्। सर्वसम्मत्या कुवलयापीडः राजपदमलभत। मेघावलीदेव्याः पुत्रः त्रिभुवनापीडः यद्यपि ज्येष्ठ आसीत् तथापि न स राज्यं लेभे इति

---

१. ज्ञातिप्रीत्यनुवृत्त्यादि तेन विस्मरता ततः।
संमन्त्र्य मन्त्रिभिः सार्धं दध्रे तद् वधनिश्चयः॥
(७।१२५१)

२. जयापीडस्य यत्किंचित्सूनुना हि व्ययीकृतम्।
सूनुस्यालैरशेषं तत्तैः क्रमेण हृतं वसु॥
(४।६८३)

भगिनीभगसौभाग्यसम्भवैर्विभवैः कृताः।
तेऽभङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः॥
(४।६८४)

निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तशैशवात्।
ते स्वस्रीयान्नृपान्नाशमकुलीनाः शशङ्किरे॥
(४।६८५)

अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः।
राज्येच्छया तैः स्वस्रीयः स्वामी च स नृपो हतः॥
भुक्तक्षितौ द्वादशाब्दांस्तस्मिन् व्यापादिते तथा।
नैच्छन्नेकस्य ते राज्यं परस्परमहङ्कृताः॥
तेषामाक्रान्तदेशानां नाममात्रमहीपतीन्।
तांस्तान् कर्तुं सामान्यान्विरोधोऽन्योन्यमुद्ययौ॥
(४।४८६-६८८)

निर्देशो लभ्यते।[१] शासने क्रमिकता सम्पादनार्थं दासीपुत्रमपि राजपुत्रतया उद्घोष्य सामन्तैः, सचिवैः, एकाङ्गैः तन्त्रिभिश्च राज्यं सञ्चालितम्।[२] राज्याभिषेकसम्मतिविषयेऽन्यदपि प्रमाणं लभ्यते यत्र तन्त्रादीनां मुख्यता स्वीकृता।[3]

कल्हणेन अक्षत्रिया अपि राजानः वर्णिताः। ईदृशैः राजभि निम्नवर्गीयाः मन्त्रिणः कर्मचारिणश्च नियोजिताः। राज्यविषये इयं वर्गीया स्थापना कल्हणेन उपेक्षा दृष्ट्या वर्णिता।[४] एतत्स्थले ईदृशोऽपि संकेतः लभ्यते यत्कालविशेषे पाशुपतानामपि महत्त्वमासीत्। राज्ञा तेषां कृते देवायतनानि निर्मितानि, बहूनि सौविध्यानि च प्रदत्तानि।[५]

यदि राजशक्तिः जनमतं मन्त्रिमण्डलीयनियन्त्रणशक्तिञ्चातिक्राम्यति स्म तदा मन्त्रिभिः षड्यन्त्रैः स्वदेशीयशक्तिभिः राष्ट्रद्रोहद्वारेण वा राजा राज्यपदाद् यातितः। युधिष्ठिरविषये ईदृगेव आचरितम्। युधिष्ठिरस्य पलायनेन रोदनेन च स्पेनदेशीयस्य राज्यपदाच्च्युतस्य बोडिल इत्येतस्य अन्तिमा स्थितिः तुलिता आर० यस० पण्डितेन। राज्यकर्तॄणां प्रातिकूल्येनैव राजानः राज्याद् भ्रष्टा अभूवन्।[६] तेषामानुकूल्य सम्पादनेनैव राज्यपदं प्राप्तम्। एवं वयम् पश्यामो यत् शासकनिर्धारणे राजनिर्वाचने वा जनतायाः पूर्णतया अधिकार आसीदिति राजतरङ्गिण्याः ऐतिहासिकेन वर्णनेन लभ्यते। अत्र बहूनां प्रमाणानां षड्यन्त्रैः घटनमस्ति। परन्तु तदीयाः निष्कर्षाः नास्वीकर्तुं शक्याः। यस्य दैवसिद्धान्तस्य चर्चा क्रियते तस्य कृते राजतरङ्गिण्यां न किमपि स्थानम्। विशेषतः तस्य स्वरूपं नियन्त्रितराजतन्त्रमेव। अत्रेद वैशिष्ट्यम् अतिरिच्यते यद् राजविषये न केवलं नैतिकमेव अपि तु पूर्णतया व्यावहारिकं नियन्त्रणम् इत्यत्र लभ्यते। इदमपि स्पष्टी भवति यद्राजेच्छापेक्षया जनशक्तेरेव महत्त्वम्।

---

१. अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः।
क्षितिपालात्प्रजातोऽयमिति प्रख्यापितो मृषा॥
(५।४४५)

२. तामापतन्तीमाकर्ण्य पार्थानुग्रहका भवात्।
चैत्रान्ते तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः॥
(५।२६०)

३. ५।३८१-३६० आदयः।

४. नृपतिः श्वपचकामी विश्वस्तांश्छद्मनावधीत्—५।४०५।

५. १।३६८।

६. आवर्जितैः स निखिलैरधिकोत्कोचचर्चया।
वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्॥
(५।३०४)

मुगलसम्राजा जहाङ्गीरेण आगरास्थितदुर्गे एका सुवर्णमयी शृङ्खला योजिताऽसीत्। अस्याः दीर्घता गुरुत्वञ्च वर्णितासीत्। अत्र षष्टिः घण्टिकाः लग्ना आसन्! अस्यैकः कोणः दुर्गे, अपरश्च यमुनाकूलस्थे पाषाणमये स्तम्भे बद्ध आसीत्। इमां शृङ्खलां न्यायशृङ्खलां कथयन्ति स्म। केचन इमां जहाङ्गीरस्य बुद्धेः प्रतीकभूतां कथयन्ति। केषाञ्चिद् विचारः यदुक्त-शृङ्खलाविषये ईरानदेशीयः राजा तेन अनुसृतः। सन् १९४० ख्रीष्टीय जुलाई मासीय 'इण्डियन कल्चर' पत्रिकायामेकेन विदुषैतत्साधयितुं चेष्टितं यदीसातः शताब्दी द्वयात्पूर्वमेव भारतवर्षेऽस्य मूलमासीत्। महावंशनामके एकस्मिन् पुरातने पालिभाषानिबद्धे बौद्धग्रन्थे लङ्कायाः इतिहासो वर्णितः। तत्र लिखितमस्ति यच्चोलदेशीयः एळार नामकः तामिलसेनानीः सिंहलद्वीपस्य राजपदमधिष्ठितः। तस्य समयः ईसातः शताब्दी द्वयात्पूर्वतोऽस्ति। तेन स्वप्रासादे एका रज्जुः योजिता आसीत्, यस्याः एकः कोणः बहिः अपरश्च तत्पर्यङ्कस्य शिरोभागे आसीत्। तत्र एका विशाला घण्टिका योजिता आसीद् या रज्जुकम्पनेन नादं करोति स्म। अस्याः प्रयोगः न्यायप्राप्त्यर्थं क्रियते स्म। राज्ञः हर्षदेवस्य राज्यं वर्णयता कल्हणेन न्यायशृङ्खलाया निर्देशः कृतः। हर्षदेवेन प्रार्थिनां प्रार्थनाः श्रोतुं राजप्रासादस्य चतसृणां दिशां चतुर्ष्वपि सिंहद्वारेषु चतस्रः विशालाः घण्टिकाः बद्धा आसन्।[1] यथा प्रावृषेण्यः पयोधरः चातकानां आर्तस्वरं श्रुत्वा तेषां पिपासां शमयति तथैव स राजापि प्रार्थिनामार्तानि वचनानि श्रुत्वा तेषां दुःखानि दूरी करोति स्म।[2] अनेन न्यायशृङ्खलायाः निर्देशेन हर्षदेवस्य नैतिकता तु प्रकाशपथ मायात्येव, सहैव एतदपि सिद्धं भवति यज्जहांगीरस्य एष प्रयोगः अपूर्वो नासीद् अपि तु भारतीयराजनीतौ एषः प्रयोगः काश्मीरादारभ्य कन्याकुमारीं यावत्पूर्व-कालत एव प्रचलन्नासीत्।

राजा न्यायस्य अन्तिमं पदमासीत्। छलितस्वामिनः मन्दिरे एकया ब्राह्मिण्या प्रायोपवेशनं कृतमिति चतुर्थतरङ्गे उल्लिखितं कल्हणेन। अनया घटनया अनेकेषां राजनीतिकविषयाणां स्पष्टीकरणं भवति। प्रायोपवेशनस्य

---

१. सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत्।
ज्ञातुं विज्ञप्तिकामान्स प्राप्तांस्तद्ध्वानसंज्ञया॥
(७।८७९)

२. आर्तां च वाचमाकर्ण्य तेषां तृष्णा निवारणम्।
प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत्॥
(७।८८०)

प्रभावः राज्ञा अपरिहार्य आसीत्। न्यायविषये दिव्यसाक्षिणः निर्णायकतया आस्तृताः। जातीयतामाधृत्य न्यायव्यवस्था आसीत्। यथा मनुना ब्राह्मणक्षत्रिय-वैश्यशूद्रेषु दण्डवैषम्यं स्वीकृतम्[१] तथैव तदानीं कश्मीरदेशेऽपि न्यायविषये वर्ण-विभागः आसीत्। वर्तमानशासनात्पूर्वं हरीसिंहस्य शासनकालं यावदेवंविधैव न्यायव्यवस्था प्राप्यते स्म। यदा राजा वास्तवं न्यायस्याधारम् (निर्णायकं प्रमाणम्) लब्धुं नाशकत्तदा सोऽपि देवालये प्रायोपवेशनम् करोति स्म।[२]

न्यायसभानिर्णयप्रतिकूलाः ये प्रश्नाः राज्ञः पुरः आयान्ति स्म तद्विषये राजा सभासदः परामृशति स्म। एतदवश्यमासीद् यत् स न्याय्यपक्षे सभासद्मार्गैः न बाध्यते स्म। स तेषामपि विचारान् पर्यालोच्य वास्तवं निर्णयं करोति स्म।[३] विश्वसघातादीनामपराधानां विषये सभ्यान् परामृश्य राजनिर्वासनात्मकोऽपि दण्डो दीयते स्म।[४] राजा प्रधानन्यायाधीशस्य नियुक्तिविषये पूर्णतया अधिकारी आसीत्।[५] न्यायालयीयानामन्येषां कर्मचारिणां नियुक्तेः निष्कासनस्य च तथा वेतनादेः अधिकारः राजहस्तगतः आसीत्।[६] परन्तु तत्र प्रजायाः अङ्कुशः आसीत्। अतएव इत्थंकरणे स सभासदैः सह परामृशत्। सभासदः परामर्शम-पेक्षते स्म।[७] न्यायालयीयाः वेशभूषादयः व्यवहारादेश्च राजतरङ्गिण्याः आलोचनेन् परिज्ञाताः भवन्ति स्म।[८] कर्मचारिणमाह्वानादेरपि वर्णनं लभ्यते।[९] एतस्य विवेचनस्य अयमाशयो यद्राजा न्यायस्य चरमं पदमासीत्।

---

१. मनु० ८।३३७-३३८।

२. ४।९२-१०४।

३. ६।३०-४०।

४. सभ्यैरच्यमानेन राज्ञा सार्धं वणिग्गृहम्।
वितीर्णमर्थिने देशात्प्रत्यर्थी च प्रवासितः॥
(६।४१)

५. ८।१८१।

६. डामरेभ्यो नृपः पारात्सगृह्णन्कृतवेतनः।
निनायाभ्यन्तर वृद्धिं बाह्यं चापचयं जनम्॥
(८।१५४२)

७. ८।२०९८।

८. ७।२३४-५; ६२२।

९. ७।६२२-३१, ५।४८३, ८।३३२७।

यथा उद्गच्छन् सूर्यः मन्देः नामकान् राक्षसान् नाशयति तथैव राजापि न्यायमार्गम् अनुसरन् सर्वान् व्यावहारिकान् संशयान् दूरीकरोति ।[१] राज्ञः केवलं एतदेव कर्त्तव्यं नासीद्यत् सः शोभनं प्रशासनं स्थापयेत् । अपितु नैतिकनियमानां परिपालनमपि तस्य कर्त्तव्यमासीत् । यदि कस्यचिदकाले एव मृत्युर्भवेत्तदा शासनस्य दौर्बल्यम्, अत्याचारः, राज्ञः पापमेव वा तस्य अकालमृत्योः कारणं मन्यते स्म ।[२] यद्यपि एष सिद्धान्तः आसीद्यद् भूमिष्ठा सम्पत्तिः राज्ञः, किन्तु एष नियमः तदैव यदा तस्याः सम्पदः कश्चित् स्वामी न भवेत् । यदि स्वामिनि सत्यपि राजा सम्पत्तिमादद्यात्तदा राज्ञो नाशः ध्रुवः ।[3] राज्ञः कर्त्तव्यमासीद् यत् स उचितरीत्या स्वसमयं विभाज्य तदनुसारं कार्यं कुर्यात् ।[४] राज्ञा सामदान-भेददण्डानामुपायानां यथोचितं प्रयोगः कर्त्तव्यः । प्रजाविषये एतेषामुपायानां प्रयोगे विशेषतः सावधानेन भाव्यम् । राज्ञः एव परस्परं व्यवहारनीतेः पालनमुचितं मन्यते स्म ।[५] राजा वैयक्तिकीं सम्पदं ग्रहीतुं नाशकत् । किं बहुना 'उचितप्रतिफल'-दानेऽपि यदि स्वत्त्वाधिकारी राजकार्यार्थमपि स्वसम्पदं न ददाति तदा राज्ञः कर्त्तव्यमासीत् यत् सः बलात् तस्य सम्पत्तिं न गृह्णीयात्, यदि स ( स्वत्त्वाधिकारी ) स्वेच्छया ददाति तदैव राज्ञा तत्सम्पत्तिः ग्राह्याः । राजा अतिसाधारणस्य च चर्म-कारस्याऽपि भूमिं तत्स्वीकृतिं विना ग्रहीतुं नाशकत् । यदा मन्त्रिपरिषदा भूमिग्रहणं निर्णीतमासीत् तदा भूमिः ग्राह्या एव इति ।[६]

---

१. ४।५३ ।

२. यद्यहिंसा ग्रहेणेमं क्षितिपाल न रक्षसि ।
एतत्विपत्तौ कोऽन्यो निमित्तं प्रतिभाति मे ।।
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयताम् ।
ब्राह्मणस्य पशोर्वा स्यात्प्राणानां कियदन्तरम् ।।
तपः स्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये ।
हा मातस्तेऽधुना भूमे प्रजापालास्तिरोहिताः ।।
( ३।८४-८६ )

३. ७।४६६ ।

४. त्रिवर्गं सेवमानः स विभज्य समयं सुखी ।
मध्याह्नादूर्ध्वमभवदश्यः सर्वकार्यिणाम् ।।
( ७।५१० )

५. ७।६१४ ।

६. ४।५०-८० ।

राज्ञि धर्मस्य व्यवहारस्य च नियन्त्रणमासीत्। राज्ञः विषये कल्हणेन उक्तं यद् राजा सर्वानपि मन्त्रिणः राजनीति शिक्षयितुं शक्नोति, परन्तु तं न कश्चिदपि।[१] परन्तु द्वितीयश्लोके राज्ञः सार्वभौमताविषये नियन्त्रण प्रतिपादयन् चन्द्रपीडः कथयति यथा वज्रभयेन गरुड· स्वपक्षान् त्यजति तथैव धर्माधर्मभयेन राजाऽपि स्वपक्षं परित्यजति।[२] न्यायमार्गानुवर्तनमेव राज्ञः कृते सर्वोत्तमं रक्षणम्।[३] अग्रे चन्द्रपीडः कथयति यद् राजा कालं निर्धारयति, यदि स एव न्याय मार्गं नानुवर्तते, का कथा अन्येषाम्।[४]

राजनीतौ राज्ञीनामपि विषयेऽवश्यं विचारणीयम्। राजतरङ्गिण्यां राज्ञीनां यद् व्यावहारिकं स्वरूपं वर्णितं तन्नोपेक्षामर्हति। अत्र एतदपि अवधेयमस्ति यद् आपत्काले स्त्रियोऽपि राज्यस्य अधिकारिण्यः इति भीष्मेण स्वीकृतमस्ति।[५] तदनुसारं यदि राजा युद्धे निहन्यते, तस्य च पुत्र्याः ऋते संततिर्नास्ति, अर्थात् पुत्रः नास्ति केवलं पुत्री एवाऽस्ति तदा तत्पुत्री एव तदीयस्य राज्यस्य अधिकारिणी—"कुमारोनाऽस्ति येषां हि कन्यास्तत्राभिषेचयेत्"।

जयादेवी पञ्चानामपि स्वभ्रातॄणा नियन्त्रणमकरोत्, शासनञ्च निरदिशत्। सर्वे भ्रातरः तदाज्ञां पर्यपालयन्।[६] राज्ञ्याः इच्छायाः राजनीतौ महत्त्वपूर्णं स्थानमासीत्। सा राज्ञा सह राज्ञ पार्श्वे राज्यासने उपविशति स्म। सारांशं परामर्शं ददाति स्म सहैव च राजनीतिकेषु विचारेष्वपि तस्याः हस्तक्षेपः आसीत्।[७] राज्याभिषेकावसरे राज्ञा क्रियमाणा प्रतिज्ञाऽपि राज्ञ्याः महत्त्वं प्रकाशयति।[८] राज्ञ्याः आज्ञापत्रस्य उल्लघनमसाधारणघटना मन्यते स्म।[९] राज्ञीनां स्वतन्त्रः स्वीयः कोषोऽपि भवति स्म। पद्मराजेन राज्ञे सम्पत्तिं प्रदाय राज्यं क्रीतमिव, राज्ये दुर्व्यवस्था आरब्धा। अस्मिन्नवसरे देव्या सूर्यमत्या स्वकोषात्सम्पदं प्रदाय

---

१. ४।५१।

२. यस्याधर्मभयादासीत्सत्याज्यो धर्मसंशये।
निजोऽपि पक्षः कुलिशमासादिव गरुत्मत ॥
(४।५२)

३. ४।५३।

४. ४।६०।

५. भीष्म० ३२-३३, कुमारो नास्ति येषा हि कन्यास्तमाभिषेचय।

६. ४।६८१।

७. ४।३१७।

८. ८।३००६।

९. ७।१२०६।

राज्यस्योद्धारः कृतः।[१] राज्ञी न्यायालये स्वकार्याणां स्वयमुत्तरदायिनी भवति स्म।[२] तस्याः कृते वीरमातृत्वं सौभाग्यं मन्यते स्म।[३] तस्याः प्रधानकार्यक्षेत्रं गृहमासीत् तद्द्वारेण च राजनीतावपि तस्याः प्रवेशः आसीत्।[४] आत्मग्लान्या राजनीतिकापमानेन च राज्ञीभिः आत्महननमपि क्रियते स्म।[५] राज्ञीं बिना राज्याभिषेकः दुष्करः आसीत्। तत्र तस्याः स्वीकृतिरपेक्षितासीत्।[६] राज्याभिषेके ता अपि उपतिष्ठन्ति स्म। राज्ञीनां महत्त्वं तावदधिकमासीद् यत् त्यक्तां विस्मृतां वा राज्ञीं स्वनेत्रीं कृत्वा तद्द्वारेण जनमतमनुकूलितं क्रान्तेश्च साफल्यम् आप्तम् राजविद्रोहिभिः।[७]

मन्त्रिमण्डलम्

एशिया इति खण्डस्य प्रायः सर्वाभिः राजनीतिकीभिः सांस्कृतिकीभिश्च विचारधाराभिः काश्मीरस्य सम्बन्धः आसीत्। तस्य भौगोलिकी स्थितिः एव ईदृशी। परन्तु तत्रत्यासु विचारधारासु कार्यप्रणालीषु च मूलतः भारतीयविचारधारायाः ईदृशः प्रभावः आसीत् येन अन्यासां विचारधाराणां प्रभावः स्पष्टतया न परिलक्ष्यते। खेदस्य विषयो यदाधुनिकाः भारतीयाः विचारकाः इमां वास्तविकीं वस्तुस्थितिं पिधातुं चेष्टन्ते। वस्तुतः भारतीयसंस्कृतेः अन्या न काचित् काश्मीरस्य संस्कृतिः भवितुं शक्नोति। तत्रत्यानां राजनीतिकविभागानां या शब्दावलिः, यद् राजनीतिकं सङ्घटनञ्चैतत्सर्वमेव भारतीयराजनीत्या सम्बद्धम्।

जलौजस्य राज्यप्रबन्धवर्णनावसरे कल्हणेन लिखितं यत्तत्र राज्यप्रबन्धात् पूर्वं धर्माध्यक्षः, धनाध्यक्षः, कोषाध्यक्षः, सेनाध्यक्षः, परराष्ट्रसचिवः, पुरोहितः,

---

१. ५।१६७।

२. ७।२६२-२६३।

३. क्षत्रियापुत्र जीवित्वा कल्पानल्पेतरानपि।
कारणैरपि गन्तव्यं नियमान्नियतेर्वशम्॥
(७।६६१)

तदेतस्मिन् समासन्ने मरणेऽव्यभिचारिणि।
यदर्थं गृह्यते शस्त्रं स मानः पाल्यतां त्वया॥
(७।६६२)

४. ८।३०६३-६६।

५. ७।६८०; ४।३२३।

६. ८।८१-८७।

७. ८।१६६८; ८।३११८; ८।३११; ७।५३५।

सचिवः एते सप्त अधिकारिणः आसन्।[१] जलौजेन शासने परिवर्तनं कृतम्, युधिष्ठिरवत् कर्मस्थानं अष्टादशसु भागेषु विभाजितञ्च।[२] अष्टादशभागा रामायण-[३] महाभारत-[४] पञ्चतन्त्र-[५] रघुवंश-[६] शिशुपालवधादिषु[७] विस्तरेण वर्णिताः। नीलकण्ठेन एते विभागाः इत्थं परिगणिताः—(१) मन्त्री (२) पुरोहितः (३) युवराजः (४) सेनापतिः (५) द्वारपालः (६) अन्तर्देशिकः (७) कारागाराधिकारी (८) द्रव्यसञ्चयकर्त्ता (९) सन्निधाता (अस्य पञ्च विभागाः आसन्) (१०) प्रदेष्टा (एषः कार्यपालिकान्यायपालिकयोः सम्बन्धं स्थापयति) (११) नगराध्यक्षः (१२) कार्यनिर्माणकृत (१३) धर्माध्यक्षः (एषः न्यायपालिकायाः प्रधान असीत्) (१४) सभाध्यक्षः (१५) दण्डपालः (१६) दुर्गपालः (१७) राष्ट्रान्तपालः (१८) अटविपालः।

पुरोहितविषये कल्हणेन एतत् कथितं यत् सः राज्ञः माध्यमिकनिर्देशकः राजनीतिविषये परामर्शदाता च आसीत्। राज्यपुरोहितयोः सम्बन्धविषये विचारयता 'गेल्डनर' नामकेन जर्मनदेशीयविदुषा उदाहरणतया ऋग्वेदीयौ वशिष्ठविश्वामित्रौ उपस्थापितौ। पुरोहितस्य कृते दण्डनीतेः अध्ययनम् आवश्यकम् अमन्यत। क्षत्रियस्य लौकिकशक्तेः ब्राह्मणस्य च आध्यात्मिकशक्तेश्च प्रयोगः लोककल्याणपूर्तौ अपूर्वं साधनम् अभूत्। किन्तु यूरोपखण्डस्य मध्यकालिके राज्ये यथा चर्चराज्ययोः परस्परं सङ्घर्षो जातः, तथा सङ्घर्षः भारतीयराजनीतौ कदाऽपि नाभूत्। तस्य कारणमिदं यद् यथा देशान्तरे 'चर्च' नाम्नी संस्था तथा भारते न काऽपि ईदृशी स्वार्थसाधिका संस्था आसीत्। न वा शक्तिप्राप्तेः भावना आसीत्। राजतन्त्रस्य दैवसिद्धान्तविवेचनावसरे एतद्विषये विचारितमस्ति। अत्र केवलं 'नेपोलियन' इत्यस्य वार्तायाः आम्रेडनम् एव पर्याप्तम्—"ईसाई, धर्मस्य सर्वतो महत्कार्यम् इदं यत्तेन धनिकेभ्यः निर्धनाः रक्षिताः। यदि धर्मगुरुः (पोपः) न स्यात् तदा तादृश्याः संस्थायाः निर्माणम् अस्माकं कृते आवश्यकं स्यात् एतत्प्रतिकूलम्। डॉक्टर आनन्दकुमारस्वामिना भारतीयराजनीतिविषये कथितमस्ति

---

१. १।११८।
२. १।१२०।
३. २।१००।३६।
४. २।५।३८।
५. ३।६७-७०।
६. १७।६८।
७. १७।१।
८. मनु० ९।२२३।

"भारतीयैः ऋषिभिः ब्रह्मशक्तिक्षत्रशक्त्योः यथा अन्योन्याश्रयः स्थापितः सः विश्वसाहित्ये अद्वितीय.।" राजतरङ्गिण्यां वर्णितमस्ति यत् सभायां प्रवेशानन्तरं राजा प्रथमं पुरोहितं प्रणमति स्म, सभासदश्च राजानम्।[१]

मन्त्रिमण्डलस्य राज्ञश्च परस्परं सम्बन्धस्य निर्णयः हिन्दूराजनीतौ इत्थं कृतः यद् राजा स्वयं मन्त्रिणां नियुक्तिं करोति। स एव च कार्यपालिकायाः प्रधानः। गणराजप्रणाल्याम् अस्याः व्यवस्थायाः अपवादाः अवश्यं लभ्यन्ते स्म, किन्तु राजतन्त्रप्रणाल्याम् एवं नासीत्। राजतरङ्गिण्यामपि इत्थमेव वर्णितम्। सम्पूर्णः इतिहासः राजतन्त्रं वर्णयति। एवं सत्यपि राजा मन्त्रिमण्डलेन नियन्त्रितः आसीत्। ईदृशान्यपि वर्णनानि लभ्यन्ते यत्र मन्त्री राजवद् व्यवहरति। भारतीयेतिहासेषु 'पेशवाशासनम्' मन्त्रिशासनस्य परम्परां स्थापयति। मन्त्रिभिरपि राजवद् व्यवहृतम्। इति तु सचिवायत्तं शासनम्। तस्य च पेशवाशासनमेव उदाहरणम्।

आर्यराजस्य स्वीकृतेः पूर्वमेव मन्त्रिभिः मेघवाहनः राजपदे प्रतिष्ठापितः।[२] पर्वगुप्तेन संग्रामदेवः सिंहासने उपवेशितः। तदानीं संग्रामदेवः प्राप्त-वयस्कः नासीत्। पर्वगुप्तः तस्य पितामहीं संरक्षिकां कृत्वा स्वयं मन्त्रिपदे प्रतिष्ठितः। स्वसाहाय्यार्थं भूभटादयः पञ्च अन्ये मन्त्रिणः तेन स्थापिताः। पश्चाद् यदा पर्वगुप्तस्य दृढशक्तिः अभूत् तदा पितामह्या सह पञ्चापि मन्त्रिणः घातयित्वा स्वयं राज्यस्य सर्वाधिकारी जातः। तेन राज्ञः मन्त्रिणश्चेति द्वयोरपि चिह्नं धृतम्। परन्तु राजानं स्वपदात् निष्कासयितुम् ईदृशस्य निरंकुशस्य मन्त्रिणः अपि सामर्थ्यं नासीत्। स यत्किञ्चिदपि कर्तुमशकत् तत्सर्वं राजानं पुरस्कृत्य एव।[3] राजशक्तेः पक्षं गृहीत्वा मन्त्रिभिः जनतायाः अनुचितस्य विद्रोहस्य दमनमपि कृतम्। डामरैः राज्ञ्याः सूर्यमत्याः प्रतिकूलं विद्रोहः कृतः। तं विद्रोहं परिहर्तुं राज्ञ्या जिन्दुराजः मन्त्री कृतः। जिन्दुराजेन च तत्काले एव महता चातुर्येण विद्रोहः शमितः।[४]

राज्ञा शासनभारे त्यक्ते मन्त्रिभिः राज्यस्य व्यवस्था कृता एतद्विषये बहूनि उदाहरणानि पूर्वं दर्शितानि। ललितादित्यस्य मृत्योः पश्चात् प्रधानामात्य 'च कुणेन' जनान् आहूय तेषां सम्मत्यनुसारं च कुवलयापीडः राज्यासने अभिषे-

---

१. ७।१०७४।

२. २।१५१।

३. ६।११४–१२१।

४. ७।७६२, २६५।

चितः ।[१] मन्त्रिणां धूर्ततयाऽपि जनकल्याणस्य क्षतिः अभूत् । परन्तु ईदृशे अवसरे राजा मन्त्रिविचाराणामुल्लंघनमपि करोति स्म ।[२]

योग्यमन्त्रिणः एतावदधिकमहत्त्वमासीद् यद् विधवायाः राज्याः सती-भवनावसरे पुरोहितविचारात् तस्य मन्त्रिणः एव विचारः अधिकम् आद्रियते स्म ।[३] राज्याभिषेकविषये युवराजनिर्णयविषये च मन्त्रिणां परामर्शः अन्तिमो निर्णायकः आसीत् । यदि राजा मन्त्रिणां परामर्शम् अस्वीकर्तुं तदानीं चेष्टेत तदा राज्ञः अस्वीकृतेः किमपि महत्त्वं नासीत् । हर्षदेवस्य राज्याभिषेकः एतद्विषये स्पष्टमुदा-हरणम् ।[४] यदि सभायाः कश्चित्सदस्यः म्रियेत त्यागपत्रं वा दद्यात्, तदा अस्याम् अवस्थायाम् पुनः सदस्यान्तरस्य नियुक्तिविषये राजा मन्त्रिणा सह परामृशति स्म । सभासदस्य निष्कासनविषयेऽपि मन्त्रिणः परामर्शः आवश्यकः आसीत् ।[५] एवमेव यदि राजा कस्मैचिद् देशत्यागरूपं दण्डं ददाति अथवा एवंविधं दण्डितस्य पुनः प्रवेशं स्वीकरोति तदा तदर्थमपि मन्त्रिणः परामर्शः अपेक्षित आसीत् ।[६]

उपर्युक्तेन विवेचितेन इमं निष्कर्षमासादयामः यन्मन्त्रिमण्डलं राजशक्तेः नियन्त्रकमासीत् । ईदृशमासीत् मन्त्रिमण्डलस्य महत्त्वम् । यद्यपि एषः उपर्युक्तः सिद्धान्तः यथार्थः तथाऽपि अस्य अपवादा अपि आसन् । तथाहि राजभिः मन्त्रिमण्ड-लानि उपेक्षितानि; अथ च मन्त्रिणः अनुगामिनः कृताः इत्यपि इतिहासे दृश्यते । जिन्दुराजः मन्त्री आसीत् । सः अत्यन्तं शक्तिसम्पन्नः जातः । राज्ञा सः बन्दी-कृतः ।[७] मन्त्रिमण्डले ईदृशा अप्यवसराः आगता यदा राज्ञा स्वसम्बन्धिनः एव मन्त्रि-मण्डले स्थापिताः । जयराजः राजवंशस्यैव आसीत् । यस्मै प्रतिहाराणाम् आध्यक्ष्यं प्रदत्तमासीत् ।[८] परन्तु ईदृशाः सदस्याः तत्र मन्त्रिमण्डले नासन् ये राज्यशक्तिं

---

१. ४।३६०–३६२ ।

२. ४।३०३ ।

३. ६।१९५; ८।३६३ ।

४. ७।७०३ ।

५. ज्ञातिप्रीत्यनुवृत्यादि तेन विस्मरता ततः ।
सम्मन्त्र्य मन्त्रिभिः सार्धं दध्रे तद्वधनिश्चयः ॥ ७।१२५१ ।
असिद्धभीत्या स्व दूतं स प्रहिण्वन्प्रयागकः ।
सम्मन्त्र्य क्रियतामेतद् इत्यूचे कुपितो नृपम् ।।७।१।१०४२ ।

६. ८।१९८५–१९९०; ८।२०४७ ।

७. ७।२७०-७४ ।

८. ७।८९६ ।

नियन्त्रयेयुः। राज्ञः विषये एकत्र कल्हणेन उक्तं यद् "बज्रं सर्वेषां रत्नानां भेदनं कर्तुं प्रभवति किन्तु बज्रं भेत्तुं न कश्चिदपि शक्नोति। एवमेव राजा सर्वान् मन्त्रिणः राजनीतिं शिक्षयितुं शक्नोति परन्तु न तं कश्चिदपि मन्त्री राजनीतिं शिक्षयितुं यास्यति।[८४] अस्य श्लोकस्यानन्तरं कल्हणेन लिखितं यद् "यथा बज्रभयेन गरुत्मान् स्वपक्षं त्यजति तथैव राजाऽपि धर्मभयेन स्वपक्षं (स्वेच्छाम्) त्यजति अर्थात् यदा राजा अधर्मम् आचरति तदा मन्त्रिमण्डलम् अवश्यमेव तं नाशयितुं शक्नोति।

प्रजातन्त्रीयमन्त्रिमण्डलराजतन्त्रीयमंत्रिमण्डलयोः महदन्तरं भवति। तथापि मन्त्रिमण्डलशक्त्या राजतन्त्रस्य अधिकादधिकं नियन्त्रणं कर्तुं शक्यम्। राजतरङ्गिण्यां मन्त्रिमण्डलशक्तिः राजतन्त्रस्य निरंकुशतां दूरीकर्तुं प्रभवति इति समर्थितम्। घटनाचक्रैरेव इदं तत्त्वं प्रमाणयितुं शक्यम्। यतः राजतरङ्गिणी न राजनीतेर्ग्रन्थः; ऐतिहासिकघटनानां निष्कर्षैः यावति अंशे राजनीतेः सिद्धान्ताः स्थिरीकर्तुं शक्या अस्माभिः तावदेव यतितम्। फलतः वयम् इमं निष्कर्षम् आसादयामः यन्मन्त्रिमण्डलं न केवलं राज्ञः इच्छायाः पोषकमेव आसीद् अपितु मन्त्रिमण्डलेन धर्मानुसारम् आचरितुं कर्त्तव्यं परिपालयितुं च राजा बाधितः।

## जनता राज्यञ्च

राज्यस्य यथाकथमपि निर्माणं विकासो वा जायेत, परन्तु तस्य उद्देश्यं केवलम् एकम्—'जनकल्याणम्'। एवं स्थितेऽपि बहुकालपर्यन्तं जनतायाः राज्यस्य च परस्परं संघर्षः भवन्नासीत्। राजतरङ्गिणीविषये स्वविचारान् प्रकाशयता 'नेहरू'-महोदयेन लिखितं यत् सा षड्यन्त्राणां राज्यच्युतीनाञ्च विचित्रा मञ्जूषा। अग्रे स एव लिखति यद् "अस्यां जनसामान्यस्य न वर्णनम् अपितु राज्ञामेव, यथा 'राजतरङ्गिणी' इति नाम्नैव प्रतीयते।" परन्तु ईदृशमतप्रकाशने नेहरू महोदयस्य 'ऐतिहासिकसमाजवादव्याख्यायाः' अतिरेक एव कारणम्, अन्यथा राजतरङ्गिण्यां यादृश्याः शक्तिसम्पन्नायाः जनशक्तेः स्थापना कृताऽस्ति, प्रायः तादृशी स्थापना तत्कालिके कस्मिन्नपि काव्ये दुर्लभा एव। द्वितीयमिदं यद् इतिहासः 'मुण्डगणना' तु नास्त्येव यत्तस्य अङ्काः प्रस्तूयेरन्। तत्र नेतृत्वचर्चा अवश्यम्भविष्यति।

जनानामावश्यकतापूर्तौ असत्यां जनाः राज्ञः विरोधे 'प्रायोपवेशनम्' कुर्वन्ति स्म। इदं 'प्रायोपवेशनं' सामूहिकं वैयक्तिकञ्च अभूत्। अनेन प्रायोपवेशनेन महान् विप्लवोऽप्यभूत्। ततश्च विवशेन राज्ञा जनानाम् आवश्यकतायाः पूर्तिः कर्त्तव्याऽभवत्, राज्यं वा त्यक्तव्यमभूत्। जनैः राज्ञः विरोधं कारयितुं राज्यी,

---

१. ४।५१।

मन्त्रितन्त्रिपदातिप्रभृतिभिरपि प्रयतितम्। एतेन इदं स्पष्टं यत् 'जनशक्तेः आवश्यकता सर्वेषां कृते आसीत्'।[१] राजतरङ्गिण्यां 'प्रायोपवेशनस्य अतिमहनोहरं वर्णनम् यत्र तत्र च लभ्यते। तस्य सर्वाधिकं राजनीतिकं महत्त्वम् आसीत्।'

प्रजासुरक्षा-कृषि-वाणिज्य-प्रभृतीनां व्यवस्था राज्यतः आसीत्। कदाचिद् राजभिः प्रमादोऽपि कृतः। एतत्स्पष्टीकरणार्थम् अत्र राज्ञः चन्द्रापीडस्य तथा एकस्य चर्मकारस्य वर्णनम् अतिसंक्षेपतः उपन्यस्यते, येन राज्यस्य वैयक्तिकसम्पदश्च सम्बन्धः प्रकाशमायास्यति।

राज्ञः आज्ञानुसारं 'त्रिभुवन'-स्वामिनो मन्दिरं निर्मीयमाणम् आसीत्। परन्तु मन्दिरार्थम् अपेक्षितायां भूमौ एकस्य चर्मकारस्यापि भूमिः आसीत्। मन्दिराधिकारिणस्तस्मै चर्मकाराय तस्याः भूमेः उचितं मूल्यं दातुम् ऐच्छन्, परन्तु सः चर्मकारः स्वीयां भूमिं त्यक्तुं नेच्छति स्म। अयं च समाचारः कर्मचारिद्वारेण राज्ञा प्राप्तः। राज्ञा कर्मचारिणामेव अपराधिता अमन्यत। चर्मकारस्य अनुमतिं विना तस्य भूमिः ग्रहीतुम् अशक्या इति राज्ञा उक्तम्। अतः राजा स्वयं तस्य चर्मकारस्य सविधं गतः अथ च कुटीरस्य स्थाने उत्तमं भवनं रचयित्वा तुभ्यं दास्यामि इति राज्ञा चर्मकारसविधे प्रतिज्ञातम्। चर्मकारेण उत्तरितं यद् राजन्! अङ्गदकङ्कणहारादिभिः नानाविधैः आभूषणैः भूषितः भवान् यथा स्वाभिमानी तथैव अहमपि स्वाभिमानो अस्मि, यद्यपि मे भवतः इव सम्पत् नास्ति। यथा भवतां स्वीयं भव्यं भवनं प्रियम्, तथैव ममाऽपि इयं जीर्णाऽपि 'कुटी' प्रिया, नावश्यकता मे भवद्दत्तस्य भवनस्य। अन्ते च राज्ञः न्यायप्रियतया विनीततया च वशीभूतेन चर्मकारेण उक्तम् "राजन्! एतद् यत्किमपि मया कृतं तत्सर्वं भवतां न्यायस्य परीक्षार्थमेव। अन्यथा ईदृशे धर्मकार्ये किमर्थमहं बाधाम् उपस्थापयेयम्। भवान् अस्याः कुट्याः सर्वथा उपयोगं कर्तुं शक्नोति।" राज्ञा उचितं मूल्यं दत्त्वा 'कुटी' गृहीता।[२]

अनया घटनया अनेके निष्कर्षाः आसादयितुं शक्याः। अत्र वयम् केवलं निष्कर्षद्वयविषये एव आलोचयामः। तत्र आद्यः निष्कर्षो यद् "राज्यं सार्वजनिककार्यार्थमपि वैयक्तिकीं सम्पदं बलाद् गृहीतुमशक्तमासीत्।" द्वितीयः एष निष्कर्षः यद् यदि सम्पत्स्वामिनः इच्छानुसारं काचिद् वैयक्तिकी सम्पत्तिः राज्ञा गृह्यतेऽपि तथाऽपि उचितं मूल्यं दत्त्वैव वैयक्तिकी सम्पत्तिर्ग्राह्या।[3]

---

१. ३।८२, ९९।; ५।४९६।; ६।२५, ३३६, ३४३।; ७।१३।; ८।५१, ११०, ८५८।

२. ४।५०-७०।

३. तुलनीयम्—भारतीयसंविधानेन।

राज्येन निरंकुशतापूर्णा अपि व्यवहारा कृताः जनैः तेषां व्यवहाराणां यथोचितं प्रतीकारोऽपि कृतः। राज्ञा आदिष्टं यत् "यदि प्रवरसेनेन स्थापितं 'प्रवरपुरम्' मम परिहासपुरमिव सौन्दर्यसम्पन्नं भवेत् तदा झटिति तत् दहनीयम्।" परन्तु जनशक्तेः प्रखरतां राज्ञश्च उन्मत्तताम् आलोचयद्भिः मन्त्रिभिः राजाज्ञायाः अनुवर्तनं न कृतम्। अन्ते च राज्ञा स्वयं स्वप्रमादः ऊरीकृतः।[1] राज्ञा चक्रवर्मणा जात्यन्तरीयविवाहः कृतः। कन्यासजातीयानां (स्वपत्नीसजातीयानाम्) जनानामेव राज्यकार्येषु नियुक्तिः तेनारब्धा।

मन्दिरेष्वपि अन्त्यजानां प्रवेशः आदिष्टः प्रवेशिताश्च मन्दिरेष्वपि अन्त्यजाः तेन राज्ञा। ब्राह्मणपत्न्यां बलात्कारः कृतः। फलतः प्रजया विद्रोहः कृतः अथ च चक्रवर्माणं निहत्य अवन्तिवर्मा राज्यासने प्रतिष्ठापितः।[2] अवन्तिवर्मणः अपि अयोग्यतायां सिद्धायां सोऽपि राज्यपदात् निष्कासितः। प्रजानां संघा अपि तदानीं संघटिता आसन्। कश्मीरदेशे निषादः 'हाञ्जी' इति 'मञ्जा' इति च कथ्यते, येषां निषादसंघः तदानीं स्थापित आसीत्।

शुक्रेण, भागुरिणा, सोमदेवेन च इत्थं वर्णितमस्ति यत् "मन्दिरव्यवस्थायाः सम्यक् सम्पादनानन्तरं यदि मन्दिरस्य सम्पद् अवशिष्यते तदा राज्यस्य कर्त्तव्यं यद् राज्यं धर्मानुसारं तां सम्पत्तिं यथोचितं विनियुञ्जीत"। एतदवश्यमस्ति यद् राज्यं तां सम्पदम् अपहर्तुं न शक्नोति। शंकरवर्मणा मन्दिराणां सम्पदः अपहरणमारब्धम्। परिहासपुरस्थं वस्त्रनिर्माणकेन्द्रं उत्पाट्य तत्केन्द्रं शंकरपुरम् आनेतुं प्रवृत्तः। व्यक्तेः समाजस्य च साम्पत्तिकोपभोगविषये प्रतिबन्धमकरोत्। चतुष्षष्टिं देवालयान् स्वायत्तीकृत्य तेषां ग्रामान् आच्छिनत्। कर्मकराणां वेतनस्याऽपि तृतीयः अंशः राज्ञा गृहीतः। राज्ये विशिष्ट-प्रथा प्रसारिता। ग्रामदण्डेनाऽपि करग्रहणम् आरब्धम्। युवराजेन गोपालवर्मणा एतेभ्यः दुष्कार्येभ्यः राज्ञः निवर्तनम् ऐच्छत। किन्तु युवराजस्य किमपि कथनं नादृतं राज्ञा। फलतः प्रजाभिः विद्रोहः कृतः। 'वीर-नक' नामके स्थाने तेन नियुक्तः अधिकारी प्रजाभिः निहतः। राजा स्वयं विद्रोहं शमयितुं गतः। विद्रोहिणः दण्डिताः। किन्तु 'उरशा' नामके स्थाने स राजा जनैः आक्रान्तः, अथ च एकेन केनचित् चाण्डालेन बाणेन हतः।[4]

---

१. ४।३११-३२०।

२. ५।३८१-४१३।

३. ५।१०१।

४. ५।१६१-२२०।

दासव्यापारोऽपि 'कल्हणेन' निर्दिष्टः। वज्रादित्येन राज्यस्य दासान् ग्रहीत्वा म्लेच्छानां हस्ते ते दासाः विक्रीताः।[१] राज्यान्तरतः आगताः दास्योऽपि क्रीताः। टक इति देशनिवासिना बुलियानामकेन एकेन व्यवसायिना बहुभ्यः देशेभ्यः आनीताः ललनाः राज्ञे कलशाय समर्पिताः।[२] राजा कलशः शाक्तमतानुयायी आसीत्। परन्तु अत्याचारान् परिहर्तुं सेवकैरपि विद्रोहः कृतः। शंकरवर्मा चण्डालेन भूभटेन हतः।[३] ब्राह्मणैः प्रायोपवेशनं कृतमिति वर्णनं विस्तरेण लभ्यते, यस्य प्रायोपवेशनस्य प्रयोगः राज्यविरोधे जनशक्तिम् उद्बोधयितुं क्रियते स्म।[४] जनैः साक्षादेव स्वशक्तिः राजविरोधे प्रयुक्ता इत्यपि लभ्यते।[५] राज्ञीभिः अपि राजविरोधे प्रजायाः साहाय्यम् आचरितम्।[६] महिलाभिः अपि राज्यविरोधे सर्वतोभावेन जनानां साहाय्यम् सम्पादितम्।[७] मिताक्षरानुसारं[८] यस्याः सम्पदः कश्चिदपि उत्तराधिकारी न भवेत् तां सम्पदं राज्यं ग्रहीतुं शक्नोति। ब्राह्मणं विहाय अन्यस्य सम्पदः ग्रहणविषये काश्मीरेऽपि ईदृश एव नियमः आसीत्।[९] राज्ञः सेवकस्य च परस्परं तादृशः उत्तमः सम्बन्धः आसीत् यादृशः पितापुत्रयोरपि न भवति। बहुभिः सेवकैस्तु राज्ञो मरणानन्तरं राज्ञः चितायामपि प्रवेशः कृतः।[१०] इयमेव परम्परा जापानदेशेऽपि दृश्यते।[११] अन्तर्जातीयविवाहविषये राजसम्बन्धी कश्चित्प्रतिबन्धः नासीत्।[१२] एतदवश्यम् आसीत् यद् उच्चजातीयाः एव पुरुषाः निम्नजातीयां कन्याम् उद्वहन्ति स्म[१३] न तु निम्नजातीयाः उच्चजातीयाम्। अर्थात् धर्मशास्त्रोक्ताः एव अनुलोमप्रतिलोमविवाहविषयका नियमाः

---

१. ४।३९।

२. ७।५२०।

३. ५।२५०।

४. ८।७००-७१०।

५. ८।२२२४।

६. ८।१८२३।

७. ८।६००।

८. २।७।

९. ७।४९९।

१०. ७।४८१।

११. ७।४८१। अत्र 'पण्डित' पाददिप्पणिर्द्रष्टव्या।

१२. ७।१२।

१३. ८।२०४३।

तत्राप्यासन् काश्मीरदेशीयाः। आर्ययवनयोः। यादृशी एकता 'अल्बुरूनी' इत्यनेन चित्रिता अस्ति सा दुर्लभा एव।[१] राजतरङ्गिण्यामपि एतदुल्लेखो लभ्यते।[२]

काश्मीरदेशीयानां जनानां राजनीतिकं जीवनं स्थिरम् आसीत्। राजशक्तिः स्थिरा नासीत्। नानाविधैः षड्यन्त्रैः तस्याः सञ्चालनं भवति स्म। जनेषु अत्याचारा अपि अभूवन्। तेषां सुखसौविध्यार्थं समुचिता व्यवस्था अपि अभूत्, परन्तु जनाः सदा जागरूका आसन्। यद्यपि तत्र राजतन्त्रम् आसीत्, तथापि तत्रत्या जनाः राजनीतिविषये उदासीना नासन्। यदा यदा जनेषु अत्याचारा अभूवन्, तदा तदा जनैः यथाशक्ति तेषां प्रतीकारः कृतः। आवश्यकतायां सत्यां राज्ञां वधोऽपि जातः। अतः स्वस्थैर्यार्थं राजशक्तिः सदा जनताम् अपेक्षते स्म। एतदर्थं प्रायोपवेशनविषये अवश्यं दृष्टिः देया अस्ति।

पेन्सील्वानियाविश्वविद्यालयस्य प्राध्यापकेन नार्मनब्रौन इत्यनेन यहूदीजनानां प्रायोपवेशनस्य मूलं भारतमेव अमन्यत। तदनुसारम् इयं पद्धतिः (प्रायोपवेशनपद्धतिः) उपनिषत्कालत एव प्रचलिता अस्ति। फ्रेजर इत्यनेन स्वीये महासंग्रहे गोल्डेनवाउ इत्येतस्मिन् ग्रन्थे विभिन्नानां देशानां मनोरञ्जकानि विवरणानि प्रस्तुतानि, परन्तु पाश्चात्यानां विदुषाम् एष विचारो यत् प्रायोपवेशनस्य इदमेव तात्पर्यम् 'अनेन विवशतापूर्णां स्थितिम् उद्भाव्य इच्छितानां कार्याणां सम्पादनम्' इति। भारतवर्षविषये सबलानां हृदयं परिवर्तयितुं निर्बलैः आश्रीयमाणम् इदमेकम् अस्त्रं प्रायोपवेशनम्। संस्कृतसाहित्ये अस्य प्रायोपवेशनस्य विस्तरेण दार्शनिकी व्याख्या लभ्यते। गान्धिमहाभागेन भारतीयायाः विशालपरम्परायाः प्रयोगः स्वीयेषु प्रायोपवेशनेषु कृतः। कल्हणेन ईदृशस्य अनशनस्य कृते प्रायोपवेशनशब्दः प्रयुक्तः। अनेन हि ऐतिहासिकपरम्परानुसारं राजतरङ्गिण्याम् एतद् (प्रायोपवेशनम्) वर्णितम्। एतदनुसारं प्रायोपवेशनस्य अनेके पक्षाः पुरः आयान्ति।

प्रायोपवेशनस्यापि एको विभागः आसीत्। तस्य च विभागस्य अधिकारी प्रायोपवेशाधिकृत इति कथ्यते स्म। यः प्रायोपवेशनस्य सूचनां राज्याय ददाति स्म।[3] एवं प्रायोपवेशनविषयकः एकः स्वतन्त्रो विभाग आसीत्। एकेन वणिजा प्राथमिकन्यायालयतः उचितो न्यायः न लब्धः, अतः अन्तिमेन न्यायास्पदेन राज्ञा उचितं न्यायं कारयितुं तेन वणिजा प्रायोपवेशनं कृतम्। अन्ते च तेन उचितो न्यायः प्राप्तः।[४] वेतनविषये स्वामिसेवकयोः परस्परं विसंवादे सेवकैः प्रायोप-

१. खं० २, पृ० १३।

२. ५।१५३-१५५।

३. ६।१४।

४. ६।१४-४१।

वेशनरूपः उपायः आश्रीयत।[१] अस्मात् प्रायोपवेशनशस्त्राद् राजा इत्थं बिभेति स्म यद् एकदा एकेन ब्राह्मणेन द्वारम् आगत्य राज्ञे कथितं यद् यदि मम कथनं न श्रोष्यते श्रीमद्‌भिः, तदा अहं प्रायोपवेशनं करिष्ये इति। तदानीं राजा भोजनं कुर्वन्नासीत्, परन्तु तत्परित्यज्यापि स ब्राह्मणसमीपं त्वरया आयातः।[२]

विप्लवं कर्तुमपि अस्य प्रायोपवेशनस्य प्रयोगः राजनीतिज्ञैः सभ्यैः प्रजाभिश्च क्रियते स्म, कार्यते स्म च। दिद्दाराज्ञ्या भीमगुप्तं बन्दीकृत्य तुङ्गः अनुचितरीत्या प्रोत्साहितः, तुङ्गेन यथेच्छं मन्त्रिणाम् अभिभवः आरब्धः। ततश्च मन्त्रिभिः समाजप्रमुखैः ब्राह्मणैः प्रायोपवेशनं कारितम्। अस्य जनतायाम् ईदृशः प्रभावः अभूत्, जनतया अपि प्रायोपवेशनं कृतम्, येन विप्लवस्थितिः उत्पन्ना।[३] मन्त्रिभिः स्वावश्यकतां पूरयितुं जनतया सामूहिकं प्रायोपवेशनं कर्तुमपि लभ्यते। दुराग्रही अपि मन्त्री अस्य अस्त्रस्य पुरः नमति स्म।[४] परम्पराधर्मजनस्वीकृतिप्रतिकूलानां राज्यसम्बन्धिनां नियमानां विषये प्रजा स्वीयाम् अस्वीकृतिं प्रकाशयितुं शक्ता आसीत्। यदि राज्यशक्तिः जनतायाः अवहेलनं कुर्यात्, तदा सामूहिकं प्रायोपवेशनं भवति स्म। भीमशाहीनामकस्य राज्ञः बाध्यश्रमस्य अलाभकारिणीं पद्धतिम् उन्मूलयितुं जनैः सामूहिकं प्रायोपवेशनम् आचरितम्।[५]

राष्ट्रसुरक्षार्थं यदि कश्चिद् विशेषो विचारः राज्ञे बोधनीयः, तदा प्रायोपवेशनम् आश्रीयते स्म।[६] शासने राजकर्मचारिभिः क्रियमाणान् दुराचारान् दूरीकर्तुमपि एतदस्त्रम् आश्रीयत जनैः। यदि राज्ञः समीपं गन्तुम् राजकर्मचारिभिः जनाः निरुध्येरन्, जनानां प्रार्थनं राज्यकर्मचारिणो राजानं न बोधयेयुः, तदापि जनैः सामूहिकं प्रायोपवेशनं क्रियते स्म।[७]

कदाचित् प्रायोपवेशने प्राणत्यागोऽपि अक्रियत, प्रायोपवेशनकर्ता अग्निं प्रविश्यापि प्राणान् उत्सृजति स्म। चित्ररथविरोधे इत्थमेव अवन्तिपुरे ब्राह्मणैः आचरितम्। तैः सह गोपालकैरपि वह्नौ शरीरत्यागः कृतः।[८] यदि एवंकृतेऽपि

---

१. ७।११५७।
२. ६।४३।
३. ५।३३६-३४०।
४. ७।१३।
५. ७।१०८८।
६. ८।७६८।
७. ८।८०८।
८. ८।२२२४।

शासने किञ्चित् परिवर्तनं न भवेत्, तदा राज्यविद्रोहोऽपि जनैः अक्रियत। स च राज्यविद्रोहः तस्याम् अवस्थायां न्याय्यः मन्यते स्म। विजयराजेन चित्रथशासनम् उन्मूलयितुं विदेशीयमपि[1] साहाय्यं प्रार्थितम्। अष्टमतरङ्गस्य २२५६ तमः श्लोकः क्रान्तिकारिणां कृते प्रेरकः अस्ति। एष श्लोकः गीताया अतिप्रसिद्धः एव। आरेल इत्यनेन पाठभेदोऽपि उक्तः, किन्तु स पाठभेदः अत्यल्पीयानेव। डॉ० बेलोह्वायिनशिरोल इत्यनेन लिखितं यद् गीता क्रान्तिकारिणां कृते धर्मग्रन्थः (बाईबिल)।

ईदृशामपि मनुष्याणां वर्गाणां च निर्देशः कल्हणेन कृतः, यैः वृत्त्यर्थं (जीवनोपार्जनार्थमित्यर्थः) प्रायोपवेशनं क्रियते स्म।[2] कूटनीतिज्ञाः तादृशानां मनुष्याणाम् उपयोगं कुर्वते स्म। उत्कोचं दत्वा एभिः प्रायोपवेशनं कार्यते स्म। एवंविधा प्रायोपवेशनकर्त्तारः कल्हणेन निन्दिताः। ते न धर्मस्य रक्षका आसन्, न वा राष्ट्रस्य।[3] यथा कथमपि प्रायोपवेशनं भवेत्, परन्तु तत्र हिंसात्मिका वृत्तिः नाश्रीयत।[4] केचन ईदृशा अपि अवसराः आयाताः, यदा राजा अपि प्रायोपवेशनं कर्तुम् उद्यतोऽभूत्। एष अवसरः तदा प्राप्नोति यदा राजा न्यायं कर्तुं देवतायाः साहाय्यम् इच्छति। तदा स देवालये प्रायोपवेशनं करोति।[5] एतेन स्पष्टं यत् प्रजा स्वस्वत्वरक्षार्थं प्रायोपवेशनस्य सफलं प्रयोगं कर्तुं शक्ता आसीत्। राज्ञा जयसिंहेन मन्त्रिणां कठोर आदेशः दत्तः आसीत्, स एतद्विषये महत्त्वपूर्णोऽस्ति।

काश्मीरे प्रायोपवेशनस्य मूलं बौद्धप्रभाव एव मन्यते। शिबिजातकस्य एका कथा कल्हणेन यथास्थितमेव उद्धृता।[7] अत्र बोधिसत्त्वस्य आदरणीयं विवरणम् उपस्थापितमस्ति। एवमेव विजयराजेन प्रायोपवेशनसमये यानि वाक्यानि कथितानि, तत्रापि बौद्धधर्मस्य प्रभावः स्वीक्रियते। सप्तमशताब्द्यां काठियावाडे शान्तिदेवनामकः एको बौद्धः अभूत्। तदीयच्छन्दसां सुशोभनानुवादः एम० फाइ-

---

१. ८।२२२७-२८।

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥

२. ६।१४।

३. ७।१६११।

४. ७।२८७७।

५. ४।९९।

६. ८।२५४५।

७. १।१२१-१४७।

नेट इत्यनेन प्रकाशितोऽस्ति। तत्र बहूनि वाक्यानि ईदृशानि सन्ति, येषां निकटतमः सम्बन्धः कल्हणकृतेन बोधिसत्त्ववर्णनेन सह प्रतीयते। केचन वाक्यांशास्तु समाना एव। वङ्गदेशीयवीरस्य अन्तःकथापि इदमेव सङ्केतयति।[१]

किन्तु काश्मीरे बौद्धधर्मात् पूर्वमेव भारतीयसंस्कृतेर्विकासः अस्ति। रामायणम्[२] महाभारतम[३] हरिवंशः[४] सुश्रुतम[५] इत्यादीनां विस्तरेण उल्लेखो लभ्यते। एते ग्रन्थाः बुद्धात् प्राचीनाः सन्ति। गीतायाः श्लोकः एव कल्हणेन उद्धृतः। लोकमान्यः तिलकमहाभागोऽपि गीतां बुद्धात् प्राचीनां मन्यते। यासु उपनिषत्सु प्रायोपवेशनस्य सङ्केताः लभ्यन्ते तासां बुद्धोत्तरवर्तित्वं कथमपि वक्तुं न शक्यते। अत एव इदमपि कथयितुं शक्यं यत् काश्मीरदेशे प्रायोपवेशनस्य ऐतिहासिकी परम्परा बुद्धाद् अति प्राचीना।

## प्रशासनम्

राजतरङ्गिण्याम् आरम्भत एव प्राशासनिकसंस्थानां विकासः वर्णितुम आरब्धः कल्हणेन।[६] जलौकसमयपर्यन्तं प्रशासने व्यवहारस्य संस्थागतं स्वरूपं न लभ्यते, किन्तु धर्माध्यक्षः, धनाध्यक्षः, कोशाध्यक्षः, चमूपतिः, दूतः, पुरोहितः, दैवज्ञः इत्येतेषां सप्तानां विभागानां निर्देशः कृतोऽस्ति। ललितादित्यसमये प्राचीनैः अष्टादशभिः विभागैः सह अन्येऽपि पञ्च विभागाः स्थापिताः।[७] (१) महाप्रतिहारः (२) महासन्धिविग्रहः, (३) महाश्वशाला, (४) महाभाण्डागारः, (५) महासाधनभाग इति। अग्रिमे वर्णने (१) नगराधिकृतः, (२) नगराधिपः, (३) प्रतिहारः, (४) दण्डनायकः, (५) राजस्थानीयः इत्यादीनामपि विकासोऽभूत्। (१) अक्षपटलः, (२) एकाङ्गः, (३) पादाग्रः, (४) द्वारपतिः (५ मण्डलेशः, (६) कम्पनेशः, (७) सर्वाधिकारी इत्यादीनां प्राशासनिकानां पदानामपि उल्लेखः लभ्यते।

---

१. ४।१३२२-३५।
२. ४।४३।२१।
३. ४।४३।२१।
४. ६।६।५३।
५. १।१६८।
६. १।११८-१२०।
७. ४।१४३-४५।

न्यायसम्बन्धिप्रशासनविषये राजतरङ्गिण्याः महत्त्वं विशिष्यते। सत्यासत्ययोः उत्तरदायिनो वयमपि यदि अन्यायं करिष्यामस्तदा का कथा अन्येषाम्? इति चन्द्रापीडस्य उक्तिः एतद्विषयं महत्त्वपूर्णा अस्ति।[1] न्यायविषयकाणां काठिन्यानां दूरीकरणविषये ब्राह्मणस्य राज्ञः यशस्करस्य विषये अनेकाः किंवदन्त्यः प्रसिद्धाः सन्ति।[2] उच्छलेन एकस्य वणिजः विवादः यथा शमितः, तस्य प्रशंसा कृतास्ति।[3] केषाञ्चित् अदूरदर्शिनां राज्ञाम् उल्लेखो लभ्यते, यैः अन्यायः आचरितः। तेन च तेषां पतनम् अभूत्।

वित्तीयप्रशासने जलौकादपि पूर्वं धनाध्यक्षस्य कोशाध्यक्षस्य च उल्लेखो दृश्यते। ललितादित्येन चत्वारः नूतनाः विभागाः स्थापिताः। जयापीडस्य प्रशासनकाले कायस्थानां बाहुल्येन राजस्वग्रहणविषये कठोरतायाः उल्लेखः कल्हणेन कृतः।[4] शङ्करवर्मणा अत्तपलिभागः, गृहकृत्यम् इत्येतौ द्वौ नूतनौ विभागौ स्थापितौ।[5] तत्र आपणाद् करग्रहणं प्रथमविभागस्य कार्यम् आसीत्। द्वितीयविभागस्य च कार्यं ग्रामेभ्यः करग्रहणं दण्डग्रहणञ्च।[6] अस्मिन् क्षेत्रे कायस्थैः क्रियमाणाः अत्याचाराः कल्हणेन विस्तरेण वर्णिताः।[7] दिद्दाराज्ञ्याः पुरः निम्नजातीयैः राज्यकर्मचारिभिः राजस्वस्य दुरुपयोगः कृत इत्यपि उल्लिखितमस्ति।[8] राज्ञा अनन्तेन स्वसम्बन्धिभ्यः अन्यायरीत्या राजस्वं वितीर्णम्। देवप्रतिमा अपि भञ्जिताः।[9] अनन्तस्य वित्तमन्त्रिणा अन्यायरीत्या करः स्थापितः।[10] यः करः तत्पश्चाद्वर्तिना मन्त्रिणा दूरीकृतः।[11] अनन्तपुत्रेण धनिकेषु विशेषः करः स्थापितः। तेषां मरणानन्तरं तेषां सम्पदः तेन स्वायत्तीकृताः।[12] दैवसम्पदः लुण्टनं कृतम्।[13] एषा अव्यवस्था

१. ४।५५; ४।८२।
२. ६।१४।
३. ८।१२३।
४. ४।५८६।
५. ५।१६७।
६. ५।१७७, ७।१४२८।
७. ५।१७६-१८१।
८. ६।२६६।
९. ७।१४४-१४७; १८६-६४।
१०. ७।२०३; ७।२११-२१२।
११. ७।३६७, ६६६-६७।
१२. ८।१४२८।
१३. ७।४८।

कलशपुत्रेण हर्षेण दूरीकृता । दैवसम्पदः विषये नियुक्तस्य अधिकारिणः देवोत्पाटननायक इति नाम आसीत् । स च अधिकारी अर्थनायक इत्यपि उच्यते स्म । अनेकेषु शुभावसरेषु करनिवृत्तिरपि क्रियते स्म ।[१] अवन्तिवर्मणा सुय्य इत्ययं सिञ्चनादिव्यवस्थायां नियुक्त आसीत् । तेन यथा कौशलपूर्वकम् इदं कार्यं सम्पादितं तथा विस्तरेण वर्णितं कल्हणेन ।

## सेना

कल्हणेन सैनिकसञ्चरणमार्गादीनां यद् वर्णनं कृतमस्ति, तस्य वर्णनस्य यथार्थता शोधं कुर्वता ओरेलस्टेन इत्यनेन प्राप्ता । एवंविधा ऐतिहासिकी सत्यता अन्यत्र कुत्रापि काव्ये न लभ्यते । 'तरुष्कयुद्धस्य' 'हर्षाक्रमणस्य' डामरैः क्रियमाणस्य विद्रोहस्य च समये जातानां सैनिकसञ्चरणविषयकप्रमादानां वर्णनं सामरिकदृष्ट्या महत्त्वपूर्णम् अस्ति ।[२] सेनया शासकानां नियुक्तिरपि क्रियते स्म इत्यपि निर्देशः लभ्यते । तन्त्रिभिः राज्ञः नियुक्तिः पदच्युतिश्च इत्थं क्रियते स्म, यथा कस्यचित् गृहपतेः नियुक्तिः पदच्युतिर्वा भवति ।[3] सैनिकानाम् अत्याचारा अपि वर्णिताः सन्ति ।



---

१. ७।६६८ ।
२. ८।७२६ ।
३. ५।२६६ ।

# ८

# वैदिकराजनीतिकसङ्घटनम् जनतन्त्रञ्च

लॉर्डजेटलैण्ड इत्यनेन एकदा कथितमासीद् यद् आधुनिके भारते ब्रिटिश-राजनीतिपरम्परायाः महान् प्रभावः अस्ति। प्राशासनिकी पवित्रता, विधेः समानता, जनसम्प्रभुतायाः उदयः, वैयक्तिक्याः स्वतन्त्रतायाः भावाः इत्यादयः जनप्रतिनिधिसंस्थाद्वारेण आधुनिकभारते विकसिताः।[1] लार्डजेटलैण्ड अग्रे विचारं प्रस्तौति यत् किं भारते ईदृशानां भावानां बीजानि विदेशीयानि ? स स्वयमेव च इमं प्रश्नं समादधते यद् भारतं सहस्रद्वयवर्षेभ्यः पूर्वं बौद्धसभासु बौद्धसंघेषु च संसदीयविचारधारायाः अङ्कुराः विकसिता आसन्। अध्यक्षः सभां सञ्चालयति स्म। गणपूर्त्तिः वाचनम्, विवादः मतभेदश्च इत्येतेषां विषये मतदानम् आश्रित्य निर्णयप्रणाली विकसिता आसीत्।[2] यद्यपि आधुनिकसंसदीयपद्धतिः ईदृशाश्च अन्ये आधुनिका विचाराः प्राचीनभारते न समभवन्, तथापि जीवनोद्देश्यप्राप्ति-विषयका समस्या भारतीयैः स्वरीत्या समाहिता आसीत्। राजनीतिकस्वतन्त्रतया प्रशासनेन च सम्बद्धानि ईदृशानि संघटनानि उदितानि आसन्, यैः वैयक्तिक्याः स्वतन्त्रतायाः जीवनोद्देश्यस्य च प्राप्तिः शक्यासीत्। एतत्स्पष्टीकरणार्थम् आवश्यकं यत् प्राचीनभारतस्य मुख्यं वैशिष्ट्यम् अवधेयम् अस्ति। तदनुसारं संघटनानि तत्सदस्याश्च पूर्णतया सामाजिकम् अस्तित्वम् स्थापयन्तः लक्ष्यं प्राप्नुवन्ति।

वैदिककाले चतुर्विधानां सभानां निर्देशो लभ्यते– (१) संग्रामः, (२) विदथः, (३) समितिः, (४) सभा। संग्रामसभायाः उल्लेखः ऋग्वेदे न दृश्यते। अथर्ववेदे पृथिवीवर्णनावसरे उक्तं यत्-सत्यं बृहत् ऋतम् उग्रदीक्षा तपः ब्रह्म यज्ञश्च पृथिवीं दधते। अग्रे च कथितं यत् पृथिव्यां स्थितासु ग्रामाख्यसभासंग्रामसमितिषु उत्तमता-मेव वदेम।[3] अन्यत्रापि संग्रामशब्दः प्रयुक्तः, परन्तु न सभारूपेऽर्थे।[4] आधुनिक-

---

१. मार्क्विस ऑफ जेटलैण्ड; इन्ट्रोडक्शन्स टू दि लिगेसी ऑफ इण्डिया, पृ० १०।

२. तदेव, पृ० ११।

३. सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु॥
ये ग्रामा यदरण्यं याः सभा अधि भूम्याम्।
ये संग्रामाः समितयस्तेषु चारु वदेम ते॥
(अथर्व० १२।१।१,५६)

४. अथर्व० ४।२४।७; ५।२१।७; ११।२।२६।

विद्वांसः 'संग्रामः' एव 'सभा' इति मन्यन्ते।[१] इदं कथयितुं न शक्यते यत् तस्य स्वरूपं होमर इत्यस्य जातीयसंघटनवद् आसीत्, उत अन्यप्रकारकम् आसीत्। प्रोफेसर-जायसवालमहोदयः ग्रामस्य तान् घटकान् संघटनानि मन्यते, ये समितेः निर्वाचनं कुर्वन्ति।[२] ऋग्वेदे सभारूपेऽर्थे संग्रामशब्दः न प्रयुक्तोऽस्ति। उत्तरवर्तिनि च साहित्ये युद्धरूपे अर्थे संग्रामशब्दस्य प्रयोगः। सम्भाव्यते यत् सङ्ग्रामः युद्धसभा स्यात्। अन्ते च युद्धे एव सभायाः पर्यवसानं भवेत्। अतः युद्धमेव संग्रामशब्दस्या-प्यर्थः अभूत्।

विदथशब्दः ऋग्वेदे अथर्ववेदे च दृश्यते।[३] रुथमतानुसारं विदथ इत्यस्य आरम्भिकोऽर्थः व्यवस्था आसीत्। पश्चाच्च व्यवस्थादात्री संस्था एव विदथ-पदार्थतया स्वीकृता।[४] धार्मिकलौकिकोद्देश्येषु युद्धार्थं संघटितायां संस्थायां च विदथशब्दस्य प्रयोगः। ओल्डेनबर्ग इत्यनेन प्रथमम् अध्यादेशरूपेऽर्थे अस्य प्रयोगः आसीत्, पश्चात् यज्ञस्य कृते विदथशब्दस्य प्रयोगः प्रचलितः इति स्वीकृतम्।[५] लुडविगकथनानुसारं मघवतः ब्राह्मणानां च सभा विदथशब्देन व्यपदिष्टा आसीत्।[६] गेल्डनरमतानुसारम आरम्भे विदथशब्दस्य प्रयोगः ज्ञाने, बुद्धौ, पुरोहितानां प्रार्थनायां च आसीत्। पश्चाच्च यज्ञरूपे पुरोहितशक्तिरूपे चार्थे विदथशब्दः प्रायुज्यत।[७] ब्लूमफील्डमतानुसारम् आरम्भकाले भवनरूपेऽर्थे पश्चाच्च यज्ञियभवनरूपेऽर्थे विदथशब्दस्य प्रयोग आसीत्।[८] प्रोफेसरमैकडोनल

---

१. वैदिक इण्डेक्स, ख० २, पृ० ३४१।

२. जायसवाल, हिन्दू पॉलिटी।

३. ऋ०–१।३१।६, १।१७।२५; ३।१।१८; ३।२७।७; २।१।४; ३।३८।५; ३।३८।६; ७।६६।१०; ८।३९।१; १०।१२।७; १।६६।२; १।६७।६; ४।३८।४; ६।८।१; १०।८५।२६; १०।९२।२; २।२७।१२; अथर्व०–४।२५।१; ५।१०।१२; १८।३।७०; १७।१।१५; २०।१२८।१; ७।३६।४।

४. प्रोफे० वेरुथ, ऋ०–१।३१।६, ११७ २५; ३।१।१८।२७; ७।४।३८।४; ६।८।१; १०।८५।२६; अथर्व०–५।४।२५।१; ५।२०।१२; १८।३।७०।

५. वैदिक इंडेक्स खं० २, पृ० २६६।

६. तदेव।

७. तदेव विदथशब्दः।

८. तदेव

इत्ययं ब्लूमफील्ड इत्यस्य मतं समर्थयन् परिलक्ष्यते।[1] ऋग्वेदे सादन्यम्,[2] विदथ्यम्, सभेयम्, पितृश्रवणम् इत्येते शब्दाः प्रयुक्ताः सन्ति। अत्र ब्लूमफील्ड इत्यनेन कृतं व्याख्यानं नोचितम्। स्पष्टं यद् विदथस्य योग्यता अत्र निर्दिष्टा। जिम्मर इत्यनेन विदथशब्दस्य अर्थः लोकसभा इति (एसेम्बली) कथितः। विदथं सभासमितिभ्यां लघुभूता संस्था आसीत। ऋग्वेदे धार्मिकैः लौकिकैश्च विषयैः सम्बद्धा सभा विदथमिति स्वीकृता। इदमवश्यमवधेयं यद् वैदिककालेऽपि आभिः प्राशासनिकसंस्थाभिः लौकिका व्यवहाराः धर्मात् पृथग्भूता आसन् इति प्रतीयते। तद्व्यवहारः स्वतन्त्रतया पृथक् स्थित्वा स्वक्षेत्रं निश्चिन्वन् आसीत्।[3] जायसवाल-महोदयः मूलतः ग्रामसभाम् एव विदथस्य आरम्भिकं स्वरूपं मन्यते, यस्मात् सभाः समितयः सेनाश्च पृथग् भवन्ति।[4]

एतेषां स्थानीयसंघटनानां किं कार्यमासीद् इत्यादिविषये सुस्पष्टं विवरणं नोपलभ्यते। एषां वैधानिकानां कार्याणाम् अधिकाराणां सङ्केतः अवश्यं लभ्यते। तेषां सैनिकाः सदस्याश्च शान्तिविषयकं युद्धविषयकं विधिं च प्राभावयन्। हेनरी-मेनमतानुसारं वैधानिक्यः न्यायसम्बन्धिन्यश्च शक्तयः न पृथग्भूता आसन्। प्रशासनव्यवस्थापनन्यायशासनसम्बन्धिनीनां शक्तीनां यथा अद्यत्वे विभाजनम् अस्ति, तथा तदानीं नासीत्। अद्यत्वे कानिचित् संघटनानि ईदृशानि सन्ति, यानि पृथक्कर्तुं न शक्यन्ते। तदानीं तानि पूर्णतया स्वतन्त्राणि आसन्।[5]

वैदिककालिक्यः सभाः स्वस्वभावविषये सम्प्रभवः आसन्। अत्र सम्पूर्णं राष्ट्रं सम्मिलितं भवति। सर्वाश्च शक्तयः कार्यं कुर्वन्ति। तदानीं व्यवस्थापनशासन-न्यायेषु न कश्चिद् भेद आसीत्, किन्तु तेषां पृथक्करणस्य बीजारोपणं प्रारब्धम् आसीत्। अग्रे च परिस्थितिरूपतया तान्येव बीजानि अङ्कुरितानि। यथा यथा सभायाः स्वरूपं विकसितम्, तथा तथा उक्तानां तत्त्वानां विभाजनम् अभूत्। एतेषां संघटनानां क्रमिके विकासे तेन च उत्पन्नायां न्यायपालिकायां च फ्रीमैन इत्यनेन विचारः कृतः। तदनुसारं प्रारम्भिक्यः सभाः स्वतन्त्रप्रशासनस्य स्वाभाविक्यः आसन्। अस्य कारणमिदं यद् गृहपतीनां समूहाः लघुसंघटनानि चस्व स्वसीमायां

१. तदेव।

२. सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै॥
(ऋ० १।९१।२०)

३. राधा विनोदपाल; दि हिस्ट्री ऑफ हिन्दू लॉ, पृ० ६६।

४. हिन्दू पॉलिटी।

५. अर्ली हिस्ट्री ऑफ इन्स्टीट्यूशन्स फ्रॉम दि अर्लियस्ट टाइम्स।

व्यवाहरन्। गणानाम् उदयेन एतेषां सीमा विभाज्यते। एभ्यः एव विकासम् आप्तासु प्रतिनिधिसभासु स्वतन्त्रतायाः पूर्णतया परिपालनम् अभूत्। प्रारम्भ-दशायां सर्वेऽपि जना अत्र सम्मिलिता आसन्। सामन्तवादिवर्गीयप्रभुताभिः राजतन्त्रविकासेन च स्थानीयसंघटनानां स्वतन्त्रतायां हस्तक्षेपः क्रियते। केन्द्रियता-बाधावश्यकताभिः मनोवृत्त्या महत्या देशभक्त्या च कौटल्येन संघानां समाप्तिः ऐष्यत।

स्थानीयसंघटनानां स्वतन्त्रतास्थाने केन्द्रियतावादिशक्तेः विकासस्य चित्रणं रूसो इत्ययं करोति। यद्यपि तत्कृतं चित्रणं न ऐतिहासिकतथ्यानुरोधि। तदनुसारं राज्यस्य नागरिकैः मुख्यं कार्यं प्रतिबद्धम्। ते व्यक्त्यपेक्षया धनेनैव कार्यं कर्तुम् ऐच्छन्। नागरिकाणाम् एषा स्थितिरभूत् यद् यदा युद्धे सैनिकानाम् आवश्यकता जाता, तदा सैनिकान् सम्प्रेष्य ते स्वगृहेष्वेव अतिष्ठन्। सभासु स्वयम् अगत्वा प्रतिनिधिः प्रेषितः। इत्थं नागरिकैः सम्पदा सैनिकानां हस्ते स्वदेशः, प्रतिनिधीनां हस्ते च स्वस्वतन्त्रता विक्रीयेते स्म। देशभक्तेः ह्रासेन वैयक्तिकजागरूकतायाः अभावेन च सभाप्रतिनिधिषु शक्तिः केन्द्रिता अभूत्।[1] केम्बुल इत्यनेन इङ्ग्लैण्डदेशस्य सेक्सन इत्यस्य विवरणावसरे प्रतिनिधिशक्तेः विवेचनं कृतम्। वैदिकभारतीय-प्रतिनिधिसभायाः विकासविषयेऽपि तस्य सम्बन्धः शक्यः। तदनुसारं प्रारम्भकाले अरण्याकीर्णानां निर्झरादिबहुलानां नानाप्रकारकदौर्विध्यवतां च मार्गाणां सत्त्वेन व्यक्तिः स्वसम्बन्धान् पूर्णतया विकसयितुम् अक्षमा आसीत्। साधनानाम् अभावेन कृषिरपि दुष्करा एव आसीत्। सीमितात् क्षेत्राद् अन्यत्र कुत्रापि वैधानिके संघटने तेषां सम्बन्धः नासीत्। समाजस्य एतेषु स्थानीयसंघटनेषु मघवतः शक्तेः ब्राह्मण-शक्तेश्च विकासो भवति। ईदृशीनां व्यक्तीनां वर्गविभाजने जाते समुदायशक्तीनां सञ्चालनं प्रतिनिधिद्वारेणापि अभूत्।

वैदिककालिकस्य 'सभा समितिश्च' इति संस्थाद्वयस्य निर्देशः लभ्यते।[2] उत्तरवैदिककाले सभायाः स्वरूपम् अधिकं विशदीभवति।[3] जायसवालमहोदयः

१. रूसो; डिस्कोर्स ऑन दि ओरिजिन ऑफ इनइक्वॉलिटी।

२. यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम्।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु॥
(ऋ० ६।२८।६)

अश्वी रथी सुरूप इद् गोमाँ इदिन्द्र ते सखा।
श्वात्रभाजा वयसे सचते सदा चन्द्रो याति सभामुप॥
(ऋ० ८।४।९; १०।३४।६; ४।२।५; १०।७१।१० ) इत्यादयः।

३. वैदिक इण्डेक्स खण्डम् २, सभाशब्दः, अथर्व० ५।३१।६; ७।१२।१ २; ८।१०।५; १२।१।५६; १९।५५।६।

समितेः कार्यक्षेत्रे निर्वाचितानां व्यक्तीनां संघटनमेव सभा इति मन्यते।[1] ऋग्वेद-काले सभा राष्ट्रस्य न्यायसम्बन्धिकार्यं कुर्वती आसीत्।[2] प्रोफेसरमेकडॉनल-कीथ इत्येताभ्यां सभायाः वास्तवं स्वरूपं कार्यं च न स्पष्टीकृतम्। तदनुसारं सभायां गवादिविषयकेषु अन्येषु वा पारम्परिकेषु विवादेषु विचार्यते स्म। प्रो० लुडविग इत्यनुसारं ब्राह्मण-मघवन्नित्येतत् सदृशानां विशानां प्रतिनिधीनां सभा आसीत्। इदं मतं सभेयशब्देन रयिसभवन्शब्देन च समर्थितं भवति।[3] जिम्मर इत्यस्य मतानुसारं ग्रामण्यः आध्यक्ष्ये संघटितानां ग्रामीणानां संस्था एव सभा आसीत्। हिलांब्रों इत्यनुसारं सभासमित्योः ऐक्यमेव।

उपर्युक्तैः विचारैः कस्यचित् निष्कर्षस्य स्थापनम् अशक्यम्। सभायाः स्वरूपार्थम् ऋग्वेदतः उत्तरवर्तिवैदिककालपर्यन्तं तस्याः विकासस्य पृथक्करणं क्रमिकत्वपर्यालोचनं च आवश्यकम्। सभाविधानादेः स्पष्टं स्वरूपम् ऋग्वेदे नोपलभ्यते। पश्चाच्च इयमेव सभा न्यायसभारूपताम् आपद्यते। यजुर्वेदे 'सभा-चारस्य' निर्देशो लभ्यते। जायसवालदृष्ट्या तत्र सम्प्रभुताशक्तिरेव सन्निविष्टा आसीत्।[4] स तस्याः संविधानादिकमपि प्रस्तौति। लुडविग इत्ययम् अस्यां संस्थायां समाजीयानां सर्वेषां वर्गाणां प्रतिनिधित्वं मन्यते। मेकडॉनलकीथ इत्येतौ वैधानिकं न्यायविषयकम् तथा च अन्यविषयकं च कार्यम् एतदन्तर्गतमासीद् इति मन्येते।[5] ऋग्वेदकाले समितिः राज्ञो निर्वाचनं करोति।[6] राजा समितौ उपतिष्ठते, समितिं सञ्चालयति च।[7] यज्ञे होतुः यत्स्थानं भवति, तदेव स्थानं समितौ राज्ञः आसीत्। ओषधीन् संचित्य रोगाणां नाशयित्रा वैद्येन सह अपि राजा तुलितः अस्ति। ऋग्वेदकालानन्तरं समितिर्विकसति। अथर्ववेदे सभासमिती प्रजापतिकन्ये कथिते।[8] एतद् व्याचक्षाणेन सायणेन विद्वत्समाजः एव

१. हिन्दू पॉलिटी, २ पृ० १८।

२. वैदिक इण्डेक्स, ख० २।

३. तदेव।

४. हिन्दू पॉलिटी, २ अध्यायः।

५. वैदिक इण्डेक्स, ख० २।

६. ऋ० १।६२।६।

७. ऋ० १०।६७।६।

८. अथर्व० ७।१।२।१।

सभा स्वीकृतः एवं यज्ञः समितिः स्वीकृतः। एतत्पोषणार्थं तेन यास्कस्य वचनम् उद्धृतम्।[1]

ब्राह्मणकालपर्यन्तं वैदिकसंघटनेषु परिवर्तनम् अभूत्, विदथस्य तु चर्चा एव उच्छिन्ना। समितिरपि रूपान्तरम् आप्नोति। केवलं सभा अवशिष्यते। न्यायस्य प्रशासनस्य राज्यशक्तेः केन्द्रीयतायाश्च विकासानन्तरमपि सभायाः शक्तिः सुरक्षिता एव। तस्याः निर्देशस्तु लभ्यते, परन्तु तस्याः कार्यं किमासीद् इत्येष विषयः न प्रकाशमायाति।[2] अस्मिन् काले तदानीं सा केवलं न्यायसभारूपा आसीत्। सभापतिः सभापालः सभासदः इत्यादयः शब्दाः ब्राह्मणग्रन्थेषु दृश्यन्ते। स्त्रीणां कृते साभायाम् उपस्थापनं निषिद्धम् आसीत्।[3] अस्यां परिस्थितौ राजतन्त्रं दृढं भवति।[4] समाजेन निर्वाचितो राजा वंशपरम्पराम् आश्रित्य स्थिरो दृश्यते अस्माभिः।

राजतन्त्रेण सहैव गणतन्त्रात्मकपद्धतिरपि विकसितुम् आरब्धा आसीत्। जायसवालमहोदयः ब्राह्मणकालतः गणतन्त्रीयसंघटनानाम् आरम्भं मन्यते। दक्षिणदिशायां भोजशासनं गणतन्त्रात्मकं मन्यते एष महानुभावः। मेकडॉनल-कीथ इत्येतौ भोजशब्दः राज्ञाम् उपाधिः न तु संज्ञा इति स्वीकुरुतः।[5] शासन-प्रणालीभिः सहैव न्यायपालिका अपि विकसिता। ऋग्वेदकाले केवलं राजतन्त्रस्य अस्तित्वं लभ्यते। जायसवालमहाभागः शासनस्य गणतन्त्रात्मकपद्धतिं ब्राह्मण-कालादपि पूर्ववर्तिनीं स्वीकरोति। विनयकुमारसरकारमहोदयः गणतन्त्रस्य कालत्रयं मन्यते।[6] ईसातः शताब्दीषट्पूर्वम् ईसातः शताब्द्यर्धसहितशताब्दीचतुष्टयात् पूर्वम् (४५०) तदनुसारं एकादशगणराज्यानि आसन्। परन्तु एष कालः न प्रारम्भिको वैदिककालः, अपि तु उत्तरवर्तिवैदिककालः। जायसवालमहोदयस्य मतानुसारं गणतन्त्रस्य प्रथमकाल ईसातः वर्षसहस्रात् पूर्वत एव आरभ्यत।

---

१. सभा विदुषां समाजः। समितिः संगच्छन्ते युद्धाय अत्रेति समितिः संग्रामः। संग्रा-मेणजनसमेत्यर्थः। यद्वा संग्रामनामानि भवन्ति इति यास्केनोक्तत्वात् समिति-शब्देन यज्ञ उच्यते।

२. तै० सं० १।७।६।७, तै० ब्रा० १।१।१०।६; शत० ब्रा० २।३।२, ३।१।१०; कौ० ब्रा० ७।२; मै० सं० ४।७।४।

३. मै० सं० ४।७।४।

४. अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सव-शोशी नराणां राज्यायैव तेऽभिषिच्यन्ते। ऐ० ब्रा० ३८।३।१४।

५. वै० इ० खण्डम् २, पृ० ११२; ऐ० ब्रा० ३८।३।१४।

६. प्रोफेस विनयकुमार सरकार, पोलिटिकल इंस्टीट्यूशन एण्ड थ्योरीज आफ हिन्दूज।

सामाजिकपरिवर्तनेन सहैव शासनपद्धतावपि परिवर्तनम् अभूत् । वर्गीयाणां संघटनानाम् उदयेन वैधानिककेन्द्रीयतया जातीयप्रभुत्वेन च सहैव राजतन्त्रं क्रियाशीलम् आसीत् । राजतन्त्रात् पूर्वम् अभिजातवर्गीयं शासनम् आसीत् । अत्र जातीयप्रभुत्वद्वारेण एव राजतन्त्रस्य उदयो भवति । अनुशासनस्य उत्तरदायित्वस्य विकासः व्यक्तिविशेषे सन्निविष्टोऽभूत् । यदा सामाजिकस्थितिभिः सामाजिक-सम्बन्धैश्च सहैव व्यक्तेः स्वभावः परिवर्तितो भवति, तदा व्यक्तेः कृते शक्ति सम्पादयितुम् असौविध्यं न भवति । अतः निरङ्कुशं राजतन्त्रं स्थापितं भवति ।[1] वैदिक-समाजे उक्ताः स्थितयः आसन्, किन्तु स्थानीयसंस्थासु सम्प्रभुत्वस्य सत्त्वेन निरङ्कुशं राजतन्त्रं न जातम् । ईदृश्यः संस्थाः यावत्पर्यन्तं शक्तिसम्पन्नाः आसन्, तावत् निरङ्कुशेन राजतन्त्रेण न पदं निहितम् ।

## जनतन्त्रम्

भारते संसदि जनतन्त्रं नासीत्, किन्तु ग्रामेषु ज्ञातिषु व्यावसायिकसंघटनेषु विधिशासनेषु च जनतन्त्रम् आसीत् । ग्रामसभाः, ज्ञातिपञ्चायतनगरसमितयः, सामुदायिकसंस्थाः, वर्णाः, जातयश्च अस्य आधाराः आसन् । एतैः सहैव क्षेत्रीयविषयेषु स्थानीयानि संघटनानि आसन् स्थानीय समस्याविषये केन्द्रतः एषां नियन्त्रणं भवति स्म । ग्रामसंघटनेषु ज्ञातिधर्मसम्प्रदायकुटुम्बादयः पर्यवसिता भवन्ति स्म । बाह्यानां जातीनां यदि ग्रामसंघटनेषु स्थानप्राप्त्यर्थं सर्व-प्रथमं स्वजातीयस्वरूपं परित्यक्तव्यं भवति । फलतः तेषां राष्ट्रियस्य जीवनस्य समाप्तिः । ग्रामजीवनेन सह तासां समाजीकरणमपि भवति स्म । इत्थं च तेषां स्वतन्त्रम् अस्तित्वमेव विनष्टम् । अत एव तेषां स्वतन्त्रा संस्कृतिरपि स्थातुं नाशकत् । तासां सामाजिकं शुद्धीकरणमपि भवति स्म । एतदवश्यम् आसीद् यद् आचार-विचारादिषु जातीनां स्वतन्त्रा अधिकाराः आसन् । वैदिकी पञ्चजनसंस्कृतिः जनतन्त्रस्य सामाजिकः आधारः ।

जनतन्त्रं राज्यतः न आरभ्यते, अपि तु स्थानीयसंघटनेभ्य एव जनतन्त्रस्य आरम्भः । भारते स्थानीयैः संघटनैः न्यायसम्बन्धिनः अधिकाराः लब्धाः आसन् । सामन्तवादिप्रवृत्त्यनन्तरमपि एषाम् अधिकाराः सुरक्षिताः आसन् । ग्रामसभाः करान्, दण्डतया अर्थमपि ग्रहीतुं शक्ता आसन् । भूमेरपि व्यवस्थाम् एताः सभाः कुर्वन्ति । राज्यं स्थानीयप्रश्नेषु एतद्द्वारेणैव सम्बन्धं स्थापयति । द्वयोः ग्रामयोः यदि ईदृशी सन्धिवार्ता भवेद्, यस्याः केन्द्रीयविधानेन न विरोधः, तदा राज्यं तां सन्धिवार्तां स्वीकरोति स्म । ग्रामसंघटनेषु मौर्यकालिकसमाजतः आरभ्य यवनाक्रमणपर्यन्तं

---

१. पल्स्की, थ्योरी आफ लॉ एण्ड सिविल सोसायटी, पृ० ११० ।

कीदृगपि आक्रमणं न जातम् । तेषां स्थानीया स्वतन्त्रता सुरक्षिता आसीत् । एतद्वश्यम् अभूत् यद् वैदिककाले ग्रामण्यः निर्वाचनं ग्रामैः क्रियते स्म, पश्चाच्च तस्य नियुक्तिः भवितुम् आरब्धा । राज्यतः निर्देशाः तेन लभ्यन्ते स्म । परन्तु ईदृशेन केनापि परिवर्तनेन स्थानीयस्वतन्त्रतायाः कीदृशी अपि क्षतिः न जाता ।

ग्रामसंघटनस्य विभिन्नेषु वैशिष्ट्येषु इदम् अवधेयमस्ति यद् ग्रामे विभिन्ना जातयः सम्प्रदायाश्चासन् , परन्तु तेषां निर्देशनं ग्रामप्रधानेन क्रियते स्म । परम्पराविषये तु परम्पराणां पूर्णतया पालनार्थं तेभ्यः सौविध्यं प्रदत्तम् , किन्तु सामान्यग्रामनियमानां प्रतिकूलं ते आचरितुं न अशकन् । ग्रामस्य एकतासम्पादनार्थं ग्रामस्य एका देवता, एको लब्धमान्यताको वृक्षः एकः पुरोहितः, एकः प्रधानश्च भवन्ति स्म । एतेषां निर्देशने भूमिवितरणादिविषयकाणां प्रश्नानामपि समाधानं भवति स्म । अद्यत्वेऽपि सन्तालक्षेत्रेषु इयं पद्धतिरस्ति यत् तत्रत्या वर्षानन्तरं स्वप्रधानादेशानुसारं भूमिं गृह्णन्ति त्यजन्ति वा । 'छोटानागपुर' 'कुर्ग' इत्यादिक्षेत्रेष्वपि एषा परिपाटी अस्ति । विलियमहण्टर-बाडेनपावेलमेनइत्यादिभिः विद्वद्भिः भूस्वामित्वसिद्धान्ते विभिन्नजातीनां मिश्रितप्रभावः स्वीकृतः । तदनुसारं द्रविडमुण्डासन्ताल इत्येते उत्तराधिकारपर्यन्तविषयेषु अनार्यपरम्पराणां समन्वयेन प्रभाविताः सन्ति । यद्यपि एष विषयः विचारणीयः, तथापि एतावत्तु स्वीकृतमेव अस्ति यद् ग्रामैकतायाः प्रतिकूलः कीदृशोऽपि उत्तराधिकारविषयकः नियमः अमान्यः आसीत् । एतेन ग्रामसभानां शक्तिः सुरक्षिता आसीत् । ग्रामेषु वैदिकानां प्रभावाणां सत्त्वेन अवैदिकाः भूमिविषयकाः सिद्धान्ताः स्वस्य अस्तित्वं रक्षितुं नाशकन् ।

ग्रामसंघटनानां स्थानीयस्वतंत्रता आसीत् , किन्तु ग्रामशासनजनतन्त्रशक्त्योः विरोधः न दृश्यते । ग्रामाणां विशालानि संघटनानि आसन् इत्येतद्विषयेऽपि प्रमाणानि लभ्यन्ते । तिरप्पिहुरशिलालेखेन (१९०८ इत्यस्य ६०० सं०) परिज्ञायते यद् अनेकेषां ग्रामाणां संघः स्वप्रशासनं संचालयितुं संघटितः आसीत् । एकस्मिन् शिलालेखे (तिरवांकुर) देवदानग्रामे ग्रामसभया भूमिव्यवस्था कृता इति उल्लेखः उपलभ्यते । कीदृशस्यापि अपराधस्य विषये दण्डदानस्यापि तत्र उल्लेखः (१९१४ नं० २७०) । रललापदिकोडचोलवलग्रामविषये प्राप्ते शिलालेखे ईदृशी व्यवस्था लभ्यते । ग्रामीणा एव जनाः स्वीयं सैनिकसंघटनमपि सञ्चालयन्ति स्म । जनपदस्थानां सर्वेषां ग्रामाणां या एका सभा तस्याः क्षेत्रं स्थानीयसंघटनापेक्षया अति विस्तृतं भवति । अतः तत्र सभा महासभा इत्यादयः विभागाः भवन्ति । एवंविधेषु ग्रामसंघटनेषु ग्रामसंघानाम् आधारः प्रतिष्ठितः । यत्र एतैः संघैः उद्योग

कृष्यादिक्षेत्रेषु स्वप्रतिनिधिभिः कार्यं संचालनीयं भवति। एवंविधानां संघटनानां विषये मनुः शुक्रः महाभारतकारस्य तेषां ग्रामसंघटनीयानां सिद्धान्तानां व्यवहारं प्रस्तुवन्ति, यान् आधृत्य जनतन्त्रस्य सैद्धान्तिकं विवेचनं कृतमस्ति।

ग्रामसंघटनवज्जातीयसंघटनान्यपि आसन्। तेषु व्यावसायिकसंघटनानां राजनीतिकैः व्यवहारैः सह विशेषतः सम्बन्धः तदा पर्यलक्षिष्यत्, यदा एतेषाम् उद्देश्येषु आक्रमणम् अभविष्यत्। अन्यथा एतेषां सम्बन्धः आर्थिकः सांस्कृतिकश्च आसीत्। परन्तु राजनीतिकप्रश्नेभ्यः तेषां पृथक्करणं न शक्यते। एतेषां संघटनानां विचारार्थं सम्मिलनम् भवेन्मा वा भवेत्, किन्तु स्वाधिकारविषये एतानि संघटनानि जागरूकाणि आसन्। ईदृश्या जागरूकतायाः उदाहरण मुण्डादिजातीय-संघटनेषु अद्यापि दृश्यते। तेषां ग्रामखुंताः ईदृशस्य प्रशासनस्य प्रमाणानि। दाक्षिणात्येषु ग्रामेषु पुरोहितानां देवालयानां च अत्यधिकं महत्त्वम् आसीत्। विवादिषु माध्यस्थ्यं कर्तुं पक्षद्वयेनापि मान्यः विवादविषये तटस्थश्च पुरोहितः आसीत्। अतः विवादेषु माध्यस्थ्यं निर्णयं च कर्तुं स प्राभवत्, तात्पर्यमिदं यत् स्थानीय-संघटनैः ईदृशाः सर्वे अवसराः लब्धा आसन। अतः ईदृशेषु विवादेषु निर्णयं कर्तुं तेषां कृते परस्य अपेक्षा नासीत्।

ग्रामसंघटनस्य प्रचलितायां परम्परायां कानिचिद् वैलक्ष्यण्यानि लक्ष्यन्ते। काश्चन जातय सन्ति यासु संविधानापेक्षया ग्रामप्रधानस्य जातीयप्रधानस्य च अधिकं महत्त्वम् तदा तु सर्वेषां कृते वैयक्तिका अधिका अधिकाराः समानाः सन्ति। किन्तु वैयक्तिकानाम् अधिकाराणां केन्द्रीकरणमपि भवति। यत्र संविधानानां महत्त्वम् आसीत्, तत्र स्थानीयसंघटनानां वैयक्तिकाः अधिकाराः सुरक्षिताः व्यव-स्थिताश्च आसन्। ग्रामप्रधानः राज्ञे कीदृशमपि करं न यच्छति स्म, किन्तु आवश्यकतायां सत्यां सैनिकसहायताम् अकरोत्। संवैधानिक्यां व्यवस्थायां करविषयिणी दण्डविषयिणी च सामान्या व्यवस्था सर्वैः मान्या आसीत्। प्रधान-संघटने समानजातीयव्यवस्था आसीत्। तत्र बाह्यानां परिवाराणां कृते स्थानं नासीत्। संवैधानिकव्यवस्थासु बाह्यानां परिवाराणा कृते स्थानम् आसीत्, परन्तु तेषां योग्यतानुसारम्। व्यवस्था ईदृशी आसीद् यद् विभिन्नाना जातीनां सामाजिकैः उद्देश्यैः सह समन्वयः स्यात्। भूमिव्यवस्थायां प्रधानानाम् आदेशा विधानानि च उक्तव्यवस्थानुसारमेव आसन्। प्रधानस्य ग्रामसंगठनेषु प्रधानादेशानुसारमेव भूमेः वितरणमासीत्। यत्र संविधानम् आसीत्, तत्र भूमिविषये उचिता नियमाः आसन्। तत्र नियमेषु हस्तक्षेपम् अकृत्वा प्रधानस्तन्नियमानुसारमेव व्यवस्थां करोति स्म। सहैव संविधानपरम्पराणां जातीनां वर्णानां च महत्त्वम् आसीत्। फलतः समाजे वर्गविभागानुसारं भूमिव्यवस्था दण्डव्यवस्था च आसीत्। राजकर्मचारिणः वंशानुगता अभूवन्। प्रधानस्य परम्परायां सम्पत्तिनिर्धारणविषये ग्रामदेवता-

कुलदेवतादीनां महत्त्वम् आसीत्। तत्र सार्वजनिकभूमावपि व्यक्तीनां स्वत्वम् आसीत्। संविधानपरम्परानुसारं सार्वजनिकभूमौ सम्पदि वा कस्याश्चित् अपि व्यक्तेः अधिकारः न भवति। इत्थं ग्रामसंघटनानि वैयक्तिकसम्पत्तीनामिव जलाशयोद्यानमार्गचत्वरगोपथादिस्वरूपाणां सार्वजनिकसम्पत्तीनामपि व्यवस्थां कुर्वन्ति स्म।

उक्तव्यवस्थाद्वयस्य मूले वैदिकव्यवस्थायाः अवैदिकव्यवस्थायाश्च परस्परं सम्बन्धः अस्ति। वैदिकजातीनां संघटनं संवैधानिकपरम्परया अभूत्। अवैदिक्यः जातयः आटविकसंस्कृत्या विकासम् आप्ताः। तासु संविधानस्थाने प्रधानस्य शक्तेरेव महत्त्वम् आसीत्। वैदिकजातीनां अवैदिकजातीनाञ्च परस्परं सम्बन्धानन्तरं विधानस्यापि समन्वयोऽभूत्। भारते भूमिविषये व्यवस्थाद्वयमपि लभ्यते। सशक्तवैदिकपरम्परायाम् आटविकसंस्कृतिः समाविष्टा किन्तु तेषां (आटविकानाम्) परम्परा क्वचित् क्वचित् स्वतन्त्रतया विद्यमाना आसीत्। क्वचित् क्वचिद् वैदिकसांविधानिकपरम्परायामेव सा समाविष्टा। अनयोः व्यवस्थयोः परस्परं समन्वयस्य प्रभावः जनतान्त्रिकसङ्घटनेऽपि अभूत्। प्रधानस्य शक्तेः जनतन्त्रे अनुकूलः प्रभावः नाभूत्, परन्तु वैदिकानां सांविधानिकपरम्परायाः प्रभावेण स्थानीयसंघटनानां स्वायत्तशासनं सुरक्षितम् आसीत्। फलतः सामन्तवादिप्रवृत्तीनां सत्त्वेऽपि जनतान्त्रिकशक्तीनां विकासो जातः।

ईदृश्यां सामाजिक्यां स्थितौ एथेन्सस्पार्टा इत्येतद्देशीयजनतन्त्रयोः दासवर्गः उत्पन्नः। भारते इत्थं भवितुं नाशकत्, परन्तु वर्गीयताम् आश्रित्य संघटनम् अवश्यं जातम्। संविधानं न्यायः भूमिः इत्यादिषु वर्गभेदः (वर्गस्तरः) आसीत् किन्तु अधिकारभेदमादाय लक्ष्यविषये सर्वेषां समानं महत्त्वम् आसीत्। जातीयसंघर्षणे विजयी विजितः इति भेदद्वयं येन केन प्रकारेण तिष्ठत्येव। आटविकसंस्कृत्या विकसति वर्गे राजतन्त्रस्य प्रसारार्थम् अधिकः अवसरो भवति। परन्तु सांविधानिकपरम्परातः प्राप्तैः स्थानीयसंघटनैः सह राजतन्त्रमपि नियन्त्रितमभूत्। सम्प्रभुता एकत्र केन्द्रिता भवितुं नाशकत्। वैदिकसंविधानानुसारं सैनापत्यविषयक एव अधिकारः राज्ञः आसीत्, न तु अन्यः कश्चित्। सामाजिकैः संघटनैः शासनस्य न्यायस्य च संचालनं क्रियते स्म, परन्तु क्षेत्रीयसीमायामेव।

राज्यं समाजव्यवस्थापनम् आसीत्। समाजसदस्याः वर्णाश्रमधर्मैः नियन्त्रिता आसन्। राज्यं तत्र कीदृगपि परिवर्तनं कर्तुम् अशक्तम्। वर्णाः आश्रमाश्च व्यक्तिं सामाजिककर्त्तव्यपालनं शिक्षयन्ते। अथ च व्यक्तिं व्यवहारपदवीम् आनेतुम् अनुकूलं वातावरणमपि उपस्थापयन्ति स्म। वर्णाश्रमधर्मः जनतान्त्रिकशक्तीनां

मूलाधार आसीत्। तेन प्रतिव्यक्ति शक्तीनां विकेन्द्रीकरणम् अभूत्। ज्ञानमिव उत्पादनवितरणोद्योगाः अपि वर्णधर्मेण नियन्त्रिताः सन्तः समाजकल्याणार्थं प्रयुक्ता अभूवन्। तेषां विकासे उपतिष्ठन्तीनां बाधानां निरसनार्थं राज्यमासीन्। अतः अन्तपर्यन्तं राज्यशक्तिः सामाजिकजनतान्त्रिकशक्तीनाम् अतिक्रमणं कर्तुं नाशकत्। वैदिकसमाजे बाह्यजातीनां प्रभावः सम्मिश्रणं च यदाभूत्, तदा वर्णाश्रमधर्मः इत्थं जटिलोऽभूद् येन तस्य जनतान्त्रिकी शक्तिः समाप्त्युन्मुखा जाता। अधिकारभेद-माश्रित्य तेषु श्रेणीभेदम् आरब्धः। राजतन्त्रस्य विकासेन वर्णधर्मः जनतन्त्रं प्रसारयितुं नाशकत्। राजा च वर्णाश्रमाणां गुरुर्जातः। परन्तु वर्णाश्रमराजतन्त्रयोः सम्बन्धे जनतन्त्रस्य बीजं सुरक्षितमासीत्। ततश्च जनतन्त्रस्य शक्तिः परिवर्तिता।

कुटुम्बः, जातिः, अन्यो राजनीतिकसमुदायः, सामाजिकशक्तिः इत्येतेषां नियन्त्रणसम्बन्धिविकासः आरब्धः। अतो राजनीतिकसमुदायेषु सामाजिकशक्तिषु च श्रेणीविभागोऽभूत्। ईदृशश्च श्रेणीविभागस्य आधाराः परिस्थित्यनुसारं धनम्, भूमिः, अवस्था, बुद्धिः, निर्देशकः, योग्यता चेत्यादयः आसन्। एतेन वर्गभेदोऽपि उग्रो जातः। राजनीतिकविकासे अस्य महान् प्रभावोऽभूत्, राजनीतिकसंविधानस्य विकासः समाजानां विभिन्नैः घटकैः तद्वारेण सम्पाद्यमानैः कार्यैश्च प्रभावितोऽभूत्। ईदृशानि संघटनानि समाजीयसम्प्रभुतायाम् अधिकारं स्थापयितुम् आरभन्त। सर्वैरपि सामाजिकसंघटनैः राजनीतिकसमाजे पदं लब्धम्। राजनीतिकशक्तिः सर्वेष्वपि संघटनेषु विकसितुम् आरब्धा। एतैः संघटनैः समाजस्य नियन्त्रणमपि आरब्धम्। एष एव प्रारम्भिकसमाजस्य बहुलवादः।

यस्मिन् समाजे संघटनानि युद्धेन अत्यन्तं प्रभावितानि आसन्, सामाजिक-कार्यं मुख्यतया सम्पादयितुम् अवसरं नालभन्त। तत्र एकतन्त्रात्मकस्य समाजस्य विकासः अभूत्। सैनिकवर्गैः सैनिकप्रधानैश्च समाजस्य शक्तिः स्वहस्तगता कृता। आटविकानां प्रधानैः युद्धे सैनापत्यं आसादितम्। पश्चाच्च राजनीतिक-प्रधानता अपि तैरधिगता। केषाञ्चित् समाजानां धार्मिकसंघटनैः सन्धिवार्ता-नन्तरम् एतैः प्रधानैः वंशानुगतराजतन्त्रं विकासमानीतम्। सभासमितिप्रभृति-संस्थानां स्थाने राजपरिषद् प्रतिष्ठापिता। तत्र च एषैव भावना मूलभूता। अत्रैव भूस्वामित्वविकासस्यापि सम्मिश्रणेन सामन्तवादिपरम्परायाः जन्म, विशेषज्ञशक्ति-सम्पन्नसमाजस्य संघटनञ्च भवति। एतस्य स्पष्टम् उदाहरणं रोमसाम्राज्ये लभ्यते, कदाचिद् युद्धनायकः स्वसंघटनस्य सम्प्रभुतां स्थापयति। पार्श्ववर्तिसंघटनेन च तत्र साहाय्यं क्रियते। एङ्ग्लोसेक्शनसंघटनं प्रधानस्य नेतृत्वे विकसितम्। स्पेनदेशे विजयिभिः शासकैः राज्यं संघटितम्।

१. गेटेल, प्रॉबुलम्स इन पोलिटिकल इवोल्यूशन; जेम्स, हिस्ट्री ऑफ पालिटिक्स; ओपेन-हॉवर, दि स्टेट।

सहकारितायाः भावनया परस्परसुरक्षायाः आवश्यकतया च जातिं धर्मं रक्तसम्बन्धं च आधृत्य संघटितानां समुदायानां पार्श्वस्थैः सम्बन्धेन गणानां निर्माणं भवति। रक्तसम्बन्धापेक्षया जातीयसंघटनम् अधिकं सम्भाव्यते। अनेन राजनीतिकस्य समाजस्य सामाजिकस्य संविधानस्य च विकासो भवति।[1] राज्यस्यापि विकासः कुटुम्बैः संघटनैश्च भवति स्म।[2] अत्र समानवंशसम्बन्धः पैत्रिकपरम्परा यज्ञस्य विषये समानप्रवृत्तिः, देवताविषये सम्पूर्णस्य समाजस्य एकतानिष्ठः सम्बन्धः इत्यादीनां सम्बन्धाः सन्ति, यैः समृद्धराजनीतिकशक्तेः विकासो भवति।[3] ग्राम-समुदायः आटविकसंघटनानि परिवाराः इत्येतैः सम्बद्धायाः भूमिपरम्परायाः अपि राजनीतिकाः सम्बद्धाः भवन्ति। राज्ञः भूस्वामित्ववन्तः अपि समाजाः भवन्ति। किन्तु राजतन्त्रात्मकसमाजेऽपि स्वामित्वं न केवले राज्ञि एव भवति। तत्र समाजीयानां अन्येषामपि घटकानां प्रभावो भवति। ग्रामसंघटनानि, वृद्धसभाः, लोकसंघटनानि क्षेत्रीयपरिषदश्च सम्प्रभुतायाः केन्द्रीकरणं विरुन्धति। स्थानीयाः सभाः करग्रहण-विधिसामाजिकतादिद्वारेण सम्प्रभुतायाः विकेन्द्रणं कुर्वन्ति।

भारतीयराजनीतिकसमाजे बहुलवादिन्यः शक्तयः राजतन्त्रगणतन्त्रयोः सम्प्रभुतायाः विकेन्द्रीकरणार्थम् अवसरं प्रददति स्म। श्रेणी, गणः, पूगः इत्यादीनि स्थानीयसंघटनानि व्यक्तेः सुरक्षाम् अकुर्वन्, केन्द्रेऽपि तेषां संघप्रतिनिधयः तत्सुरक्षा-र्थम् आसन्। कुलसंघस्य शक्तौ हस्तक्षेपं कर्तुं केन्द्रं न प्रभवति। विभिन्नेषु अवसरेषु देशे गणशासने सत्तां पूर्णतया विकेन्द्रीकर्तुं प्रयतितम्। यौधेयमालववृज्जिसम्वृज्जि-लिच्छिविविदेहा इत्येतेषां गणराज्येषु सत्तायाः क्रमशः विकासोऽभूत्। शाक्यमल्ल-क्षुद्रकगणा अपि ईदृशानि महत्त्वपूर्णानि संघटनानि आसन्। एवंविधानां बहुल-वादिनीनां शक्तीनाम् उच्छेदः विदेशीयाक्रमणैः आरब्धः। अत्र वैयक्तिक्याः स्वतन्त्र-तायाः रक्षा तु सुशक्या आसीत्, किन्तु विस्तृतभूभागे एषां प्रयोगः असम्भव आसीत्। वैज्ञानिकानां साधनानाम् अभावे विकीर्णानां शक्तीनां संघटनं दुष्करम् आसीत्। अतः संघर्षकाले एतासां शक्तीनाम् अनुपयुक्तता एव अभूत्। परन्तु एतत्स्थाने विकसन्त्यां राजतन्त्रात्मकपद्धतावपि जनतन्त्रशक्तिर्न विलुप्ता। राजतन्त्रं संविधानेन नियन्त्रितम् आसीत्, स्थानीयसंघटनानां स्वातन्त्र्यम् अक्षतमासीत्। अतः प्राशास-निकक्षेत्रे एव राजतन्त्रस्य प्राधान्यम् अभूत्। शक्तिश्च समाजे सन्निहिता।

---

१. मार्गन, एशेंट सोसाइटी, खं. ३ अध्याय १, ३।

२. गिडिंग्स; प्रिंसिपुल्स ऑफ सोशियालोजी, पृ० २८५-२९३।

३. डे कालंगे, दि एंशेंट सिटी; डब्लू राबर्ट्स सनस्मिथ, रेलिजन ऑफ दि सेमिटिस।

जनतन्त्रस्य रक्षार्थं शिक्षासम्पत्तिधनादिविषयकं स्वातन्त्र्यम् आवश्यकम्। एतैः व्यक्तेः शक्तिः विस्तीर्यते। भारतीयानां शिक्षासंस्थानां समाजेन सम्बन्ध आसीत्। राज्यं तासां सुरक्षां करोति। शिक्षासंस्थानाम् आवश्यकतापूर्णं राज्ञः राज्यस्य च कर्त्तव्यम् आसीत्। ते (राजराज्ये) तासां नियन्त्रणं न कुरुतः स्म। व्यक्तिः परम्परागतां व्यकासयत्। वैयक्तिकसम्पदः एतावान् अधिकारस्तु निर्विवादम् आसीत् यत् तया वैयक्तिकः विकासः कर्तुं शक्यः। कीदृश्याः अपि सर्वाधिकारवादिन्याः शक्तेः सुरक्षा तया कर्तुं शक्या। धर्मः राज्यस्य विषयो नासीत्। स व्यक्त्या समाजेन च सम्बद्धः आसीत्। धर्मसहिष्णुतया सहैव धर्मविषयिणी स्वतन्त्रताप्यासीत्। व्यक्त्या सम्प्रदायेन च धर्मसम्बन्धीनि तानि सर्वाण्यपि संरक्षणानि सम्प्राप्तानि आसन्, येषां नैमित्तिकसाधनेन समाजस्य अहितं मा भूत्। धर्मविषयकमान्यतायाः आधाराः राज्यं कर्मचारिणो वा नासन्, अपि तु विशिष्टाः शिष्टा आसन्। यावद् उक्तानि त्रीणि अङ्गानि राज्यशक्तेः परिधौ आसन् तावत् जनतन्त्रस्य शक्तयो दृढा आसन्।

जनतायाः शक्तिम् आकलयितुं व्यवस्थापनस्य शासनस्य न्यायस्य च आलोचनम् आवश्यकम्। राजशक्तेः चरमविकासानन्तरमपि भारते विधेः स्रोतः समाजे एव आसीत्, न तु राज्ये। विधिनिर्माणशक्तिः राज्ञा कदापि नाधिगता। राजशासनम् इत्यस्य राजाज्ञा राजाध्यादेशो वा तस्य सविधे न विधिनिर्माणस्य शक्तिः। राज्ञः अध्यादेशाः धर्मप्रतिकूला भवितुं नाशकन्। तेऽध्यादेशाः प्रायः दैनिककार्यसञ्चालनार्थम् आसन्। जीवनदर्शनेन सह न तेषां सम्बन्धः। व्यवस्थापनस्य शक्तिः समाजहस्ते आसीत्। विधिशासनं च प्रचलति स्म। सर्वप्रथमम् अशोकेन व्यवस्थापनमपि स्वहस्तगतं कर्तुं प्रयतितम्, किन्तु वैदिकपरम्परया तस्य विरोधः कृतः। अतः बुद्धपरम्परया राजनीतौ स्वतन्त्रं स्थानं लब्धुं नाशक्यत।

उत्तरवर्तिकाले राजा शासनस्य न्यायस्य च प्रधानोऽभूत्, परन्तु समाजस्य प्रतिनिधिभूताभिः शक्तिभिः राजा परितः परिव्रियते स्म। प्राड्विवाकः प्रधानो न्यायाधीशः आसीत्। सभायाम् अन्ये सदस्याः समाजतः आयान्ति स्म। यद्यपि ते राज्ञा नियुज्यन्ते स्म, किन्तु ते राज्ञः स्थाने समाजस्य सामाजिकविधानस्य च उत्तरदायिनः आसन्। तान् प्रभावयितुं कीदृशोऽपि वैधानिकः अधिकारः राज्ञः हस्ते नासीत्। तान् पदात् निष्कास्य तेषां स्थाने राजा तेषामेव नियुक्तिं करोति स्म, ये सामाजिकविधानविषये योग्या भवन्ति स्म। अतः यद्यपि पदात् च्यावयितुं शक्तिः राजहस्ते आसीत्, तथापि अनया शक्त्या स समाजस्य शक्तिम् अभिभवितुं नाशक्नोत्। न्यायसम्बन्धीनि प्राशासनिकानि संघटनानि ग्रामतः आरभ्य केन्द्रपर्यन्तं विकसितानि अभूवन्। व्यवस्थापनस्य, अर्थात् विधि-स्वातन्त्र्यस्य सुरक्षितत्वेन राजा न्यायप्रधानः सन्नपि न्यायस्य स्वतन्त्रताम् आहन्तुं न प्राभवत्।

राजा शासनस्य प्रधान आसीत्। परन्तु राज्यं सर्वाधिकारवादि नासीत्। तत् जनकल्याणस्य साधनं विधेः कार्यान्वयनस्य द्वारं च आसीत्। फलतः अनेन स्वतन्त्रतायाः विकास एव जातः। ईदृशी स्थितिः तावत्पर्यन्तं जनतन्त्रोद्देश्यस्य कार्यान्वयनम् आसीत्।

जनतन्त्रस्य या व्यवस्था दर्शिता तत्र आधुनिकजनतन्त्रपरिभाषाणां व्यक्तिवादिस्वतन्त्रतायाश्च समन्वयः कर्तुम् अशक्याः। तदानीं व्यक्तिः संविधाने परिवर्तनाय नालम्। समाजे वर्गाणां अस्तित्वम् आसीत्। अत एव विधेः साम्यम् असम्भवम् आसीत्। ईदृशा अनेके विषयाः ये तदानीं लब्धुम् अशक्याः। सामाजिकव्यवस्थासंघटनादयः ईदृशा विषया आसन् येषां प्रभावः राज्ञि अनिवार्य आसीत्। एवमपि जनतन्त्रस्य उद्देश्यः तदानीम् अधिकं क्रियाशील आसीत्।

## विभिन्नाः शासनपरम्पराः

प्रारंभिकी वैदिकशासनपरम्परा ( व्यवस्था ) राजतन्त्रात्मिका नासीत्। स्थानीयैः समाजैः सैनिकनायकस्य अस्तित्वं स्वीकृतम्। बहुवचनान्तस्य 'राजानः' इति राजशब्दस्य प्रयोगः अनेकेषां सैनिकनायकानाम् अस्तित्वं प्रमाणयति। देवेषु आचारसंरक्षकः व्यवस्थापकश्च इन्द्रः आसीत्। शतक्रतुः, अर्थात् अश्वमेधशतस्य अनुष्ठाता इन्द्रपदवीम् आरोढुम् अशकत्। जन्मतः एव शत्रवः दैत्याः देवसम्पर्किणः मनुष्याश्च इति उभयेऽपि क्रतुशतम् अनुष्ठातुं कामयन्ते स्म। एतेभ्यः उभयेभ्योऽपि स्वपदं रक्षितुं यज्ञविध्वंसपर्यन्तमपि अनुधाव्यते स्म इन्द्रेण। अनेकैः शतक्रतुभिः पुरुषैः इन्द्रस्य संघर्ष इतिहासेषु दृश्यते। राज्ञः नहुषस्य स्थानम् ईदृशमेव। यस्य उल्लेखः पुराणेषु बृहद्देवतायाञ्च उपलभ्यते। अत एव राज्ञः पदं शक्तौ आश्रितमासीदिति वक्तुं शक्यते।

देवासुरसङ्ग्रामे देवानां यः पराजयो जातः, तत्र इदमेव कारणं यत् तेषां सविधे कश्चिन्नेता नासीत्। अतः देवैः सोमं नायकं कृत्वा विजयो लब्धः।[१] ऋग्वेदे सैनिकशासकानां कृते राजशब्दः प्रयुक्तः।[२] सभासु समितिषु वा सर्वेषां क्षत्रियाणां प्रवेशो नासीत्। अत एव व्यक्तिविशेषः राजशब्देन सम्बोधितः, परन्तु अस्मिन्कालेऽपि नासीत् शासकपर्यायतया राजशब्दस्य प्रयोगः। 'सजातराजानः' इत्यस्य अर्थः सहयोगिसैनिका इत्येव आसीत्; न तु सहयोगी-राजा।[३]

---

१. ऐ० ब्रा० १।१४।

२. ऋ० १०।९७।३; १०।४२।१०।

३. अथर्व० ३।६।४; १३।६२।१; तै० सं० ५।७।६।४; ५।१८।४८।

सभाभिः समितिभिश्च यः स्वनायकतया स्वीक्रियते स्म, तस्य सुरक्षार्थं समृद्धयर्थं च ताः प्रार्थयन्ते स्म;[1] किन्तु उद्दण्डस्य निरङ्कुशस्य च प्रधानस्य निग्रहमपि अकुर्वन्।[2] निष्कासितो राजा पुनरपि आहूयते. शक्त्या समृद्धया च शत्रून् विजेतु प्रार्थ्यते स्म।[3] निर्वाचितः सैनिकप्रधानः एव कालान्तरे राजत्वम् आससाद। निर्वाचितः जनशक्तिभिः नियन्त्रितम् आसीत्। राजकृतामिव रथकाराणाम्, शिल्पिनाम्, अश्वपतीनाम्, सैनिकप्रधानानाम्; कुटुम्बिनाञ्च राजहस्ते नियमनम् आसीत्। एतत्कालपर्यन्तं राजतन्त्रे सामाजिकसंस्थानामपि महत्त्वम् आसीत्। सभासमित्यादिषु एव सम्प्रभुता सन्निविष्टा आसीत्। ताः राज्ञौ निर्वाचने निष्कासने च शक्ताः। इन्द्रसभायां सामाजिकैः जनैः सम्मानस्तरीयं प्रातिनिध्यं क्रियते स्म।

निर्वाचनप्रणालीम् अनुसरद् राजतन्त्रम् उपनिषत्काले वंशानुगतम् अभूत्। तस्य प्रभावः धार्मिकक्षेत्रेष्ववपि विकासम् आससाद। उपनिषत्सु स 'राजर्षिः' कथितः। शासनक्षेत्रे इव नैतिकनियमेष्वपि राज्ञः विचाराणां बीजारोपणं जातम्, अर्थात् नैतिकनियमेष्वपि राज्ञा हस्तक्षेपः आरब्धः। "न केवलम् उपदेशमेव आसादितम्, अपि तु विमर्शमपि अकुर्वन्।" वस्तुतः उपनिषत्सु राज्ञः तस्याः सार्वभौमसम्प्रभुतायाः सूत्रपातः अस्ति। यस्याः पूर्तिः अशोकराज्ये न परिलक्ष्यते। अशोकेन राज्यशक्तेरिव बौद्धसंघस्यापि प्राधान्यम् आसादितम्। प्रारम्भिके वैदिकसमाजे निर्वाचनद्वारा राजा नियुज्यते स्म। उपनिषत्सु स राजर्षिपदेन व्यवहृतः। आगमेषु शिवेन विष्णुना च स तस्य सम्बन्धस्थापनं दैवसिद्धान्तो भवति। स देवालयस्य प्रधानसेवकः इति उद्घोषितः खण्डदेवपुत्रेण अनन्तदेवेन। मन्दिरसेवाद्वारा एव सर्वप्रकारकं भूमिस्वामित्वं लब्धम्।

मध्ययुगे राजतन्त्रविषयका सिद्धान्ताः दाढर्यम् आपन्नाः, तेन भूस्वामित्वमपि आसादितम्।[4] किन्तु कौटल्येन राज्ञः सार्वभौमस्य नियन्त्रणं स्थापितम्। भूभागविशेषे सार्वजनिकं वैयक्तिकं चापि स्वामित्वं व्यवस्थापितं कौटल्येन।[5] निधिनिक्षेपे, जले, वृक्षेषु, पाषाणेषु, आगामिन्यां संचितायाम् अक्षीणसम्पत्तौ राज्ञः स्वामित्वं स्वीकृतम्। राजतन्त्रेण सह सम्पत्तिविषयकप्रश्नस्य आर्थिकं महत्त्वं

---

१. अथर्व० ६।८८; ऋ० १०.१७१।
२. अथर्व० ६।१३४।
३. अथर्व० ३।३; तै० सं० २।३।१।
४. मीमांसासू० ६।७।२।
५. अर्थ० २।१; २।१२; २।१४।

वर्तते। कोशविषयेऽध्यादेशविषयका अधिकाराः कोषान्तरापेक्षया दृढतराः आसन्। आगमसम्मतराजतन्त्रेऽपि नैयायिकं प्रशासनं धर्मशास्त्राणि अनुरुद्धयैव आसीत्, किन्तु वित्तविषये राज्ञा अधिकाः अधिकाराः आप्ताः तदानीं तस्यां (राजशक्तौ) धार्मिकम् आचारिकं राजनीतिकं च नियन्त्रणं स्थापयितुं प्रयतितम्। कर्मसिद्धान्तस्य पुरः प्रजायाः, राज्ञश्च साम्यमासीत्। आचारिकहीनतया आसीद् आध्यात्मिक्याः सामाजिकक्याश्च हीनतायाः सम्भवः। एवंविधस्य राज्ञः साहाय्यं प्रजा न आचरन्ति स्म। अनयोः द्वयोः आधारः, विश्वासः श्रद्धा च, अन्यथा तर्कः जनेच्छा च।

राजतन्त्रेण सहैव गणतन्त्रात्मिका पद्धतिरपि विकसन्ती आसीत्। प्रोफेसर-जायसवालः गणतन्त्रात्मकस्य शासनस्य घटकानाम् आरम्भः ब्राह्मणकालात् पूर्वत एव अभूदिति मन्यते। प्रोफेसरसरकारः गणतन्त्रस्य आरम्भं ब्राह्मणकालात् स्वीकरोति। दक्षिणदेशीयं भोजशासनं गणतन्त्रात्मकं मनुते। जायसवालः, मेकडोनलमहोदयः, कीथमहोदयश्च भोजशब्दं राज्ञः उपाधिं स्वीकुरुतः।[१] ब्राह्मणग्रन्थेषु बहुविधानां शासनप्रणालीनाम् उल्लेखो दृश्यते। शासनप्रणालीभिः सममेव न्यायपालिकाऽपि विकसिता। ऋग्वेदकाले केवलं राजतन्त्रस्यैव अस्तित्वम् आसीत्। प्रोफेसरजाय-सवालः, प्रोफेसरसरकारश्च गणतन्त्रात्मिकां पद्धतिं ब्राह्मणग्रन्थेभ्यः पूर्वकालिकीं मन्येते।[२] प्रथमः कालः ईसातः पूर्वम् ६०० वर्षेभ्यः आरभ्य ईसातः पूर्वम् ४५० वर्षाणि यावत्। अस्मिन्काले तन्मतानुसारम् एकादशगणराज्यानि आसन् किन्तु एष कालः न प्रारम्भिको वैदिककालः, अपि तु उत्तरवर्तिवैदिकालः। जाय-सवालमतानुसारेण गणतन्त्रात्मकशासनस्य प्रथमः कालः ईसातः शताब्दीसहस्र-पूर्वतः एव आरभ्यते।

सामाजिकपरिवर्तनेन सममेव शासनप्रणालिषु अपि परिवर्तनं जातम्। वैधानिकसङ्घटनानाम् उदयेन वैधानिककेन्द्रीयतया जातीयप्रभुतया च सममेव राजतन्त्रं क्रियाशीलम् अभूत्। राजतन्त्रात्पूर्वमभिजातवर्गीयशासनमभूत्। इदं शासनं जातीयप्रभुत्वद्वारैव उद्भावयति राजतन्त्रम्। अनुशासानस्य उत्तर-दायित्वस्य च विकासः व्यक्तिविशेषम् अधिष्ठितः। सामाजिकस्थितिभिः सामाजिक-सम्बन्धैश्च सहैव यदा व्यक्तेः स्वभावः परिवर्तनमायाति, तदा शक्तिं सम्पादयितुं

१. तै० सं० १।७।६७; तै० ब्रा० १।१।१०; शत० ब्रा० २।३।२३; १।१०; कौ० ब्रा० ७।२; मै० सं० ४।७।४।

२. अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सव-शोशीनराणां राज्यैवेव तेऽभिषिच्यन्ते— ऐ० ब्रा० ३८।३।१४।

व्यक्तिविशेषेण न असौविध्यम् अनुभूयते। फलतः निरङ्कुशं राजतन्त्रं भवति अधिष्ठितम्।[१] वैदिकसमाजे उपर्युक्तानां परिस्थितीनां सत्त्वेऽपि शास्त्रीयसंस्थानां सम्प्रभुत्वम् आसीत्। अतः निरङ्कुशं राजतन्त्रं पदं लब्धुं नाशकत्। यावत्पर्यन्तम् ईदृश्यः संस्थाः शक्तिमत्यः आसन्, न तावत्पर्यन्तं पदं निहितं निरङ्कुशेन राजतन्त्रेण।

## गणराज्यम्

१९२० ईसवीये वर्षे काशीप्रसादजायसवालेन फ्लीटमहोदयेन च गण-शब्दस्य विषये विचारितम्। फ्लीटमहोदयेन गणशब्दस्य अर्थः प्रजातिः (Tribe) इति मन्यते, जायसवालस्तु लोकसभा (असेम्बली), एवंविधैः अन्यैः सङ्घटनैर्वा सञ्चालितम् प्रशासनं गणशब्दस्य अर्थः मनुते। एफ्०, डब्ल्यू टामसमहोदयेन जायसवालीय एव विचारः समर्थितः। वस्तुतः वैदिकगणविषयकाः फ्लीटमहोदयस्य विचाराः उत्तरवर्तिगणविषयकाः. जायसवालस्य विचाराश्च अंशतः एव यथार्थाः। ऋग्वेदतः स्मृतिकालं यावत् न एकस्मिन्नेव अर्थे गणशब्दः प्रयुक्तः। ऋग्वेदतः एव देवगणानाम् उल्लेखः आरभ्यते। "गणानामृभवः सुहस्ता" (ऋ० ४।३५।३) अत्र समानवंशवत्सु गणशब्दः प्रयुक्तः। यथा अदितिनाम्ना आदित्यगणः आसीत्। स्कन्देनापि दैत्यैः सह युद्धम् आचरितम् (आदि० ६०।३६।३९ शल्य० ४९।९९)। तत्र नारीगणानाम् सङ्केतो लभ्यते। इन्द्रमरुत्बृहस्पतयश्च गणपतयः कथिताः। ऋग्वेदे गणपतिशब्दः गणराज्यशब्दश्च एकस्मिन्नेव अर्थे प्रयुक्तौ। एतेन विवेचितेन स्पष्टं यत् प्रायः वैदिककालतः एव गणानां सङ्घटनम् आरब्धम्। वैदिकगणेषु निर्वाचनप्रकारः स्पष्टरूपेण न दृश्यते। तदानीं गणपतिपदं वंशानुगतमपि नासीत्। गणानां कर्त्तव्यानि सायणेन यथा व्याख्यातानि, तेन समानश्रमस्य, समानविभाजनस्य, समानाधिकारस्य च सङ्केतो लभ्यते (अथर्व० ३।३०।५-६)। बौद्धगणेषु राजन्, उपराजन्, सेनापति, भाण्डारिक इत्यादिनाम् अभिजातवर्गीयतत्त्वानां सङ्घटनं भवति, किन्तु वैदिकगणेषु ईदृशी स्थितिः न दृश्यते। गणपतिः नागरिकेषु मूर्धस्थानीयः आसीत्; किन्तु उत्तरकाले गणपतिविषये सम्मानभावेन सह पूजाभावः श्रद्धाभावश्च विकसितौ। गृह्यसूत्रकाले बलिहरणरूपेण करोऽपि गणपतये दातुम् आरब्धः जनैः; किन्तु अस्य सूत्रपातः ऋग्वेदे एव अभूत्। तत्र 'गणेभ्यः स्वाहा' इतिवत् 'गणपतिभ्यः स्वाहा' इत्यपि कथितम् (ऋ० २८।९)। ऋग्वेदे षट्सु; अथर्ववेदे च नवसु स्थलेषु गणशब्दः प्रयुक्तः। मरुद्गणस्यापि बहुत्र उल्लेखो लभ्यते। तत्र मारुतानां सैनिक-

---

१. वै० ३० जि० २१ पृ० ११२; ऐ० ब्रा० ३८।३।१४।

रूपता प्रकटिता भवति।[१] ते इन्द्रसूर्ययोरपि प्रस्तुताः।[२] गणस्य यानमपि वर्णितमस्ति।[3] देवगणानाम् इव मानवगणानामपि उल्लेखो लभ्यते। येषां नेतृत्वं देवैरपि क्रियते स्म। एतेन विवेचितेन स्पष्टम् यद् गणस्य राजा गणपतिश्चेति शब्दद्वयमपि एकार्थकमेव। इन्द्रः, मरुत्, बृहस्पतिः, ब्रह्मणस्पतिः इत्येते असकृद् गणपतयः कथिताः।[४]

पाणिनिना एकस्मिन्नेव अर्थे गणशब्दः सङ्घशब्दश्च प्रयुक्तौ। एषैव परम्परा पालिजातकेषु अर्थशास्त्रेषु च दृश्यते। एतानि प्रमाणानि आश्रित्य अनेकैः विद्वद्भिः गणशब्दविषये गणतन्त्रीयशासनव्यवस्थायां च बहु विचारितम्। डॉ॰ भण्डारकरस्य मतं यत् काञ्चित् व्यवस्थां निश्चितम् उद्देश्यं पुरोधाय योजिते सहकारिसङ्घटने पाणिनिना सङ्घशब्दः गणशब्दश्च प्रयुक्तौ स्तः। आर॰ सी॰ मजूमदारेणापि यथाविधि सङ्घटितं सङ्घटनमेव गणशब्दार्थतया स्वीकृतम्। जायसवालेन हि गणराब्येन सह सङ्घशब्दस्य सम्बन्धः स्वीकृतः। तस्य च राजनीतिकी व्याख्या अपि कृता। एतेन हि लिखितं यद् आयुधजीविनो राज्ञः सैनिकवर्गविशेषः नासीत्, अपि तु गणविशेष एव। एतच्च न भण्डारकरमतं संवदति जायसवालस्य लेखनम्। भण्डारकरमतानुसारेण हि सैनिकानां वर्गविशेषः आयुधजीविसङ्घः अस्ति।

कौटल्येन प्रयुक्तयोः राजोपजीविवार्ताशास्त्रोपजीविशब्दयोः विषये जायसवालस्य कथनम् इदं यद् राजोपजीविनः वार्ताशस्त्रोपजीविनश्च गणविशेषा आसन्। आर॰ सी॰ मजूमदारेण राजविहीनं सङ्घटनमेव गण इति स्वीकृतम्। अत्र च तेन प्रमाणान्यपि उपस्थापितानि। यू॰ एन्॰ घोषालाख्येन कौटल्यप्रयुक्तानां वार्तोपजीविशस्त्रोपजीविराजशब्दोपजीविशब्दानां च विभिन्नप्रकारकाः गणविशेषाः एव अर्थाः स्वीकृताः। एतदवश्यमेव यत्प्रायः सङ्घशब्दः धार्मिकसङ्घटने, गणशब्दश्च राजनीतिसङ्घटने प्रयुक्तः अस्ति। सङ्घशब्दवद् गणशब्दोऽपि देवसमूहे, किंबहुना पक्षिसमूहेऽपि प्रयुक्तो दृश्यते; किन्तु तस्य राजनीतिकी व्यवस्था अपि वैदिककालतः एव व्यवहारपदवीमारुरोह।[६]

---

१. प्रो॰ विनयकुमार सरकार पोलिटिकल इन्सीट्यूट एण्ड थ्योरीज आॅफ हिन्दूज। पल्की, थ्योरी आफ लॉ एण्ड सिविल सोसायटी, पृ॰ १३०।

२. ऋ॰ १।६४।१२; ५।५२।१३-१४; ६।१६।१४; १०।३६।७; ३।३२।२; ७।५८।१; ६।६६।१७; अथर्व॰ १३।४।८; ४।१३।४; शत॰ ब्रा॰ ५।४।३।१७।

३. युवा स मारुतो गणस्त्वेष रथोऽनेद्यः; शुभं युवा प्रतिसुतः—ऋ॰ ५।६१।१३।

४. अथर्व॰ १३।४।८; ४।१३.४।

५. ऋ॰ १।६४।६।

बौद्धगणान् मीमांसयता आर० सी० मजूमदारेण गदितं यद् बौद्धगणाः जनतान्त्रिकताम् आश्रित्य सङ्घटिता आसन्। जायसवालेन गणसङ्घयोः भेदं प्रदर्शयता लिखितं यद् गणाः राज्यं सङ्घस्तु प्रशासनम्। यूनानिलेखकानां मतानि आलोच्य इमं निष्कर्षम् आसादयति यत् सर्वे सङ्घाः वर्गीयताम् आश्रित्य सङ्घटिता आसन्, किन्तु गणस्य अधिकाराः जानतन्त्रिका आसन्। उभाभ्यामपि सम्भूय सञ्चालितेषु सङ्घेषु अभिजातवर्गीयं जनतन्त्रम् आसीत्। तत्र वंशं सम्पत्तिं च आश्रित्य सदस्यता भवति स्म; परन्तु स इदं मन्यते यद् ईसातः शताब्दीतः पूर्वं मिश्रितगणानामिव शुद्धानामपि जानतन्त्रिकाणां गणानां सत्ता आसीत्।

भण्डारकरस्य कथनं यद् गणाः प्रजातिः इत्येतद्रूपतया सङ्घटिता आसन्। न वा ते गणाः क्षत्रियजातावेव सीमिता आसन् एतेषां लघुतमं राजनीतिकं सङ्घटनं कुलम् आसीत्। कुलप्रधानस्य न केवलं प्रधानतायामेव सम्बन्धः आसीत्, अपि तु प्रजातिभिः उपलब्धायाः भूमेः स्वामित्वमपि। भण्डारकरः गणान् द्वेधा विभाजयति। एतस्य गणस्य राजनीतिकी शक्तिः न सम्पूर्णस्य गणस्य हस्ते भवति, अपि तु गणघटकानां केषाञ्चित् कुलविशेषाणामेव। अपरत्र च प्रजातिप्रधानैः सङ्घटिताः गणा भवन्ति स्म। अत्र प्रकारद्वये प्रथमप्रकारः लिच्छिविषु, द्वितीयश्च कुरु-पञ्चालयौधेयेषु दृश्यते। अत्र ७७७० राजव्यक्तीनां प्रशासनम् अस्य प्रमाणम्।

जायसवालमजूमदारभण्डारकरविचारानुसारं गणाः त्रेधा विभाजयितुं शक्याः। जायसवालविचारानुसारमपि गणस्य त्रीणि रूपाणि भवितुं शक्नुवन्ति—(१) शुद्धगणः, (२) शुद्धकुलसङ्घः, (३) कुलगणमिश्रितश्च। एवंविधमेव भण्डारकरमतेऽपि गणाः गणयितुं शक्याः। अभिजातवर्गीयगणः जनतन्त्रात्मकं गणश्चेति अभिजातगणानां भेदद्वयं स्थापयितुं शक्यम्—एकात्मका गणाः, सङ्घात्मका गणाश्च इति। जनतन्त्रात्मकगणानामपि प्रकारद्वयं सम्भवति—निगमात्मकं जन-पदात्मकञ्च। मजूमदारः निगमात्मकं जनपदात्मकमपि गणम् अभिजातवर्गीयमिव मन्यते।[1] काणेमहोदयः स्पष्टमेव गणम् अभिजातवर्गीयं मनुते।[2] वस्तुतः कुलसंघेभ्यः आरभ्य राजनीतिकगणे अभिजातवर्गीयः प्रभावः परिलक्ष्यते;

---

१. विचारार्थं द्रष्टव्यम्—डॉ० भण्डारकर, ऑस्पेक्ट्स ऑफ एन्शेण्ट हिन्दू पॉलिटी, पृ० १४२, १४६; आर०सी० मजूमदार; कॉरपोरेट लाइफ इन एन्शेण्ट इण्डिया, पृ० २२१; दी एज ऑफ इम्पीरियल युनिटी, पृ० ३३४; के० पी० जायसवाल, एन इन्ट्रोडक्शन टू हिन्दू पॉलिटी; मॉडर्न रिव्यू कलकत्ता, मई १९१३; के० पी० जायसवाल, हिन्दू पॉलिटी, पृ० २३-२४।

२. पी० वी०काणे, हिस्ट्री ऑफ धर्मशास्त्र, खं० ३, पृ० ८८।

गणव्यवस्थाविषये क्रान्तिकारिदृष्टिमतां बौद्धानां राजनीतिका गणा अपि अभिजातवर्गीयप्रभावेण ग्रस्ता आसन् ।

उपलभ्यमानं गणविषयकं साहित्यं पर्यालोच्य एतत् कथयितुं शक्यते यद् राजनीतिकैर्गणैः जानतन्त्रिकं संविधानं न आश्रीयते स्म । गणानां कार्यक्रमम् आधृत्य तेषु जानतन्त्रिकतत्त्वानि आसन् इति कथनं जनतन्त्रस्य कृते प्रमाणीभूतं न भवति । अभिजातवर्गीयाः प्रभावाः व्यक्तेः जनतन्त्रीयलक्ष्यप्राप्तौ बाधका भवन्ति । घोषालेन तु शाक्यगणा अपि व्यक्तिविशेषसञ्चालिताभिजातवर्गीयशासनव्यवस्था स्वीकृता आसन् । भण्डारकरप्रभृतयः एते गणा न विशुद्धाः जानतन्त्रिकाः स्वीकृताः, अपि तु अभिजातवर्गीया एव । केवलं जायसवालमहोदयेनैव गणराज्यस्य जानतन्त्रिकी व्यवस्था कृता अस्ति । तदनुसारं गणस्य अर्थः संस्था अस्ति । अधिकतमानां जनानां शासनमेव गणराज्यस्य तात्पर्यम् । गणपतिगणपूरकादिशब्दैः स्पष्टं यद् गणः जानतन्त्रिकं संघटनम् आसीत् । पाणिनिना गणे एव सङ्घशब्दः प्रयुक्तः ।[1] आरम्भे गणसंघशब्दौ राजनीतिकसंघटनरूपे अर्थे प्रयुक्तौ अभूताम् । पश्चाद् बौद्धैः धार्मिकसंघटने संघशब्दः प्रयुक्तः ।[1] अत एव प्रारम्भिकबौद्धसाहित्ये गणसंघशब्दौ सहैव प्रयुक्तौ । गणविषये बौद्धसाहित्यसदृशाः पाणिनीयाः कौटलीयाः महाभारतीयाश्च विचाराः अवधेयाः सन्ति । "आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्" (५।३।११४) इति पाणिनेः सूत्रम् । अत्र काशिकाकारः लिखति—

"वाहीकेषु यः आयुधजीविसंघस्तद्वाचिनः प्रातिपदिकात् ब्राह्मणराजन्यवर्जितात् स्वार्थे ञ्यट् प्रत्ययो भवति । ब्राह्मणे तद्विशेषग्रहणम् । राजन्ये तु स्वरूपग्रहणमेव । क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः । मालव्यः, मालव्यौ, मालव्यः ।" अत्र भाष्यकारः—"क्षत्रियादेकराजादिति व्यक्तव्यम् । किं प्रयोजनम् ? संघप्रतिषेधार्थम् । संघान्मा भूत् । पञ्चालानामपत्यम् , विदेहानामपत्यम् । तर्हि वक्तव्यम् । न वक्तव्यम् । न ह्यन्तरेण बहुषु लुकं पञ्चाला इत्येतद् भवति । यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात् । युवप्रत्ययश्चेत्तस्य लुकस्मिंश्चालुग् भविष्यति । इदं तर्हि क्षौद्रकाणामपत्यम्, मालवानामपत्यम् इति । अत्रापि क्षौद्रक्यः, मालव्यः इति । नैतत्तेषां दासे वा भवति कर्मकरे वा । किं तर्हि तेषामेव कस्मिंश्चित् । यावता तेषामेव कस्मिंश्चिद् यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात् । युवप्रत्ययश्चेत्तस्य लुकतस्मिंश्चालुग् भविष्यति । अत्र क्षत्रियग्रहणं किमर्थम् ? इह मा भूत् । विदेहो नाम तस्यापत्यं वैदेही ।"

---

१. अष्टाध्यायी, ३।३।८६ ।

स्पष्टं यत् सर्वेषां वर्गाणां गणाः संघटिता आसन्। वृकाट्टेण्यण् (५।३।११५), दामन्यादित्रिगर्तषष्ठाच्छः (५।३।११६); मद्रवृज्योः कन्, (४।२।१३१; ४।२।५३; ६।२।३४; ४।३।६७; ४।१।७९; ६।२।३४); एतेषु पाणिनीयसूत्रेषु अनेकेषां गणराज्यानाम् उल्लेखा दृश्यन्ते। जायसवालमहोदयेन एतानि प्रमाणानि आश्रित्य संसदीयप्रशासनेन सम्पन्नं गणानां स्वरूपं प्रस्तुतम्। गणराज्यराजतन्त्रयोः परस्परसम्बन्धविषये समाजशास्त्रीयपक्षस्यापि उपस्थापनम् आवश्यकम्। एतद्विषये कौटलीयेन महाभारतीयेन च एतद्विषयकेण वर्णनेन साहाय्यमेव भवति। वैदिककालतः एव गणराज्यं वैदिकधर्मश्च परम्परायाः समाजस्य च विरोधे आस्ताम्। वीतहव्यः ब्राह्मणेषु यद् व्यवहृतं तद् अथर्ववेद इत्थं वर्णितमस्ति—' ये सहस्रम् राजन्नासन् दशशता उत। ते ब्राह्मणस्य गां जग्धा वैतहव्याः पराभवन् (५।१८।१०)।" काशिकायां गणानां परिचयः इत्थम् उपस्थापितः—"नानाजातीया अनियतवृत्तयः उत्सेधजीविनः।" अस्या एव परम्परायाः विकासः कौटलीये अर्थशास्त्रे संघानां गुणान् स्वीकुर्वन्नपि तेषां समूलोच्छेदाय अधो निर्दिष्टां व्यवस्थां दर्शयति—

संघलाभो दण्डमित्रलाभानाम् उत्तमः। संघा हि संहतत्वादधृष्याः परेषाम्।ताननुगुणान् भुञ्जीत सामदानाभ्याम्। काम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः। लिच्छिविकवृजिकमल्लकमद्रककुकुरकुरुपाञ्चालादयो राजशब्दोपजीविनः। सर्वेषामासन्नाः सत्त्रिणः संघानां परस्परन्यङ्गद्वेषवैरकलहस्थानान्युपलभ्य क्रमाभिनीतं भेदमुपचारयेयुः। असौ त्वा विजल्पतीति। एवमुभयतः। बद्धरोषाणां विद्याशिल्पद्यूतवैहारिकेष्वाचार्यव्यञ्जना बालकलहानुत्पादयेयुः। वेशशौण्डिकेषु वा प्रतिलोमप्रशंसाभिः संघमुख्यमनुष्याणां तीक्ष्णाः कलहानुत्पादयेयुः। कृत्यपक्षोपग्रहेण वा। कुमारकान् विशिष्टच्छन्दिकया हीनच्छन्दिकानुत्साहयेयुः। विशिष्टानां चैकपात्रं विवाहं हीनेभ्यो वारयेयुः। हीनान्वा विशिष्टैरेकपात्रे विवाहे वा योजयेयुः। अवहीनान्वा तुल्यभावोपगमने कुलतः पौरुषतः स्थानविपर्यासतो वा। व्यवहारमवस्थितं वा प्रतिलोमस्थापनेन निशामयेयुः। विवादपदेषु वा द्रव्यपशुमनुष्याभिघातेन रात्रौ तीक्ष्णाः कलहानुत्पादयेयुः।

"सर्वेषु च कलहस्थानेषु हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य प्रतिपक्षवधे योजयेत्। भिन्नानपवाहयेद्वा। एकदेशे समस्तान्वा निवेश्य भूमौ चैषां पञ्चकुलीं दशकुलीं वा कृष्यां निवेशयेत्। एकस्था हि शस्त्रग्रहणसमर्थाः स्युः। समवाये चैषामत्ययं स्थापयेत्। राजशब्दिभिरवरुद्धमवक्षिप्तं वा कुल्यमभिजातं राजपुत्रत्वे स्थापयेत्। कार्तान्तिकादिश्चास्य वर्गो राजलक्षण्यतां संघेषु प्रकाशयेत्। संघमुख्यांश्च धर्मिष्ठानुपजपेत्। स्वधर्मममुष्य राज्ञः पुत्रे भ्रातरि वा प्रतिपद्यध्वमिति। प्रतिपन्नेषु कृत्य-

पक्षोपग्रहार्थमर्थं दण्डञ्च प्रेषयेत्। विक्रमकाले शौण्डिकव्यञ्जनाः पुत्रदारप्रेतापदेशेन नैषेचनिकमिति मदनरसयुक्तान्मद्यकुम्भान् शतशः प्रयच्छेयुः। दृश्यमानेषु च संघेषु राजकीया इत्यावेदयेयुः। अथावस्कन्दं दद्यात्" ( अर्थशा० ११।१।१-३२ )।

इत्थमेव कौटल्येन विभिन्नैः उपायैः संघानां नाशः वर्णितः। अन्ते च स कथयति "संघेष्वेवमेकराजो वर्तेत। संघाश्चाप्येवमेकराजादेतेभ्योऽतिसधानेभ्यो रक्षयेयुः ( ११।१।७७ )।

संघमुख्यश्च संघेषु न्यायवृत्तिर्हितः प्रियः।
दान्तो युक्तजनस्तिष्ठेत् सर्वचित्तानुवर्तकः ॥"

( ११।१।७८ )

कौटल्येन संघेषु भेदोद्भावनार्थं संघमुख्यानाम् अर्थकामविषयकं यद् दौर्बल्यम्, ततः लाभः करणीयः इति उपदिष्टम्। तेषां परस्परं वाचा ईर्ष्यया स्पर्धया च तेषु भेदः उद्भावयितुं शक्यः। कौटल्यः कुलसंघान् दुर्जेयान् मन्यते, किन्तु ताभिः प्रवृत्तिभिः संघेषु आन्तरिकं द्वेषम् उद्भाव्य तेषां नाशः कर्तुं शक्यते। महाभारते शान्तिपर्वणि ( १०७ अध्याये ) युधिष्ठिरेण गणविषये इत्थं प्रश्नः उत्थापितः--

गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर।
यथा गणाः प्रवर्द्धन्ते न भिद्यन्ते च भारत ॥
अरींश्च विजिगीषन्ते सुहृदः प्राप्नुवन्ति च।
भेदमूलो विनाशो हि गणानामुपलक्षये ॥
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः।
एतदिच्छाम्यहं श्रोतुं निखिलेन परन्तप ॥
यथा च ते न भिद्येरन् तच्च मे वद पार्थिव।

( ६-९ )

अस्मिन्विषये संघेषु व्याप्ता मानसिकी स्थितिः युधिष्ठिरेण जिज्ञासिता, यथा तेषु भेदः उद्भावयितुं शक्येत। तेषां विनाशश्च संभवेत्। अस्मिन् युधिष्ठिरप्रश्ने भीष्मेण यदुत्तरितं तेन संघानाम् आन्तरिकी स्थितिः पूर्णतया प्रकाशमायाति। भीष्म उवाच--

गणानां च कुलानां च राज्ञां भरतसत्तम।
वैरसन्दीपनावेतौ लोभामर्षौ नराधिप ॥

लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।
तौ क्षयव्ययसंयुक्तावन्योन्यञ्च विनाशिनौ ॥
चारमन्त्रबलादानैः सामदानविभेदनैः ।
क्षयव्ययभयोपायैः प्रकर्षन्तीतरेतरम् ॥
तत्रादानेन भिद्यन्ते गणाः संघातवृत्तयः ।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशंभयात् ॥
भेदे गणा विनश्येयुर्भिन्नास्तु सुजयाः परैः ।
तस्मात् संघातयोगेन प्रयतेरन् गणाः सदा ॥
अर्थाश्चैवाधिगम्यन्ते संघातबलपौरुषैः ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु ॥
ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसन्धानाः सुखमेधन्ति सर्वशः ॥
धर्मिष्ठान् व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।
यथावत्प्रतिपश्यन्तो विवर्द्धन्ते गणोत्तमाः ॥
चारमन्त्रविधानेषु कोषसन्निचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान् गणाः सन्तारयन्ति ते ॥
क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः ।
नयत्यरिवशं सद्यः गणान् भरतसत्तम ॥
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥
मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्षण ।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥
गणमुख्यैस्तु सम्भूय कार्यं गणहितं मिथः ।
पृथग्गणस्य भिन्नस्य विततस्य ततोऽन्यथा ॥

अर्थाः प्रत्यवसीदन्ति तथाऽनर्था भवन्ति च ।
तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ॥
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ।
कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ॥
गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारकम् ।
आभ्यन्तरं भयं रक्ष्यमसारं बाह्यतो भयम् ॥
आभ्यन्तरं भयं राजन् सद्यो मूलानि कृन्तति ।
अकस्मात् क्रोधमोहाभ्यां लोभाद् वापि स्वभावजात् ॥
अन्योन्यं नाभिभाषन्ते तत् पराभवलक्षणम् ।
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा ॥
न चोद्योगेन बुध्या वा रूपद्रव्येण वा पुनः ।
भेदाच्चैव प्रदानाच्च भिद्यन्ते रिपुभिर्गणाः ॥
तस्मात् सघातमेवाहुर्गणानां शरणं महत् ॥
(१०-३२)

भीष्मेणापि गणविषये आभ्यन्तरं भयमेव मुख्यं स्वीकृतम् । आभ्यन्तरं भयं न तथा समजायत यथा तेभ्यः ये गणराज्ये प्रशासकाः । तेषां लोभामर्षादिभिः संघानां विनाशः सम्भवति । अमेरकीयगणराज्यस्य मुख्यः व्याख्याकारः हैमिल्टनः फेडरलिस्ट इत्यत्र आदितः अन्तं यावद् अस्यैव आभ्यन्तरभयस्य कारणानि विवेचितवान् अस्ति । भारतीयगणराज्ये एषा स्थितिः सुस्पष्टा परिलक्ष्यते । नारदस्य पुरः स्वस्थितिं वर्णयता कृष्णेन एवंविधानाम् एव आन्तरिकद्वेषः कलहादीनां स्वरूपञ्च प्रास्तावि ।

## प्रक्रिया

कोशलराजेन आत्मसमर्पणं कर्तुं शाक्येभ्यः दूतः प्रहितः । तदीये प्रस्तावे कपिलवस्तुनि शाक्यैः विमर्शः कृतः । विचारावसरे सोमेन कथितं यद् अस्मिन् प्रश्ने वैमत्यमस्ति । अतः बहुमतम् आश्रित्य निर्णयम् अस्माभिः । विनये (एतन्नामकग्रन्थे) एषा कथा दृश्यते । लिच्छिवीयैः वैशाल्यां सम्भूय उत्तराधिकारविषये कथं निर्णयः कृतः इत्येषामपि कथा लभ्यते । एताभिः कथाभिः स्पष्टं यद् गणानां सभाः उत्तराधिकारविषये परराष्ट्रसम्बन्धादिविषये च जानतन्त्रिकरीत्या एव

निर्णयन्ति स्म। जातकस्य कथाद्वयम् आश्रित्य जायसवालेन जनतायाः सक्रिययोगदानविषयकसिद्धान्तः प्रतिपादितः। अनयोः कथयोः जानतन्त्रिकरीत्या राज्ञः निर्वाचनं वर्णितम् अस्ति।[1] जायसवालस्य विचारः नागरशब्दस्य व्याख्यायाम् आधृतोऽस्ति। निगम-एकच्छन्द-नागर इति एतेषां शब्दानां व्याख्याम् आश्रित्य आधुनिकप्रकारीयस्य जनतन्त्रस्य यत् स्वरूपं जायसवालमहोदयः प्रस्तौति तत् कल्पना मात्रम् अस्ति।

विनये एतन्नामकग्रन्थे ) धर्मकर्मणां ( धम्म-कम्म ) यद् वर्णनम् उपलभ्यते, तत्र चत्वारः, पञ्च, दश, विंशतिः अतोऽप्यधिका वा सदस्याः सभायां भवन्ति स्म। कार्यगौरवानुसारं सदस्यानां संख्या निश्चीयते स्म। एषा संख्या गणपूर्तये सम्भाव्यते। भिक्षूणां गणपूर्तिः गणपूरकस्य कार्यमस्ति। वैशाल्याः सभायां गणपूरकाः भिक्षवः 'आ..नपन्नापकाः' इति कथिताः। संघकम्म इत्यस्य द्वे प्रक्रिये आस्ताम् (१) णत्ति, (२) अनुस्सावन इति च। एतत्प्रक्रियाद्वयानन्तरं स्वीयान् विचारान् प्रकाशयितुं सदस्याः स्वतन्त्रा आसन्। पश्चात् निर्णयः ( छन्दः ) व्यवस्थाप्यते स्म। 'णत्तिदूतियकम्म' समये सकृद्घोषणा क्रियते स्म। "णत्तिचतुत्थकम्म" समये त्रिवारं क्रियते स्म घोषणा।

विवादेषु अनुशासनसम्बन्धिविषयेषु च संघकर्मीया प्रक्रिया विस्तृता आसीत्। अनुशासनसम्बन्धिव्यवहारे अपराधी आहूयते स्म। स प्रश्नान् पृच्छयते स्म च। ततः पश्चाद् अधिकरणा समित्यनुसारं निर्णीयते स्म। एवंविधेषु विवादेषु सर्वेषां सदस्यानां विचारगोष्ठी भवति स्म। सर्वैः सदस्यैः सम्भूय विचार्यते स्म। अन्येषां विषयाणां निर्णये 'उमाहिकाः' ( लघुसमितयः ) अपि शक्ताः आसन्। वैशाल्याः एकया उमाहिकया' ( लघुसमित्या ) कया रीत्या निर्णयः व्यवस्थापितः इत्यस्य स्पष्टं वर्णनं लभ्यते। अस्याम् उमाहिकायां रेवतद्वारा प्रस्तुताः अष्ट सदस्याः आसन्। निर्णये सर्वेषां सदस्यानां सम्मतेः "येभुयस्सिका" द्वारेण बहुमतम् अनुसृत्य निर्णयः क्रियते स्म। गूल्हक( गुप्त )सकण्णजप्पक( ध्वनि )विवटक( प्रकाश ) इति पद्धतित्रयेण निर्णयः क्रियते स्म। स्पष्टं यत् निर्णयः निश्चितायां प्रक्रियायां निर्भरः। शलाकासहायकेन ( मताधिकारिणा ) अनेके अधिकाराः अधिगता आसन्। स निर्णयस्य प्रक्रियायां निश्चेतुम् आसीत् शक्तः।

प्रक्रियाविषये विदुषाम् आसीत् वैमत्यम्। अत्र त्रयं मुख्यम्–( १ ) सभायाः कार्यसञ्चालनस्य निश्चिता प्रक्रिया आसीत्। तद्विषयका नियमा आसन्। प्रस्तावस्य त्रिवारं वाचनं भवति स्म। प्रस्तावविषये कीदृश्या अपि आपत्तेः अभावे

१. हिन्दू पॉलिटी, २५।

२. जातक० खं० ३ पृ० ९-१०; खं० १ पृ० २६; ख० २ पृ० ३२५-५३।

एव स्वप्रस्तावः पारितो मन्यते स्म। मतदानस्य प्रक्रिया आसीत् निश्चिता। एवं मतगणनायाः अपि। (२) विवादाः निर्णयार्थं समितिषु निक्षिप्यन्त स्म। (३) गणपूर्त्यादिविषयकाः नियमा आसन्।

वस्तुतः गणेषु नागरिकेण शासनकार्ये साहाय्यं कर्त्तव्यम् आसीत्। अतः गणेषु सदा राजनीतिकी जागर्तिः सदा जागर्तिः अवातिष्ठत। सर्वे नागरिकाः आन्तर-बाह्यसंघर्षेषु बद्धपरिकरा आसन्। सिकन्दराक्रमणावसरे दृश्यते यत् पञ्चनदप्रान्ते लघवः गणाः प्राणानपि अविगणय्य अन्तिमक्षणपर्यन्तं युद्धरताः आसन्। नागरिकैः विश्वासघातः न कृतः; न वा विदेशीयशक्तेः हस्ते स्वमर्यादा विक्रीता। गणस्थाः सर्वे सदस्याः लब्धसैनिकशिक्षाः आसन्। अत एव गणानाम् अन्तःकलहेन उत्पन्ने सङ्कटे ध्यानमाकर्षयता महाभारतकारेण उक्तं यद् यदि गणाः सुसङ्घटिताः, तदा ते दुर्जेयाः। वैयाकरणैः क्षुद्रकमालवप्रभृतीनां गणानाम् एतदेव स्वरूपम् उपस्थापितम्। बुद्धेन मगधामात्याय एतदेव उपदिष्टं यद् वज्जिषु विजयः दुर्लभः। वस्तुतः कृष्णसमस्य नेतुः नेतृत्वे गणराज्यं दुर्जयम्, किन्तु तादृशस्य नेतुः अभावे गणराज्यानां सत्ता भयग्रस्ता एव।

# १
# राष्ट्रान्तरीयनीतिः

## उपायः

'डिप्लोमेसी' इति विषये कूटनीतिशब्दः प्रयुज्यते। 'डिप्लोमेसी' शब्दस्य क्षेत्रं विस्तीर्णम् अस्ति। कूटनीतिशब्दः तदीयानां सर्वेषाम् अंशानां भावं ग्राहयितुमशक्तः। डिप्लोमेसी इत्येतत्कृते भारते उपायशब्दः प्रयुक्तः। तत्र कूटनीतिः अङ्गमात्रम्। उपायविश्लेषणेन अस्याः स्पष्टीकरणं भवति। राष्ट्रियशक्तेः राष्ट्रान्तरीयशक्तेश्च विकासार्थं राज्ञः कृते बलं शक्तिः उपायश्चैतत् त्रयं द्वारम्। शक्तयः तिस्रः–उत्साहशक्तिः, प्रभुशक्तिः, मन्त्रशक्तिश्च।[1] पूर्वाचार्याणां मतानि निरस्यन् कौटल्यः लिखति यत् प्रभुशक्तिः उत्साहशक्तितः महती, मन्त्रशक्तिश्च प्रभुशक्तेरपि महती।[2] सन्धिविग्रहादीनाम् औचित्येन प्रयोगः मन्त्रशक्तिः।[3] कोशस्य सैन्यशक्तेश्च यथाविधि प्रयोगः उत्साहशक्तिः। प्रभुशक्तिः उत्साहशक्तिश्च राज्ञः व्यक्तित्वं विशेषतः आश्रयतः। बलं पञ्चधा भवति–बाहुबलम्, अमात्यबलम्, धनलाभबलम्, प्रज्ञाबलम्, अभिजातबलञ्च।[4] स्वबलस्य स्वशक्तेः विकासाय, परबलस्य ह्रासाय उपायस्य प्रयोगो भवति। खारवेल–हाथिगुंफालेखेन स्पष्टीभवति यद् ईसातः बहुकालात् पूर्वमेव नीतिक्षेत्रे व्यापकतया उपायानां प्रयोगः आसीत्।[5] उपायः सामान्यतया चतुर्धा–साम, दानम्, भेदः, दण्डश्च।[6] क्वचित् क्वचित् सप्तानाम् अपि उपायानां निर्देशो लभ्यते।[7] अत्र माया, उपेक्षा, इन्द्रजालम् इति उपायत्रयमपि समाविष्टम् अस्ति।[8] बृहस्पतिना इन्द्रजालस्थाने वधः उपायतया निर्दिष्टः। वनपर्वणि पञ्च उपायाः

---

१. महा० आश्रम० ७।६; अर्थशा० ४।२; सरस्वतीविलास, पृ० ४६।

२. अर्थशा० ६।१।

३. कामन्दक० १५।३२; नीतिवाक्यामृतम्, पृ० ३२२, ३२३। दशकुमार० ८, पृ० १४४; अग्निपु०, पृ० १ १।१; २४१।१; मानसो० २-८-१०; कामन्दक० १३।४१-५८।

४. उद्योग० ३७।५२-५५।

५. इपिग्रा० इं० २० पृ० ७६, ८८।

६. सभा० ५।४१।२-३; मनु० ७।१०९; याज्ञ० १।३४६; शुक्र० ४।१।२७।

७. कामन्दक० १७।३; मत्स्यपु० २२२।२; अग्निपु० २२६।५-६; बार्हस्पत्य० ५।१-२; विष्णुधर्मोत्तर० २।१४६-१४७; सभापर्व ५।२१।

८. बार्हस्पत्यसूत्रम् ५।२६३।

स्वीकृताः। उपेक्षा च उपायात् बहिर्भूता एव स्वतन्त्रा स्वीकृता।[१] चतुर्भ्यः उपायेभ्यः अन्ये माया, अक्षः, इन्द्रजालमिति एते त्रय उपायाः स्वीकृताः।[२] रूपपरिवर्तनं विपक्षिणः पुरः अशुभसूचककार्यप्रदर्शनञ्च मायायाम् आयाति। भीमेन कीचकस्य पुरः रूपपरिवर्तनात्मिका माया प्रयुक्ता आसीत्।[३] इन्द्रजालमपि मायायाः विकसितं स्वरूपम्। विपक्षिणः पुरः अलौकिकीनाम् आकृतीनां प्रदर्शनम्, रक्तादिवर्षणञ्च इन्द्रजालस्य स्वरूपम्। लङ्कायां मायायाः इन्द्रजालस्य राक्षसैः प्रयोगः कृतः। रामपक्षीयाणाम् एव रूपाणि धृत्वा राक्षसैः वानराणां सन्देहः उत्पादितः, कः स्वपक्षीयः, को वा परपक्षीयः इति।

मुख्याः चत्वारः उपायाः। एतैः उपायैः परपक्षस्य शक्तित्रयं बलपञ्चकं प्रकृतिसप्तकं च नाशनीयम्।[४] उपायानां प्रयोगेऽपि क्रमव्यवस्था दृश्यते। एतदेव प्रयत्यते स्म यद् यदि आद्येन उपायत्रयेण एव कार्यं निर्वहति, दण्डो न प्रयोक्तव्य इति। यदि त्रयाणामपि आद्यानाम् असाफल्यं भवति, तदा चतुर्थोपायः दण्डः आश्रयणीयः।[५] शान्तिपर्वणि अपि उक्तं यद् दण्डनीतिः उपेक्ष्या। अनिवार्यतायामेव एषा नीतिः आश्रयणीया। हनुमता लङ्कायां दृष्टं यद् रावणस्य शक्तयः, बलानि, प्रकृतयश्च अति दृढानि सन्ति। अतः अत्र सामदानभेदानां प्रयोगेण साफल्यं लब्धुम् अशक्यम् इति दण्डनीतिरेव आश्रिता। अन्यथा क्रमशः एव उपायानां प्रयोगः कर्त्तव्यः आसीत्।[६] शक्तीनां बलानां प्रकृतिनां रावणविषयिका अनुरक्तता रावणस्य लोकप्रियतां प्रकाशयति। लङ्कायां केवलं विभीषणः भेदनीत्या स्वपक्षीयः कृतः, सोऽपि राज्यलोभेन; अन्यथा दण्डनीतिं विना रामस्य कस्या अपि नीतेः न कोऽपि प्रभावः लङ्कायाम् अभूत्। अन्ततः दण्डनीतिरेव रामेण आश्रयणीया अभवत्। स्वपुत्रान्

---

१. वनपर्व १५०।४२।

२. सरस्वतीविलास, पृ० ४२।

३. कामन्दक० १७।५४।

४. हन्यात् त्रीन् पञ्च सप्तेति परपक्षस्य नित्यशः। आदिपर्व १३६।१५; अत्र नीलकण्ठस्य व्याख्या; गीताप्रेसद्वाराप्रकाशिते महाभारतेऽर्थः चिन्त्यः।

५. मनु० ७।१०८-१०९; ७।१९८-२००। वर्जनीयं सदा युद्धं राज्यकामेन धीमता। उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः॥ शान्तिपर्व ६९।२३; न युद्ध्यात्त्रसेत्प्राज्ञो न कुर्यात्स्वबलक्षयम्। वदन्ति सर्वे नीतिज्ञाः दण्डस्त्वगतिर्गतिः। वृ० पा०; याज्ञ० १।३४६।

६. अल्पशेषमिदं कार्यमदृष्टेयमसितेक्षणा। त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते। न साम रक्षस्सु गुणाय कल्पते न दानमर्थोपचितेषु युज्यते। न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेष ममेह रोचते। वा० सुन्दरका० ४१।२-३।

संदिशन्त्या कुन्त्या कथितं यत् कृषिः भिक्षा च युष्मद्विषये निषिद्धा। यूयं क्षत्रियाः, बाहुबलेन राष्ट्ररक्षकाः।[१] दानबलादिनीतिभिः राज्यं प्राप्तव्यम्। अत एव पितुः भागः अवश्यं प्राप्तव्यः।[२] कुन्त्या दण्डस्य निर्देशो न कृतः, किन्तु आवश्यकतायां सत्यां दण्डाश्रयणस्य निषेधो न कृतः। सा यथाकथमपि पितुः भागस्य प्राप्तिः स्याद् इत्येतद्विषये एव चर्चां करोति। एतेन इदं स्पष्टं यत् सामाद्युपायत्रयस्य असाफल्ये दण्डनीतेराश्रयणमपि।[३]

शान्तिपर्वणि वैरोत्पत्तेः पञ्च कारणानि स्वीकृतानि, स्त्रीकृतम्, वास्तुजम्-वाग्जम्, सापत्नम्, अपराधजम्।[४] स्त्रीकृतं वैरं कृष्णशिशुपालयोः आसीत्। कौरवपाण्डवानां वैरं वास्तुजम् आसीत्। द्रोणद्रुपदौ पूर्वं मित्रे आस्ताम्। परस्परं वार्तालापेन द्वयोः वैरं जातम्। एतदेव वाग्जम्। अहिनकुलादीनां वैरं सापत्नम्। अपराधोत्पन्ना शत्रुता सामान्यतया सर्वत्र भवति। येभ्यः हेतुभ्यः उत्पन्नस्य वैरस्य विषये दण्डस्यैव प्रयोगो न कर्त्तव्यः। महत्यां सेनायां सत्यामपि एतदेव प्रयतितव्यं यत् सामाद्युपायैरेव साफल्यप्राप्तिः स्यात्। यदि एतैः उपायैः विजयो न शक्यः, तदा युद्धम् आवश्यकम्, किन्तु युद्धद्वारेण प्राप्तः विजयः न उत्तमविजयः मतः, अपि तु निकृष्ट एव कथितः।[५]

---

१. उद्योगप० १३२।२६-३०।

२. दानेनान्यं बलेनान्यं तथा सूनृतया परम्।
सर्वतः प्रतिगृह्णीयात् राज्यं प्राप्येह धार्मिकः॥
साम्ना भेदेन दानेन दण्डेनाथ नयेन वा।
(उद्यो० १३२।२६-३२)

३. पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर।
साम्ना भेदेन दानेन दण्डेनाथ नयेन वा॥
(उद्यो० १३२।३२)

४. शान्ति० १३६।४२-४३।

५. संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर।
साम्नैव वर्तयेः पूर्वं प्रयतेथास्ततो युधि॥ शा० १०२।१६।
सान्त्वेन तु प्रदानेन भेदेन च नराधिप।
यदर्थं शक्नुयात् प्राप्तुं तेन तुष्येत पीडितः॥ ६६।२४।
जघन्य एव विजयः यद् युद्धं नाम भारत।
याहच्छिको युधि जयो दैवो वेति विचारणम्॥ १०२।१७।
अयुद्धेनैव विजयं वर्धयेद् वसुधाधिपः।
जघन्यमाहुर्विजयं युद्धेन च नराधिप॥ ६४।१।

उपायेषु साम्नः प्रथमं स्थानम् । साम्ना यदि सम्यक् कार्यसिद्धिः स्यात् , तदा महत् शोभनम् । किन्तु उग्रविरोधस्य मनोमालिन्यस्य स्थितौ उद्भूतायां साम्ना कार्यं न साधयितुं शक्यते, अतः अन्ये उपाया आश्रयणीया भवन्ति । शत्रुः यदि विजगीषुः पापात्मा च, किन्तु बलवान् अस्ति, तदा तेन सह न योद्धव्यम् । दानेनैव स्वराज्यं रक्षणीयम् । दानमित्यस्य उत्कोच इत्यर्थः क्रियते, किन्तु उपहारादिकमेव दानपदार्थतया स्वीकर्तुम् उचितम् । दाने भूमि-पशु-हिरण्यादीनां संग्रहो भवति । अश्वत्थाम्ना मणिं दत्त्वा आत्मरक्षा कृता, विराटेन च कन्या प्रदत्ता ।[1]

सामनीतेः, दाननीतेः असाफल्ये भेदनीतिः प्रयोक्तव्या भवति । भेदः महदस्त्रं स्वीकृतम् ।[2] कृष्णेन दुर्योधनस्य पुरः सामनीतिः प्रयुक्ता । सामनीतेः असाफल्यं वीक्ष्य दानस्य चर्चा कृता । कृष्णेन प्रस्तावः कृतो यत् पाण्डवाः भीष्मविदुरधृतराष्ट्राणां निर्देशने स्थित्वा जीवनं यापयिष्यन्ति । तेषां कृते राज्यस्य स्थाने ग्रामपञ्चकमेव पर्याप्तम् , परन्तु अस्या अपि नीतेः नैष्फल्ये भेदनीतिः आश्रिता । राज्ञः आहूय तेषां पुरः दुर्योधनविषयकं भयम्, दुर्योधनविषयिणी निन्दा हीनता चेत्यादिकं प्रदर्शितम् । भेदनीतौ एतेषां तत्त्वानां प्रयोगः आवश्यकः । अस्याः अपि नीतेः असाफल्ये दण्डप्रयोगमेव सममन्यत कृष्णः ।[3]

भेदनीतेः प्रयोगार्थम् अपेक्षितानाम् अवसराणां गुणानां च वर्णनं बृहस्पतिना कृतम् । तदनुसारं शत्रुषु उत्तमं व्यवहरेत् । मधुरं च भाषेत । शत्रुः कथमपि शङ्कितो न भवेत् । यावत् शत्रुः अभ्युन्नतः, तावत्पर्यन्तं धैर्यं धारयेत् । अन्यैर्वा कारणैः दीर्घकालपर्यन्तं धैर्यम् आश्रयेत् । अवसरं प्रतीक्ष्य भेदनीतेः प्रयोगस्य अवसरे समुपस्थिते शत्रुषु निर्दयं प्रहर्तव्यम् । भेदनीतेः अवसरे साम्नः दानस्य वा नोपयोगः । भेदनीतावेव चत्वारो विभागाः परिगणिताः सन्ति । ते अस्याः नीतेः साधकाः । भेदनीतेः प्रयोक्ता कामक्रोधाहङ्कारादिकं परिहरेत् । तत्र वाक्पारुष्यं

---

१. यो धर्मं विजिगीषुः स्याद् बलवान् पापनिश्चयः ।
आत्मनः सन्निरोधेन सन्धिस्तेनापि रोचयेत् ।।
अपास्य राजधानीं वा तरेद् द्रव्येण चापदः । उद्यो० १३१।४-५ ।
भूमिरल्पफला देया विपरीतस्य भारत ।
हिरण्यं कुप्यभूयिष्ठं मित्रंक्षीणमथो बलम् ।। आश्रमवा० ६।१० ।
कोशेन पौरं दण्डेन ये चास्य प्रियकारिणः ।
असम्भवे तु सर्वस्य यथा मुख्येन निष्पतेत् ।। आश्रम० ६।२० ।

२. विराटपर्व ५१।५३; भेदो वाप्यतिपीडनात् । शा० १३०।४ ।

३. उद्योग० १५०।६-१८; द्रष्टव्यः—उद्योग० १४० अध्यायः, ६-१० अध्यायाः ।

कथमपि न स्यात्। आप्तपुरुषा अपि इमां नीतिं प्रयोक्तुं शक्नुवन्ति।[१] स्थितप्रज्ञविषये भेदनीतेः प्रयोगो न शक्यते। दुर्योधनमित्रस्य कर्णस्य विषये कूटनीतिज्ञस्य कृष्णस्य भेदप्रयोगः न साफल्यम् आप।

दण्डः अन्तिमा स्थितिः। यदा कयापि नीत्या कार्यं न भवति, तदा दण्डनीतिराश्रीयते।[२] दण्डनीतौ विभिन्नानां दण्डानां पश्चात् वधदण्डः आयाति। शपथः, दानम्, विषप्रयोगः इत्यादयः तस्य भेदाः। कूटनीत्यापि दण्डप्रयोगो भवति।[३] दम्भी गुरुरपि दण्डनीयः कथितः।[४] एवमेव धर्मविषये दम्भम् आचरद्भ्योऽपि अवश्यं कठोरः दण्डो देयः।[५] नास्तिकानां चौराणाम् इव च निर्धनानामपि कृते निवासदानं निषिद्धम्।[६] राष्ट्रे दूष्यदण्डविषये विशेषतो व्यवस्था कृता।[७] पाण्डवाः कथं जेयाः इति धृतराष्ट्रं बोधयता कणिकेन दण्डनीतेरेव आश्रयणीयता प्रतिपादिता।

इत्थम् उपायस्य विभिन्नानाम् अङ्गानां प्रयोगस्य आवश्यकतायाः अवसरस्य क्रमस्य च पर्यालोचनेन इदं ज्ञायते यद् दण्डो युद्धं वा उपायस्य अन्तिमं चरणम्। तत्प्रयोगः तदैव कर्तुं युज्यते, यदा अन्यैः उपायैः कार्यसिद्धिर्न शक्यते। बौद्धैः एतेषाम् उपायानां स्थाने दश नीतयः प्रयुक्ताः। तत्प्रयोगस्य च आधारः अतिनैतिकतापूर्णः स्वीकृतः। अर्थाद् अत्यन्तां नैतिकताम् अनुसृत्य एव तासां नीतीनां प्रयोगः स्वीकृतः। अस्य फलमेतद् अभूत् यद् वैदिकपरम्परातः प्राप्तान् उपायान् अनैतिकान् कथयितुम् अपि तैः साहसं कृतम्। वस्तुस्थितिस्तु एषा यद् वैदिकी परम्परा आदर्शिकी। केवलं काल्पनिकानाम् आदर्शानाम् उपस्थापनं न तस्याः लक्ष्यम्। अत एव मानवस्वभावेन सामाजिकस्थित्या च सह तया समन्वयः कृतः। तत्संचालनार्थम् आवश्यकानि तत्त्वानि प्रतिष्ठापितानि। यथा बौद्धानाम् आदर्शा आसन्, तथा न तैः व्यवहृतम्। अशोकस्य धम्मविजयेऽपि बौद्धीयानि दार्शनिकतत्त्वानि कौटल्यपरम्परया व्यावहारिकताम् आनीतानि। तदीया अपि परम्परा न प्रचलितम्

---

१. शान्ति० १०३ अध्यायः।

२. उद्योग० १५०।१८; दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः– शान्ति० १०३।१५; दण्डस्त्वगतिका गतिः– याज्ञ० १।३४६।

३. आदिपर्व, १४०।७-१६; १४०।५२-६६।

४. तदेव १४०।५४।

५. तदेव १४०।५८।

६. आदिपर्व १४०।५६।

७. तदेव १४०।६३।

अशकत्। अल्पकालार्थं तत्प्रयोगेण अवसरः अतो लब्धः यतः चन्द्रगुप्तेन शान्ति-स्थापनार्थं तस्मै अवसरो दत्त आसीत्। अन्यथा व्यवहारक्षेत्रे साफल्येन उपायानां प्रयोगः अनिवार्यो भवति।

## युद्धं तदाधारश्च

यथा अद्यतनैः प्रागैतिहासिककालः स्वीक्रियते, तादृश्याः कस्या अपि स्थितेः सङ्केतो वेदेषु नोपलभ्यते। वेदेषु उपलभ्यमानं वर्णनं व्यवस्थितः समाजः प्रशासनं च प्रागप्यासीद् इति सूचयति। काव्येषु धर्मशास्त्रेषु च मात्स्यन्यायस्थितिः चित्रिता अस्ति, परन्तु सा स्थितिः उत्तरवर्तिकालिकी। यदा समाजस्य स्खलनम् आरब्धम्, तदानींतनी स्थितिः, न तु प्रारम्भिकी। द्वयोरपि वर्णनयोः समन्वयो न दृश्यते। पौराणिककालविभागवद् ऋग्वेदे कालविभागो न दृश्यते। इत्थं च द्वयोरपि विचारयोः समन्वयः दुष्करः। वेदेषु मानवसमाजस्य सूत्रं यतः आरभ्यते, तदानीं युद्धशीलः समूहः आसीत्।[१] किन्तु नैषा मात्स्यन्यायस्थितिः। एषा आदिकाले विभिन्नानां समाजानां संरक्षणस्य संघर्षस्य च स्थितिरासीत्। सुश्रवसा ६०,००० सैनिकान् आदाय विंशत्या राजभिः सह अयुद्ध्यत। दिवोदासेन दासेन शम्बरेण पणिभिः सह युद्धं तु कृतमेव। वैदिकसमाजस्य नेतृभि यदुपुरुतुर्वशैः सह अपि युद्धं कर्तुं विवशोऽभूद् दिवोदासः।[२] विपाशः शतद्रोश्च तीरे दिवोदासपौत्रेण सुदासेनापि अयुद्ध्यत। वृष्णि अनु यदु इत्येतैः सहः दिवोदासस्थाने विश्वामित्रेण युद्धं कृतम्। युद्धकौशलेन सुदासः मण्डलाधिपः कथ्यते स्म।

ऋग्वेदे युद्धस्थितेः प्रचुरं वर्णनम्। युद्धदेवतायाः इन्द्रस्य अमोघशक्तेः वर्णनं स्तुतिश्च ऋग्वेदे लभ्येते। इन्द्रे तासां सर्वासामपि शक्तीनाम् आधानं कृतम्, याः सैनिकप्रधानस्य कृते अपेक्ष्यन्ते।[३] शत्रुमर्दकेषु अग्नेरपि उल्लेखो दृश्यते।[४] इत्थं च इदं सिध्यति यद् आक्रमणं प्रतिकर्तुम् आत्मरक्षार्थं च प्राचीनकाले युद्धस्थितिः आसीत्। युद्धस्य नियमा आसन्। आन्तरिकशत्रुविषये बाह्यशत्रुविषये च नियमानां पालनस्य प्रकारद्वयमासीत्। संघर्षशीलः वैदिकसमाजः सार्वत्रिक्याः अहिंसायाः पालने तदानीम् अशक्तः आसीत्। तेन समाजेन एकम् अङ्गमेव क्षत्रियरूपतया युद्धार्थमेव व्यवस्थापितम्।

---

१. ऋ०, पुरुषसूक्तम् १०।९०।

२. ऋ० ७।१८।

३. ऋ० १०।४६; १।११।२; १।११।१; ३०।७।१।

४. ऋ० ४।४।

आरम्भिकसमाजे युद्धस्य कानिचिद् निश्चितानि कारणानि आसन्। तत्र सम्पत्प्राप्तिरेव युद्धस्य मुख्यो हेतुः। सम्पदोऽपहरणं भवति स्म।[१] सम्पदि विशेषतः स्त्रीगोप्रभृतयः अन्याश्च चलसम्पत्तयः 'सम्पत्'-शब्देन गृह्यन्ते। तदानीं भूमेः प्राप्त्यर्थं युद्धं न क्रियते स्म। द्वितीयचरणे ( उत्तरवर्तिकाले ) सीमोल्लङ्घनमेव युद्धस्य कारणम् अभूत्। इदमवधेयं यद् वैधव्यवहारः सदा आद्रियते स्म तदानीम्। विधेरुल्लङ्घनं दण्डस्य युद्धस्य च मूलम्। एतेन इदमपि प्रकाशमायाति यत् तदानीं विभिन्नानां विधिसंहितानां परिपालकाः समाजा आसन्। ते च परस्परं हीन-दृष्ट्या अवलोकयन्ति स्म। ऋग्वेदे अवैदिकसमाजाः अनव्रताः अव्रताश्च कथिताः। मित्रसाहाय्यार्थमपि युद्धानि अभवन्।[२]

मित्रं शत्रुश्च युद्धस्य कारणे इति प्रतिपादयता महाभारतकृता उक्तं यत् सर्वतो महत् मित्रं धनमेव। धनोत्पादकं च क्षेत्रम्। अत एव क्षेत्रार्थं शत्रवः मित्राणि च भवन्ति।[३] अतोऽन्यद् युद्धसम्बन्धिनी महत्त्वाकाङ्क्षा अपि युद्धस्य कारणम्। एषा स्थितिः सप्तमशताब्दीपर्यन्तं विकासोन्मुखी एव जाता, अन्ते च एषा एव स्थितिः पतनस्यापि कारणम् अभूत्। स्वापमानस्य स्वपितुरपमानस्य च प्रतीकारः अवश्यं क्रियते स्म। अत एव महान्ति युद्धानि उद्भूवन्। ऋग्वेदतः गुप्तकालपर्यन्तं विशालेन कालक्रमेण स्थितिः परिवर्तिता, किन्तु दिग्विजयद्वारेण सांविधानिकीम् एकतां स्थापयितुं दिग्विजयस्य महत्त्वम् आसीत्। एतदर्थं च राजसूयाश्वमेध-विश्वजिदादिभिः इज्यते स्म। सर्वाणि राज्यानि स्वतन्त्रीकृत्यापि तेषु वैधानिक्याः एकतायाः स्थापनमेव सम्राट्पदस्य चक्रवर्तिपदस्य च अर्थः। एवं सांविधानिकैकता-स्थापनार्थं महान्ति युद्धानि भवन्ति स्म।

क्वचिद् राज्ये आक्रमणस्य कानिचित् विशेषभूतानि कारणानि आसन्। किमपि शक्तिशालिराष्ट्रं शक्तिं सम्पाद्य तद्बलेन शान्तिं संविधानं च उल्लङ्घयेत्, तदा आरम्भे एव आक्रमणेन सा अभिभूयते स्म। आक्रमणाद् आत्मानं रक्षितुं स्वयमेव प्रथमम् आक्रमेत्। मानवतावादिनाम् आदर्शानां सुरक्षार्थमपि आक्रमणानि भवन्ति स्म। कृष्णेन शिशुपालजरासन्धौ एतदर्थमेव आक्रान्तौ।[४] यदि कस्मिं-श्चिद् राज्ये अनुचितं शासनं प्रचलेत्, तदा उचितशासनस्थापनार्थं तद्राज्यम्

---

१. ऋ० ७।८३।

२. कामन्दक० १० सर्गः।

३. महा० उद्यो० ३६।३१; नीतिसारः १०।१।

४. महा० सभा० १४ अध्यायः।

आक्रम्यते स्म ।[१] शक्तेः सन्तुलनं स्थापयितुमपि आक्रमणानि अभूवन् ।[२] तेषां तिस्रः अवस्था आसन्—उत्तमा हीना समा च । प्रत्येकं राज्यं स्वावस्थाम् उन्नमयितुं प्रयतते स्म । विश्वराट् - सार्वभौम-एकराट् - स्वराट् - सम्राट् - विराट् - सर्वराट् - इत्येतेषां ( राज्यानाम् ) उपाधयः आसन् । एतदर्थं राजानः राजसूयप्रभृतीन् यज्ञान्, ऐन्द्रमहाभिषेकादीन् च आचरन्ति स्म ।[३]

सर्वे राजानः सम्प्रभवो नासन् । स्वराडेव सम्प्रभुः कथ्यते । यस्मिन् जनपदे जना न सन्ति, स प्रदेशः केवलं क्षेत्रम् आश्रित्य राज्यं जनपदो वा कथयितुं न शक्यते ।[४] जनपदार्थं क्षेत्रजनसंख्ययोरिव संविधाने श्रद्धायाः अपि आवश्यकत्वम् आसीत् ।[५] एवंप्रकारकेण जनपदेन युक्तं राज्यं सम्प्रभुः मन्यते ।[६] आटविकराज्येषु जनसंख्यातः क्षेत्रस्य अधिकं महत्त्वम् आसीत् । आटविकराज्यानि समुद्रगुप्तेन नाशितानि ।[७] सभ्यराज्येष्वपि बहुविधानि राज्यानि आसन् । सामन्तराज्यानां राष्ट्रमण्डले उच्चं स्थानं नासीत् ।[८] करदराज्येभ्यः अन्यानि संरक्षितानि राज्यान्यपि आसन् ।[९] संरक्षितानि राज्यानि द्विविधानि आसन् । तत्र कानिचिद् राज्ञः त्रासम् अनुभूय अन्यान् राज्ञः आश्रयन्ति । अपराणि च आक्रमणभिया पूर्वमेव राज्यान्तराणि आश्रयन्ति ।[१०] कौटल्यः कथयति यत् संरक्षितानि राज्यानि आन्तरिक-कार्येषु स्वतन्त्राणि स्युः ।[११] संरक्षितानि राष्ट्राणि संरक्षकस्य उत्सवावसरे उपतिष्ठन्ते स्म । स्वतन्त्राण्यपि राज्यानि तावत्पर्यन्तं सम्प्रभुत्वसम्पन्नानि पूर्णतया स्वतन्त्राणि च न स्वीक्रियन्ते यावद् राज्यान्तराणि तेभ्यः मान्यतां न ददति "यस्मै वै राजानो

१. मार्कण्डेयपुराणम्, पार्जीटर अनुवादः, पृ० ४७३-४७४ ।

२. नोपकुर्यादमित्रं वा गच्छेद्यदतिकर्शितम् ।
तदहीनमवृद्धं च स्थापयेन्मित्रमर्थ[illegible]त् ॥ अर्थ० ७।१८।१३ ॥

३. ऐ० ब्रा० ८।२१-२३ ।

४. न ह्यजनो जनपदो राज्यं जनपदं वा भवति—अर्थ० १३।४ ।

५. भक्तशुचि मनुष्या इति जनपदसम्पत्—अर्थ० ६।१ ।

६. यस्य स्फीतो जनपदः सम्पन्नप्रियराजकः ।
सन्तुष्टपुष्टसचिवो दृढमूलः स पार्थिवः ॥ महा० शा० ६४।३ ।

७. प्रयागस्तम्भलेखः ।

८. महा० शा० ६६।१०-१४ ।

९. शक्तिहीनं समाश्रयेत्—अर्थ० ७।१ ।

१०. अर्थसम्पादमार्थञ्च पीड्यमानस्य शत्रुभिः ।
साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः ॥ मनु० ७।१६८ ।

११. अर्थशास्त्रम् ७।१५ ।

राजानमनुमन्यन्ते स राजा भवति, न स यस्मै न।" महद्भ्यः सम्प्रभुराज्येभ्यः लब्धस्वीकृतीनि एव राज्यानि राजसूयादिषु आहूयन्ते आद्रियन्ते च। इत्थं च राज्यं सम्प्रभुत्वं संविधानम् इत्येतैः सम्बद्धानां युद्धानां विवरणम् एकतः राष्ट्रान्तरीय-विधानस्य आधारं प्रस्तौति, अपरतश्च युद्धस्य उद्देश्यानि प्रकाशयति।

दैविकम्, मानुषम्, आसुरं चेति त्रिविधं युद्धमासीत्। दैविकयुद्धे दैवशक्तेः प्रयोगो भवति। आसुरे विषाक्तानाम् अस्त्राणां प्रयोगः। मानुषयुद्धे ऊरूकक्षप्रतिग्रहः एतद् मल्लयुद्धं कथ्यते। आसुरयुद्धे प्रकाशयुद्धानि, कूटयुद्धानि, तूष्णीं युद्धानि च भवन्ति। तूष्णीं युद्धं चाणक्यराक्षसयोरभूत्। कौटल्येन कूटयुद्धम् आधृतम्।[1] यदि युद्धे क्षत्रियैः विजयो न पार्यते, तदा राष्ट्ररक्षार्थं धर्मरक्षार्थं च ब्राह्मणा अपि योद्धुं शक्नुवन्ति।[2] शत्रून्मूलनसिद्धान्तस्वीकारे यथावसरं कदापि युद्ध-घोषणा कर्तुं शक्या आसीत्।[3] शत्रूणाम् अशुभचिन्तनावसरे एतावत् चिन्त्यते स्म, तेषां विधवाः स्त्रियः रुद्युः।[4]

वैदिकसमाजः संघर्षपूर्णं समाजं सूचयति। आन्तरिकः बाह्यश्च संघर्षः प्रचरन् आसीत्। अत एव उद्देश्यप्राप्त्यर्थं युद्धम् आवश्यकम् अमन्यत। कृष्णेन मानवस्वभावः संघर्षपूर्णः स्वीकृतः। युद्धमेव क्षात्रो धर्मः।[5] तस्य पालनेन पापान्मुक्तिः सम्भाव्यते।[6] वेदैरपि युद्धेन सभ्यतायाः विकासः स्वीकृतः।[7] मनुना क्षत्रियस्य कृते युद्धे मरणं स्वर्गस्य द्वारम् इति उद्घोष्य युद्धस्य वैधानिकता स्वीकृता।[8] महाभारते युद्धं यज्ञः कथितः।[9] अन्यत्रापि युद्धं पुण्यफलदं कथितम्।[10] आत्मरक्षार्थम् आक्रमणप्रतीकाराय च युद्धं भवति स्म। यदि शत्रुः आक्रामति, तदा

---

१. अर्थशास्त्रम् १०।३; १४।३।

२. अत्रि० ३।७५।

३. अथर्व० ११।६; ५।२१; ऋ० ७।१०४।

४. भगवद्गीता १८।५६,६०।

५. तदेव। २।२।

६. तदेव। २।३७।

७. अथर्व० ११।१०।५।

८. मनु० ७।८६; ७।१०; ७।९६; याज्ञ० १।१३, ३३४।

९. महा० शा०, ६८ अध्यायः।

१०. विदुरनीतिः ३।४४; शुक्र० ४।७, २१७; वि० पु० ३।४४-४५; कालिकापु० ३।८।६-७; किरातार्जुनीयम् ८।४२-४४; कुमारस० १।४२-४४; अर्थशास्त्रम् ७।१३।

ततो रक्षा आवश्यिका। साम्राज्यविस्तारार्थमपि युद्धम् अभूत्। महाभारतयुद्धं रामायणयुद्धं चेति युद्धद्वयमपि आत्मरक्षार्थम् अभूत्। रामायणे रामेण लङ्का विजिता, न साम्राज्यस्थापनार्थम्, अपि तु स्वमर्यादार्थं सीताप्राप्त्यर्थञ्च। युद्धात् पूर्वं रामेण शान्तिदूतं प्रेष्य तद्द्वारेण शान्तिमेव स्थापयितुं चेष्टितम्। पाण्डवैरपि कृष्णः दूतीकृत्य शान्तिस्थापनार्थं प्रहितः; ईहितं च यद् युद्धं विनैव राज्यप्राप्तिः स्यात्। सामोपायस्य असाफल्ये एव युद्धं तैराचरितम्, परन्तु यथा आत्मरक्षार्थं युद्धानि आसन्, तथा आक्रमणं प्रतिकर्तुम् अपि युद्धानि अभूवन्। अश्वमेधप्रभृतयः यज्ञाः आत्मरक्षार्थं नासन्।

अश्वमेधयज्ञः धार्मिकं कृत्यं स्वीकृतम् अस्ति। एतेन च स्वर्गप्राप्तिः कथिता "स्वर्गकामो अश्वमेधेन यजेत्"। अश्वमेधेन पापेभ्यो मुक्तिः स्वर्गप्राप्तिश्च भवति।[१] किन्तु उत्तरकाले अश्वमेधयज्ञः राजनीतिकसम्प्रभुतास्थापने द्वारम् अभूत्। तदानीम् आध्यात्मिकस्य राजनीतिकस्य च उद्देश्यद्वयस्यापि समन्वयो भवति। काशीप्रसादजायसवालेन स्वीकृतं यद् अन्ततोगत्वा तस्य आध्यात्मिकपक्षः समाप्तिं यातः, केवलं राजनीतिक एव अवशिष्टः। राजसूययज्ञद्वारेणापि आक्रमणस्य दिक् प्रशस्ता अभूत्। एतैः यज्ञैः सम्प्रभुतायाः विस्तारः क्रियते स्म।[२] एतैः आक्रमणमपि पूतीकर्तुं प्रयतितम्।[३] रामयुधिष्ठिरादिभ्यः पश्चादपि अश्वमेधराजसूययज्ञानां क्रमः प्रचलित आसीत्। महाभारतयुद्धानन्तरं यादृशम् आर्थिकसंकटं समुपस्थितम्, तदालोच्य युद्धस्य समर्थनं दुःशकम् अभूत्। कर्मकाण्डयुद्धगतभीषणतया अहिंसासिद्धान्तस्य भूमिका दृढा अभूत्। अहिंसावादिभिः अश्वमेधप्रभृतीनां निन्दापि कृता।[४] किन्तु अशोकानन्तरं पुष्यमित्रेण वैदिकधर्मः पुनरुत्थापितः अश्वमेधश्च कृतः।[५]

अस्मिन् काले बौद्धानां वैदिकानां च संघर्षः प्राचलत्। कनिष्कस्य अभ्युदये अहिंसानीत्या अश्वमेधादिः समाप्यते, किन्तु तदनन्तरमपि भारशिवेन पुनः वैदिकमर्यादां स्थापयितुं प्रयतितम्।[६] तेनापि अश्वमेधः आचरितः।[७] एषा च परम्परा

---

१. शत० ब्रा० १३।२।२।

२. नरेन्द्रनाथ लॉ, इण्टर स्टेट रिलेशन्स, पृ० ३०।

३. उत्तररामचरितम् ४ अंकः।

४. अंगुत्तर० २।४२।

५. मालविकाग्निमित्रम्, ८ अं०।

६. जायसवाल, इम्पिरियल हिस्ट्री ऑफ़ इण्डिया, पृ० १४८।

७. फ्लीट, गुप्ता इंस्क्रिप्शन्स, पृ० २४५।

वाकाटकेभ्यः आरभ्य समुद्रगुप्तपर्यन्तं प्रचलिता आसीत्। कुषाणानां प्रभावहीनता-सम्पादनम् इव भारतीयानां राज्ञां पुरः शकानां मस्तकनमनमपि अस्या उद्देश्यम् आसीत्।[१] दाक्षिणात्येषु पल्लवेषु अश्वमेधरूपतया वैदिकी परम्परा व्यक्ता भवति।[२] दिग्विजयपरम्परा हर्षवर्धनपर्यन्तं सफलतापूर्वकं प्रचलिता आसीत्। एतेन देशे सैनिकजागरणं स्थिरम् अभूत्। बाह्येभ्यः आक्रमणेभ्यः परित्राणार्थम् इव महत्त्वाकांक्षापूर्त्यर्थमपि क्षात्रशक्तेः जागरणम् आवश्यकम् अभूत्।

एतस्य विवेचनस्य नेदं तात्पर्यं यद् युद्धम् अनिवार्यम् उत्तमं च मन्यते स्म। उपायेषु सामदानभेददण्डेषु दण्डस्य अन्तिमं स्थानं तैः स्वीकृतम्। मनुकथनानुसारं सामदानभेदैः शत्रुं वशीकर्तुं प्रयतितव्यम्, यथाशक्यं युद्धं नोपयुञ्जीत। युद्धे जयः पराजयो वा न निश्चितो भवति। यदा केनापि उपायेन विजयः न शक्यते, तदा युद्धम् आश्रयणीयम्।[३] महाभारतेऽपि कथितं यद् अधीर एव पुरुषः युद्धेन विजयम् ईहते।[४] राजा युद्धं विनैव विजयं लभेत[५], युद्धेन लब्धो विजयः मध्यम-विजयः। प्राणरक्षणमेव युद्धस्य उद्देश्यं स्यात्।[६] धर्मयुद्धविषये प्रस्तुताः नियमाः युद्धस्यापि विषये प्रस्तुताः सन्ति। तदेव च युद्धं पवित्रं यज्ञरूपं च कथितम्।[७]

चाणक्यः साम्राज्यवादी युद्धव्याख्याता च कथ्यते, किन्तु परराष्ट्रनीतौ तेनापि शान्तेः प्राथम्यं स्वीकृतम्। कूटयुद्धं स सदा परिचिकीर्षति। स शान्ति-द्वारेणैव स्वोद्देश्यं प्राप्तुं यतते। याज्ञवल्क्योऽपि युद्धम् अन्तिमम् उपायं मनुते।[८] कामन्दकमतानुसारं पक्षद्वयस्यापि कृते युद्धं हानिकारकम्। अत एव शान्तिवार्तया एव समस्या दूरीकरणीया।[९] अनावश्यकं युद्धं प्रायः निन्दितम् एव।[१०] चाणक्यः

---

१. जायसवाल तदेव पृ० १५०।

२. तदेव, पृ० १८६।

३. मनु० ७।१९८-२००।

४. महा० शा० ६३।२६; उद्यो० ७२।३।

५. अयुद्धेनैव विजयं वर्द्धयेद् वसुधाधिपः।
जघन्यमाहुर्विजयं युद्धेन नराधिप॥ महा० शा० ६४।१।

६. प्रजासंरक्षणार्थाय संभ्रमं कारयेद् नृपः—वृद्धहारीतः।

७. अत्रि० १४।२०; विष्णु० ५।२; मनु० ७।८७; ७।९२-९७; महा० शा० ९८।४८; शा० ९९।१४।

८. याज्ञ० १।३४६।

९. कामन्दक० ६।६१।

१०. रामा० सु० ६६।१५।

इदं स्वीकरोति यद् राष्ट्ररक्षार्थम् शस्त्राणाम् अर्थस्य च सम्यक् व्यवस्था कार्या।[1] तया एव विद्यानाम्, उद्योगानाम्, अन्यासां च सभ्यतानां रक्षा संभवति। शस्त्रार्थ-रक्षिते देशे शास्त्रचिन्ता प्रवर्तते। राजकुमारस्य शिक्षायां कौटल्यः सैनिकशिक्षामपि अनिवार्यं मनुते। परन्तु तया राजकुमारः उन्मत्तो न स्यात्। युद्धविदा कृष्णेनापि अन्येषाम् उपायानाम् असाफल्ये एव युद्धमार्गः आश्रितः। सञ्जयद्वारेणापि यः शान्तिसन्देशः युधिष्ठिरेण प्रेषित आसीत्—तत्र यथा युद्धं न स्यात् तथैव कथितम् आसीत्। किन्तुयुद्धोद्यतस्य दुर्योधनस्य विषये शान्तिचर्चायाः न कोऽपि प्रभावोऽभूत्। अतः पाण्डवानां कृते युद्धम् अनिवार्यम् अभूत्।

युद्धस्य आधारभूतान् नियमांश्च परिज्ञातुं राष्ट्रान्तरीयनियमानां पृष्ठभूमिः आलोचनीया। मनुः आर्यावर्त्तादन्यं सम्प्रभुदेशं म्लेच्छभूमिं कथयति। स एतेषां म्लेच्छदेशानाम् आन्तरिककार्येषु हस्तक्षेपं निषेधति। किं बहुना तत्र देशे विजातीनां गमनमपि निषिद्धं तेन। तदनुसारं विजितराष्ट्रस्य कस्यामपि व्यवस्थायां हस्तक्षेपो न कार्यः। तत्रत्यायाः परम्परायाः आचारस्य च विकासे न कापि बाधा उपस्थापनीया। युद्धघोषणायां शान्तिकालिकनियमानाम् अवहेलनं भवति। एतस्य च दुन्दुभिवादनेन सूचना प्रदीयते। युद्धात्पूर्वम् उभयपक्षीया योद्धारः परस्परं प्रेमपूर्वकं मिलन्ति, वार्तालापं च कुर्वन्ति। युद्धकालेऽपि कौरवाः पाण्डवाः परस्परं सस्नेहं मिलन्ति स्म। युद्धस्य नियमाः इत्थम् आसन् यत्र अमानवीयतत्त्वानां न मूलता स्वीकर्तुं शक्यते। व्यक्तिः व्यवहारकाले यदि नियमान् अतिवर्तते, तदा तदुत्तरदायित्वं नियमेषु नासीत्। उत्कृष्टफलसिद्ध्यर्थं हीनान्यपि साधनानि आश्रयणीयानि भवन्ति। स्पष्टं यत् पवित्राणाम् उद्देश्यानां प्राप्तौ युद्धं साधनम्। अमानवीयभावानां विकासार्थं युद्धस्य आश्रयणं भारतीयैः नेष्यते।

## विश्वराज्यम्

'सर्वे मनुष्याः प्रजाः मम भवत' इति घोषयतः अशोकस्य पुरः सिकन्दरस्य महत्त्वाकाङ्क्षा आसीत्, परन्तु स तान् आदर्शान् स्वमार्गेण लब्धुं कामयते स्म।[2] शक्तिध्वंसद्वारा साम्राज्यस्थापनस्य स्थाने प्रेमराज्यस्य स्थापनं तस्य उद्देश्यम्। सम्पूर्णस्य विश्वस्य कल्याणार्थं समृद्ध्यर्थं च स स्वादर्शेषु स्थित्वा प्रायतत। स ऐच्छद् यद् मानवाः मदीयेन प्रयत्नेन इह सुखशान्त्यादीन्, परत्र च स्वर्गम् आप्नुयुः।[3] तेन विश्वराज्यस्य या कल्पना कृता तत्र जातिदेशकालधर्म-

---

१. अर्थशा० ७।१३।

२. कलिङ्गशिलालेखः २।

३. शिलालेखः ६।

मूलकः विद्वेषभावः नासीत्। सर्वे समानाः, सर्वेषु समानभ्रातृता आसीत्। स जानाति स्म यद् विश्वराज्यं सहजभ्रातृता च एतद्द्वयं परस्परस्य पूरकम् अनिवार्यं च अस्ति। एतद्द्वयम् पृथक्कृत्य उद्देश्यप्राप्तिर्न सम्भवति।

अशोकेन शिलालेखेषु विश्वपर्यायतया लोकशब्दः प्रयुक्तः।[1] यत्र मनुष्यैः सह प्राणिमात्रं संगृहीतम्। मनुष्यस्थाने तेन भूतानाम् अहिंसा इति प्रयुक्तम्। मार्गेषु आरोपिताः वृक्षाः न केवलं मनुष्यार्थमेव, अपि तु पश्वर्थमपि आसन्।[2] स पशूनां मनुष्याणां च कृते समानतया औषधालयादेः व्यवस्थां करोति स्म।[3] ईदृशानाम् औषधालयानां स्थापना केवलं स्वराज्ये एव न, अपि तु पाण्ड्यः सत्यपुत्रम् केरलपुत्रम् ,ताम्रपर्णिः इत्यादिषु देशेष्वपि करोति। यतः तस्य उद्देश्यं सम्पूर्णं विश्वम्, न केवलं स्वराज्यमेव, स्वपार्श्ववर्तिनां यवनराज्यानामपि कृते तेन सौविध्यानि प्रदत्तानि। पार्श्ववर्तिषु यवनराज्येषु तुर्माय, अन्तिकोन, माग, अलीकसुन्दर इत्येतानि सुन्दराण्यासन्।[4]

'अविहिंसा भूतानाम्' इत्येव सिद्धान्तः सर्वेषु मनुष्येषु अशोकेन प्रवर्तितः। तस्य मुख्यम् उद्देश्यं धार्मिकं धर्मराज्यम् आसीत्। एतदर्थं मार्गद्वयम् आसीत्। तत्र एकः अर्हन् चक्रवर्तिधार्मिकधर्मराजो वा। चक्रवर्तिधार्मिकधर्मराज्यमार्गेऽपि न खड्गेन, अपि तु प्रेम्णा विजयः सम्पादनीय आसीत्।[5] एकदा बुद्धः स्वयम् आत्मानं शीलस्य धर्मस्य च चक्रवर्तिनम् अकथयत्। तेन कथितं यद् राज्ञः रथचक्रस्य प्रवर्तनं सम्भवति, परं न धर्मचक्रस्य। अस्मच्चक्रं धर्मचक्रम्।[6] चक्रवर्तिसिंहनादसुत्ते ईदृशानां बहूनां चक्रवर्तिनां निर्देशोऽस्ति। चक्रवर्तिभ्यः प्रदत्तानां वैशिष्ट्यानां निष्कर्षो यत् ते न विनाशम् आश्रित्य (कृत्वा) चक्रवर्तिनः अभूवन्, अपि तु धर्मविजयेन। स्वपार्श्ववर्तिषु अशोकस्य धर्मविजयः धर्मेण आसीत्, न तु विध्वंसनेन। इत्थमेव वास्तवं विश्वराज्यं स्थापयितुं शक्यम् आसीत्।

---

१. तदेव।

२. स्तम्भलेखः ७।

३. शिलालेखः २।

४. भण्डारकर, अशोक, पृ० २३१।

५. दीघनिकायः १३; लोक्खनसुत्तन्तम्।

६. सेलसुत्तम् ३।७।७; तुलनीयः कालि० अभि० शा० २।१५।

भारतीयभूगोलानुसारं विश्वेऽस्मिन् जम्बूप्लक्षशाल्मलीकुशक्रौञ्चशकपुष्कराख्याः द्वीपाः स्वीकृताः। जम्बूद्वीपे भारतः, किंपुरुषः, हरिवंशः इलावर्तः, रम्यकः, हिरण्मयः, उत्तरकुरुः, भद्रसेनः, केतुमालः इत्येतानि नव खण्डानि। प्रियव्रतेन सप्तानां द्वीपानां शासनं सप्तभ्यः स्वपुत्रेभ्यः प्रदत्तम्।[१] सर्वेषु भारतवर्षं पुण्यभूमिः कर्मभूमिश्च।[२] एष भूगोलः इतिहासो वा कियान् यथार्थः इत्येतद्विषये विवादं परित्यज्य अस्माभिः एतदवधेयं यन्मनुष्याणां सम्बन्धाः किमाधृत्य प्रतिष्ठिताः? प्रियव्रतः द्वितीयः सूर्य इव स्वसन्देशान् पृथिव्यां प्रसारयितुं वाञ्छति।[३] एतेन विवेचितेन विश्वराज्यस्य भावस्तु व्यज्यते एव। सर्वे सम्राजः विश्वराज्ये विश्वसंस्कृतिं सम्मन्यन्ते, तां च कार्यान्वितां कर्तुं प्रयतन्ते। 'कृण्वन्तु विश्वमार्यम्' इति घोषणायां विश्वस्य यत्किमपि स्वरूपं भवेत्, परन्तु ते राजनीतिक्याः, प्रशासनिक्याः, सांस्कृतिक्याश्च एकतायाः स्थापनार्थं प्रयतन्ते। अथ च प्राणिमात्रस्य कल्याणस्य आदर्शम् उपस्थापयन्ति।

भारते विश्वराज्यस्य ऐतिहासिकतायाः प्रमाणं मा लभ्येत, किन्तु सार्वभौमसम्राट् एकाराट् इत्यादयः घोषणाः राजसूयाश्वमेधविश्वजित्प्रभृतयः यज्ञाश्च अस्याः कल्पनायाः व्यावहारिकं रूपम्। आसां महत्त्वाकाङ्क्षाणां संस्काराणां छायायां विश्वराज्यस्य स्वरूपं प्रस्तुतं भवति।[४] भारते ईदृशस्य कस्यापि राष्ट्रवादस्य व्यवहारो न अभूत्, येन विश्वसम्बन्धानां विकासे बाधा उत्पद्येत। पश्चिमैशिया, सुदूरपूर्वप्रशान्तमहासगर इत्यादिषु भारतीयप्रभावः एव अस्य प्रमाणम्। तत्र भारतीया जीवनधारा विश्वराज्यकल्पनां साकारां कुर्वाणा आसीत्। ईसातः चतुर्विंशतिवर्षेभ्यः पूर्वं पाण्ड्यराजस्य पोरसस्य दूतः रोमराज्यस्य 'आगष्टस' इत्यस्य एवं स्पेनराजस्य च सभायाम् इममेव सन्देशं प्रापयितुं गत आसीत्। स्ट्रैबोमहोदयः रोमराजसभायां केषांचित् ब्राह्मणानामपि निर्देशनं करोति। 'निकोलस' 'डेमसकस' इत्येताभ्याम् इतिहासज्ञाभ्यां 'सीरियादेशे' ब्राह्मणानाम् अस्तित्त्वं वर्णितम्, यैः मैत्रीस्थापने साहाय्यम् आचरितम्।[५] प्राचीनभारते विश्वेऽस्मिन् कुत्रापि स्थाने गमनं निषिद्धं नासीत्। ते स्वोद्देश्यसिद्ध्यर्थं सदा कार्यनिरता आसन्। अत्र तैः साफल्यमपि लब्धम्। विश्वस्मिन् जगति भ्रातृत्वसन्देशः प्रसारितः। यस्य मूलं विश्वराज्यस्य कल्पना आसीत्।

---

१. विष्णुपुराणम् २।३।२२-२३।

२. वि० पु० २।३।२४; बार्हस्पत्यसूत्रम् ६४।६८।

३. भागवत० ५।१६।१।

४. ऐ० ब्रा० ८।१४; श० ब्रा० ६।३।४:४।

५. हरविलास शारदा, हिन्दू सुपिरियारिटी।

भारशिवसंघकल्पनायां राज्यानां परस्परं स्वातन्त्र्यस्य भावः आसीत्। तानि शिवसन्निधौ संघटतानि भवन्ति। सर्वे गणाः (राज्यानि) स्वस्वमुद्राणां प्रयोगं कर्तुं शक्तानि आसन्। सामूहिकसुरक्षायाः भावनया सह परस्परसम्प्रभुतायाः सुरक्षां कुर्वन्तः यौधेयमद्रकमालवानां सङ्घाः स्थापिता अभूवन्। एकराट्पदस्य तात्पर्यम् एतद् यद् अन्यस्य सम्प्रभुताम् अविनाश्य केवलं दिङ्निर्देशनम्। ईदृशैः संघैः शक्तिहीनानि राज्यानि विकासस्य स्वरक्षायाश्च अवसरं लभन्ते स्म। वैदेशिक-संघैरपि अनया व्यवस्थया प्रभावितैः सद्भिः भारते आगमानान्तरम् ईदृशेषु संघट-नेषु सम्मिलितम्। भारतेन आक्रामकाः किन्तु असभ्याः जातयः स्वस्मिन् समा वेशिताः शकयवनप्रभृतयः जातयः अत्रैव विलयमाप्ताः, सभ्यतायाः विकासस्य नियमांश्च स्वीकृतवत्यः। ग्वालियरराज्ये भिलसासमीपे बसनगरीयशिलाखण्डेन ज्ञायते यद् यूनानदेशस्य राज्ञा 'अन्तिलकिडस' इत्यनेन हिन्दूविचाराः स्वीकृताः, शान्तिसन्धिश्च कृतः 'हिलोडोरस' नामकः, तस्य दूतः भागवतधर्मपालकः कथितः। अनाक्रमणशान्तिनीतिपरस्परसंरक्षणैः सह मानवतायाः विकासे स्वसम्प्रभुतायाः प्रयोगं-स्वीकुर्वन्त्या भारतीयरीत्या यूनानदेशीया आकृष्टाः।[1] ते च भारतीयमार्यादायामेव विलयं प्रापुः। कुषाणराजैः शकक्षत्रपरुद्रदमनेन च एषा एव परम्परा स्वीकृता। राष्ट्रान्तरीया आधाराः मूर्त्ततया ह्वेनसान इत्यनेन दृष्टाः। गुप्तकाले दिग्विजयस्य परस्परमैत्र्याश्च प्रयोगः कृतः। हर्षेण एष आधारः आदर्शः स्वीकृतः। इत्थं च यद्यपि भारतीयाः विश्वराज्यं स्थापयितुं न अशकन्, तथापि तदीयानाम् आवश्यकानां तत्त्वानां स्वसीमायां कार्यान्वयनं कुर्वन्तः आसन्। नैतिकता, आध्यात्मिकता, विश्वबन्धुत्वभावना च तदाधारः आसीत्।

वैदिकानुशासनार्थं विभिन्नेषु राष्ट्रेषु यदा अवसरो नाभूत्, तदा तानि राष्ट्राणि म्लेच्छानि स्वीकृतानि। तत्र च यात्रानिवासादिकं निवारितम्।[2] अस्य नेदं तात्पर्यं यत्त अन्यमर्यादाम् अतिवर्तितुम् इच्छन्ति। ते विजितस्यापि राज्यस्य मर्यादां प्रतिष्ठापयितुम् आदिशन्ति। बलाद् अन्यैः स्वादर्शानां पालनम्, तेषां मूल-परम्पराणाम् उन्मूलनञ्च तैः नेष्यते स्म।[3] दूतानां सम्मानः, राष्ट्रान्तरीयसम्बन्ध-स्थापनं च एतद्विषये सुस्पष्टं प्रमाणम्, विदेशीयानां स्थितिः आदरणीया आसीत्। युद्धकाले असामान्या स्थितिः घोष्यते स्म। युद्धनियमानां पालनविषये च प्रायत्यत।[4] युद्धानन्तरं सामान्यस्थितिरायाति स्म।

---

१. एम० जी० पाय, सिद्धभारती खण्डम् २, पृ० २६५; हावेल, आर्यन् रूल इन इण्डिया, पृ० ६३।

२. मनु० १।२३।

३. मनु० २।५२।

४. प्रोफेसर हार्पकिंस, दि ज० रा० ए० सो० खं० १२, ० १८१ पृ।

मौर्यसाम्राज्यस्य उद्गमात्पूर्वं देशे लघूनां राज्यानां संघर्षः प्रचलित आसीत्। राष्ट्रान्तरीयनियमानां पालनपूर्वकं तेषां संघर्षः प्रचलन् आसीत्। कौटल्येन इमां स्थितिं समाप्य साम्राज्यं स्थापितम्। राष्ट्रान्तरीयनियमाश्च पुनः स्थापिताः। अशोकसमयपर्यन्तं मौर्यसाम्राज्येन इदं स्वरूपं गृहीतं यद् राष्ट्रान्तरीयनियमस्थापने शक्तेः स्थाने शान्तिस्वरूपम् अस्त्रं क्रियाशीलं भवितुं शक्यमासीत्। अथ च धम्मविजयः शक्य आसीत्, स एव च अभूद् राष्ट्रान्तरीयनियमैः नूतना दिक् आसादिता। सीरिया, मिस्र, मेकडन, सीरेन, एपिरस इत्येतेषु देशेषु स्वीयान् दूतान् प्रेष्य राष्ट्रान्तरीयसम्बन्धं स्थापयित्वा विश्वराज्यस्य भावना पुरः उपस्थापिता अशोकेन।[1] अशोकानन्तरम् अग्निमित्रेण एषा परम्परा रक्षिता।[2] भारतीयाः विजितराष्ट्रेषु तत्रत्यां परम्परां रक्षितुं तत्रत्यमेव राजवंशं स्थापयन्ति स्म, किन्तु मानवतायाः नियमानां रक्षार्थं तेषां कृते प्रतिज्ञारूपं बन्धनम् आसीत्।[3]

## विश्वबन्धुत्वम्

अस्य विश्वराज्यस्य आधारः विश्वबधुत्वम्। अत्र ईश्वरसत्तया सह सहजभ्रातृत्वमपि सारल्येन कल्प्यते। समानोत्पत्त्या बन्धुत्वभावनायाः विकासे परस्परं संघर्षः युद्धं च अनैतिकं मन्येते। इयं भ्रातृता न केवलं मनुष्ये एव, अपि तु जीवमात्रे विकसति। अशोकेन महामात्रद्वारेण स्वसाम्राज्ये इव यवनकाम्बोजरक्षित-गान्धारपितनिक एतेषु अपि पार्श्ववर्तिषु राज्येषु जीवदयायाः भावना प्रसारिता। काश्मीरगान्धारदेशयोः मध्यन्तिकः, यवनदेशे महारक्षितः, दाक्षिणात्येषु विभिन्नेषु राज्येषु महादेवः रक्षितः धर्मरक्षितश्च इत्येते इमां भावनां प्रसारयितुं प्रेषिताः। अशोकेन महेन्द्रनामकः स्वपुत्रः, संघामित्रानाम्नी स्वपुत्री च लङ्कायां प्रेषितौ। सर्वत्र धम्मबन्धुत्वम् आहृतम्। आधुनिकयुगे उपनिवेशवादिभिः मूलजातीः यथा विनाश्य सभ्यता प्रतिष्ठापिता, तथा प्राचीनभारते कल्पयितुमपि न शक्यते। तदानीमपि विभिन्नानां साम्प्रदायिकानां समाजानां च परस्परं संघर्षोऽभूत्, परन्तु तत्र सांस्कृतिकं सामञ्जस्यमपि स्थापितम् अभूत्। वेदेभ्य आरभ्य मनुकालपर्यन्तम् अस्मिन् विशाले सागरे विभिन्नाः विचारधाराः वैदिकमर्यादया आत्मसात् कृताः। वैदिकमर्यादया विश्वबन्धुत्वस्य यत्स्वरूपम् उपस्थापितम्, तत्समन्वये इयान् महान् आधारः, यत्तत्र आपत्तेः अवसर एव नासीत्। विजितस्य विजयिनश्च एके

---

१. शिलालेखः २।

२. मालविकाग्निमित्रम्, ५. अङ्कः।

३. वि० सं० ३।

एव देवा आसन्। यतः देवः ईश्वरः एकः। राष्ट्रवादस्य जुगुप्सितेन स्वरूपेण अत्र व्यवस्थायां पदं न लब्धम्। अत एव जातीया घृणा न उदपद्यत। मातृवद् देशविषये श्रद्धैव भारतस्य वैशिष्ट्यम्। किन्तु एष भावः देशान्तरेष्वपि नागरिकेषु भवितुं शक्नोति। अत एव परस्परसम्मानविषयकः राष्ट्रान्तरीयनियमः स्वीकृतः। वैदिकैः सम्पूर्णा भूमिः मातृवद् अमन्यत, न केवलं भारतम्।[1] एतत्समये विश्वं नीडमिव भवति—'यत्र विश्वं भवत्येकनीडम'। सम्पूर्णं विश्वम् एकं कुटुम्बम् अमन्यत—'वसुधैव कुटुम्बकम्'। अत्र सङ्कुचितराष्ट्रवादस्य चर्चा नासीत्, येन विश्वमानवता विकासम् आप्तुम् अशकन्। जरासन्धादिभिः एते नियमाः उल्लङ्घिताः, अत एव ते विनाशिताः।[2] विश्वराज्यं स्थापितवन्तः राजानः अपि एतन्नियमोल्लङ्घकाः स्वीकृताः, अत एव निन्दिताः।[3]

अस्याः भावनायाः आधारः धार्मिकभावना स्वीकृता। सर्वासां जातीनाम्, देशानाम्, व्यक्तीनां च पितृतया ईश्वरः सर्वेषां पारस्परिकं सम्बन्धं स्थापयितुं निमित्तम् अभूत्। ऋग्वेदस्तु ईश्वरं मातरमपि कथयति।[4] अतः सार्वभौमैकतया अवसरो लब्धः। उपनिषदाम् आत्मवादः संसारे प्राणिमात्रे च बन्धुत्वभावनां स्थापयन् आसीत्। इत्थं च राष्ट्रियतायाः राष्ट्रान्तरीयाश्च भावाः शाश्वततया विकसितुम् अशकन्। विश्वराज्यस्य भावनायाः साक्षात्कारश्च अशक्यत। विज्ञानस्य आधुनिके सौविध्ये यदा मनुष्यः ग्रहलोकानपि गन्तुं यतते, अस्यां परिस्थित्यां स विश्वराज्यस्य विश्वबन्धुत्वस्य च घोषणामात्रं करोति, न विश्वराज्यादिविषयिकाः भावनाः तत्र सन्ति। प्रतिक्षणं विनाशस्यैव भावना प्रस्तूयते। भारतीयेन दर्शनेन यः आधारः उपस्थापितः, सः अद्य स्वीकर्तुं शक्यते न वा इत्येष विषयः अद्यत्वे विवादपदवीं प्राप्तः, किन्तु तैः श्रेयोविषये प्रेयोविषये च विश्वबन्धुत्वभावं प्रस्ताव्य विश्वराज्यस्य आदर्शाः उपस्थापिताः इति तु निर्विवादम्। वैदिकी शान्तिनीतिः भारतवर्षस्य पृष्ठभूमिः वैदिकपरम्परया विकासम् आप्नोति।

---

१. माता भूमिः पुत्रोऽहं पृथिव्याः—अथर्व० १२।१।१२।

२. महाभा० १६।२१।२४।

३. विष्णुपुराणम् ४।७४।

४. ऋ० ७।६८।११।

वैदिकशान्तिनीतिः

वैदिकसमाजस्य वैशिष्ट्यं यत् तत्र प्राणिमात्रस्य कृते उदाराणां भावानां कल्याणस्य च चर्चा कृता। जातिदेशसम्प्रदायानां क्षुद्राः मनोवृत्तीः सर्वथा दूरीकृत्य एतेषाम् आदर्शाः स्थापिता आसन्। "द्यौः शान्तिः अन्तरिक्ष्ँ शान्तिः पृथिवीः शान्तिः आपः शान्तिः" इति यजुर्वेदीयघोषणायां (३६।१७) शान्तेः विस्तृते क्षेत्रे दृष्टिर्देया। लोकस्य जगतश्च दृश्यासु सार्वभौमशक्तिषु शान्तेः क्रियाशीलतया सममेव शान्तेः साक्षात्कारमपि अस्माभिः कर्तुं शक्यते। भारतीयानां सम्पूर्णा जीवनप्रणाली एव शान्तेः मूलभूतानाम् आदर्शानां प्रतिष्ठायां समन्वयं स्थापयन्ती प्राणिमात्रे सहजां भ्रातृत्वभावनाम् आश्रित्य शान्तेः सन्देशं प्रापयन्ती च आसीत्।

उपनिषद्भिः अमृतत्वप्राप्तौ 'विद्ययामृतमश्नुते' (ईशोपनित् १०) इति प्रयतितम्। तस्य प्रयोगः विश्वविजयार्थं विनाशार्थं वा नाभूत्। प्रकृतेः महत्याः शक्तेः उपयोगः न अमृतपुत्राणां विनाशार्थम्, अपि तु तेषां कल्याणार्थं सुखार्थं च अभूत्। येषाम् अन्तरिक्ष-समुद्र-पृथिव्योषधि-वनस्पतीत्येतेषां प्रयोगः वैदिकैः शान्त्यर्थं कृतः, अद्य तु तेषामेव प्रयोगः विध्वंसार्थं भवति। स्पष्टं यत् शान्तिः स्वयम् अशान्ता अभूत्। सम्प्रति 'शान्तिरेव शान्तिः' इति कथनं न युज्यते। यत्र युगे ईदृशाः व्याख्यातारः सन्ति ये युद्धं शान्तेः पोषकं मन्यन्ते, तत्र युगे वैदिकानाम् आदर्शः कथं क्रियाशीलो भवितुं शक्नोति ? युद्धद्वारेण लब्धा शान्तिः महत्याः अशान्तेर्भूमिका। तत्र सर्वस्वमपि स्वाहा कर्तुं सन्नद्धता अपेक्षिता। मित्रता, विवशता, कूटनीतिज्ञता वा अस्य अवसरस्य द्योतिका तत्र न हृदयस्य कृते, अपि तु बुद्धेः कृते। वैदिकैस्तु सर्वत्र शान्तिं स्थापयितुम् ईहितं संसारस्य। सर्वेष्वपि जडेषु चेतनेषु च पदार्थेषु विध्वंसस्य शक्तिर्निहिता अस्ति, परन्तु तैः शान्तिरेव प्रार्थिता।[1]

वैदिकैः स्वसम्बन्धस्थापनायाः सार्वत्रिकता कल्पिता। दैवप्रार्थनायां तैः एतदेव कथितं यत् सर्वे मित्राणि भवन्तु। वयं सर्वान् मित्रवत् पश्यामः, सर्वे च अस्मान्।[2] ते ऐच्छन् यद् भद्रमेव श्रूयेत, भद्रमेव च दृश्येत। प्रेम्णा घृणायाः शान्त्या च क्रोधस्य अभिभवनमेव वैदिकानां मुख्यं वैशिष्ट्यम् आसीत्। 'अक्रोधेन जयेत् क्रोधम्' इति तेषां घोषणा आसीत्। ते क्रोधं सर्वेषाम् अनर्थानां मूलं मत्वा तम् उन्मूलयितुं यतन्ते स्म। क्रोधलोभमोहेर्ष्यादीनि नरककारणानि ते मन्यन्ते स्म। शत्रावपि न क्रोधः कार्यः इति तेषां व्रतम् आसीत्। शत्रुः यदि एतैः भावैः अभि-

---

१. यजुर्वे० ३६।१२।

२. यजुर्वे० ३०।१८।

भूतः, तदा स देवेनैव दण्डितो भविष्यति इति न अस्माभिः दण्डनीयः इति तेषां धारणा आसीत्। प्रतीकारार्थं ताः दुष्प्रवृत्तयः न आश्रयणीयाः। आत्मसंयमसम्पन्न-व्यक्तित्वानां प्रतिष्ठा एव गीताकारस्य उद्देश्यभूता।[1]

वैदिकानां समाजशास्त्रम् ईश्वरसत्तायां विश्वस्य अग्रेसरति। शत्रवः मित्राणि च ईश्वरस्य पुरः स्वकर्त्तव्यानाम् उत्तरदायित्वं वहन्ति। कृष्णेन अर्जुनं युद्धे प्रवर्तय-मानेन एतदेव कथितम्, यद् भावि तत् भविष्यत्येव, त्वं तु निमित्तमात्रं भव सव्य-साचिन्![2] बुद्धात् पूर्वं भारते अहिंसायाः सिद्धान्तः व्यवहारपदवीं प्राप्तः। बुद्धेन तमेव मुख्यतया स्वीकृत्य नूतनायां स्थितौ स्वानुकूलं स प्रयुक्तः। इदमेव आधृत्य पञ्चशीलस्य घोषणा कृता। यत्र प्राणातिपातविरमणम्, मृषावादविरमणम्, अदत्ता-दानविरमणम्, सुरामद्यविरमणम्, कामेषु मिथ्याचारविरमणम् इति पञ्च तत्त्वानि स्वीकृतानि। एतानि पञ्चशीलानि अहिंसा, अस्तेयः, सत्यम्, ब्रह्मचर्यम्, अपरिग्रह इत्येतेषामेव नूतनानि स्वरूपाणि इति कथयितुं शक्नुमः।[3]

योगव्याख्यातः बुद्धस्य पञ्चशीलं यावद् इदमेव अन्तरं यद् योगनियमाः केवलं वैयक्तिकाः, पञ्चशीलनियमास्तु सामाजिका अपि। बुद्धः स्थित्यनुसारेण तान् सिद्धान्तान् प्रायुङ्क्त। तत्र एवं सम्भाव्यते यथा अद्यतनम् आधुनिकं पञ्चशीलं राजनीतिकं जातम्। नैतिकता व्याजतया आश्रिता, न तु आधारतया। तस्य राष्ट्रा-न्तरीयव्याख्यायाः पर्यालोचनेनैतत्कथयितुं शक्यते यद् अस्य सम्बन्धः बुद्धेन योगेन वा आसीत्। बुद्धेन पञ्चशीलसिद्धान्तानां प्रयोगः स्वपरम्परापेक्षया अतिव्यापके क्षेत्रे कृतः, परन्तु तेनैव सर्वप्रथमं 'बहुजनहिताय' इति प्रयुक्तम्। यद्यपि बौद्धधर्मः देशकालादिवशेन वैदिकधर्ममर्यादायां यद्वैगुण्यं जातम्, तस्यैव प्रतिक्रियास्वरूपः आसीत्; किन्तु स स्वस्माद् अङ्गात् पृथग् भवितुं नाशकत्। बौद्धानाम् आचारेषु नैतिकताविषयकसिद्धान्तेषु च वैदिकमर्यादा अनुस्यूता आसीत्। बुद्धेन कुशलता-पूर्वकं तेषां संशोधनं कृतम्। एतेन बुद्धस्य व्यक्तित्वं प्रस्फुटति। तस्य उपदेशविषये च नैतद् निश्चीयते यत् तस्य उपदेशाः तदीया एव, उत वैदिकपरम्परीयाः? यद्यपि स स्वयं घोषयति 'एष धर्मः सनातनः' इति।

पूर्वपरम्परातः विकसन्ती शान्तिनीतिः बुद्धस्य पञ्चशीले इत्थं पर्यवसिता, येन क्षात्रधर्मस्यैव लोपः जातः। अशोकस्य 'धम्मविजयेन' तदीयपरराष्ट्रनीतौ बुद्धस्य आचारशक्तिर्विस्तारिता, कलिङ्गविजयावसरे जायमानायाः क्षात्रक्रियायाः प्रति-

१. गीता १७।६।

२. गीता ११।१३।

३. योगदर्शनम् २।३०।

क्रियार्थं सार्वत्रिक्याः अहिंसायाः प्रयोगः कृतः; विश्वव्यापिन्याः अहिंसायाः स्थापना अभूत्। एषा अपि नीतिः संशोधिता वैदिकशान्तिनीतिरेव कथयितुं शक्यते; यतः अस्याः मूलं बुद्धात् पूर्वत एव प्रचलितम् आसीत्। यदि बौद्धानां वैदिकानां च दर्शनविषयकः मतभेदो नाभविष्यत्. उभयेषामपि ईश्वरे विश्वासोऽभविष्यत् तदा निश्चितमेव बुद्धस्य नूतना नीतिः वैदिकसाहित्ये पदम् अलप्स्यत।

ऋषिभिः उपनिषत्सु तानि सर्वाणि तत्त्वानि मीमांसितानि, यान्याधृत्य शान्तिस्थापनं शक्यम्। समानात्मतादयः सिद्धान्ताः विश्वभ्रातृत्वस्य मूलभूताः। प्राणिमात्रे एकैव सत्ता क्रियाशीला अस्ति।[1] इमं सिद्धान्तं मन्यमानः अन्येन सह यदि संघर्षः करोति, तदा स वस्तुतः स्वेनैव सह संघर्षः इति मन्यते। बुद्धेन औपनिषदाः सिद्धान्ताः विश्वव्यापितया प्रयुक्ताः। आवश्यका अंशाः तत्र समावेशिताः। शत्रु-मित्रादीन् सर्वान् प्रति दयाभावः स्याद् इत्येतत्प्रतिपादिके गीतावचने बुद्धवचने च मनागपि न अन्तरम्।[2] उभयत्रापि शाश्वतशान्तेः आधारभूताः भावाः प्रतिपादिताः।

यदा शाश्वतस्य सत्यस्य साक्षात्कारः तदैव जीवनान्मुक्तिः शक्या। केषाञ्चित् शासकतया एव केषाञ्चिच्च शास्यतया एव जन्म भवति इत्येषा समाजस्य धारणा वैयक्तिकीं सामाजिकीं च शान्तिं समापयति। बुद्धः, तत्पूर्ववर्तिनो दार्शनिकाः, स्मृतिकाराश्च अत्र विषये विचारयन्ति। असहायेन लाभसम्पादनापेक्षया असहायस्य साहाय्यकरणं मानवस्य प्रथमं कर्त्तव्यम्। यदि आधुनिकस्य अर्थशास्त्रस्य नैतिकी व्याख्या क्रियेत, तदा अपेक्षापूर्तिम् आश्रित्य विकसन्त्याम् अवस्थायां यथावसरं लाभसम्पादनाद् अन्यत् किम्? किम् अस्य अर्थशास्त्रस्य सत्तायां सत्त्वे आर्थिकी शान्तिः स्थापयितुं शक्यते? भारतीयैस्तु यथावसरं साहाय्यकरणस्य अनिवार्यता प्रतिपादिता। सामाजिकशान्तिं विना न केवलं राष्ट्रेऽपि शान्तिः स्थापयितुम् अशक्या, का चर्चा विश्वशान्तेः? अद्यतनीभिः साम्राज्यवादिशक्तिभिः कथमेतत् सम्भाव्येत यत् ताभिः शक्तिभिः 'यूयं जीवत परांश्च जीवयत" इति भावना प्रसारयितुं शक्या स्यात्? यतः नेदम् उद्दिश्य तासां संघटनम् अस्ति।

शोषणेर्ष्याघृणाद्वेषादीनां साम्राज्ये आन्तरिकी शान्तिः न संभाव्यते। शान्तिविरोधिनीनां वैयक्तिकप्रवृत्तीनां सत्त्वे कथं शान्तिः सम्भाव्येत। भारतीयैः एतद्विचारितम्। शान्तिगुणैः सम्पन्न एव पुरुषः समाजे राष्ट्रे च शान्तिं स्थापयितुं

---

१. गीता ७।७।

२. गीता ६।६।

प्रभवति। तदनुसारं मनः साम्राज्यस्थापनं मानवसमाजस्य वास्तवं प्रतिबिम्बम्। मानसिकवृत्तीनां दासतायां सत्यां शान्तिः स्वतन्त्रता च कुतः? धर्मदयान्यायविजय एव वास्तवो विजयः। जनकेन कथितं यत् मम साम्राज्यं महत्, यद्यपि मत्पार्श्वे न किञ्चित्। सम्पूर्णा मिथिला दग्धा भवेत्, मम तु न कापि क्षतिः।[१] राज्यस्य त्यागः भारतीयानां राज्ञाम् उद्देश्यम् आसीत्। ते च तुरीयावस्थायां तपः तप्तुं वनं गच्छन्ति स्म। अश्वघोषकथनानुसारं राजा स्वपुत्राय राज्यं प्रदाय तपोवने शान्तिमनुभवन् संसारे शान्तिसंदेशं प्रसारयति स्म।[२] अत्र लोभादिवृत्तीनां किञ्चिदपि महत्त्वं नास्ति। वस्तुतः घृणाक्रोधमूलकः विजयो न विजयः किन्तु प्रेममूलकः।[३]

एवं वयं पश्यामो यद् भारतीयैः जीवनस्य प्रतिक्षेत्रं व्यवहाराः कार्यान्विताः कृताः, यतः संघर्षस्य द्वेषस्य च भावना न पदं लभेत। समाजस्य, व्यक्तेः राष्ट्रस्य वा सम्बन्ध एव संघर्षस्य शान्तेश्च मूलम्। प्रतियोगितावादी उपयोगितावादी च समाजः अद्यत्वे व्यक्तेः हितार्थं प्रयतमानोऽस्ति। समाजे राष्ट्रे विश्वे च तस्य प्रभावो दृश्यते। अस्य एव परिणामो यत् समृद्धौ सत्यामपि शोषणोत्पीडनपरस्वत्वापहरणविषयिकाः पाशविक्यः मनोवृत्तयः मनुष्यं मनुष्यसंहारार्थं प्रेरयन्ति। अस्यां स्थितौ शान्तिर्न संभाव्यते। अस्मिन् औद्योगिके वैज्ञानिके च युगे यदा शान्तिस्थापनार्थम् अपेक्षितानां नैतिकतत्त्वानाम् अवसर एव न, तदा शान्तेः चर्चा उपहासविषय एव। शान्तिसंस्थापकाः यावद् एतत्तत्त्वं न विचारयेयुः, तावत् पर्यन्तं सन्धौ सत्यपि शान्तिस्थापना अशक्या एव।

## बौद्धशान्तिनीतिः

बौद्धदर्शने 'अमृतस्य पुत्राः' इत्येतत्सिद्धान्तास्वीकारेऽपि शाश्वतभ्रातृत्वविषयकसिद्धान्तस्तु प्रतिपादित एव। जीवमात्रविषयकदयाभावसिद्धान्तैः बौद्धानाम् ईदृशं वैशिष्ट्यमासीद् यन्न क्वचिदपि नास्तिकदर्शने। कन्फ्यूशियस, ईसा इत्यादीनां मानवस्नेहः बौद्धानां जीवदयासिद्धान्तापेक्षया अधिकं महत्त्वं लब्धुं न शक्नोति। एतैः दार्शनिकैः रक्तपातद्वारेण मानवतायाः धर्मस्य च संरक्षणम् अस्वीकृत्य दयां करुणां च आश्रित्य मानवसम्बन्धाः कल्पिताः, जीवने तेषां प्रायोगश्च कृतः। स्वीयानाम् आदर्शानां स्वयमेव प्रयोगं कर्तुं बुद्धः अशकत्। एतदेव तस्य साफल्यम्, येन जीवमात्रे प्रभावः सुशक्योऽभूत्। अत एव राष्ट्रियरक्षायाम् आक्रमणपरस्वत्वापहरणादिवृत्तीनां स्थाने मानवीयान् सम्बन्धान् नैतिकताम् आश्रित्य विकासयितुं नवीना प्रणाली गौतमबुद्धेन आरब्धा।

---

१. महाभा० १७।१९।
२. सौन्दरानन्दः ६।२६।
३. धम्म० १।५; १७।३।

बुद्धः कथयति यज्जीवमात्रे दया कर्त्तव्या। क्रोधेर्ष्यादीन् अपनीय मनुष्यमात्रेऽनुरागः प्रतिष्ठापनीयः।[१] अन्यत्र स कथयति 'हननसामर्थ्येऽपि न कश्चिद्धननीयः'। यथा मधुपः पुष्पाणां रसं गृह्णन्नपि पुष्पाणि रक्षति तथैव जीवमात्रेऽस्माभिः व्यवहर्त्तव्यम्। बुद्धेन अस्य सिद्धान्तस्य कार्यान्वयनं समर्थनं वा जातिसम्प्रदायदेशादिभावनाः अपनीय सार्वभौमतया कृतम्। स्वशिष्यान् उपदिशता तेन कथितं "यः अस्मासु घृणां करोति तद्विषयेऽपि प्रेमभावनाम् उद्भाव्य विश्वे दया करुणा च प्रसारणीया।"[२]

ईदृश्याः वैयक्तिक्याः क्षमतायाः सम्बन्धः राष्ट्रियव्यवहारेऽपि दृश्यते। यतः बुद्धः कथयति शत्रुता शत्रुतया न दूरीकर्तुं शक्या।[3] आक्रामकविषये नीतिनिर्धारणेऽपि अस्य प्रभावो भवति। तत्प्रयोगः अहिंसासिद्धान्तस्य कार्यान्वयने साहाय्यम् आचरति। आक्रामकस्य पाशविकानां व्यवहाराणां तादृशैरेव व्यवहारैः प्रतीकारे विश्वमानवसमाजे घृणादीनां प्रसारः भवति, येन शान्तिः सर्वथा भज्यते। अत्र विजयिनः विजितस्य च द्वयोरपि नैतिकता लयमाप्नोति; किन्तु बुद्धस्य अहिंसा न पलायनम्, अपि तु नैतिकतया पशुतायाः अभिभवः, यत्र मानवचेतनया बलम् आक्रामकेण च नैतिकतासम्पादनस्य अवसरश्च लभ्यते। धार्मिकं धर्मराज्यं व्याचक्षाणः बुद्धः आह यद् रक्तपातेन (हिंसया) लब्धविजयः राजा न कदापि स्थिरः भवितुं शक्नोति। एतदर्थं धर्मपालनमेव सर्वोत्कृष्टं साधनम्।[४] येन विजयेन घृणा द्वेषश्च वर्धेताम्, तादृशविजयापेक्षया पराजयः एव श्रेयान्।[५] अजातशत्रु-विजयविषये एतदेव कथितं यद् हिंसकः स्वव्यवहारेणैव हिंसां प्रसारयति।[६]

बौद्धानां देशकुशलकर्मानुसारं राष्ट्रियसम्बन्धेष्वपि वैयक्तिकनैतिकतायाः प्रयोग आवश्यकः। हिंसादिकं विनापि विजयो लब्धुं शक्यते। धर्ममाश्रित्य अपि विजयः प्राप्यते, न केवलं युद्धादिद्वारेण।[७] धर्मराज्यं खड्गं विनापि कर्त्तव्य-पालनेन पक्षपातराहित्येन च शासनं कर्तुं प्रभवति। जातकेषु द्वौ राजानौ उदाहृतौ,

---

१. सुत्तनि० १४६, १५०।
२. श्यामशंकर - बुद्ध एण्ड हिज सेइंग्स, पृ० ५८।
३. धम्म० १।५।
४. दीघनि० ३।१४२।६।
५. सुत्तव० ४।४।
६. तदेव।
७. सुत्तनि० १।११६।

तयोश्च नीत्योः तुलना कृता। कोशलराजा मल्लिकः घृणया घृणां प्रेम्णा च प्रेमाणं समादधाति। वाराणसीराजः ब्रह्मदत्तस्तु घृणामपि प्रेम्णा एव समादधाति। ब्रह्मदत्तः बौद्धनीतेः आदर्शो मतः।[1]

एकत्र बुद्धेन उक्तम्—जीवनं सर्वेषां प्रियम्। अतः स्वजीवनं स्वस्य कियत्प्रियम् इति विचार्य कोऽपि न पीडनीयः इति व्रतमाचरत इति।[2] भगवतः बुद्धस्य उद्देश्यं शान्तिस्थापनम् आसीत्। तस्य प्रयोगः व्यक्तिसमाजराज्यक्षेत्रेषु तेन कृतः। वार्तावसरे स्वशिष्यः बुद्धेन कथितः यद् यदि मदीयानाम्, त्वदीयानाम्, संघोयानां वा नियमानां प्रतिकूलं कश्चिन् कथयति ! यदि स कथयेत् तदा-त्वं स्वमनाः भविष्यसि इति, तदा तदनौचित्यं निर्गन्तुं प्रभविष्यति; यदि त्वं स्वयम् आत्मसंयमं विहाय क्रोधघृणादीनां भाजनं भविष्यसि, तदा औचित्यं को निर्णेष्यति ?

बुद्धोपदेशैः संघटिताः शान्तिदूताः विभिन्नभागेषु स्वसंदेशान् प्रापयन्तः तत्पालनविधिम् अशिक्षयन्त। एषां सन्देशवाहकानां सविधे मैत्रीस्वरूपं करुणास्वरूपमेव च अस्त्रम् आसीत्। एतैः कर्त्तव्यपालनादृते न कश्चित् पुरस्कारः गृहीतः। बुद्धसमये ईदृशानां शासकानां न्यूनता नासीत्। जनाः शक्तिं दण्डञ्च आश्रित्य शासनं कुर्वन्ति स्म। बुद्धेन ते हिंसातः विमुखाः कृताः, धर्मे शासने च प्रवर्तिताः। अजातशत्रुणा बौद्धादर्शप्रभाविनेन पशुवधोऽपि निषिद्धः। प्रसेनजित्-सुबाहुबिम्बसारसुधवमहेन्द्रचन्द्रसेनसिंहप्रभृतिभिः बुद्धपित्रा सुबोधिन्या चन्द्रेन च मगधवैशाली-उज्जयिनीकपिलवस्तुषु इदमेव आश्रित्य परराष्ट्रनीतिः सञ्चालिता। बुद्धोपदेशानुसारम् अहिंसा शान्तिश्च स्थापिते। अत्र विषये न कश्चित् सन्देहः। एषां राज्ञां सविधे सैन्यानि आसन्, किन्तु केवलं सुरक्षार्थम्, न आक्रमणार्थम्। "अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" इत्येतदनुसारेण यदा एभिः राजभिः अहिंसावाद एव प्रतिष्ठापितः, तदा सेनायाः का आवश्यकता इति कथनं तु अहिंसासिद्धान्तविषयकाज्ञानविषयकम् एव। वैदिकपरम्परायां श्रूयते यद् हिंसा न करणीया, परन्तु आत्मरक्षार्थं हुङ्कारः करणीयः इति केनचिद्दृषिणा व्याघ्रः उपदिष्टः। अत एव आत्मरक्षार्थं सेना अपेक्षिता। वस्तुतः याम् अहिंसां योगदर्शनकारः निर्दिशति, तस्याः प्रयोगः वैयक्तिक एव भवितुं शक्नोति। समाजरक्षार्थं राष्ट्ररक्षार्थं च सैन्यशक्तिः अपेक्षणीया, अन्यथा रक्तपातः सम्भाव्यते।[3]

---

१. राजवादजा० २।१।२५।

२. ब्रह्मजालसुत्तम् ७।५।

३. अश्वघोषः—सौन्दरानन्दः १५।१७।

उक्तानां राज्ञां परराष्ट्रनोतिः गृहनीतिश्च धर्मनियन्त्रिता आसीत्। साम्राज्य-वादिशक्तेः संस्थापकः चन्द्रगुप्तः बौद्धसाहित्येऽत्यधिकं निन्दितः। तस्य जीवनस्यान्तिमांशः दुःखपूर्णः चित्रितः। इदं शक्यं यद् चन्द्रगुप्तविषये बौद्धसाहित्ये उपस्थापितम् इतिवृत्तम् असत्यं भवेत्, किन्तु इदम् अवश्यं यद् व्यक्तिसमाजराष्ट्राणां पारस्परिकेषु सम्बन्धेषु बुद्धव्यक्तित्वस्य महान् प्रभावोऽभूत्।[1] बौद्धाः राजानः भिक्षुरूपे जीवनं यापयन्ति, स्वसुरक्षार्थं च कीदृशीमपि सैनिकव्यवस्थां न कुर्वन्ति। शकराजो भद्रियः सैन्यशक्तिसम्पन्नः भीतश्च आसीत्; परन्तु बौद्धधर्मस्वीकारानन्तरं निर्भयः सन् भिक्षुवद् अभूत्। अशोकस्तु भिक्षुरूपेणैव सिंहासनेऽपि उपविशति स्म। वैयक्तिकव्यवहारेषु इव राष्ट्रियव्यवहारेष्वपि तेन अहिंसानीतिः व्यवस्थापिता जीववधश्च निषिद्धः।

प्रायः अल्फ्रेड्-चार्लमग्नं-उमरखलीफा-अकबर इत्येतैः सह अशोकस्य तुलना क्रियते। वस्तुतः अशोकः एतेषामपि महद्भिष्ठ आसीत्। सः अलेक्जेण्डर-नेपोलियन-सीजरादीनामपि गुरुरासीत्। वोल्गातः जापानपर्यन्तम्, साईबेरियातः लङ्कापर्यन्तम् आदरपूर्वकं तस्य नाम उच्चार्यते। शान्तिसंस्थापकतया स निर्विवादं शक्तिमान् आसीत्।[2] अशोकद्वारेण विश्वव्यापकं भ्रातृत्वं शान्तिश्च स्थापयितुं प्रयतमानैः भिक्षुसैन्यैः नूतनं प्रतिमानं स्थापितम्। एभिः शान्तिदूतैः चीनजापान-कोरियाजावासुमात्राशामचम्पाकम्बोडिया इत्यादिषु देशेषु शान्तिपूर्णा मैत्री स्थापिता। चीनदेशीयया पाशविकया राजशक्त्या कुमारजीवितः बन्दीकृतः (३४४-४१३ ई०), किन्तु तस्य महतः शान्तिसेनापतेः ईदृशः प्रभावः अभूद् येन चीनदेशस्य नीतिः परिवर्तिता। सद्धर्मपुण्डरीकम् अनूद्य कुमारजीवेन द्वयोः देशयोः मैत्री स्थापिता। चीनदेशीया यात्रिकाश्च स्वतीर्थस्थलेन भारतेन प्रेरिता अभूवन्।

काश्मीरराजः गणवर्मा बौद्धभिक्षुतया लङ्कायां जावायां शान्तेः प्रसारं कुर्वन् नानकिंगदेशं प्राप्तः। बोधिवर्मणा मलायाभारतयोः मैत्री स्थापिता (६०० ई०)। परमार्थेन चीनदेशे योगाचारस्य प्रसारः कृतः। चीनदेशीयैः कोरियादेशे बुद्धस्य शान्तिसन्देशः प्रसारितः। ततः जापानदेशे स सन्देशः प्रसृतः। प्रभाकरसिंहेन अमोघवज्रेणापि च जापानदेशे उषितम्, किन्तु मतिताभस्य सफलेन प्रयासेन जापानदेशे बुद्धस्य सन्देशः दृढः अभूत्। स्रान - वत्सनगमपो - तिब्बतराजेन चीनदेशीयायाः स्वराज्ञ्याः आग्रहेण बौद्धधर्मः स्वीकृतः (६४० ई०)।

---

१. मंजुश्रीमूलकल्पः ४४।

२. रिजडेविड, बुद्धिज्म, पृ० २२२।

अश्वघोषेण यद् दार्शनिकं स्वरूपम् उपस्थापितम् तत्तु राष्ट्रान्तरीयवादस्य महान्निधिर्वर्तते। तस्य श्रद्धोत्पादः अस्य आकरः। शान्तिस्थापनावसरे युद्धचर्चा अपि पापम् अमन्यत बौद्धैः।[1] एवंविधा भविष्यद्वाण्यः अपि निषिद्धाः। तदीयकथानकानाम् उपसंहारोऽपि शान्तिमूलक एवाभूत्। मानवताप्रतिकूलं युद्धं पापम् अमन्यत। धार्मिकपरिवर्तनविषये बौद्धानां सहिष्णुतायाः महत्त्वमासीत्। आत्मगौरवार्थं राष्ट्रियसम्मानार्थं च आपत्कालिकीं स्थितिं मत्वा युद्धम् अङ्गीकृतम्। बुद्धेन मानवे आत्महीनतायाः द्योतकानि सर्वाण्यपि बन्धनानि समापितानि। कुत्रापि जातौ देशे स्थित्वा समदृष्ट्या शाश्वतसिद्धान्तान् परिपाल्य मानवतायाः गुणाः स्थापयितुं शक्याः।[2] अस्तेयम्, दया, अहिंसा इत्यादीन् परिपालयन् कोऽपि अर्हन् मुनिः तथागतो वा भवितुम् अर्हति।[3]

ईसातः पूर्वं यदा सभ्यतायाः साधनानि सीमितानि आसन्, तदानीं बुद्धेन या महती तपःशक्तिः व्यक्तौ प्रतिष्ठापिता, तस्याः प्रभावः संसारे व्याप्तोऽभूत्। व्यक्तिः स्वयं प्रबुद्धा सती विश्वं प्रबोधयितुं प्रवृत्ता। व्यक्तिसमाजराष्ट्रैः ते गुणाः अनादृताः, ये संघर्षस्य बीजानि आसन्। तेषां संघर्षकारणानाम् उन्मूलने सति बहुशताब्दीपर्यन्तम् एशियाखण्डे सांस्कृतिकम् आदानप्रदानं जनेषु सहजभ्रातृत्वं च विकसितम्। राष्ट्राणां परराष्ट्रनीतौ क्रान्तिकारिपरिवर्तनम् अभूत्। इतिहासे अद्भुतः, किन्तु वास्तवः प्रयोगो जातः, येन स्थायिनी शान्तिः अशक्यत। नैतिकताम् आश्रित्य तिष्ठन्ती शान्तिरेव स्थिरा शान्तिः। तत्स्थापनार्थं समाजे व्यक्तेः अधिकाराणां कर्त्तव्यानां च स्थापनम् अनिवार्यम् अभूत्। बुद्धेन सामाजिक्यां शान्तौ अपि दृष्टिपातः कृतः। यावन्नैतिकसमाजस्य सत्ता आसीत्, तावद् बुद्धोपदेशानां कार्यान्वयनम् अभूत्। नैतिकसमाजस्य स्खलने बुद्धोपदेशाः निष्क्रिया एव जाताः। अद्यत्वेऽपि बुद्धसिद्धान्ताः प्रयोक्तुं शक्याः, किन्तु एतदर्थं सामाजिकन्यायस्य स्थापनम् अपेक्षितम्। यदि बुद्धोपदेशाः समाजे प्रतिष्ठापिताः स्युः, तर्हि स्थायिशान्तिविषयिका कल्पना कार्यान्विता भवितुं शक्नोति।

## तटस्थतानीतिः

अन्ताराज्यसम्बन्धार्थम् राष्ट्रान्तरीयसम्बन्धार्थं च प्राचीनभारते षाड्गुण्यस्य निर्देशः आसीत्। यत्र षाड्गुण्ये सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः परिगणिताः। कौटलीयेऽर्थशास्त्रे[4] अग्निपुराणे[5] च आसनं व्याख्यातम्। तदनुसारं

1. ब्रह्मजालसुत्तम् १।१७।
2. अंगुत्तर० ४।२०४।
3. दीघनि० २।७७।१५६।
4. अर्थ० ७।१।
5. अग्निपु० २३४।१९।

च तटस्थनीतिरेव आसनम् । उपेक्षा एव तटस्थनीतेरर्थः ।बॉसकमहोदयेन उदासीनता निष्क्रियता च उपेक्षायाः अर्थः उक्तः । मनुव्याख्यावसरे कुल्लूकभट्टेन निरपेक्षता एव आसनम् उक्तम् , यस्याः निरपेक्षतायाः अर्थः अपेक्षाराहित्यं पक्षपातराहित्यं वा । अमरकोशव्याख्यात्रा क्षीरस्वामिना विग्रहादिभि निवृत्तिरेव आसनम् इत्युक्तम् । बॉसकमहोदयेन अर्थशास्त्रव्याख्यानावसरे एतद्विषये स्वीयं मतं विस्तरेण उपस्थापितम् । तदनुसारम् आसननीतिः स्थितिविशेषं निर्दिशति । यदा पक्षद्वयस्यापि राजानं विजिगुषुः, अन्यतरो वा राजा अवसरं प्रतीक्षेताम् , सैव स्थितिः आसनं कथ्यते ।

कुल्लूकभट्टव्याख्यापि बॉसकविचारं न विसंवदति । एतदेव च निरपेक्षताया अपि स्वरूपम् , यदा राजा कश्चित् स्थितिविशेषम् , आन्तरिकगतिरोधं वा प्रतीक्षते । शामशास्त्रिणा मुखर्जीमहोदयेन च आसनस्य कृते तटस्थः शब्दः प्रयुक्तः, परन्तु शामशास्त्रिकृतं व्याख्यानम् अन्ये विद्वांसो न मन्यन्ते । तदनुसारम् आसनं राज्ञः राजमण्डलसम्बन्धिनः स्थितिविशेषस्य द्योतकम् , न तु ताटस्थ्यस्य । इत्थं च इदं स्पष्टीभवति यत् तटस्थता एका नीतिः यया पक्षपातराहित्यं द्योत्यते । यदा द्वयोः राष्ट्रयोः युद्धम् आरभ्यते, तदा अन्येषां राज्यानां कृते इदम् आवश्यकं यत् तानि स्वीयं दृष्टिकोणं प्रकटयन्ति । तैः अन्यतरपक्षः ग्राह्यो भवति । स्थितिवशेन तानि मध्यममार्गम् आश्रयितुं न शक्नुवन्ति । कुल्लूकभट्टस्य व्याख्या एतत्स्वरूपं पूर्णतया स्पष्टयति । ओपेनहम इत्यस्य व्याख्या प्रस्तुततटस्थतासिद्धान्तेनापि यत् समर्थितं भवति ।[2]

तटस्थतायाः विभिन्नाः पक्षाः प्राचीनभारतीयराजनीतिशास्त्रे लभ्यन्ते । यदनुसारं ज्ञायते यत् स्थित्यनुसारं तत्र परिवर्तनं भवति । (१) स्थित्यनुसारं स्थितेः परिवर्तनम् , (२) यथावद्वस्थाने भयानुभूतिः, (३) अन्येषाम् अनुचितप्रभावः (४) दुर्बलताया अनुभवः, (५) अन्यथा ज्ञानञ्च इत्येतानि तटस्थतासिद्धान्तस्य पक्षभेदेषु कारणानि । युद्धकाले तटस्थतानीतिः नोद्घोष्यते । मनुना द्विविधानां तटस्थराजानां निर्देशः कृतः । तत्र प्रथमः स राजा यः तटस्थनीतिपालनार्थं बाध्यते । स च एतदनुभवति यद् 'अहं निर्बलः' इति । द्वितीयः सः राजा यः राजान्तरैः प्रार्थ्यते यत् त्वया युद्धविषयिका कीदृशी अपि सहयता न कार्या, अपि तु तटस्थेन एव भाव्यम् ।[3] कौटल्येन स्थानम् उपेक्षमाणं च द्विविधम् आसनं कथितम् ।

---

१. मनु० ७।१ ।

२. इण्टरनेशनल लॉ. खं० २ ।

३. मनु० ७।१६६ ।

शान्तिपूर्वकं स्वस्थाने एव अवस्थानं स्थानरूपम् आसनम्। संघर्षम् अकृत्वा स्वकार्यं साधयन् यदा कूटनीतिकान् व्यवहारान् परिहरेत्, तदा उपेक्षमाणम् आसनम् उच्यते।[1]

अस्य एव निष्कर्षो यत् तटस्थतासिद्धान्तः न सदा एकस्वरूपो भवति। आवश्यकतानुसारं तस्य विभिन्नाः प्रकाराः भवन्ति। यदा राज्यानि पारस्परिकसंघर्षभाजनानि भवन्ति, तदा कस्या अपि पक्षम् अगृहीत्वा ताटस्थ्येन अवस्थानमेव तटस्थतानीतिरिति निष्कर्षः। अस्य घोषणा अपि अनिवार्या आसीत्। दीक्षितारमहोदयेन दशविधम् आसनं निर्दिष्टम्।[2] आसनसिद्धान्तः नैतिकताद्यपेक्षया वास्तविकताम् आश्रयत्। प्रायः राज्यं तटस्थनीतिमेव स्वीकरोति स्म। यतः तटस्थनीतिस्वीकारेण शक्तिसञ्चयः युद्धजन्यक्षतिभ्यः सुरक्षा च भवति। तटस्थनीतिरेव राज्यस्य महत्त्वम् अधिकं वर्धयते स्म। कौटल्यस्य मतं यत् कीदृश्याः कूटनीतेः आश्रयणापेक्षया तटस्थनीतिरेव अधिकं श्रेयस्करी।[3] इदमपि अत्रावधेयं यत् तटस्थतानीतेः आश्रयणं न दुर्बलस्य कृते उपयुज्यते, अपि तु सबलस्यैव। मनुना आपत्कालिकाः केचन अवसराः निर्दिष्टाः, यैः एतद् विशदीभवति यत् तटस्थतानीतिः केन आश्रयणीया इति।[4] अद्यतन्याः तटस्थतानीतेः कौटलीयया मानवीयया वा तटस्थतानीत्या सह न विरोधः।

मनोर्मतं यद् अवसरविशेषेषु तटस्थतानीतिः अनिवार्या भवति। तदनुसारं यदा राज्यम् ईदृग् दुर्बलं भवेत्, येन दौर्बल्येन विनाशसंभावना, तदानीं तटस्थतानीतिरेव शरणम्। अनिच्छदपि राज्यं गत्यन्तराभावाद् इमां नीतिं स्वीकरोति। आधुनिकानां विधिवेत्तॄणां मतं यद् अगत्या आश्रीयमाणा तटस्थता विवशतायाः परिणामः। असमराजः तटस्थनीतिस्वीकारार्थं जयपालेन बाधितः—"राजा प्राग्ज्योतिषाणामुपसमितसमितभंकथयस्व चाज्ञाम्"। जयपालस्य शक्तेः पुरः तटस्थतया अवस्थानेनैव प्राग्ज्योतिषपुरस्य राजा आद्रियत।[5]

एतत्प्रसङ्गे मण्डलसिद्धान्तस्य निरूपणम् आवश्यकम्। कौटल्यः कथयति यत् पार्श्वस्थानि राज्यानि विजिगीषुराज्यस्य शत्रवो भवन्ति। ततः पश्चात् स्थितो राजा विजिगीषोः राज्ञः मित्रं भवितुं शक्नोति। एवं तस्य पुरः पञ्चविधा राजानः

---

१. अर्थ० ७।४।
२. वॉर इन एंशेण्ट इंडिया, पृ० ३२०।
३. अर्थ० ३।१।
४. मनु० ७।१६६।
५. एच० ओ० बी०, खं० १, पृ० ११७।

भवन्ति। शत्रुः, मित्रम्, अरिमित्रम्, मित्रमित्रम्, अरिमित्रमित्रम्—एते पार्ष्णिग्राहाः कथ्यन्ते। दशानां राज्ञां मण्डलं राजमण्डलं कथ्यते। राजमण्डलवद् अरिमण्डलं मध्यममण्डलम् उदासीनमण्डलं च कल्पनीयं भवति। राष्ट्रमण्डलसिद्धान्तानुसारं द्वौ राजानौ अवश्यं परस्परं शत्रुत्वम् आचरतः, परन्तु अस्य नेदं तात्पर्यं यत्तौ कदापि मित्रे न भवतः। स्थितिवशेन शत्रुता अपि मित्रतया परिणमति। इतिहासे बहूनि ईदृशानि कथानकानि लभ्यन्ते, यत्र लक्ष्यसाम्येऽपि पार्श्ववर्तिभिः राज्यैः मैत्रीम् आचरद्भिः परिस्थितयः प्रतिकृताः। राष्ट्रमण्डलस्थैः राष्ट्रैः युद्धसमये, अथवा अन्येषु वा स्थितिविशेषेषु सिद्धान्तम् अपसार्य वास्तविकतां च अनुसृत्य शत्रुता मित्रता च निर्णीता। यथा—पार्श्ववर्तिराज्यं विजिगीषुराज्यस्य शत्रुः पार्श्ववर्तिराज्यस्य यद् राज्यं तद् विजिगीषुराज्यस्य मित्रम्, अस्याम् अवस्थायां नैतद् आवश्यकं यत् सिद्धान्तानुसारं अरिमित्रमित्रं विजगीषुराज्यं साहाय्यम् आचरेदेव। एतत् तु तस्य स्थितिम् अनुवर्तते यत् तद्राज्यं विजगीषोः साहाय्यम् उत आगामिभयसम्भावनया शत्रुत्वमेव आचरेत्, औदासीन्यमेव वा आश्रयेत्।

तटस्थतासिद्धान्तः न केवलं राज्यविप्लवे एव प्रयुज्यते, अपि तु उद्योगादिषु अपि अस्य महत्त्वम् अस्ति। नावध्यक्षप्रकरणे कौटल्यः कथयति यत् चौराणां दस्यूनां च नावः नाशनीयाः (२।२८)। याः नावः शत्रुनगरगामिन्यः, या वा जलयातायातकेन्द्रस्य नियमान् अतिवर्तन्ते ताः नाशनीयाः। एतेन केचन निष्कर्षाः आसादिता भवन्ति-(१) शत्रुदेशस्य नावः नाशनीयाः, (२) याः नावः अन्यदेशीयाः, परन्तु तासु वैरभावलक्षणानि उपलभ्यन्ते चेत्, तदा ता अपि नाशनीयाः, (३) शत्रुराष्ट्रेण सह औद्योगिकः सम्बन्धः कस्यामपि स्थितौ न मान्य आसीत्। शत्रुदेशे प्रेष्यमाणानि वस्तूनि नाशनीयानि। एतेन स्पष्टं भवति यत् कौटल्यः शत्रुराज्येन सह कीदृशमपि औद्योगिकसम्बन्धं न सम्मनुते। यदा युद्धं प्रारभते, तदा शत्रोः उद्योगानां नाशनमेव ध्येयं भवति। एतावदेव न, अपि तु राष्ट्रान्तरैः सहापि शत्रुराष्ट्रस्य औद्योगिकः सम्बन्धः विघटनीयः। एषैव तटस्थव्यापारनीतिः कथ्यते। एतदवश्यं यद् विदेशीयानाम् उद्योगिनां तटस्थराज्यानां च कृते औद्योगिकं सौविध्यं कौटल्यः न निषेधति।[1]

तटस्थराज्यस्य वस्तूनाम् उद्योगानां च नाशनम् अव्यावहारिकम् अन्याय्यञ्च। उक्तेन विवेचितेन एष निष्कर्षः आसाद्यते यद् यदा तटस्थराज्यस्य वस्तूनि शत्रूणां नौषु तटेषु वा लभ्येरन्, तदा तान्यपि विध्वंसनीयानि। यदा तटस्थराष्ट्रस्य वस्तूनि

---

१. अर्थ० २।२८।

तस्मिन्नेव राष्ट्रे स्युः. परन्तु शत्रुराज्यस्य साहाय्यार्थं तानि प्रेषयितुं तटस्थराष्ट्रम् उद्यतं स्यात्, तदा तटस्थराज्यम् अनुरोद्धव्यं यत् तत् तानि वस्तूनि न प्रेषयेत्। यदि अनुरोधं तटस्थराज्यं न स्वीकरोति तदा अवश्यमेव तद्वस्तूनि नाशनीयानि यानि तेन प्रेषणीयानि सन्ति। येन तद् राज्यं शत्रुशक्तिं विकासयितुं न क्षमेत। अद्यत्वेऽपि शत्रुनौविषयकः, शत्रुवस्तुविषयकः सिद्धान्तः प्रचलति, किन्तु अनियन्त्रितोद्योगविषयकः सिद्धान्तः न लभ्यते, यतः उद्योगस्य अनियन्त्रणे यदा नौः अमित्रविषयातिगाः तदा तत्पुरः महत्त्वपूर्णप्रश्नः उदेति। एतेन विजिगीषुः शत्रुराष्ट्रस्य नाशं कर्तुं न प्रभवति। विजिगीषुराष्ट्रस्य समकक्षाणि अन्यान्यपि राष्ट्राणि प्रतिस्पर्धीनि भवन्ति।

अमित्रविषयातिगाः पण्यपत्तनचारित्रोपघातिकाश्च इत्युक्तं कौटल्येन। एतदालोचनेऽस्मेकः विचारः पुरः आयाति यत् किम् ईदृशाः केचन नियमा आसन्? यैः शत्रुनावः नियमानामुल्लङ्घकस्य परिज्ञानं कर्तुं शक्येत। एतदर्थं कौटल्येन नियम उक्तोऽस्ति "गूढसारभाण्डशासनशस्त्राग्नियोगं विषहस्तं दीर्घपथिकसमुद्रं चोपग्राहयेत्। बहुमूल्यानां द्रव्याणां गोपनम्. गोपनीयलेखादीनां निधानम्, गुप्तरूपेण शस्त्रविषादीनाम् आदानम्, दीर्घयात्रा अन्तपालाज्ञां विना यात्रिगमनम्, एतानि एव शङ्कायाः कारणानि; एवं यः करोति स बन्दीकार्यः।" एतेन स्पष्टं यत् नावध्यक्षः आगच्छन्तीनां नावां विषये एतन्निरीक्ष्यते स्म यत् कश्चित् नियमानाम् उल्लङ्घनं तु न करोति। सापराधानां नावां व्यक्तीनां विषये किमनुष्ठेयम् इत्यपि निर्णीयते स्म। एवैव पण्यपत्तननीतिः कथयितुं शक्यते।

एवं परवर्तिकालेऽपि संशोधनं भवति स्म। साधनानां विकासानुसारं प्रकाराणां विकासेन सह अद्यापि संशोधनं भवति ईदृशेन अन्वेषणेन दण्डविधानेन च तटस्थतासिद्धान्तस्य बीजारोपणं भवति, कौटल्यः ईदृशीं तटस्थतानीतिम् अर्थशास्त्रे निर्दिशति। स कथयति 'न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत' (७।१), अर्थात् न कश्चिदपि शत्रुः माम् अभिभवितुं शक्नोति, न चाहं कमपि अभिभवितुम् ईहे। अस्याम् अवस्थायाम् आसननीतिः पालनीया। एतदवसरे कौटल्यः राज्ञस्तां स्थितिं चित्रयति यदा स शत्रुणा पराजेतुं न शक्यते। स्वयं च स स्वरक्षणे शक्तः। सहैव तस्य ईदृशी अपि स्थितिः यत् सोऽपि शत्रुं पराजेतुं न प्रभवति। अत एव ईदृश्यां स्थितौ सशस्त्रतटस्थनीतिः आश्रयणीया। अत्र कौटल्यस्य नीतेः इदं तात्पर्यं यद् यदा शक्तिसंचयो भवेत्, तदा सशस्त्रतटस्थनीतेः आश्रयणं लाभकरम्। आक्रमणसमये कथमपि सशस्त्रतटस्थनीतिः नादरणीया। आधुनिकानां कूटनीतिक्यां भाषायामपि सशस्त्रतटस्थनीतेः इदं तात्पर्यं यद् यदा राष्ट्रं शत्रून् नाशयितुम् अक्षमम्, आक्रमणविषयककार्यक्रमस्यापि न स्थितिः तदा तटस्थेन भाव्यम्, किन्तु

राष्ट्रान्तरैः शत्रुराष्ट्रेण वा कृतस्य प्रतिरोधस्य प्रतीकारः आवश्यकः। कदम्बराज्यस्य ककुस्थवर्मणः अपि ईदृशी एव तटस्थनीतिः आसीत्, परन्तु तस्य तटस्थनीतिरपि बहूनां राज्ञां हृदयानि कम्पयामास।[1] शक्तिविहीनस्य राज्यस्य तटस्थनीतेः अपेक्षया ककुस्थवर्मणः तटस्थनीतिः अधिकम् उपयोगिनी अमन्यत। तेन स्वसमकालिकेषु राजसु आदरो लब्धः। पार्श्ववर्तीनि च राज्यानि तस्माद् बिभ्यति स्म।

एवं वयं पश्यामो यत् प्राचीनभारते तटस्थतानीतेः पूर्णतया विकासः प्रयोगश्च आसीत्। शक्तिमतां दुर्बलानां चेति उभयेषामपि कृते तटस्थतानीतिः व्यवहार्या आसीत्, परन्तु बलवतां कृते सा अधिकम् उपयुक्ता। कालस्थित्याद्यनुसारम् अत्र परिवर्तनानि अभवन्। येषां कूटनीतिकं महत्त्वम् आसीत्, अद्यत्वेऽपि भारतवर्षं परिपालयति। शक्तिसंचयानुकूलं मानवतावादिनीत्यनुकूलमेव च तटस्थतानीतेः समन्वयोऽभूत्। यः भारतीयगौरवानुरूपः एव। स्वर्गीयेण प्रधानमन्त्रिणा नेहरूमहाभागेन एकदा कथितं यत् न भारतं चीनदेशं विजेतुं शक्नोति, न चीनदेशो भारतम्। यतः द्वावपि देशौ महान्तौ। इत्थं वदता नेहरूमहोदयेन पूर्ववर्तिनः आचार्यस्य चाणक्यस्यैव वचनानि आम्रेडितानि "न मां परो नाहं परमुपहन्तुं शक्त इत्यासीन्"।

मण्डलसिद्धान्तः

राष्ट्रान्तरीयनीतौ राष्ट्राणां पारस्परिकेण सम्बन्धेन विश्वशान्तिः समृद्धिश्च सम्भाव्येते। सर्वसाधनसम्पन्नोऽपि राजा मित्रं विना दृढो भवितुं न शक्नोति। दुर्बलोऽपि सखा यदि कृतज्ञः कर्त्तव्यपरायणश्च तदा स उपयुज्यते।[2] राजनीतेः निकषोपलः भूसम्पन्मित्राणां प्राप्तिः एव ज्ञायते।[3] मित्रहिरण्यपृथिवीषु पृथिव्याः अधिकं महत्त्वम्।[4] राज्ञः किमपि मित्रं स्थायि न भवति, यतः मित्रं स्वार्थापेक्षम्।[5] मित्राणि चतुर्विधानि भवन्ति—(१) सहार्थम्, (२) भजमानम्,

१. एपि० इ० ७।५।१३।

२. मनु० ७।२०८।

३. मनु० ७।२०६; याज्ञ० १।३५२।

४. संहितप्रयाणे मित्रहिरण्यभूमिलाभानामुत्तरोत्तरो लाभः श्रेयान्। मित्रहिरण्ये हि भूमिलाभाद्भवतः मित्रहिरण्यलाभात्। यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति स श्रेयान्। कौ० ७।९।१-२।

५. न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित्सुहृत्।
अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा॥
(शान्ति० १३८।११०)

कारणेन हि जायन्ते मित्राणि रिपवस्तथा। कामन्दक० ८।५२; वि० ध० सू० ३।१४५।१४; शान्ति० १४०।५; शुक्र० ४।१।६।

(३) सहजम् (४) कृत्रिमम्।[१] समानोद्देश्यमित्रं सहार्थं कथ्यते, पितृपितामहादिपरम्परागतं मित्रं भजमानम् इत्युच्यते। सहोदरो भ्राता भागिनेयो वा सहजमित्रम्। ईदृशः अन्योऽपि सम्बन्धी सहजमित्रम्। समयापेक्षं मित्रं कृत्रिमं मित्रम्, अर्थात् यत्कार्यवशेन भवति। एतानि मित्राणि औरसकृतसम्बन्धवंशक्रमागतरक्षित इत्यपि शब्दैः व्यवह्रियन्ते।[२] हृदयस्य पावित्र्यम् औदार्यं वीरता सुखदुःखसहभागिता मित्ररक्षायाः भावः इत्यादिभिः गुणैः राजा मित्रं कर्तुं प्रभवति।[३] धर्मार्थकामाः मित्रप्राप्तेः उद्देश्यभूताः। राज्ञः मित्रसम्बन्ध एव विकासमाप्तः सन् मण्डलसिद्धान्त इत्युच्यते।

राज्यस्य योगक्षेमौ शमे व्यायामे च निर्भरौ। षाड्गुण्यस्य उचितप्रयोगेण शमः व्यायामश्च लभ्यते। षाड्गुण्यत एव उत्थानपतनमध्यस्थितिरूपः त्रिविधः उदयः भवति। उदयः दैवकारणेषु मानवकारणेषु निर्भरः। मानवकारणेषु नयः अपनयश्च आयाति। नयेन योगक्षेमौ, अपनयेन च राज्यहानिर्भवति। नयेन आत्मगुणेन सम्पन्नो राजा विश्वं विजेतुं प्रभवति। प्रकृत्युत्साहाभ्यां सम्पन्नः कृतश्रमः विजयेच्छुश्च राजा विजिगीषुः कथ्यते।[४] इत्थञ्च विजिगीषुणा राज्यसीमाविस्तारेच्छुना सम्प्रभुतायाः सप्तभिः गुणैः सम्पन्नेन शक्तिमता प्रयत्नशीलेन च भाव्यम्। तत्र आत्मसम्पन्नीतिमत्तादयः गुणाः आवश्यकाः।

पार्श्ववर्तिराष्ट्रं विजिगीषोः शत्रुर्भवति। नीतिवाक्यमृतमतानुसारेण नैतदावश्यकं यत् सीमावर्तिराष्ट्रं शत्रुराष्ट्रं भवेत्।[५] तात्पर्यमिदं यत् सीमा निकटता दूरस्थता वा शत्रुत्वस्य मित्रत्वस्य वा न कारणम्, अपि तु स्वार्थवशेनैव शत्रवो मित्राणि च भवन्ति। सामान्यसिद्धान्तानुसारं सीमावर्तिराष्ट्रं शत्रुः भवति। तस्य वैशिष्ट्यान्यपि सन्ति।[७] विपत्तिग्रस्तः शत्रुः यातव्यः कथ्यते। अस्याम्

---

१. सहार्थो भजमानश्च सहजः कृत्रिमस्तथा। शान्ति० ८०।३।

२. कामन्दक० ४।७४।

३. काम० ४।७२।

४. कौ० ६।२; मनु० ७।१५४—२११; आश्रमवासी० ६।७; याज्ञ० १।३४५—३४८; काम० ७।११; अग्निपुराणम् २३३,४०; वि० ध० सू० २।१४५--१५०; नीतिवाक्यामृतम्, पृ० ३१७।

५. सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥
(कामन्दक० ८।६)

६. नीतिवाक्यामृतम् (षाड्गुण्यसम्पत्), पृ० ३२१।

७. अराजबीजी लुब्धः क्षुद्रपरिषत्को विरक्तप्रकृतिरन्यायवृत्तिरयुक्तो व्यसनी निरुत्साहो दैवप्रमाणो यत्किञ्चनकार्यगतिरनुबन्धः क्लीबो नित्यापकारी चेत्यमित्रसम्पत्। एवंभूतो हि शत्रुः सुखः समुच्छेत्तुं भवति। कौ० ६।१।१३-१४।

अवस्थायां सः अवश्यम् आक्रमणीयः।[1] चतुर्विधाः शत्रवः सन्ति—(१) यातव्यः, (२) उच्छेदनीय, (३) कर्शनीयः, (४) पीडनीयः। सीमावर्तिशत्रुः यदि व्यसनी, हीनबलः, प्रकृतिविरक्तश्च भवति तदा स यातव्यः; स आक्रमणीयः। दुर्बलः दुर्गमित्रहीनश्च उच्छेत्तव्यः, बलहीनः शत्रुः पीडनीयः। प्रबलमन्त्रयुक्तः बलवांश्च शत्रुः कर्शनीयः कथितः। उच्छेदनीयः समूलम् उन्मूलनीयः; पीडनीयस्य बलनिग्रहः कार्यः। कर्शनीयस्य शत्रोः कोशशक्तिः दण्डशक्तिश्च समापनीया।[2]

शत्रवः त्रिविधाः भवन्ति। एवं मित्राण्यपि त्रिविधानि। सहजम्, कृत्रिमम्, प्राकृतञ्च। मातुलादयः सहजमित्राणि, सम्पदा उपलब्धाः जनाः कृत्रिमाणि, परिस्थितिविशेषेण कृतज्ञम्, शत्रुसीमावर्तिराष्ट्रं वा प्राकृतमित्रम्। यतः तन्मण्डलस्य प्रकृतिः। सहजशत्रुः परिवारे जायते, अर्थात् परिवारीयः पितृव्यपुत्रादिः सहजशत्रुः। विजिगीषोः क्षतिकर्ता कृत्रिमशत्रुः, विजिगीषुणा यस्य क्षतिः क्रियते सोऽपि च कृत्रिमशत्रुः। सीमावर्ती शत्रुः प्राकृतशत्रुः। विष्णुधर्मोत्तरे प्राकृतकृत्रिमयोः ऐक्यमेव स्वीकृतम्। कामन्दकेनापि सहजकृत्रिमश्चेति भेदद्वयमेव अङ्गीकृतम्।[3]

विजिगीषुः अनेकैः राजभिः परिवृतो भवति। तस्य पुरोवर्तिराज्यं शत्रुः भवति। शत्रुपार्श्ववर्तिराज्यं विजिगीषोः मित्रं स्वीकृतम्। तदुत्तरवर्तिराज्यं च अरिमित्रम्। अरिमित्रराज्यस्य सीमावर्ति राज्यं मित्रमित्रम्। तदुत्तरवर्ति च राज्यम् अरिमित्रमित्रम्। यदा विजिगीषोः पुरोवर्तिराज्यं शत्रुराज्यम्, तदा दिशान्तरवर्तिराज्यं पार्ष्णिग्राहराज्यम् उच्यते। ततः पश्चिमदिशायां वर्तमानं राज्यम् आक्रन्दम् इति उच्यते। विजिगीषोः मित्रं च तद् भवति किन्तु पार्ष्णिग्रहणेन हेतुना पृथग्भूतं राज्यं मन्यते, आक्रन्दराज्यस्य पार्श्ववर्ति तथा पार्ष्णिग्राहराज्यस्य मित्रं राज्यं पार्ष्णिग्राहासारम् इत्युच्यते। आक्रन्दस्य राज्यस्य मित्रं पार्ष्णिग्राहासाराच्च दूरवर्तिराज्यम् आक्रन्दसारम् इति कथ्यते।[4]

---

१. अरिसम्पद्युक्तः सामन्तः शत्रुः। व्यसनी यातव्यः अनपाश्रयो दुर्बलाश्रयो वोच्छेदनीयः। विपर्यये पीडनीयः कर्शनीयो वा। कौ० ६।२।१९-२१।

२. अरिः पुनश्चतुर्विधः। यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन। तत्र यातव्योऽनन्तरभूमिपतिः। व्यसनी हीनबलो विरक्तप्रकृतिः। विदुर्गो मित्रहीनो दुर्बलश्चोच्छेत्तव्यः। पीडनीयो मन्त्रबलहीनः। प्रबलमन्त्रबलयुक्तः कर्शनीयः।

> निर्मूलनात्समुच्छेदं पीडनं बलनिग्रहम्।
> कर्शनं तु पुनः प्राहुः कोशदण्डापकर्षणात्॥

(याज्ञ० १।३४५।८ अत्र मिताक्षरा)

३. वि० ध० सू०. २।१४५।१५-१६; अग्निपु० २३३।२१-२२; कामन्दक० ८।५६।

४. यो विजयीषो प्रस्थितेऽपि प्रतिष्ठमाने वा पश्चात्कोपं जनयति स पार्ष्णिग्राहः। पार्ष्णिग्राहाद्यः पश्चिमः स आक्रन्दः पार्ष्णिग्राहमित्रमासार आक्रन्दमित्रञ्च। नी० वा० पृ०२१६।

विजिगीषुराज्यशत्रुराज्ययोः सीमायां वर्तमानं राज्यं मध्यमराज्यम्। राज्यद्वये सन्तुलनार्थं तस्य कृते सौविध्यं भवति। उदासीनराज्यं बलवद् भवति। एतच्च अरिविजिगीषुमध्यमेभ्यः पृथगेव भवति। सर्वेषां निग्रहे च प्रभवति। कुल्लूकभट्टः कौटल्यमतादन्यदेव मतं स्थापयति। कौटल्यमतानुसारं विजिगीषोः अभिमुखं समीपे दूरे वा वर्तमानम्, किन्तु कारणविशेषैः विजिगीषोः व्यवहारेण असन्तुष्टं यद् राज्यं तद् उदासीनम्।[1] मिताक्षराकृता अरिमित्रोदासीनेष्वेव पार्ष्णिग्राहाक्रन्द – पार्ष्णिग्राहासाराक्रन्दासारादीनाम् अन्तर्भावः स्वीकृतः।[2] उदासीनमपि त्रिविधम्। मध्यमराज्यं विजिगीषुराज्यशत्रुराज्ययोः सीमावर्ति सदपि ताटस्थ्येन स्थातुम् ईहते। अरिमध्यमविजिगीषूदासीनानि राज्यानि सम्प्रभुत्व-सम्पन्नानि राज्यानि। मित्रम्, मित्रमित्रम्, आक्रन्दम्, आक्रान्दसारम् इत्येतानि राज्यानि विजिगीषुसमानानि। अरिमित्रम्, अरिमित्रमित्रम्, पार्ष्णिग्राहम्, पार्ष्णि-ग्राहासारम् इत्येतानि अरिकोटिकानि स्वीकृतानि। इत्थं विजिगीषुशत्रुः, मध्यमम्, उदासीनञ्च इत्येतानि राज्यानि मण्डलस्य मूलभूतानि स्वीकृतानि।[3] कामन्दकेन कथितं यदेतदेव राज्यचतुष्टयम् आश्रित्य मण्डलसिद्धान्तः प्रतिष्ठितो भवति। परन्तु स्वीयं विचारं प्रकटयता तेन लिखितं यन्मण्डलसिद्धान्तः त्रयमेव आश्रयते—मित्रम्, उदासीनम्, रिपुञ्च।[4]

कौटल्यमतानुसारं द्वादशभी राज्यैः मण्डलं सम्पद्यते, उशनसोऽपि एतदेव मतम्। कामन्दकेन मण्डलविषये विभिन्नानि मतानि सूचितानि, किन्तु द्वादशानां राज्यानां मण्डलं भवति, इत्येव मतं सर्वसम्मत्या आद्दतम्।[5] अष्टोत्तरशतपर्यन्तं प्रकृतयः स्वीकृताः। मनुनापि द्वादशानां राज्यानां प्रकृतयः सम्भूय द्वासप्ततिः भवन्ति इति स्वीकृतम्।[7] दशकुमारचरिते नयरूपस्य वृक्षस्य द्वासप्ततिः पत्राणि कथितानि।

---

१. अरविजिगीष्वोर्भूम्यनन्तरः संहतासंहतयोरनुग्रहसमर्थः निग्रहे चासंहतयोर्मध्यमः। अरिविजिगीषुमध्यानां बहिः प्रकृतिभ्यो बलवत्तरः संहतासंहतानामरिविजिगीषु-मध्यमानामनुग्रहे समर्थो निग्रहे चासंहतानामुदासीन.–कौ० ६।२।२६-३०; वि० धर्मो० २।१४५।११-१२; अग्नि० पु० २४०।३-५।

२. याज्ञ० १।३४५ मिताक्षरा।

३. मनु० ७।१५५-१५६।

४. कामन्दक० ८।२०।

५. कामन्दक० ८।८६।

६. कामन्दक० ८।२०-४१।

७. मनु० ७।१५७; एवं चतुर्मण्डलसंक्षेपः। द्वादश राजप्रकृतयः। षष्टिर्द्रव्यप्रकृतयः। संक्षेपेण द्विसप्ततिः। तासां यथास्वं सम्पदः शक्तिः सिद्धिश्च। बलं शक्तिः। सुखं सिद्धिः। शक्तिस्त्रिविधा। कौ० ६।२।३५-४२;

मण्डलस्थां च या चिन्ता राजन् द्वादश राजिका।
द्विसप्ततिमिश्चैव प्रोक्ता या च स्वयम्भुवा॥
(शान्ति० ५९।७०-७१)

शक्तिसन्तुलनं मण्डलसिद्धान्तस्य उद्देश्यमासीत्। राजानं शक्तिशालिनं कर्तुम् अयं सिद्धान्तः व्यवस्थापितः।[१] स्वार्थवशेन मित्रं शत्रुः भवितुं शक्नोति।[२] तात्पर्यमिदं यन्मण्डलं सामान्यसिद्धान्ततया स्वीकर्तुं शक्यम्; मण्डलसिद्धान्तः शाश्वतः इति मत्वा विचारयितुं न शक्यते।[३]

कौटल्येन मण्डलसिद्धान्तः शक्तिविषयकसिद्धान्तेन षाड्गुण्यसिद्धान्तेन च सह योजितः। उचितरीत्या शक्तेः प्रयोगेणैव राजा साफल्यं लब्धुं शक्नोति। स तिसृषु शक्तिषु गुणषट्कस्य प्रकारं स्वीकुर्यात्। इदं षाड्गुण्यम् आश्रित्य मण्डलीयराजसु व्यवहरणीयम्। वातव्याधिराचार्यः केवलं सन्धिः विग्रहश्चेति प्रकारद्वयमेव स्वीकृतवान् किन्तु तन्मतं खण्डयन् कौटल्यः षड्गुणान् मन्यते, तांश्च व्याचष्टे। तदनुसारं पणबन्धः सन्धिः, अपकारः विग्रहः, उपेक्षा आसनम्, परार्पणम् संश्रयः, अभ्युच्चयः यानम्, सन्धिविग्रहः द्वैधीभाव एतदेव षाड्गुण्यम्। दुर्बलो राजा स्वरक्षार्थं सन्धिम् आश्रयति। विकसितं राज्यं प्रति शत्रुभावः, समानशक्तिमतः अधिकशक्तिमतो वा विषये उपेक्षा। आक्रमणसामर्थ्ये सति यानम्, शक्तिहीने संश्रयः, सहायसाध्ये कार्ये द्वैधीभावः स्वीक्रियते।[४] एतेषामपि अनेके भेदा भवन्ति।

इत्थम् अस्माभिः राष्ट्रान्तरीयनीतिविषये नैतिकीनां व्यावहारिकीणां च नीतीनां निर्देशः कृतः। अनेके आवश्यकाः अपि विषयाः विस्तरभिया मिया परित्यक्ताः। परन्तु तेषां तत्त्वानां विवेचनम् आवश्यकं मन्यामहे, येन राष्ट्रान्तरीयनीतेः उद्देश्यं स्पष्टं स्यात्। स्पष्टं यत् शान्तिः मानवकल्याणं च भारतीयायाः राष्ट्रान्तरीयनीतेः उद्देश्यभूते। एतदनुश्रित्यैव तेन राष्ट्रान्तरीयनीतेः विकासः कृतः। किन्तु स्वस्वरूपं स्वगौरवञ्च तेन रक्षितम्।

---

१. मनु० ७।१७७, १८०।

२. मनु० ७।१७७ मेधातिथिः।

३. नरेन्द्रनाथ लॉ; स्टडीज् इन एन्शेंट हिन्दू पॉलिटी, पृ० १९५-२०८। पी० वी० काणे; हिस्ट्री ऑफ धर्मशास्त्र, ख० ३, पृ० २२२।

४. तत्र पणबन्धः सन्धिः। अपकारो विग्रहः। उपेक्षमाणमासनम्। अभ्युच्चयो यानम्। परार्पणं संश्रयः। सन्धिविग्रहोपादानं द्वैधीभावः इति षड्गुणाः। परस्माद्धीयमानः सन्दधीत। अभ्युच्चीयमानो विगृह्णीयात्। न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत्। गुणातिशययुक्तो यायात्। शक्तिहीनः संश्रयेत। सहायसाध्ये कार्ये द्वैधीभावं गच्छेत्। इति गुणावस्थापनम्। कौ० ७।१।६।१८; रघुवं० ८।२१; वि० ध० सू० २।१५०।२-३; याज्ञ० १।३४६। मिता०; षाड्गुण्यसम्बन्धे विशेषतो द्रष्टव्यः— कौ० ७ अधि:; मनु० ७।१६०; कामन्दक० ६।१४; वि० ध० २।१४५-१५; अग्नि० पु० २४०; मानसो० पृ० ६४-११६; राजनीतिप्र० पृ० ३२४-४१३।

### राज्यस्य सम्प्रभुता तस्याः विकृतिश्च

सम्प्रभुताशब्दः आधुनिकः इति मन्यते, परन्तु वैदिककालत एव भारतीय-राजनीतौ अस्य अस्तित्वम् अस्ति। वैदिककालतः षोडशशताब्दीपर्यन्तं देशकाल-स्थित्याद्यनुसारं तस्य स्वरूपं परिवर्तितम् अभूत्। परन्तु एतेन परिवर्तनेन सहैव इदमपि अवधेयम् अस्ति यत् कदापि तस्य स्वरूपं विशेषतः स्मृतिकालपर्यन्तं केन्द्रितं नाभूत्। अस्य कारणमिदं यत् सभासमित्यादिसंस्थाभिः भारते सम्प्रभुता सञ्चालिता आसीत्। राजतन्त्रस्य विकासः आभिरेव सामाजिकीभिः संस्थाभिः भवितुम् अशकत्। फलतः राजतन्त्रं सम्प्रभुतां वा प्रकटयता येन केनचित् संघटनेन सह समाजस्य सम्बन्धः आसीत्। अन्तिमकालपर्यन्तं राज्ञो विषये एषा व्यवस्था आसीद् यत् स एकाकी एव व्यवस्थापनशासनादिकं कर्तुं न शक्नोति। तेन सह सामाजिकानां प्रतिनिधीनां मन्त्रिमण्डलस्य च सम्बन्धः आसीत्। विधायिका शक्तिः कदापि राज्ञः हस्ते नासीत्। अतः राजा सम्प्रभुतायाः एकमात्रम् अधिष्ठानं भवितुं नाशकत्।[१]

सम्प्रभुतायाः कानिचिन्मूलभूतानि लक्षणानि सन्ति। किं राष्ट्रं सम्प्रभुः किञ्च न, इत्येतत्परिज्ञानानन्तरमेव तद् राष्ट्रान्तरीयक्षेत्रे सम्मन्यते स्म। अद्यत्वे अपि राष्ट्रान्तरीयक्षेत्रे एतद् अवधीयते। यावत्पर्यन्तं राष्ट्रान्तरीयसंघटनं कस्यचिद् राज्यस्य सम्प्रभुतां न स्वीकरोति, तावत् तस्य सम्प्रभुत्वं सार्वभौमं भवितुं न शक्नोति। कौटल्यः मनुते यत् केवलेन जनपदेन क्षेत्रफलेन च राज्यं राज्यतां नाप्नोति। संविधाने राष्ट्रे च श्रद्दधाना जना अपि तत्र स्युः। कौटल्येन व्यक्तेर्गुणेषु भक्तिः शुचित्वं चेति द्वयं गणितम् अस्ति। स्पष्टं यत् सम्प्रभुराज्यार्थम् एकस्मिन् संविधाने विश्वसन्तो नागरिकाः स्युः इति। इत्थं कौटल्येन सम्प्रभुतायाः यत् स्वरूपम् उपस्थापितम्, तत्र जनसंख्याक्षेत्रफलादिवद् एकस्मिन् संविधाने नागरिकाणां विश्वासोऽपि अपेक्ष्यते। स एतदपि मन्यते यद् राष्ट्रमण्डलेनापि भाव्यम्। अर्थाद् राज्यतन्त्रेऽपि केवलेन राज्ञा राज्यस्य सम्प्रभुत्वं न भवति। तेन सह सामाजिकसंघटनमपि अपेक्षितम्।[२]

१. द्रष्टव्यः—आर०सी० मजूमदार; कॉरपोरेट लाइफ इन एंशेंट इण्डिया, पृ० ३७; एन. एन. लॉ; सम आस्पेक्ट्स ऑफ एंशेंट इण्डियन पॉलिटी, पृ० १; के० पी० जायसवाल; हिन्दू पॉलिटी, पृ० २८, ख० २; अल्तेकर; स्टेट एण्ड गवर्नमेण्ट इन एंशेंट इण्डिया, पृ० ६७।

२. नह्यजनो जनपदो राज्यम जनपदं वा भवतीति कौटल्यः—अर्थ० १३।४; भक्तशुचि-मनुष्य इति जनपदसम्पत्—अर्थ० ६।१।

यस्य स्फीतो जनपदः सम्पन्नप्रियराजकः।
सन्तुष्टपुष्टसचिवो दृढमूलः स पार्थिवः॥
(महा० भा० शा० १४।१)

कौटल्यकालाद् आटविकराज्यानाम् अधिकं विस्तारः आरब्धः। तेषु राज्येषु उक्तानि वैशिष्ट्यानि नोपलभ्यन्ते। लघुसंघटनानां राज्यस्य सम्प्रभुतायां गणना क्रियते। डॉ० रायचौधरीमहोदयेन स्वीकृतं यत् समुद्रगुप्तेन अनेकानि आटविकराज्यानि नाशितानि। एतद्विषये प्रमाणं प्रयागस्थस्तम्भलेखेऽस्ति।[1] कौटल्यकथनानुसारं परिज्ञायते यद् एतेषां लघुराज्यानां सीमितं स्थानीयं स्वातन्त्र्यम् आसीत्, परन्तु नैतानि राज्यानि सम्प्रभुराज्यानि। युद्धावसरे तेषाम् उपयोगः क्रियते स्म। तदानीं च तेषां सम्प्रभुतायाः पूर्णतया नियन्त्रणम् आसीत्।

कौटल्येन आर्यराज्यम्, अनार्यराज्यञ्चेति द्वेधा राज्यं विभाजितम्। जातिदृष्ट्या न राज्यस्य अनार्यत्वम् अभिप्रेतम्, अपि तु सभ्यताम् अपसार्य अमानवीयकार्यैः विकासम् आप्तं राज्यम् अनार्यराज्यम् इति। कौटल्यः कथयति यद् यस्य राज्यस्य विषये एतद्राज्यं मानवतानियमानां परिपालनं न करिष्यति इति अन्येषां राज्ञां राष्ट्रमण्डलस्य च विश्वासः तस्य राज्यस्य राष्ट्रमण्डलीया सदस्यता न स्वीकार्या। इत्थञ्च आधुनिकराष्ट्रान्तरीयविधानपक्षः पुरः आयाति।[2] अद्यापि चीनदेशस्य राष्ट्रसंघसदस्यता न स्वीकृता, यतः तेन मानवाधिकारघोषणापत्रस्य नैतिकतायाः व्यवहारो न सम्पादितः।

कौटल्यस्य अन्येषाम् आचार्याणां च विवरणेन स्पष्टं यद् यत्र सर्वाणि राज्यानि न समकक्षाणि, तत्र समं हीनं ज्यायश्चेति भेदत्रयम् अस्ति। तान्येव राज्यानि समानम् निम्नम् उच्चञ्चेति कथयितुं शक्यन्ते।[3] एतच्च तद्वर्गीकरणेन विशदीभवति। मौर्यकाले गुप्तकाले च विभिन्नानां प्रान्तानां कानिचित् सङ्घटनानि गणतन्त्रात्मिकानि आसन्।[4] तैः स्थानीयाः प्राशासनिकाः अधिकाराः लब्धा आसन्। तन्निरीक्षणार्थञ्च केन्द्रतः अधिकारिणः नियुक्ताः।[5] एवंविधानां राज्यानाम् एको वर्गः कथयितुं शक्यते। द्वितीयः वर्गः हर्षवर्धनस्य आसीत्। तत्र आन्तरिकाणि बाह्यानि च शासनानि केन्द्रेण नियन्त्र्यन्ते स्म। एतेषां राज्यानां विस्तारः इत्थमासीद् यत् तेषाम् अवान्तराणि सङ्घटनान्यपि आसन्। तत्र हीनस्य समस्य च सम्बन्धः स्फुटो भवति। सर्वाणि राज्यानि समानानि नासन्, अपि तु तत्र कानिचित् सामन्तराज्यान्यपि आसन्। महाभारते ईदृशाः राजानः निर्दिष्टाः। कौशलस्य महेन्द्रः, महाकान्तारस्य व्याघ्रराजः, कुरूलस्य मन्त्रराजः इति एते राजानः एतत्कोटिका एव आसन्। एतेषु समुद्रगुप्तस्य नियन्त्रणम् आसीत्।

---

१. पोलिटिकल हिस्ट्री ऑफ एन्शेंट इण्डिया, पृ० ४५१।

२. लॉरेन्स; प्रिन्सिपल्स ऑफ इण्टरनेशनल लॉ, पृ० ५०।

३. अर्थ० ७।३; शुक्र० १।१८४-७।

४. मजूमदार; एंशेण्ट इण्डिया, पृ० ११८।

५. महा० भा० शा० ६९।१०।

कौटल्यस्य विवरणेन राज्यानां प्रबन्धसमितेः ( न्यासस्य ) अपि स्वरूपं पुरः आयाति। तदनुसारं दुर्बलराज्यस्य संरक्षणं सबलराज्यस्य कर्त्तव्यम् ; तदर्थं दुर्बल-राज्येन स्वयं सबलराज्यं समाश्रयणीयम्।[1] षाड्गुण्येऽपि समाश्रयः गण्यते। मनुमतानुसारं कासु परिस्थितिषु समाश्रयो गुणः ग्राह्यो भवति इत्यस्य इत्थं विवरणम्—राज्यं यदा अत्यधिकं दुर्बलम् , सबलैः शत्रुभिः पीड्यमानं वा भवेत् तदा तत्समाश्रयम् आश्रयेत्।[2] एवंविधानां राज्यानां महती नामावली अशोक-समये समुद्रगुप्तसमये च उपलभ्यते। अनेकानि राज्यानि एताभ्याम् ( अशोक-समुद्रगुप्ताभ्याम् ) संरक्षितानि आसन्। यासु परिस्थितिषु समाश्रयः अपेक्षणीयः, तासां परिस्थितीनां विवरणं कुर्वन् कौटल्यः इमं निष्कर्षम् आसादयति यत् संरक्षकं राज्यं संरक्षितस्य राज्यस्य आन्तरिकेषु अपि कार्येषु हस्तक्षेपं कर्तुं प्रभवति।[3] अस्यां स्थितौ संरक्षितैः राज्यैः करदरूपेण संरक्षकस्य उत्सवेषु उपस्थेयम् आसीत्। सङ्कट-नेषु तेषां सदस्यता स्थानं च नासीत्।

प्राचीनभारते राष्ट्रमण्डलीयसदस्यत्वप्राप्तिं विना राज्यस्य सम्प्रभुत्वं न स्वीक्रियते स्म। अतः राष्ट्रान्तरीयसङ्कटने स्थानं तत्सङ्कटनीयसौविध्यं च लब्धुम् इदम् आवश्यकम् आसीद् यद् राज्यस्य राष्ट्रमण्डलीया सदस्यता स्यादिति। एतदर्थं केचन विशेषाः नियमाः पालनीया आसन्। राज्यानि स्वातन्त्र्यप्राप्त्यनन्तरम् उत्सवेषु आमन्त्र्यन्ते स्म। तत्र तत्स्वीकृतिः भवति स्म। 'उत्सवः' राजसूयाश्वमेध-प्रभृतयः एवंविधा उत्सवाः अभूवन्। एषु उत्सवेषु सर्वे राजानः राज्यानि वा न आमन्त्र्यन्ते स्म। एषु उत्सवेषु ते एव राजानः आगन्तुं शक्ताः, येषां सम्प्रभुता स्वीकृता स्यात्। स्वतन्त्रराज्यस्य सहयोगिराज्यं राष्ट्रमण्डले तस्य स्वतन्त्रराज्यस्य सदस्यताविषये प्रस्तावं करोति स्म। धर्मपालेन चक्रायुधविषये ईदृगेव प्रस्तावः कृतः। मत्स्यः, भोजः, कुरुः, अवन्तिः, गान्धारः इत्येते राजानः तं प्रस्तावं समर्थितवन्तः।[4] स्वतन्त्रभारत - पाकिस्तान - बर्मा - लङ्का एतेषां देशानां वर्तमानराष्ट्रसङ्घीयसदस्यताविषये ब्रिटेनदेशेन एवंविधः प्रस्तावः कृतः।

---

१. शक्तिहीनस्समाश्रयेत– अर्थ० ७।१।

२. अर्थसम्पादनार्थञ्च पीड्यमानस्य शत्रुभिः। साधुषु व्यपदेशार्थं द्विविधः समाश्रयः स्मृतः। मनु० ७।१६८।

३ लब्धसमाश्रयः समयाचारिकवद् भर्तरि वर्तेत। दुर्गादीनि च कर्माण्यावाहविवाह-पुत्राभिषेकाश्वपण्यहस्तिग्रहणसत्त्रयात्राविहारगमनानि चानुज्ञातः कुर्वीत-अर्थ० ७।१५।४०-४१।

४. से० बु० ६।३-२५।

राज्यानां सम्प्रभुत्वनिरूपणावसरे अस्माभिः कथितं यद् राज्यानां त्रयो भेदा आसन्। शक्तिः सिद्धिश्च तेषाम् आधारौ आस्ताम्। शक्तिस्त्रिधा भवति–मन्त्रशक्तिः, प्रभुशक्तिः, उत्साहशक्तिश्च। इत्थमेव मन्त्रसिद्धिः, प्रभुसिद्धिः, उत्साहसिद्धिश्चेति सिद्धिरपि त्रिधा। एतासामेव उत्तमत्वं हीनत्वं च आश्रित्य समं हीनं ज्यायश्चेति राज्यं त्रिविधं भवति।[१] एतदेव आधृत्य तदीयानां व्यवहाराणां विषये त्रयः व्यवहाराः आयान्ति–राष्ट्रान्तरीयविधयः, उत्सवादिः, राष्ट्रान्तरीयसमारोहश्च। एषु अन्त्ययोः द्वयोः पक्षयोः अवसरे मानवतावादिदृष्टिकोणस्य सत्त्वेन वैषम्य-व्यवहारः अल्पीयानेव आसीत्। सर्वे च समानतया आद्रियन्ते स्म; किन्तु प्रथमपक्षे राज्यानां स्थानविषयकः सम्बन्धविषयकश्च व्यवहारः तेषां महत्त्वानुसारं क्रियते स्म। सर्वेषु व्यवहारेषु तेषां महत्त्वं विचार्यते स्म। शुक्रेण स्वसमानकालिकानां राज्यानां ये वर्गाः उक्ताः तत्र सामन्तवर्गतः चक्रवर्तिपर्यन्तं वर्गीकरणं स्पष्टी-भवति। राष्ट्रान्तरीयसम्बन्धे एषां वर्गाणां व्यवहारः पूर्वत एव विशेषतो ब्राह्मणग्रन्थ-कालतः प्रचलन्नस्ति। सार्वभौमम्, एकराड् इत्यादि राज्यानि ज्यायःकोटिकानि। अद्यापि राष्ट्रसंघे पञ्चानां राज्यानां स्थितिः विश्वराज्येषु सर्वोच्चा अस्ति।

राष्ट्रान्तरीयसम्बन्धेषु पारस्परिकसम्बन्धस्थापनस्यापि त्रयः आधाराः आसन्। एतान् आश्रित्य राज्यानां पारस्परिकाणि संघटनानि भवन्ति स्म। एतदनुसारं जायमानानि संघटनानि कौटल्येन वर्गत्रये विभाजितानि–आर्यसंघटनम्, यवनसंघटनम्, अनार्यसंघटनञ्चेति। हिन्दुबौद्धप्रभृतीनि भारतीयराज्यानि आर्य-संघटनम् इत्यनेन तस्य अभिप्रेतानि। यूनानप्रभृतीनि अभारतीयानि राज्यानि यवनसंघटनानि; आटविकानि राज्यानि च अनार्यसंघटनानि। कौटल्येन न केवलम् आर्यसंघटनस्य उत्तमता एवोक्ता, अपि तु तदेव संघटनम् उपयोगि इत्यपि प्रतिपादितम्।[२] परन्तु नेदम् अस्य तात्पर्यं यद् अनार्यसंघटनैः यवनसंघटनैः सह सम्बन्धो न करणीयः, अपि तु नीचतोच्चत्वदृष्ट्या आर्यपद्धतिरेव ज्यायसी इत्येव एतस्य तात्पर्यम्।[३] नन्दवंशीयस्य महापद्मस्य मृत्योरनन्तरम् आर्यसंघटनानाम् अन्यैः संघटनैः सह संघर्षोऽभूत्। यत्र मौर्यैः गुप्तैश्च आर्यपद्धतिः स्थापिता। एष संघर्षः न केवलं राज्यानामेव, अपि तु सभ्यतानामप्यासीत्।

उक्तेन विवेचितेन स्पष्टं यत् शक्तिं सिद्धिं सुखं च आधृत्य राज्यानां वर्गाः आसन्। एतत्त्रयमेव आधृत्य तेषां राष्ट्रान्तरीयसम्बन्धो भवति स्म।

---

१. अर्थ० ७।१०; ६।२०।

२. अलेक्जण्डर; इन्वेजन ऑफ इण्डिया, पृ० २६३, ३५४।

३. शुक्र० ७।४।

प्राप्तसम्प्रभुत्वानां राज्यानाम् अधिकारः आसीत् यत्ते उदीयमानानां राज्यानां कृते सम्प्रभुतां स्वीकुर्युः।[१] तत्स्वीकृत्यनन्तरमेव उदीयमानैः राज्यैः सम्प्रभुत्वं लब्धुं शक्यम्।[२] अश्वमेधादीनां यज्ञानां न तथा धार्मिकं महत्त्वम् आसीत्, यथा राजनीतिकम्। राजसूयाश्वमेधवाजपेयैन्द्रमहाभिषेकैः राष्ट्रसंघस्य राजनीतिकं महत्त्वं सुरक्ष्यते स्म।[3] सिकन्दरस्य आक्रमणसमये यूनानदेशीयैः अस्य व्यवहारो दृष्टः। इत्थं राज्यानां सम्प्रभुत्वस्य सिद्धान्तः व्यवहारश्च इत्येतद् द्वयमपि प्राचीन-भारतीयराजनीतिकविचारेषु क्रियाशीलम् आसीत्।

## युद्धाचारः

युद्धस्य मर्यादाम् अतिवर्तमानः बहिष्कार्यः इत्येष सिद्धान्तः सर्वमान्य आसीत्।[४] युद्धारम्भात्पूर्वं कौरवैः पाण्डवैश्च युद्धविषयकाः केचन नियमाः स्वीकृताः–

तेन सेनासमूहेन समानीतेन कौरवैः।
ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः॥
धर्मान् संस्थापयामासुर्युद्धानां भरतर्षभ।
निवृत्ते विहिते युद्धे स्यात्प्रीतिर्नः परस्परम्॥
यथापरं यथायोगं न च स्यात् कस्यचित्पुनः।
वाचा युद्धप्रवृत्तानां वाचैव प्रतियोधनम्॥
निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः कदाचन।
रथी च रथिना योध्यो गजेन गजधूर्गतः॥
अश्वेनाश्वी पदातिश्च पादातेनैव भारत।
यथायोगं यथाकामं यथोत्साहं यथाबलम्॥

---

१. मजूमदार; एंशेण्ट इण्डिया, पृ० २६।

२. यस्मै वै राजानो राज्यमनुमन्येत स राजा भवति न स यस्मै न (शत० ब्रा० ३।५।४)।

३. एन० एन० लॉ; सम आँस्पेक्ट्स आॅफ एंशेण्ट इण्डियन पॉलिटी, पृ० १५-१६; शुक्र० १।१८४-१८७; बी० के० सरकार; हिन्दू पॉलिटी, पृ० २६०-२६३।

४. अथ चेल्लङ्घयेदेवं मर्यादां क्षत्रियब्रुवः।
असंख्येयस्तदूर्ध्वं स्यादनादेयश्च संसदि॥
(महा० भा०, शा० ११६।६)।

समाभाष्य प्रहर्त्तव्यं न विश्वस्ते न विह्वले ।
एकेन सह संयुक्तः प्रपन्नो विमुखस्तथा ।
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन ।
न सूतेषु न धुर्येषु न च शस्त्रोपनायिषु ॥
न भेरीशङ्खवादेषु प्रहर्त्तव्यं कथञ्चन ।
एवं ते समयं कृत्वा कुरुपाण्डवसोमकाः ॥

(भीष्मपर्व १।२६-३३)

युद्धे शरणार्थिनां रक्षणम् आवश्यकम् आसीत् ।[२] शरणागतं सर्वपातकमपि रक्षेत् ( बार्हस्पत्यम् अर्थशास्त्रम् ३।५१ ), इमं नियमम् अतिवर्तमानो नरकं याति ।[३] अस्य नियमस्य पालनविषये उदाहरणानि लभ्यन्ते ( महा० विराट् १२७।४-५ )। शक्तिहीनः मरणासन्नः शत्रुः नाक्रमणीयः ।[४] परन्तु यस्माच्छत्रोः भयमस्ति, यश्च कूटनीत्या व्यवहरति स न कदापि क्षन्तव्यः ।[५] युद्धे अनुपस्थितानां निर्दोषाणां हननं न भवेत् ।[६] सेनापतेरभावे आत्मसमर्पणं कुर्वन्तः रणक्षेत्रात् पलायमाना वा

---

२. शत्रोरपि प्रसन्नस्य सोऽनृशंसः प्रतापवान् ।
दाताभयस्य बीभत्सुरमितात्मा महाबलः ॥

( वनपर्व १६१।१५ । )

याज्ञवल्क्य० १।३२६ ।

३. शुक्र० ४।११५५-५६ ।

४. क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे ।
पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः ॥

( सभा० २३।३२ । )

नामित्रो विनिकर्त्तव्यो नातिच्छेद्यः कथञ्चन ।
जीवितं ह्यप्यतिच्छिन्नः संत्यजेच्च कदाचन ॥

( शा० प० ६६।१५ । )

५. न मर्षणीयाः संग्रामे विश्रमन्तः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः ॥

(द्रोण० १८५।२ )

६. एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि ।
नैकस्य तु कृते लोकान् विनाशयितुमर्हसि ॥

( रामायण० अरण्य० ६५।६ । )

सैनिका न हन्तव्याः (शल्य० २९।९३-५)। अयुध्यमाने सैनिके आक्रमणं मन्वादिभिर्निन्दितम्।[१] कृषिसम्पत्तेः क्षतिर्न कार्या ( अग्नि० २३६।२२ )। परन्तु कौटल्यस्य व्यावहारिकमिदं मतं यद् यदि राज्ञः आक्रमणसमये शत्रुदेशीयप्रजया विरोधः कृतः, तदा कृषेः क्षतिमपि राजा कर्तुं शक्नोति। महाभारते एतदेव समर्थितम्।[२]

'ब्राह्मणो नाक्रमणीयः',[३] परन्तु शस्त्रमादाय रणक्षेत्रे उपस्थिते ब्राह्मणे आक्रमणं न अन्याय्यम्।[४] यतः शस्त्रं गृहीत्वा यः कश्चिदपि सम्मुखमायाति, तस्य हनने न कश्चिद्दोषः।[५] परन्तु आत्मत्राणाद्यर्थं ब्राह्मणः शस्त्रमादातुं शक्नोति।[६] ईदृशा अन्येऽपि अवसराः, यदा ब्राह्मणः शस्त्रं ग्रहीतुं शक्नोति[७]—

---

१. नायुध्यमानं पश्यन्तं न परेण समागतम्।
( मनु० ७।९२; शुक्र० ४।११।७१ )

२. शस्याभिहारं कुर्याच्च स्वयमेव नराधिपः।
असम्भवे प्रवेशस्य दहेद् दावाग्निना भृशम्॥
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजयेन्नरान्।
विनाशयेद् वा तत्सर्वं बलेनाथ स्वकेन वा॥
( शान्ति० १२६।३७-३८ )

३. गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा।
हीनप्राणजडान्धेषु सुप्तभीतोत्थितेषु च॥
मत्तोन्मत्तप्रमत्तेषु न शस्त्राणि च पातयेत्॥
( सौप्तिक० ६।२१-२ )

४. ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात्।
( उद्यो० १७६।२५ )

प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥
( शान्ति० ४६।१९ )

५. ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः॥
( उद्योग० १७८।५१-५२। )

६. ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन् न दुष्यति।
आत्मत्राणे वर्णदोषे दुर्दम्यनियमेषु च॥
( शान्ति० ७८।३४। )

७. शल्य० ६५।४२; शान्ति० ७८।२६।

अनीकयोः संहतयोर्यदीयाद् ब्राह्मणोऽन्तरा ।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत् ॥
मर्यादां शाश्वतीं भिन्द्याद् ब्राह्मणं योऽभिलङ्घयेत् ।
अथ चेल्लङ्घयेदेव मर्यादां क्षत्रियब्रुवः ॥
असंख्येयस्तदूर्ध्वं स्यादनादेयश्च संसदि ।
यस्तु धर्मविलोपेन मर्यादाभेदनेन च ॥
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः ।
धर्मलब्धाद्धि विजयाल्लाभः कोऽभ्यधिको भवेत् ॥

(शान्ति० ९६।८-११)

वैरस्य पञ्च कारणानि स्वीकृतानि—

वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं ससापत्नापराधजम् ॥

(शान्ति० १३९।४२)

विजयी राजा विजितस्य राज्ञः कन्यादिषु न बलात्कारं कुर्वीत—

नार्वाक्संवत्सरात् कन्या प्रष्टव्या विक्रमाहृता ।
एवमेव धनं सर्वं यच्चान्यत्सहसाऽऽहृतम् ॥

(शान्ति० ९६।५)

भीष्मेण काशिराजस्य कन्यात्रयमपहृतम्, स्वयं च ब्रह्मचारिता प्रतिज्ञाता । फलतः शल्येन सह विवाहयाय कर्तुम् अम्बाय स्वीकृतिमददात् । तदिच्छा-प्रतिकूलं न किमप्याचरितम् ।[१] युद्धे बन्दीकृता अपि वर्षानन्तरं मोचनीयाः ।[२] राज्ञा अधर्ममार्गेण विजयो न सम्पादनीयः ।[३] लोभग्रस्तः कर्त्तव्यच्युतो

---

१. आदि० १०२।११-५८; १०३।१२-८; १०२।६१-६२; १०२।६४ ।

२. बलेन विजितो यश्च न तं युद्धयेत भूमिपः ।
संवत्सरं विप्रणयेत् तस्माज्जातः पुनर्भवेत् ॥
(शान्ति० ९६।४)

३. सभा० २६।३१; ११६।१-२; ६०।३१ ।

गुरुर्वध्यः ।[१] निषिद्धानां शस्त्राणां प्रयोगो वर्जित आसीत् ।[२] "इषुलिप्तो न कर्णी स्याद-सतामेतदायुधम्" (शान्ति० ९५।११) । केचन ईदृशा जना येषु आक्रमणं निषिद्धम् । आचार्येण सह न योद्धव्यं यावच्छक्यम् ।[3] यदि लोभी आचार्यः कर्त्तव्यच्युतः, तदा तस्यापि हनने न दोषः ।[४] एतदावश्यकं यद् यदा गुरुणा सह युद्धम् अनिवार्यम् , तदा युद्धात् पूर्वं गुरोराज्ञा ग्राह्या इति ।[५] आज्ञाग्रहणानन्तरं प्रथमतः आक्रमणं गुरुपक्षतः स्यात् ।[६] युद्धारम्भात् पूर्वं युधिष्ठिरसैनिकैः अर्जुनसैनिकैश्च द्रोण-भीष्म-कृप-शल्यादीनाम् आशीर्वादान् गृहीत्वैव युद्धमारब्धम् ।[७] अत एव क्षत्रियधर्मः दारुण-तमः कथितः– "दारुणः क्षत्रियधर्मोऽयमृषिभिः सम्प्रदर्शितः" ( भीष्म० १४।६४ ) / तथा च—

---

१. आचार्यो नाभियोक्तव्यः पुरुषेण विजानता ।
( विराट० ५१।२ )

२. न कूटैरायुधैर्हन्याद् युध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि दिग्धैः नाग्निज्वलिततेजनैः ॥
( मनु० ७।९० )

न कर्णिभिर्न दिग्धैः वा प्रहरेत् ।
( बौ० ध० सू० १।१०।१० )

करोति कर्णिनो यश्च यश्च खड्गादिकृन्नरः ।
प्रयान्त्येते विशसने नरके भृशदारुणे ॥
( विष्णुपु० २।६।१६-७ )

३. एवं वृत्तं सदा क्षात्रं युध्यन्तीह गुरूनपि ।
( द्रोण० १८९।११ )

४. समयत्यागिनो लुब्धान् गुरूनपि च केशव ।
निहन्ति समरे पापान् क्षत्रियो यः स धर्मवित् ॥
( शान्ति० ५५।१६ )

५. आदिष्टस्तु यथा राजन् को न युध्येत मादृशः ।
( द्रोण० ११२।१४ )

६. यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति ।
ततोऽस्य प्रहरिष्यामि नास्य कोपो भवेदिति ॥
( विराट० ५५।४५ )

७. यथा मे न वधः कार्यः आचार्यस्य कदाचन ।
प्रतीपो नाहमाचार्ये भवेयं वै धनञ्जय ॥
( द्रोण० १३।७-८ )

तं च पुत्रात् प्रियतमं प्रतियोत्स्ये धनञ्जयम् ।
क्षात्रं धर्ममनुष्ठाय धिगस्तु क्षात्रजीविकाम् ॥
( उद्योग० १३९।५ )

द्रष्टव्यानि:– विराट०—१८।१८-१९; द्रोण० १६७।६-२७; भीष्म० ६३।२२, ३५, ८८ ।

पुत्रो भ्राता पिता चैव स्वस्रीयो मातुलस्तथा ।
सम्बन्धिबान्धवश्चैव योद्धया वै क्षत्रजीविना ॥
(शल्य० ४।९)

अतिक्रुद्धावस्थायामपि स्त्रियो न हन्तव्याः; ताः अहिंस्याः, ताः क्षन्तव्याः।[1] शिशुपालेन कृष्णः 'गोघ्नः' 'स्त्रीघ्नश्च' कथितः।[2] नीलकण्ठेन स्वशब्दकौशलेन एतत्समाधातुं चेष्टितम्। तथाहि गोघ्नशब्दः स्त्रीघ्नशब्दश्च नीलकण्ठेन अन्यथा व्याख्यातः। तद्यथा—"गोघ्नः इति गाम् वाचम्, हन्ति-हिनस्ति। यतो वाचो निवर्तन्ते इति श्रुतेः। स्वस्माद् व्यावर्तयति। तथा स्त्रीव स्त्री, सृष्टौ सहायभूता माया तद्धन्तरि।" परन्तु इदं व्याख्यानं पूर्वापरप्रसङ्गविरुद्धम्। एतस्य व्याख्यानस्य केवलम् इदमेव तात्पर्यं यत् कृष्णविषये उक्ताः आक्षेपाः यथाकथञ्चिन्निरसनीयाः। शिशुपालेन स्त्रियाः गोश्च सन्दर्भः इत्थम् उपस्थापितः—

स्त्रीषु गोषु न शस्त्राणि पातयेद् ब्राह्मणेषु च।
यस्य चान्नानि भुञ्जीत यत्र च स्यात् प्रतिश्रयः॥
इति सन्तोऽनुशासन्ति सज्जनं धर्मिणः सदा।
भीष्म! लोके हि तत्सर्वं वितथं त्वयि दृश्यते॥

---

१. न स्त्रियं हन्तुमर्हसि—आदि० १५३।२४।
स्त्रीषु गोषु न शस्त्राणि पातयेद् ब्राह्मणेषु च ।।
(सभा० ४१।३)
क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः।
(आदि० १५५।२)
अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचारिणः।
(आदि० २१७।४)
स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविन्दते।
(आदि० २१६।४६।)
अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि।
न हन्तव्याः स्त्रिय इति यद् ब्रवीषि प्लवङ्गम॥
(द्रोण० १६३।६७)
२. महा० सभा० ४१।१६।

ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन् कौरवाधम ॥
गोघ्नः स्त्रीघ्नश्च सन्भीष्म त्वद्वाक्याद्यदि पूज्यते ।
एवंभूतश्च यो भीष्म कथं संस्तवमर्हति ॥

(सभा० ४१।१३-१-६)

अस्मिन् प्रसङ्गे नीलकण्ठस्य व्याख्यानम् अनुचितमेव प्रतीयते । शिशुपालेन कृष्णविषये ये आक्षेपाः कृताः ते भीष्मेण समाहिताः, परन्तु गोघ्नताविषयकः स्त्रीघ्नताविषयकश्च आक्षेपः न भीष्मेण परिहृतः । निश्चितमेव एतद् यत् शिशुपालवधे यद्वर्णनं महाभारते कृतम्, तस्य राजनीतिको व्याख्या एतावत्पर्यन्तं न केनापि कृता । टीकाकारैः कृष्णस्य न्याय्यतां भगवत्त्ताञ्च उपपादयितुम् उक्तप्रसङ्गस्य महत्त्वमेव समापितम् । अस्तु स्त्री 'अवध्या' इत्येष नियमः स्वशरीरं परित्यज्यापि भीष्मेण रक्षितः ।[1] स्वशरीरं परित्यक्तम्, परन्तु पुरस्था शिखण्डिस्वरूपा स्त्री न हता भीष्मेण । स्त्रियः युद्धक्षेत्रं गच्छन्ति स्म, परं न तासां कुतोऽपि भयमासीत् ।[2]

शस्त्रहीनः, धनिकः, दाता, सुप्तपुरुषादयो नाक्रमणीयाः ।[3] "धनिनो बलमुख्याँश्च सान्त्वयित्वा पुनः पुनः" (शान्ति० ६९।३६); "तत्र दाता न हन्तव्यः क्षत्रियेण विशेषतः" (शान्ति० १३९।४३); "न वधः पूज्यते लोके सुप्तानामिह धर्मतः"

१. महा० आदि० ११।८३-४; भीष्म० ४३।४७; आदि० १०२; उद्योग० १७४, १७५, १७६, १९१, १९२; आदि० ११।८३; उद्योग० १९२।६६; १०७।७७-८५; उद्योग० १२२।१६, २०; भीष्म० ९८।१६-२२; ९९।२६; १०८।३६-६०; ११०।१-७; ११०।२०-२३; १८।९ आदयः ।

२. महा० द्रोण० ७७।६-११; शल्य० २६।६५-७६; सौप्तिक० ८।२४-२५, २८-३३; रामाय० अयोध्या० १२।१८-२६ ।

३. अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ।
न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः ।

(कर्ण० ९०।११२)

नैवासन्नद्धकवचो योद्धव्यः क्षत्रियो रणे ।

(शान्ति० ९५।७)

विशीर्णकवचं चैव तवास्मीति च वादिनम् ।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा नहि हिंसयेत् ॥

(शान्ति० ९६।३; मनु० ७।९१-३; शुक्र० ४।११७-१९)

(महा० सौप्तिक० ५।११)। शास्त्रेषु पुराणेषु नीतिग्रन्थेषु च एतद्विजयविषये व्यवस्था लभ्यते। महाभारते एतद्विषये बहूनि प्रमाणानि लभ्यन्ते। अस्माभिः आरम्भे एव भीष्मपर्वस्थः एष अंशः उद्धृतोऽस्ति, यः पक्षद्वयेनापि स्वीकृतः। अत्र शान्तिपर्वस्थः सः अंश उद्ध्रियते, यत्र युद्धाचारविषयिका सम्पूर्णा संहिता आयाति—

नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः।
अधर्मविजयं लब्ध्वा को नु मन्येत भूमिपः॥
अधर्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च।
सादयत्येष राजानं महीं च भरतर्षभ॥
विशीर्णकवचं चैव तवास्मीति च वादिनम्।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न हि हिंसयेत्॥
बलेन विजितो यश्च न तं युध्येत भूमिपः।
संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत्॥
नार्वाक् संवत्सरात्कन्या प्रष्टव्या विक्रमाहृता।
एवमेव धनं सर्वं यच्चान्यत्सहसाऽऽहृतम्॥
न तु वध्यधनं तिष्ठेत् पिबेयुर्ब्राह्मणाः पयः।
युञ्जीरन्नप्यनडुहः क्षन्तव्यं वा तदा भवेत्॥
राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते।
नान्यो राजानमभ्यस्येदराजन्यः कथञ्चन॥
अनीकयोः संहतयोर्यदीयाद् ब्राह्मणोऽन्तरा।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत्॥
मर्यादां शाश्वतीं भिन्द्याद् ब्राह्मणं योऽभिलङ्घयेत्।
अथ चोल्लङ्घयेदेव मर्यादां क्षत्रियब्रुवः॥
असंख्येयस्तदूर्ध्वं स्यादनादेयश्च संसदि।
यस्तु धर्मविलोपेन मर्यादाभेदनेन च॥
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः।
धर्मलब्धाद्धि विजयाल्लाभः कोऽभ्यधिको भवेत्॥

सहसानार्यभूतानि क्षिप्रमेव प्रसादयेत् ।
सान्त्वेन भोगदानेन स राज्ञां परमो नयः ॥
भुज्यमाना ह्ययोगेन स्वराष्ट्रादभितापिताः ।
अमित्रास्तमुपासीरन् व्यसनौघप्रतीक्षिणः ॥
अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि ।
सन्तुष्टाः सर्वतो राजन् राजव्यसनकाङ्क्षिणः ॥
नामित्रो विनिकर्त्तव्यो नातिच्छेद्यः कथञ्चन ।
जीवितं ह्यप्यतिच्छिन्नः संत्यजेच्च कदाचन ॥

(शान्ति० ९६।१-१५)

युद्धकाले सामान्यनागरिकधर्मोऽपि संशोधनीयो भवति, तदानीं शत्रुवधो यज्ञायते। मानवताया उन्मूलनार्थं प्रयतमानस्य उन्मूलनं कार्यम्, एष एव अनिवार्यो धर्मः। परन्तु अस्य नेदं तात्पर्यं यत् तदानीं सर्वथा निरंकुशतैव स्वीक्रियेत। तदानीमपि कांश्चिन्नियमान् अनुसृत्यैव युद्धं कार्यम्, सर्वथा नियमपरित्यागस्तु न श्रेयान्। ईदृशान् नियमान् आधृत्य युद्धसंचालनं बुद्धप्रभृतयः शान्तिवादिनोऽपि न निषेधन्ति (दि एसेन्स ऑफ बुद्धिज्म, पृ० ४३)। यथार्थमेव योद्धव्यम् इत्येषः सामान्यसिद्धान्तस्तु सर्वैरप्याचार्यैः स्वीक्रियत एव। युद्धे वधो भवति, परं सीमित एव, नासीमितः (महा० शा० ९६।१५)। शत्रोः तावदेव दमनं कार्यं यत् तस्य सर्वनाशाय पर्याप्तम्, सामान्या शक्तिर्न विध्वंसनीया। एष एव सिद्धान्तः राष्ट्रान्तरीयविधावपि स्वीकृतः (हिग्गिन्सः दि हेग पीस कांफ्रेंस, पृ० ५५-६)।

महाभारतानुसारं युद्धे वृद्धाः स्त्रियः बालाश्च न हन्तव्याः, पलायमानः, शरणागतो वा न प्रहरणीयः, पदातौ रथिना क्रियमाणम् आक्रमणम् अन्याय्यम्। नपुंसकः, कृतप्रणामः, दयाभिलाषी, मुक्तकेशः, शरणागतः, आत्मसमर्पकः, सुप्तः, युद्ध-विमुखः, अशस्त्रः, युद्धदर्शकः इत्येते न प्रहर्त्तव्याः। एवमेव भुञ्जानस्य, जलं पिबतः, मरणासन्नस्य च वधो न कार्यः। एकदा एकेन सह एक एव युद्ध्येत्। ईदृशी अतिमहती नामावली प्राङ्निर्दिष्टा, यत्र महाभारतकारस्य कथनं यद् अधर्मेण तु सर्वे एव विजयं लब्धुं शक्नुवन्ति, किन्तु धर्मयुद्धेन विजयप्राप्तिरेव वास्तवं कौशलम्। अधर्मयुद्धेन लब्धो विजयः अस्थिरो भवति। यादृशाः नियमाः महाभारते निर्दिष्टाः, प्रायः तादृशा एव ग्रोशसमहोदयेनापि स्वीकृताः।

अत्र विषये मनुशुक्रकौटल्यादिभिः यानि मतानि उपस्थापितानि, तदनुसारेण कथयितुं शक्यते यद् अन्येषां साधनानाम् असाफल्ये एव युद्धमाश्रणीयम्। कोऽपि

अधर्मयुद्धं नाश्रयेत्। सर्वे सैनिकाः आदर्शार्थं युद्धं कुर्युः; आदर्शश्च पूर्वोक्तरीत्या जानीयुः। क्षात्रधर्मच्युतेन पुरुषेण सम्पूर्णस्य समाजस्य अपमानः सम्भाव्यते। युद्धे आदर्शस्थाने वैयक्तिकक्रोधेर्ष्यादयः नादरणीयाः। युद्धे असीमिता (अनियन्त्रिता) हिंसा न सम्मान्या। शत्रुविनाशार्थं सामान्यजनशक्तेः धनशक्तेश्च ह्रासो न कार्यः। युद्धस्य वास्तविका घटकाः एव आक्रमणीयाः। युद्धे अयोग्याय सर्वथा सौविध्यं देयम्। यावत् शत्रुः आत्मसमर्पणं न करोति, तावत्पर्यन्तं युद्धं न समापनीयम्। मध्येयुद्धम् उभाभ्यामपि पक्षाभ्यां मान्यः। तटस्थः कश्चित् सन्धेश्चर्चां चिकीर्षति, तदा तदर्थं तस्मै अवसरो देयः। महाभारतेन एतद्विषये पुरोहितो ब्राह्मणश्च उल्लिखितः। ग्रोशसमद्गोदयेन आधुनिकेन विधिना पुरोहितस्य उल्लेखः कृतः।

सामाजिकदृष्ट्या धार्मिकदृष्ट्या च उक्तनियमानां पालनस्य अनिवार्यता स्वीकृता। परन्तु एतद्‌अवधेयमस्ति यद् एतेषां नियमानां प्रयोगः एकपक्षीयो नासीत्। युद्धं भागद्वये विभज्य एतेषां प्रयोगो भवति स्म—धर्मयुद्धम् अधर्मयुद्धञ्च। उक्ताः नियमाः धर्मयुद्धे आसन्। यदि विपक्षी अधर्मयुद्धं करोति, तदा नियमानां पालनं हानिकारकमेव। अत एव च मूर्खताद्योतकमपि तत्। उक्ताः नियमाः भारतीयानां पारस्परिकयुद्धत एव अधिकतया व्यवहारपदवीम् आयाताः। महाभारतयुद्धारम्भात् पूर्वम् उभाभ्यां पक्षाभ्याम् उक्तानां नियमानां पालनस्य प्रतिज्ञा कृता। परन्तु कौटल्यस्य कूटयुद्धं यवनविषये भारतीयराज्यानां कृते वरदानमिव अभूत्। यावत् विदेशीयानां विषये कौटल्यनीतेः प्रयोग आसीत्, तावत् राष्ट्रं परायत्तं नाभूत्। अद्य यः अस्माकं पराजयः, तस्य मूलमिदं यत् चीनदेशीयैः यथा न्यायतो अन्यायतो वा युद्धं कृतं, न तथैव अस्माभिरपि इति। तैः यथा यथा आचरितम्, तथा तथा एव अस्माभिरपि अनुष्ठेयमासीत्। न च अनुष्ठितम्, तस्य एतत्फलं अभूद् यद् वयं तैः अभिभूताः। वस्तुतस्तु 'मायाविना सह माययैव व्यवहरणीयम्।'

युद्धसम्बन्धिनो नियमाः बन्दिषु कथं व्यवहरणीयम् इत्येतद्विषयका अपि नियमाः आसन्। महाभारतानुसारेण बन्दिनो न हन्तव्याः। अपितु तेषु पुत्रवदाचरणीयम्। इत्थम् अनुष्ठिते सति कीर्तिर्वर्द्धते (महा० शा० १०२।३३)। केषुचित् स्थितिविशेषेषु बन्दी सैनिकः वर्षं यावद् दासः कर्तुं शक्यः। तदनन्तरं स मोचनीयः। शत्रुपारिवारिका अपि यदि बन्दिनो भवन्ति, तदा तेष्वपि तथैव व्यवहर्तव्यम्। तेषु तथा न व्यवहर्तव्यम्, यथा तेषामपमानः स्यात्। यदि राजपारिवारिकैः सह तेषां दास्यः दासाश्च बन्दिनो भवन्ति, तदा तेष्वपि तथैव आचरणीयम्। बन्दिषु केचन अस्वस्थाः, केचन आहताः, केचन अङ्गहीनाश्च भवितुं शक्नुवन्ति, तेषां विषये महाभारतस्य कथनं यद् ये अशस्त्राः, भग्नशस्त्राः, आहता वा स्युः, तान् शिबिरं आनीय औषध्यादिभिस्तेषां व्यवस्था कार्या। एतेन स्पष्टं यद् युद्धार्थं यः

अयोग्यः स रक्षणीयः। कौटल्यकथनानुसारमपि एवंविधानां सैनिकानां चिकित्सादेः सद्यः व्यवस्था स्यात्। आहतान् सैनिकान् तदीयशिविरं नयेत्, अथवा तेषां चिकित्सादिकं कुर्यात् (अर्थशा० १०।३)।

युद्धसमये एतदवधेयम् आसीद् यद् युद्धेन तेषां क्षतिर्न भवेत्, ये युद्धाद् दूरे तिष्ठन्ति। युद्धेऽप्रविष्टस्य यदि क्षतिः भवति, तदा तदुत्तरदायित्वं द्वयोरपि पक्षयोः आसीत्। महाभारते त्रयः शब्दा निर्दिष्टाः—पश्यन्तम्, बहिश्चरान्, परिचर्यावतः। एतस्य इदं तात्पर्यं यद् युद्धेनैषां क्षतिर्मा भूत्। कौटल्यः युद्धकाले सैनिकान् आदिशति यद् युद्धक्षेत्रेण सम्बद्धानां राष्ट्रियजनानां सार्वजनिकसम्पदश्च कथमपि क्षतिर्न कार्या। लुण्ठनावसरे शत्रुराज्यस्य कोषः स्वायत्तीकरणीयः, परन्तु जनानां भवनानि सम्पदश्च न स्पृशेत्।

अस्या युद्धसम्बन्धिन्याः नैतिकतायाः प्रयोगः बहुकालं भारतीयैः कृतः। एतेन तेषां क्षतिरपि अभूत्। तैः सह युद्धं भारतीयानां कृते आवश्यकमभूत्, ये मानवतासिद्धान्ततः अतिदूरे आसन्, मानवत्वरहिता एव आसन् इति यावत्। तेन युद्धक्षेत्रे अस्माकं पराजयोऽप्यभूत्। आधुनिके संसारे तस्याः नैतिकतायाः पालनं कथं शक्यम्, यत्र सम्पूर्णविश्वविनाशस्य बीजानि निहितानि सन्ति? युद्धभागी एव युद्धजन्यां क्षतिम् अनुभवेत्, युद्धे अनुपस्थितस्य क्षतिर्न स्यादिति एष सिद्धान्तः अद्यत्वे कथं प्रवर्तयितुं शक्यः? स्पष्टं यद् यदि भारतीयसिद्धान्तेषु व्यवहारिकतया दृष्टिपातः क्रियेत, तदा युद्धविषये नियन्त्रणमपि संभाव्यते।

## युद्धस्य साधनानि प्रकाराश्च

युद्धे सैनिकविषये कौटल्यस्य कथनं यत् चतुर्विधा सेना भवति—स्वयं राज्यस्य, मित्रराज्यानाम्, अरण्यवासिनाम्, शत्रुराज्यानाञ्च। स्वराज्यसेनायां सहायभूतानां संरक्षितानाञ्च सेनानां सम्मेलनं भवति। मित्रबलस्येदं तात्पर्यं यन्मित्रराष्ट्रेभ्यः सेनायाः प्राप्तिः, अथवा तद्देशीयजनानां धनद्वारा स्वसेनायां चयनम्। आरण्यसेनायाम् अरण्यतः सैनिकानां प्रवेशः कर्त्तव्यः, उत अरण्यस्थसैनिकैः क्रियमाणा सहायता ग्राह्या। यदा कदा शत्रोः वन्दिभूताः सेनाः स्वराष्ट्रप्रतिकूलमपि योद्धुं कामयते। अत्र प्रथमश्रेणीया एव सेना महत्त्वपूर्णा विश्वसनीया च भवति। शत्रुराष्ट्रिया सेना प्रायः लोभेनैव कार्यं करोति। कौटल्यः कथयति यत् शत्रुसेना स्वराष्ट्रस्यापि विश्वासघातं कर्तुं यदा शक्नोति, तदा कथं सा विश्वसनीया? शत्रुसेना तदैव उपयोजनीया यदा स्वराष्ट्रेण तस्याः सम्मेलनं सम्भाव्येत। "मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः। मूलरक्षणादतिरिक्तं मौलबलम्। अत्यावापयुक्ता वा मौला मूले विकुर्वीरन्निति। बहुलानुरक्तमौलबलः सारबलो वा प्रतियोद्धा व्यायामेन योद्धव्यमिति" (अर्थशास्त्रम् ९।२।१-४)।

एतासां सेनानां सहयोगैः सह युद्धे केचन महत्त्वपूर्णाः प्रकारा अपि सन्ति। 'गुरिल्ला' इति प्रणाली आधुनिकैः स्वीक्रियते, परन्तु एष प्रयोगः प्राचीनकालेऽपि भारते आसीत्। कौटल्यकथनानुसारं 'गुरिल्ला' इति प्रणाल्यां युद्धद्वारेण स्वसेनायाः रक्षणं शत्रुसेनायाश्च दमनं कर्त्तव्यम् ( अर्थ० १०।२ )। तेन 'गुरिल्ला' इति युद्धार्थम् उपयुक्तं स्थलमपि निर्दिष्टम्। तदनुसारं कण्टकाङ्किताः, नतोन्नताः, शैलाद्याकीर्णा, पिच्छिला च भूमिः ईदृशस्य आक्रमणस्य कृते उपयुक्ता (अर्थ० १०।३)। कौटल्यमतानुसारं इतस्ततः आक्रमणैः शत्रुसेना उद्वेजनीया। यदा सा त्रस्ता भवेत्, तदा तस्यां महद् आक्रमणं कर्तव्यम्। महाभारते केचन युद्धप्रकाराः प्रदर्शिताः, ते प्रकाराः केवलं स्वकार्यसाधकतया स्वीकर्तुं शक्याः। युद्धसमये नद्यादिमार्गा उच्छेदनीयाः। कूपादिष्वपि विषप्रक्षेपः कार्यः। यातायातमार्गाः साधनानि च यथा नश्येयुः, तथा प्रयतितव्यम्। शत्रुहस्तगतस्य दुर्गस्य सर्वथा विध्वंसनम् आवश्यकम्। युद्धस्थलस्य इतस्ततः यदि भोजनादिसाधनानि स्युः, तदा तानि ध्वंसनीयानि। मनुनापि एवंविधानां साधनानां निर्देशः कृतः। तदनुसारं युद्धस्य उपकरणानि रक्षितुम् एतानि साधनानि वैधतया स्वीकार्याणि। एतानि साधनानि कूटयुद्धे प्रयोक्तव्यानि। एषामुपयोगः तदावश्यकः यदा न प्रकाशयुद्धस्य स्थितिः।

"प्रिंसिपुल्स ऑफ इंटरनेशनल लॉ" इति विधाने लारेन्समहोदयेन 'गुरिल्ला' इति पद्धतेः स्पष्टीकरणं कृतम्। तदनुसारेण मार्गे शत्रुसेनायामाक्रमणम्, तासां मार्गस्य उच्छेदः, सेतुनदीमार्गादीनां विध्वंसनम्, संदेशसाधनानां विध्वंसनम्, यथा कथञ्चिदपि शत्रोः उद्वेजनम् इत्यादिकं गुरिल्लापद्धतौ स्वीकृतम्। एताभिः पद्धतिभिः सह न केवलं प्राचीनपद्धतीनां समन्वय एव, अपि तु एतासां समकक्षतापि स्पष्टीभवति।

एवंविधं सैनिकान्तराणां युद्धार्थं नियोजनं नावश्यकमासीत्। त एव सैनिका इत्थं कर्तुं शिक्ष्यन्ते स्म। परन्तु तत्र केचन सैनिकवर्गा अधिकम् उपयोगिनः अभूवन्। ये सैनिकाः शत्रुमार्गं शत्रोः आविर्भावतिरोभावादिस्थितिम् शत्रूणां कलाश्च सम्यक् परिचिन्वन्ति, तादृशा एव सैनिकाः एतस्मिन् कार्ये विशेषतः उपयोगिनः। कौटल्यः एतस्मिन् कार्ये अरण्यसेनापि उपयोजनीया इति निर्दिशति ( अर्थ० ९।२ )।

कौटल्येन षड्विधसेनापरिगणनानन्तरं सप्तमी सेना निर्दिष्टा, स तां सेनाम् औत्साहिकसेनां कथयति। अस्याः संघटनं स्वतन्त्रतया भवति, न तत्र सेनाविषयकाः नियमा अपेक्ष्यन्ते। सा सेना सेनापत्यादिरहिता भवति। अत्र विभिन्नदेशीया विभिन्नजातीयाश्च जना भवन्ति। अस्या वर्गद्वयं भवति– भेद्योऽभेद्यश्च। अस्या मुख्यं कार्यं देशानां लुण्ठनं भवति। अत्र केचन भृत्या वेतनेन वा कार्यं कुर्वन्ति

केचन केवलं लुण्ठनादिकार्यं कुर्वन्तः देशसेवां कुर्वन्ति। निःशुल्कं देशसेवां कुर्वती ईदृशी सेना अभेद्या कथिता. (अर्थ० ९।२)। अत्र कोदृशस्यापि सैनिकसञ्चालनादेः कार्यस्य उत्तरदायित्वं कस्यापि न भवति। अत्र अनुशासनम् एकात्मकता च अल्पश एव भवति। अनया सेवया एष एव लाभः। कस्मिन्नपि समये कमपि नेतारं विनैव इदं कार्यं कर्तुं तत्परा भवति। यथावसरं लाभसम्पादने साहाय्यञ्च करोति। अत्र आवश्यकतानुसारं देशभक्तानां स्वयंसेवकानामपि साहाय्यं प्राप्तुं शक्यते। इदानीन्तना देशाः संक्रमणकालिक्यां स्थितौ इमां स्थितिं स्वीकुर्वन्ति। यदा अनिवार्यसैनिकसेवार्थं राष्ट्रेण तत्परेण भूयते।

केषुचित् परिस्थितिविशेषेषु केवलम् अरण्यसेनैव उपयुज्यते। महाभारततः कौटल्यपर्यन्तम् अस्याः सेनायाः प्राशस्त्यं स्वीकृतम्। महाभारतेन एषां सैनिकानां शारीरिकैः गुणैः सह इदमपि स्वीकृतं यद् एते युद्धात् कदापि न पलायन्ते (महा० शा० १०१.१६)। मनुर्मन्यते यद् ईदृशी सेना अग्रे स्थापनीया (मनु० ७।१९३)। कौटल्यमतानुसारेण शत्रुदेशे आक्रमणावसरे इयं सेना सम्यक्तया मार्गान् परिचेतुं प्रभवति। शत्रोः मार्गाणां यातायाते तदुपकरणानां विध्वंसने च अरण्यसेना अधिकम् उपयुज्यते। कौटल्यः इदमपि मनुते यद् अस्याः सेनायाः इदं वैशिष्ट्यं यद् इयं सेना लुण्ठनादिकार्येषु अधिकं विश्वसिति। अत एव यत्र लुण्ठनस्य नावसरस्तत्र ईदृशसेनातो भयमपि भवति। तदानीं यदि शत्रुः आटवीबलम् उपयुञ्जानो भवेत्, तदा इयम् एव सेना उपयोक्तव्या। अस्य कौटल्यसिद्धान्तस्य समर्थनम् इत्थं क्रियते यद् यादृशी शत्रुसेना स्यात् तादृशी एव सेना उपयोजनीया। शत्रुः यथा आचरति तथैव अस्माभिरपि आचरणीयम्।

सेनायां यन्महत्त्वं सैनिकानाम्, ततोऽप्यधिकं महत्त्वं गुप्तचराणाम्। यस्य देशस्य गुप्तचरविभागः दुर्बलो भवेत्, स देश आन्तरिकनीतौ, बाह्यनीतौ वा दुर्बलः स्यात्। प्राचीनाः भारतीयाः सर्वे आचार्यादयः चराणां महत्त्वं प्रकाशयन्ति। शत्रुसेना, तच्छक्तिः, संघटनप्रकारः, आक्रमणमार्गाः, राज्ञो विषये प्रजायाः दृष्टिकोणः, आन्तरिकस्थितिः, मित्रबलादिकं च यादृशं स्यात्, तादृशस्य ज्ञानम्, चराणां मुख्यं कर्त्तव्यम्। एतदर्थं राष्ट्रान्तरीयनियमाः स्थापिता आसन्। एतेषां कृते चर-चार-चारिक-शब्दाः प्रयुक्ताः सन्ति। चरशब्दस्य प्रयोगः तस्य गुप्तचरविभागस्य विषये, ये शत्रुदेशे सैनिकानां निमित्ते कार्यं कर्तुं प्रहीयन्ते स्म। चराश्च कापटिकादीन् शत्रुदेशवार्ताज्ञापनार्थम् (मनु० ७।१४८ कुल्लूकभट्टः)। एवंविधं विचारं कामन्दकोऽपि प्रस्तौति। महाभारते गुप्तचराणां कृते कार्यम्, उचितानां स्थानानां एका लघुनामावली निर्दिष्टा। तदनुसारं मन्दिरम्, पवित्रस्थानम्, उद्यानम्, उद्योग-

केन्द्रम्, आपगः, व्यायामकेन्द्रम्, सभाभवनम्, सचिवालयः इत्यादीनि उपयुक्तानि स्थानानि सन्ति (महा० शा० ६९।११)। कौटल्येन तु एष विषयः कतिपयेषु अध्यायेषु विवेचितः।

युद्धप्रकारेषु अग्नियुद्धतः आकाशयुद्धपर्यन्तं वर्णनं लभ्यते। युद्धे अनैतिकान्यपि साधनानि आश्रयणीयानि आसन्। अत्र सार्वजनिकानां स्थानानां वस्तूनां ध्वंसनमपि वैधं स्वीकृतम्। वधस्तु अत्र साधारणं साधनम्। कूटनीतेः चतुर्णामपि प्रकाराणाम् उपयोगो मुख्यः। युद्धस्थित्यनुसारं साधनानां प्रयोगो भवति स्म। यदि शत्रुः युद्धस्य नैतिकताम् अतिवर्तितुमुद्यतः, तदा युद्धनैतिकतायां वैधः पराजयः न स्वीकार्यः। तदानीं यथा शत्रुः युद्ध्यते तथैव योद्धव्यम्। युद्धावसरे विजयप्राप्तिरेव लक्ष्यभूता भवति। तदानीम् अप्राप्तविषयं राष्ट्रम् अधोगतिं प्राप्नोति।

### युद्धसमये शत्रोः तन्नागरिकाणाञ्च सम्बन्धः

कौटल्यः शत्रोर्व्याख्यां कुर्वन् लिखति यद् अरिभावेन युक्तः सामन्तः शत्रुः उच्यते। अरिसम्पद्युक्तः सामन्तः शत्रुः (अर्थ० ६।२।१९)। एतदनुसारं कथ्यते यत् शत्रुता मित्रता च भावम् आश्रयतः न कमपि निश्चितं सिद्धान्तम्। सामन्तशब्देन एतत् स्पष्टं भवति यद् एकस्यैव राज्यस्य सामन्तः किं न भवेत्, यदि स शत्रुभावेन युक्तः, तदा शत्रुरेव। शुक्रमतानुसारम् एवंविधानां शत्रुभावयुक्तानां ब्राह्मणानां बालानां चापि वधे न कश्चिद् दोषः (शुक्र० ७।४)। कुरुक्षेत्ररणाङ्गणे अर्जुनः शत्रूनपि सम्बन्धिभावेन अपश्यत्। इयं तस्य राजनीतिकी भ्रान्तिरासीत्। वस्तुतः राजनीतिक्षेत्रे भावः आद्रियते, न कीदृशोऽपि क्रमागतः सम्बन्धः। कृष्णेन अर्जुनस्य पुरः एतदेव राजनीतिकं समाधानमुपस्थापितम्। चीनदेशः अस्माकं मित्रराष्ट्रं भवितुम् अचेष्टत। अस्माभिः राष्ट्रियदृष्ट्या राष्ट्रान्तरीयदृष्ट्या च तस्य सहयोगः कृतः। परन्तु अधुना यदा स शत्रुभावमापन्नः, तदा प्राचीनानां तेषां प्रश्नानां सम्बन्धानाञ्च न किमपि महत्त्वमवशिष्टम्। एतदनुसारमेव द्रोण-भीष्म-सदृशानामपि सम्बन्धिनां वधः समर्थितोऽस्ति।

युद्धावसरे कीदृशस्यापि रक्तसम्बन्धस्य न महत्त्वम्। सहोदराः कौरवा अपि युद्धावसरे शत्रुतया पुरः उपस्थिताः। पाण्डवैश्च ते निहताः। शत्रुभावयुक्तेन राष्ट्रेण सह मैत्रीम् आचरन्ति राष्ट्राण्यपि शत्रुतां भजन्ति। आवश्यकतानुसारं तेनापि सह तथैव व्यवहरणीयं भवति। एतदवसरे कीदृशोऽपि भावात्मको विचारः पराभवस्य कारणं भवति। कृष्णेन न केवलम् ईदृशी अर्जुनस्य भावुकता दूरीकृता, अपि तु ईदृशस्य भावुकस्य कृते 'अनार्यजुष्टम्' इति शब्दोऽपि प्रयुक्तः।

युद्धस्थितौ समुपस्थितायामेवंविधं शत्रुत्वम् आचरते राष्ट्रस्य विषये आधुनिकी कूटनीतिः राष्ट्रान्तरीयविधानञ्चापि मन्येते यद् अत्र मनुष्यस्य वस्तुनः

चेति उभयोरपि ग्रहणं भवति। एवं च युद्धावसरे शत्रुपक्षीयाणां बन्दीकरणम्, वधः, निष्कासनम्, आवश्यकतानुसारं दण्डनादिकं च सर्वमपि वैधम्। एवमेव सम्पत्ति-विषयेऽपि सम्पदः राज्यकोषे स्थापनम्, विध्वंसनम्, संरक्षणञ्चेत्यादिकं वैधं स्वीकृतम् (लारेन्सः प्रिंसिपुल्स ऑफ इण्टरनेशनल लॉ, पृ० ३४६)। प्राचीनभारते शत्रु-सैनिकानामपि सेनायां प्रवेशः सामान्यसिद्धान्तः स्वीकृतोऽस्ति। कौटल्येन एतदेव अमित्रबलमुक्तम् (अर्थ० ९।२)। परन्तु एषां नागरिकाणां सेनायां प्रवेशः तेषाम् इच्छानुसारमेव क्रियते स्म। एतैः स्वदेशीयसैनिकैश्च योद्धव्यं भवति स्म। रामायणे ईदृशी सेना द्विपद्बलम् इति उक्ता (रामा० युद्ध० १७।२४)।

शत्रुपक्षीयाः सैनिकाः यदि बन्दीक्रियन्ते स्म, तदा तैः सह शत्रुसेना-विषयकाणां नियमानामनुसारमेव व्यवह्रियते। वधतः बन्दीकरणपर्यन्तं तेषां विषये व्यवस्था आसीत्। यदि स्वदेशीयः नागरिकः शत्रुसेनायां प्रविश्य स्वदेशेनैव युद्ध्यते बन्दीक्रियते च, तदा तद्विषये न शत्रुसेनावत्, अपि तु राजद्रोहिणि इव व्यवहरणीयं भवति। "स्वपक्षे परपक्षे वा तूष्णीं दण्डं प्रयोजयेत्" (अर्थ० ५।१)। एतद्विषये एतदवधेयं यद् यदि स्वदेशीयाः नागरिकाः यदि स्वदेशे वसन्ति, स्वदेशवासे एव च स्वकल्याणं मन्यन्ते, तदा तेषां कर्त्तव्यं भवति यत् ते यत्र देशे वसन्ति तद्-देशसैनिकतया स्वदेशीयसैनिकैश्च युद्ध्येरन्।

ऋग्वेदतः एव भारतवर्षे नौसेनायाः प्रयोगः आसीत्। रामायणकालपर्यन्तं नागरिकाः अधिकं विकासम् आप्ताः। कौटल्येन नौसेनाविषये स्वतन्त्रः अध्याय एव रचितः। नावध्यक्षप्रकरणे तेन यः सिद्धान्तः स्थापितः, स महत्त्वपूर्णः। तदनुसारं शत्रुभावयुक्ताः (नाविकाः) विध्वंसनीयाः। अपेक्षितसहायताप्राप्तौ शत्रूणां साधनभूता नावः अपि विनाश्याः। तथा शरणमागताः नावः यदि मैत्रीं सूचयन्ति, तदा न ताः विध्वंसनीयाः (अर्थ० २।२८)। एतस्य एष निष्कर्षो यत् शत्रुदेशं गच्छन्तीनाम् शत्रुभ्यः केनापि प्रकारेण साहाय्यं प्रापयन्तीनां च नावां विध्वंसनं राज्ञः कर्त्तव्यम्। केवलं प्रकम्पनकुलायै एव नावे सौविध्यम् देयम्। राष्ट्रान्तरीयविधौ ईदृश्यै अपि नावे न सौविध्यं दीयते। एतद्विषये इदानीन्तनेभ्यः सिद्धान्तेभ्यः कौटलीयाः सिद्धान्ताः उदाराः।

सेनायां युद्ध्यमानेभ्यः अन्येऽपि ईदृशाः कर्मचारिणः भवन्ति, ये तु न युद्ध्यन्ते, परन्तु अन्यां सहायतां कुर्वन्ति। ईदृशाः कर्मचारिणः कौटल्येन विष्टयः कथिताः। शिविरस्य मार्गकूपानां च स्वच्छीकरणम्, यन्त्रास्त्रकवचादीनां व्यवस्था, आहतानां सैनिकानां युद्धस्थानेभ्यः आनयनञ्चेत्यादिकम्, एषां मुख्यं कर्त्तव्यं भवति। एतेषां सविधे शस्त्राणि न भवन्ति (अर्थ० १०।४)। रामायणे एषां कृते खनकः, यन्त्रकः, वृक्षतक्षकः, द्रष्टा इत्येते शब्दाः प्रयुक्ताः (रामा० अयो० ८०।१-४;

अर्थ० १०।४)। महाभारते महाजनशब्देन एते व्यवहृताः। व्याख्याकृता नीलकण्ठेन महाजनशब्दस्य वैश्य इति अर्थः कृतः। एवंविधाः जनाः योद्धारः न मन्यन्ते, नायुद्ध्यमान्। यदि युद्धावसरे एते बन्दिनः भवन्ति, तदा एतेषां विषये स दण्डः प्रयोक्तव्यः यः सामान्यसैनिकानां विषये प्रयुज्यते। तेषां बन्दीकरणानन्तरमपि सर्वप्रकारकं सौविध्यं तेभ्यो देयम्। एतेषां दण्डनं राष्ट्रान्तरीयनियमानुसारमवैधमासीत्। तद् युद्धन्तु महाभारते यत्र ईदृशानां जनानां ( महाजनानां ) हिंसा भवति, इत्थमुक्तम्—

क्षत्रधर्माद्धि पापीयान्न धर्मोऽस्ति नराधिप।
अपयानेन युद्धेन राजा हन्ति महाजनम्॥

( महा० शा० ९७।१ )

महाभारते ईदृशानां जनानां वधः सर्वथा निषिद्धः ( शा० १००।२८-२९ )। राष्ट्रान्तरीयविध्यनुसारं 'हेग रेगुलेशन' त्रयोदशधारानुसारम् अद्यत्वेऽपि एतदेव स्वीकृतं यद् एवंविधाः जनाः यदि बन्दिनः क्रियन्ते, तदा ते कारागृहे स्थापनीयाः, परन्तु न तेभ्यः प्राणदण्डो देयः।

देशद्वये परस्परं युद्धम् आपन्ने सति मुख्या एषा समस्या उदेति यत् शान्तिकाले ये शत्रवः मित्रवदासन् तैः शत्रुदेशीयजनैश्च कथं व्यवहरणीयम्? तदानीम् एतदपि विचार्यते यद् ये नागरिकाः विदेशीयाः, परन्तु न शत्रुदेशीयास्तेषु कथं व्यवहर्त्तव्यम्, ये च शत्रुदेशीयास्तेषु कथम् आचरणीयम् इति।

ये नागरिकाः विदेशीयाः, किन्तु न शत्रुदेशीयास्तेषां विषये कौटल्यः कथयति यद् यदि ते तटस्थाः सन्ति, तदा तेषु सामान्यतः व्यवहरणीयम्। शत्रुदेशीयाः, परन्तु यदि सामान्यनागरिकवदाचरन्ति, तदा तेषु अपि तथा न व्यवहर्त्तव्यम् यथा बन्दिषु शत्रुषु व्यवह्रियते। ते यथेच्छं देशे यत्र-कुत्रापि गन्तुं शक्नुवन्ति। परं तेषां विषये गुप्तचरविभागद्वारेण पूर्णतया नियन्त्रणं कार्यम्। यदि एवं न क्रियते, तदा देशस्य नाशः सम्भाव्यते ( अर्थ० ९।५।४-६ )। एतद्विषयेऽपि सावधानता अपेक्षिता। विभिन्नदेशीया विदेशीया सम्भूय परस्परद्वारेण मन्त्रभेदादिकं न कुर्युः (अर्थ० ९।६)। एतेषां विषये कठोरभावेन व्यवहर्त्तव्यम् इत्यपि निर्दिष्टम्।

तेषां नागरिकाणां विषये विशेषतः अभिधेयं भवति, ये शत्रुदेशीयाः शत्रभावयुक्ताश्च सन्ति। ईदृशानां नागरिकाणां विनाशः शत्रुविनाश इव मन्यते। एतेषां नागरिकाणां विषये कौटल्यस्य कथनं यत् जनशक्तिं धनशक्तिं च अविगणय्य अपि एते नागरिका नाशनीयाः "सुमहतापि क्षयव्ययेन शत्रुविनाशोऽभ्युपगन्तव्यः" ( अर्थ० ७।१३।३६ )। युद्धघोषणानन्तरं शत्रुदेशीयनागरिकेषु सारल्येन नैवं व्यवहरणीयम्।

तेषां विनाशेनैव राष्ट्ररक्षासंभवः– 'अमित्राटवीप्रतिषेधः।' ते कृषकोद्योगि-पशुपालकतपस्व्यादिरूपतया स्थातुं शक्नुवन्ति, किन्तु यदि इत्थं स्थित्वा ते गुप्तचरस्य कार्यं कुर्वन्ति, तदा ते कठोरं दण्डनीयाः। एतेन स्पष्टं यद् युद्धसमये शत्रुदेशीयेषु नागरिकेषु विशेषो व्यवहार आवश्यकः। मध्ययुगानन्तरम् 'ग्रोशस' 'विधिपर्यन्तम् पश्चिमदेशेषु येषां नियमानां पालनम् आसीत्' अद्यत्वे तत्रापि परिवर्तनं जातम्। लारेन्समहोदयमतानुसारं इदानीन्तनः राष्ट्रान्तरीयविधिः एषोऽस्ति यत् कोऽपि देशः शत्रुदेशीयनागरिकेषु तावच्छत्रुवद् व्यवहर्तुं न शक्नोति यावत् सः 'पञ्चमाङ्गिवत्' न व्यवहरति।

युद्धकाले शत्रुसम्पत्तिसिद्धान्तः

बर्बर-संस्कृतिविकाशयतां राष्ट्राणां जीवनारम्भः युद्धतः भवति। युद्धं लुण्ठनस्य द्वारम, भारतवर्षेण बहुकालपर्यन्तम् ईदृशं लुण्ठनम् अनुभूतम्। परन्तु तेन एष असामाजिको मार्गः न कदापि आश्रितः, यतस्तस्य विकाशः व्यवस्थित-समाजतो भवति। परन्तु युद्धावसरे ईदृशी अपि स्थितिरायाति यत् शत्रोः सम्पत्तिः हस्तगता भवति, आवश्यकतानुसारं च एतदपि कर्त्तव्यं भवति। तद्विषये भारतीयाः सिद्धान्ताः कीदृशा आसन् इत्यपि अवधेयमस्ति। युद्धानन्तरं विजयद्वारेण द्विविधा सम्पत्तिः हस्तगता भवति, चला अचला च। चलसम्पत्तिविषये मनुः कथयति—

रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः।
सर्वद्रव्याणि कुप्यञ्च यो यज्जयति तस्य तत्॥
राज्ञश्च दद्युरुद्धरमित्येषा वैदिकी श्रुतिः।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम्॥

(मनु० ७।९६-९७)

मनोः मतानुसारेण रथः, अश्वः, हस्त, क्षेत्रम्, धनम धान्यम्, पशुः, खनिज-वस्तु च तस्य भवति, यः युद्धे तानि लभते। परन्तु एषु द्रव्यम्, पशुः, अन्ये च बहु-मूल्यपदार्थाः प्रथमं राज्ञे देयाः। ततः राजा उचितरीत्या तेषां वितरणं करोति। कौटल्यानुसारं कामन्दको मन्यते यत् लुण्ठिताः पदार्थाः तस्य भवन्ति येन राज्य-विजयो लब्धः (कामन्दक० २०।३४; अर्थ० १०।३)। लारेन्समहोदयेनापि स्वीकृतं यत् लुण्ठनेन प्राप्तं वस्तु विजेतृराज्यस्य भवति।

डॉ० हीरालालचटर्जी-महोदयः दर्शितेन मनुमतेन इमं निष्कर्षम् आसादयति यत् लुण्ठनेन प्राप्तानि वस्तूनि सैनिकानां भवन्ति। अत एव राज्ञे तत्समर्पणेऽपि पुनः राज्ञा तानि वस्तूनि वितीर्यन्ते स्म। परन्तु कौटल्य-कामन्दकवचनाभ्याम्

एतत् स्पष्टीभवति यत् लुण्ठनेन आप्तेषु वस्तुषु राज्यस्य स्वत्वं भवति। केवलम् उत्साहवर्धनार्थं पुरस्काररूपतया तानि वस्तूनि सैनिकेभ्यः वितीर्यन्ते। यदि तत्र सैनिकानां स्वत्वं भवेत्, तदा सैनिकाः समस्तां तां सम्पत्तिं राज्ञे न समर्पयेयुः, किन्तु तस्याः सम्पदः कञ्चिद् अंशमेव। परन्तु उक्तेन विवेचितेन स्पष्टं यत् ते समस्तां तां सम्पत्तिं राज्ञे समर्पयन्ति। राज्ञा पुनः यथायोग्यं वितरति। एतेन एतदपि पुर आयाति यत् सम्पदि स्वत्वं तु राज्ञ एव, परन्तु उत्साहवर्धनार्थं सैनिकेभ्यः तद्वितरणं भवति।

अचलसम्पत्तिविषये महाभारतस्य श्लोकद्वयमुल्लेखनीयं भवति। एकस्मिन् श्लोके प्रतर्दनः उदाहृतः, अपरस्मिन् च दिवोदासः। प्रतर्दनस्य उदाहरणेन स्पष्टं यत् शत्रुविजयानन्तरं सम्पूर्णां सम्पदमधिकर्तुं शक्नोति, न भूमिम्। दिवोदासोदाहरणेन विशदीभवति यद् भूमिरपि अधिकर्तुं शक्यते, द्वयोः समन्वयः इत्थं कार्यः, विजयानन्तरं सद्यः एव भूमिः अधिकर्तुं न शक्यते। किञ्चित् कालानन्तरं पराजितानि राज्यानि स्वस्वत्वं प्रत्यावर्तयितुं शक्नुवन्ति। अस्यां स्थितौ स्वत्वं प्रत्यावर्तितं भवेत्। अत एव पुरा विजयित्रि राज्यं यदि स्वस्वत्वं स्थापयति, तदा तत्रापि विजयित्रिराज्यस्य स्वत्वं स्वीकार्यम्। अस्याः स्थितेः अधिकं स्पष्टीकरणं कौटल्योदाहरणेन भवति। कौटल्यः मन्यते यद् विजयानन्तरं भूभागः वितरणीयः। अस्मिन् वितरणे सैनिकेभ्यः अधिकारो न देयः, अपि तु तेभ्यः राज्येभ्यः अधिकारो देयः। यैः युद्धे साहाय्यं कृतम्, तैः युद्धे यथा साहाय्यं कृतं भवेत् तथैव तेभ्यः भुवः अधिकारो देयः (अर्थ० ७।४)।

उक्तेन विवेचितेन विजिगीषोरभिलाष एष भवति यत् नूतने भूभागे स्वत्वं स्थापनीयम्। अधिकारस्थापनान्तरम् अधिकृतभूमिविषये व्यवस्थाद्वयमायाति। एकत्र अस्थायिनी व्यवनस्था, अपरत्र च स्थायिनी। प्रथमपक्षे व्यवस्थया सह लुण्ठनमपि भवति। एतदनुसारं शत्रोः राजधानी, तद्राज्यसम्बन्धीनि महत्त्वपूर्णानि वस्तूनि स्थानानि च विनाश्यन्ते। आवश्यकस्य अंशस्य संग्रहोऽपि क्रियते। तेषु स्थानेषु नियन्त्रणं क्रियते यत्र विषमां स्थितिम् उत्पादयितुं शत्रुः शक्नुयात्। तानि च स्थानानि विनाश्यन्ते यानि आश्रित्य शत्रुः पुनः विषमां स्थितिमुत्पादयितुं शक्नोति। तत्र च स्वसुरक्षार्थं शस्त्रास्त्रादीनां शत्रुसम्बन्धिनां संग्रहणमपि क्रियते (महा० १०३।४२; अर्थ० १३।४)।

द्वितीयपक्षे विजेतृराज्यं शान्तिपूर्णाम् अवस्थितिं घोषयति। एतद्विषये प्रयतते च यत् शान्तिपूर्णस्थितिस्थापनेन देशस्य यावती भूमिः स्वहस्ते आगता अस्ति तत्र शोभना व्यवस्था कार्या, सामान्या स्थितिश्च उद्भावनीया। इमां स्थितिं प्राप्तं राज्यं सदा शान्तिमेव स्थापयितुं प्रयतते। कौटल्यः मनुते यत्

विजयानन्तरं प्रयतनीयं यत् नूतनेन शासनेन जनताया हृदयम् आकृष्टं स्यात्। येन पराभूतराज्यविषये जनानां प्रीतिः न भवेत्। प्राक्तनराज्ञापेक्षया अधिकं कौशलेन कार्यं करणीयम्। यदि एवं न क्रियते, तदा विजितराज्यस्य प्रजा असन्तुष्टा भविष्यति, येन च महान् उपप्लवः सम्भाव्यते। येन राज्यध्वंसोऽपि सम्भाव्यते। "नवमवाप्य लाभं परदोषान् स्वगुणैश्छादयेत् गुणान् गुणद्वैगुण्येन। स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिश्च प्रकृतिप्रियहितान्यनुवर्तयेत" ( अर्थ० १३।५।५-६ )।

कौटल्यः कथयति—"तस्मात् समानशीलवेषभाषाचारतामुपगच्छेत्। देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत" (अर्थ० १३।५।१०-११ )।

मनोः कथनं यत् यः देशः विजीयते तदीयेषु आचारविचारादिषु कथमपि हस्तक्षेपः न कार्यः। तत्र राष्ट्रियसम्पदः शोषणं न कार्यम्। इत्थं न व्यवहरणीयं येन विजेता राजा विदेशी ज्ञायेत। तात्पर्यमिदं यद् विजितराज्यस्य सम्पदः विषये तथा व्यवहरणीयं येन शत्रुः शासनम् उन्मूलयितुं न क्षमेत, प्रजा च सर्वथा सन्तुष्टा स्यात्। आधुनिकैः राष्ट्रान्तरीयसिद्धान्तप्रतिपादकैः एतद्विषये यत् प्रतिपादितं तत् कौटल्यमतं मनुमतञ्च अनुवर्तते--

जित्वा सम्पूजयेद् देवान् ब्राह्मणांश्चैव धार्मिकान्।
प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च॥
( मनु० ७।२०१ )

'हेगरेगुलेशन' ( धारा ५६ ) एतदनुसारं विजयानन्तरं कस्यापि राष्ट्रस्य तीर्थानाम्, पूजास्थानानां श्रद्धास्पदानां च स्थानानां मर्यादायाः प्रतिकूलं नाचरणीयम्।

विजयानन्तरं विजेतृराज्यस्य कर्त्तव्यं भवति यत् तद् राज्यं विजितराज्ये सुव्यवस्थितं शासनं स्थापयेत्। अस्यामेव स्थितौ जनाः करप्रदानार्थं बाध्यन्ते। अस्याः व्यवस्थायाः स्थापनस्य घोषणा व्यवस्थितरूपेण स्यात् ( महा० शा० ९५।२-३ )।

'हेगरेगुलेशन' अष्टचत्वारिंशत्तमनियमानुसारमेव एषा व्यवस्था समर्थितास्ति। इत्थं विजयानन्तरं विजेतृराष्ट्रं प्रयतितुं शक्नोति। युद्धजन्यां क्षतिं विजितं राष्ट्रं पूरयेत्। एतदर्थं तस्मात् विजितराष्ट्रात् करम् ऋणं वा आदातुं शक्नोति। प्रत्यावर्तनार्थं तद् राज्यं न बाधनीयम् ( शुक्र० १४।७ )।

इमम् एव सिद्धान्तं कौटल्योऽपि समर्थयति। विजयी द्विविधः स्वीकृतः—लोभविजयी, आसुरविजयी च। आसुरविजयी विजितराष्ट्रस्य सम्पदादिभिरेव न तुष्यति, अपि तु शत्रुं हिनस्ति। शत्रुः यदि आत्मसमर्पणं करोति, तदा तेनैव धर्म-

विजयी सन्तुष्यति। कौटल्यानुसारं लोभविजयी अर्थेन क्रेतुं शक्यः—'तमर्थेनाभ्यवपद्येत'। अर्थशास्त्रमतानुसारेण राष्ट्ररक्षार्थम् अर्थद्वारेण शत्रुं विजेतृराज्यं वा सन्तोष्य अन्याः स्थितयः रक्षणीयाः। लोभविजयी आसुरविजयी वा सैद्धान्तिकदृष्ट्या कुत्सिता भवितुं शक्नोति, किन्तु व्यवहारक्षेत्रे एतेषां महत्त्वमस्ति। प्रत्येकं राज्यम् अनया प्रवृत्त्या प्रभावितं भवति। प्राचीनकाले दिग्विजयेषु द्वारतया यज्ञाः स्वीकृताः। तत्र धर्मविजयिन आदर्शः लब्धुं शक्यते स्म। किन्तु उत्तरवर्तिकाले आधुनिककाले वा लोभविजयिन आसुरविजयिन एव वा महत्त्वं स्वीक्रियते। किन्तु प्राचीने भारतीये राष्ट्रान्तरीयसिद्धान्ते इदं स्वीकृतं यत् विजितराष्ट्रस्य सम्पदः रक्षणमपि विजेतृराज्यस्य कर्त्तव्यम्।

## शक्तिसन्तुलनम्

ह्यूममहोदयेन स्वीयेषु लेखेषु इदं साधयितुं प्रयतितं यत् प्राचीनसभ्यतायां शक्तिसंतुलनस्य ज्ञानं नासीत्। एतदर्थं तेन ग्रीकसभ्यता उदाहृता। परन्तु डेमास्थनोजमहोदयेन 'मेगालपोलिटन'विषये यः विचार उपस्थापितः, तेन शक्तिसंतुलनं सुस्पष्टं सूच्यते। तेन कथितं यद् एथेंसहितार्थम् एतच्छोभनं भवेद् यत् 'लेसीडोमिनियन' 'थीबन' इत्येतद् राज्यद्वयमपि अशक्तं भवेत्। एतद्द्वयस्य शक्तिराहित्यसम्पादनार्थं पार्श्ववर्तिराज्यैः सह सम्बन्धस्य यत् स्वरूपम् उपस्थापितमस्ति, तत् शक्तिसंतुलनाद् अन्यत् न किञ्चित्, अपि तु शक्तिसंतुलनमेव। परन्तु अस्य कथनस्य जनेषु न कोऽपि प्रभावोऽभूत्। एतदवश्यं यद् रोमदेशे शक्तिसंतुलनस्य सुस्पष्टं स्वरूपं न दृश्यते। एतदनन्तरम् एकोनविंशतितमशताब्दीतः एष सिद्धान्तः यूरोपदेशस्य आश्रयतां प्राप्तः।

प्राचीनभारते अज्ञातकालत एव शक्तिसंतुलनस्य बीजानि सुरक्षितानि सन्ति। मण्डलसिद्धान्तकल्पनसमये इदं सैद्धान्तकल्पताम् आपत्। मनुना उक्तं यत् साम-दान-भेद-दण्डैः सर्वैरपि उपायै राजा तथा व्यवहरेत् यत् मित्रराज्यानि, शत्रुराज्यानि, तटस्थराज्यानि च परस्परं बलवन्ति मा भूवन्—

सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः।
यथा साम्याधिका न स्युर्मित्रौदासीनशत्रवः॥

शुक्रोऽपि एतदेव समर्थयते। अर्थशास्त्रानुसारं सहायकं विना संप्रभुता तथैव स्थातुं न शक्नोति, यथा एकेन चक्रेण रथः गन्तुं न शक्नोति, 'सहायसाध्यं राजत्वं चक्रमेकं न वर्तते' अ० शा० १।६ )। इमं सिद्धान्तं मण्डलसिद्धान्तेन सह कौटल्यः अग्रे कथयति यद् राज्ञा मण्डलधूरिव स्वस्थितिः कार्या—

नेमिमेकान्तराद्राज्ञः कृत्वा चानन्तरानरान्।
नाभिमात्मानमायच्छेन्नेता प्रकृतिमण्डले ॥
(अर्थ० ६।२।६४)

शक्तिसंतुलनसिद्धान्तं स्पष्टीकर्तुं मण्डलसिद्धान्तस्य सामान्यतः विवेचनम् आवश्यकम्। कौटल्यमतानुसारं विजिगीषू राजा नीतेः केन्द्रम्। युद्धसमये पार्श्ववर्ति पुरोवर्ति च राज्यं शत्रुः भवति। तदनन्तर च विजिगीषोः मित्रम्, ततः पश्चाद् अरिमित्रम्। इत्थं च पञ्चमं मित्रं, मित्रराज्यम षष्ठं च अरिमित्रं मित्रराज्यं भविष्यति। अतः अन्ये अपि द्वे राज्ये भवतः—उदासीनं राज्यं मध्यमराज्यञ्च।

'राजा आत्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं विजिगीषुः। तस्य समन्ततो मण्डलीभूता भूम्यनन्तरा अरिप्रकृतिः। तथैव भूम्येकान्तरा मित्रप्रकृतिः। अरिसम्पद्युक्तः सामन्तशत्रुः तस्मान्मित्रमरिमित्रम्, मित्रमित्रम्, अरिमित्रमित्रं चानन्तर्येण भूमीनां प्रसज्यते पुरस्तात्। पश्चात् पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासार आक्रन्दासारः' इति (अ० शा० ६।२।१६-२४)।

कामन्दकेनापि स्वगुरुः कौटल्यः अनुसृतः। प्रायः सर्वैरपि विचारकैः एष सिद्धान्तः स्वीकृतः। मण्डले द्वे राज्ये ईदृशे अपि भवतः। अग्रे पृष्ठतो वा न स्तः, अपि तु द्वयोः पार्श्वयोः विजिगीषुराज्यस्य शत्रुराज्यस्य च सीमां स्पृशद् राज्यं मध्यमराज्यमिति कथ्यते। एवम् एकमन्यद् राज्यमस्ति यद् उदासीनमिति कथ्यते। उदासीनमित्यस्यार्थः यत् तद् राज्यं विजिगीषुराज्यात्, शत्रुराज्याच्च बहिर्भूतम्। मण्डलीयराज्यानां सन्तुलने शक्तम्। शत्रुमित्रराज्ययोः इव विजिगीषुराज्यस्यापि सन्तुलनद्वारेण निग्रहं कर्तुं तत्प्रभवति। "अरिविजिगीषुमध्यानां बहिःप्रकृतिभ्यो बलवत्तरः संहतासंहतानामरिविजिगीषुमध्यमानामनुग्रहे समर्थो निग्रहे चासंहतानामुदासीनः" (अ० शा० ६।२।३०)।

मध्यमराज्यमुदासीनराज्यं च प्रायः समानम्, किन्तु द्वयोः मूलभूतमन्तरम्। मध्यमराज्यं प्रकृतौ समाविशति तद् राज्यं शत्रुराज्यविजिगीषुराज्ययोः सीमावर्ति भवति। तच्छक्तिशालि भवितुं शक्नोति, परन्तु तदीया शक्तिः विजिगीषुराज्यस्य कृते भयकारणम्। अतः विजिगीषुराज्यं तेन सह इत्थं समन्वयं कर्तुं चेष्टते यत् तद्राज्यं विजिगीषुराज्यस्य मित्रं भवेत्, शत्रुराज्येन च सह तस्य मैत्री मा भूत्। विजिगीषुराज्यं शत्रुराज्यविनाशार्थं तन्मध्यमराज्यम् आश्रयति "मध्यमश्चेद्विजिगीषोः मित्रं मित्रभावि लिप्सेत मित्रस्यात्मनश्च मित्राण्युत्थाप्य मध्यमाच्च मित्राणि भेदयित्वा मित्रमाप्नुयात्।" मध्यमराज्यं बलवद् भवति, परन्तु तत्पार्श्वस्थयोः विजिगीषुराज्यशत्रुराज्ययोः सत्त्वेन विजिगीषुराज्यं स्वहितार्थं तस्य शक्तिम् उपयुङ्क्ते। इत्थं तद् (मध्यस्थराज्यम्) विजिगीषुराज्यस्य शक्तिसन्तुलनविषयक-

कूटनीतेः विजयताम् आप्नोति। तद् ईदृशं राज्यं यद् उदासीनतया स्थातुं तु वाञ्छति, परन्तु न एतावती शक्तिः तस्य सविधे भवति, यया तस्य ताटस्थ्येन स्थितिः स्यात्। तद् विजिगीषुराज्यशत्रुराज्ययोः समन्वयं न सफलीभवति। अतः तस्य ईदृशं बलं न भवति येन मण्डलनीतिः तेन प्रभाविता स्यात्। तद् विजिगीषुराज्यस्य शक्तिमपेक्षते। यदि मण्डलस्य तृतीयं पञ्चमं च मित्रराज्यं विजिगीषुराज्यस्य पक्षे भवति, तदानीं तन्मध्यमराज्यविषये मित्रवद् व्यवहरति। यदि तृतीयं पञ्चमं च राज्यं चतुर्थेन षष्ठेन च शत्रुराज्येन सह मैत्रीमाचरति, तदा विजिगीषुराज्यं मध्यमराज्यस्य सम्प्रभुताम् एवं नियन्त्रयति येन मध्यमराज्यं स्वस्य मित्रं स्यात्।

उदासीनं राज्यं तटस्थं भवति। तद् विजिगीषुराज्यस्य शत्रुराज्यस्य च सीमातः बहिः तिष्ठति। तस्य ताटस्थ्यं स्वशक्त्या भवति, न तु बलात्। तस्य सविधे ईदृशी शक्तिर्भवति येन तत् शत्रुराज्यस्य विजिगीषुराज्यस्य च सन्तुलनं करोति। एतद् राज्यं विजिगीषुराज्यस्य हस्तगता काष्ठपुत्तलिका न भवति, अपि तु स्वयं विजिगीषुराज्यस्य संतुलनं करोति।

मण्डलसिद्धान्तः शक्तिसंतुलनमेव आश्रयति। विजिगीषुराज्यं मध्यमं भवेत्, उदासीनं वा। स्वशक्तिसंरक्षणार्थं संतुलनम् अपेक्षणीयमेव भवति। कौटल्यमतानुसारं शक्तिरक्षार्थं नीतिप्रसारार्थं च अस्ति सिद्धान्तस्य आश्रयणं परमावश्यकम् "परतः प्रवृत्तकर्मारम्भो वा ताभ्यां संहितः कर्मसु वृद्धिं प्राप्स्यामि, शत्रुप्रतिबुद्धं वा शत्रुणा सन्धिं कृत्वा मण्डलं भेत्स्यामि।"

सन्तुलनसिद्धान्त इव पृथक्करणसिद्धान्तोऽपि उपयोगिताम् आप्नोति। एष सिद्धान्तः तस्य राज्यस्य कृते उपयुक्तः यद् द्वयोः शक्तिमतो राज्ययोः मध्यवर्ति अस्ति। सम्प्रति नेपालराज्यस्य ईदृशी एव स्थितिः। पृथक्करणसिद्धान्ते स्थितिद्वयं स्वीक्रियते। तत्र प्रथमस्थितौ दुर्बलं राज्यं द्वाभ्यामपि पृथक् स्थित्वा अधिकं विश्वसनीयेन राज्येन सह स्वसम्बन्धं स्थापयति। यथावसरं द्वयोरपि भेदम् उद्भाव्य संतुलनं स्थापयेत्। द्वितीया स्थितिः एषा यद् द्वयोरपि समं यद् व्यवहरद् उदासीनं भवेत् ( अर्थशा० ८।२ )। तद् यावदेव शक्तिसन्तुलनं प्रयुञ्जीत, तावदेव बलवद् भवेत्। शक्तिसन्तुलनमेव बलवत्त्वे मूलम्। शक्तिसंतुलनसिद्धान्तः नीतेः आवश्यकमङ्गं मन्यते स्म। इमम् आश्रित्य सामदानभेददण्डानां चतुर्णाम् उपायानां प्रयोगो भवति। सहैव षाड्गुण्यप्रयोगविषयेऽपि अस्य सिद्धान्तस्य महत्त्वम् आसीत्। मण्डलसिद्धान्तस्य एष एव निष्कर्षः।

## राष्ट्रान्तरीयसम्बन्धः

राष्ट्रान्तरीयसम्बन्धे चतुर्विधानि राज्यानि भवन्ति—( १ ) मित्रराज्यम्, ( २ ) शत्रुराज्यम्, ( ३ ) उदासीनराज्यम्, ( ४ ) मध्यस्थराज्यञ्च। एतेषामाधाराः

विग्रहः, युद्धम्, उदासीनता, मध्यस्थता च। एषां षाड्गुण्येन सम्बन्धः। विभिन्नानां शास्त्रकाराणां मतानुसारं षाड्गुण्यनीतिः इत्थम् अस्ति :—

षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर।
संधानासनमित्येव यात्रासंधानमेव च॥
विगृह्यासनमित्येव यात्रां संपरिगृह्य च।
द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च॥

( महा० शा० ७१।६७-६८ )

अत्र टीकाकारस्य नीलकण्ठस्य मतम् एतदस्ति—सन्धानासनं सन्धिं कृत्वाऽवस्थितिः। यात्रासन्धानं यानम्। विगृह्य वैरं कृत्वाऽवस्थानं विग्रहः। यात्रां संपरिगृह्य आसनं शत्रोर्भयप्रदर्शनार्थं यानं प्रदर्श्य स्वस्थानेऽवस्थानम्। द्वैधीभावः उभयत्र सन्धिकरणं परस्य अन्यस्याश्रयो दुर्गादेर्महाराजस्य वा।

कौटल्येन षाड्गुण्यनीतिविषये एकः स्वतन्त्रः अध्याय एव रचितः—

"षाड्गुण्यस्य प्रकृतिमण्डलं योनिः। सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षाड्गुण्यमित्याचार्याः। द्वैगुण्यमिति वातव्याधिः। सन्धिविग्रहाभ्यां हि षाड्गुण्यं सम्पद्यत इति। षाड्गुण्यमेवैतदवस्थाभेदादिति कौटल्यः। तत्र पणबन्धः सन्धिः। अपकारो विग्रहः। उपेक्षमाणमासनम्। अभ्युच्चयो यानम्। परार्पणं संश्रयः। सन्धिविग्रहोपादानं द्वैधीभाव इति षड्गुणाः" (७।१।१-११)।

एतेषु षट्सु कस्य कदा प्रयोगः करणीय इत्येतद्विषये कौटल्यस्य मतम् इत्थमस्ति—

"परस्माद्धीयमानः संदधीत। अभ्युच्चीयमानो विगृह्णीयात्। न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत। गुणातिशययुक्तो यायात्। शक्तिहीनः संश्रयेत। सहायसाध्ये कार्ये द्वैधीभावं गच्छेदिति गुणावस्थापनम्" (७।१।१२-१८)।

मनुना शुक्रेण च षाड्गुण्यमित्थमेव व्याख्यातम्—

सन्धिं च विग्रहं चैव यानमासनमेव च।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत् सदा॥

( मनु० ७।१६० )

सन्धिं च विग्रहं यानमासनं च समाश्रयम्।
द्वैधीभावं च संविद्यान्मन्त्रस्यैतांस्तु षड्गुणान्॥

( शुक्र० ४।१०६५-६६ )

षाड्गुण्यस्य षण्णां नीतीनां विवरणं विस्तरेण लभ्यते। सुव्यवस्थितरीत्या कौटल्येन तद्विषये विवरणं प्रस्तुतम्। तत्रत्याः केचन अंशाः प्रदर्शनीयाः सन्ति।

सन्धिः—कौटल्येन एकेन सूत्रेण सन्धिर्व्याख्यातः, 'पणबन्धः सन्धिः'। कांश्चित्पणान् आश्रित्य राज्ञां परस्परं मैत्र्येव सन्धिः। आधुनिकाः विद्वांसः इमम् एव मूलतया स्वीकुर्वन्ति।' कौटल्यः शक्तिराहित्ये एव सन्धिं सम्मनुते—"परस्माद्धीयमानः सन्दधीत"।

इत्थमेव अनेकैः आचार्यैः स्वीकृतम्—

बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः।
कार्य इत्याहुराचार्या विषमे जीवितार्थिना॥

(महा० शा० १३८।४५)

यदा परे च बलिनः स्वपक्षश्चैव दुर्बलः।
सार्धं विद्वांस्तथा क्षीणः परैः सन्धिं समाश्रयेत्॥

(आश्रमवासिक० ६।८)

हीयमानेन वै सन्धिः पर्येष्टव्यः समेन वा।
विग्रहो वर्धमानेन मतिरेषा बृहस्पतेः॥

(म० शल्यपर्व ४।४३)

संधातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः।
अमित्रैरपि सन्धेयं प्राणा रक्ष्या हि भारत॥
यो ह्यमित्रैर्नरो नित्यं न सन्दध्यादपण्डितः।
न सोऽर्थं प्राप्नुयात् किञ्चित् फलान्यपि च भारत॥
यस्त्वमित्रेण सन्दध्यात् मित्रेण च विरुद्ध्यते।
अर्थयुक्तिं समालोक्य सुमहद् विन्दते फलम्॥

(महा० शा० १३८।१५-१७)

कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः।
कार्य इत्येव सन्धिज्ञाः प्राहुर्नित्यं नराधिप॥

(महा० शा० १३८।२०७)

सन्धिः कार्योऽप्यनार्येण सम्प्राप्योत्सादयेद्धि सः॥

(शुक्र० ४।१०७५)

1. N. N. Law, Six Gunas in Kautilya; K. V. Pathaka Commemoration ucolume, P. 449; S. V. Vishwanath, Intrnational Law in Ancient India, P. 63.

मनुमतानुसारम्—

यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत् ॥
(७।१६९)

कौटल्यस्य एव मतं महाभारते इत्थं प्रतिपादितम्—

कृत्वा बलवता सन्धिमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्य नार्थाय कल्पते ॥
(महा० शा० १३८।१०६)

योऽरिणा सह सन्धाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥
(महा० आदि० १६०।७५)

महाभारते सन्धित्रयं स्वीकृतम्—

सन्धिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यं कार्त्स्न्येन परिवर्णितम् ॥

नीलकण्ठेन एतदित्थं व्याख्यातम्—

"भयेन सन्धिर्हीनः, सत्कारेण मध्यमः, वित्तग्रहणेन उत्तमः, तत् त्रयं सन्धिकरणं वर्णितम् ।"

कौटल्येन सुव्यवस्थिततरीत्या सन्धिर्व्याख्यातः। सः सन्धेः अनेकान् भेदान् उपभेदांश्च मन्यते। सन्धिः न औदार्यम्, अपि तु कूटनीतिः—

समे हि लाभे सन्धिः स्याद् विषमे विक्रमो मतः ।
समहीनविशिष्टानामित्युक्तः सन्धिविक्रमः ॥
(अ० शा० ७।८।३८)

लाभमेवाश्रित्य तेन, मित्रहिरण्यभूमिकर्मादयः विभिन्नाः सन्धयः उक्ताः। तेषां च कूटनीतिकी व्याख्यापि कृता—

"संहितप्रयाणे मित्रहिरण्यभूमिलाभानामुत्तरोत्तरो लाभः श्रेयान्। मित्रहिरण्ये हि भूमिलाभाद् भवतो मित्रं हिरण्यलाभात्। यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति स श्रेयान्। त्वं चाहं च मित्रं लभावहे इत्येवमादिभिः समसन्धिः, त्वं मित्रमित्येवादिभिर्विषमसन्धिः। तयोर्विशेषलाभादतिसन्धिः। समसन्धौ तु यः सम्पन्नं मित्रं मित्रकृच्छ्रे वा मित्रमवाप्नोति सोऽतिसन्धत्ते। आपद्धि सौहृदस्थैर्यमुत्पादयति" (अ० शा० ७।९।१-८)।

"त्वं चाहं च भूमिं लभावह इति भूमिसन्धिः" (अ०शा० ७।१०।१)
"त्वं चाहं च शून्यं निवेशयावह इत्यनवसितसन्धिः"(अ०शा० ७।११।१)
"त्वं चाहं च दुर्गं कारयावह इति कर्मसन्धिः" (अ०शा० ७।१२।१)

विग्रहः– नीलकण्ठानुसारेण विग्रहः इत्थं व्याख्यातः–"विगृह्य वैरंकृत्वाऽवस्थानम्"। कौटल्यः मनुते यत् शक्तिसम्पन्न एव राजा विग्रहं कुर्यात्– "अभ्युच्चीयमानो विगृह्णीयात् ।" एतदाशयकमेव वचनं महाभारतेऽपि दृश्यते—

बलिना विग्रहो राजन् न कदाचित् प्रशस्यते।
बलिनो विग्रहो यस्य कुतो राज्यं कुतः सुखम् ॥
(महा० शा० १४९।३)

कौटल्यस्य मतं विचारणीयमस्ति—हीनेन विगृह्णीयात्। "विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिवाभ्युपैति। समेन चामं पात्रमामेनाहतमिवोभयतः क्षयं करोति। कुम्भेनेवाश्मा हीनेनैकान्तसिद्धिमवाप्नोति" (७।३।२-६)।

मनुना द्विविधः विग्रहः स्वीकृतः—

स्वयं कृतश्च कार्यार्थमकाले काल एव वा।
मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ॥
(७।१६४)

कुल्लूकभट्टेन इत्थं व्याख्यातम्–"शत्रुजयरूपप्रयोजनार्थं शत्रोर्व्यसनादिकमाकलय्य वक्ष्यमाणमार्गशीर्षादिकालादन्यदा यथोक्तकाल एव वा स्वयं कृत इत्येको विग्रहः। अपकृतमपकारः मित्रस्यापकारे राजान्तरेण कृते मित्ररक्षणार्थमपरो विग्रहः–इत्येवं द्विविधो विग्रहः"।

विग्रहप्रयोगविषये मनोः एष विचारः—

यदा प्रहृष्टा मन्येत सर्वास्तु प्रकृतीर्भृशम्।
अत्युच्छ्रितं तथात्मानं तदा कुर्वीत विग्रहम् ॥
(७।१७०)

यानम्—नीलकण्ठमतानुसारं यानमित्यस्य "यात्रासन्धानम्" अर्थः, शत्रुनाशार्थं गमनं शुक्रेण यानं स्वीकृतम् (४।१०६८)।

मनुना द्विविधं यानं प्रतिपादितम्—

एकाकिनश्चात्ययिके कार्ये प्राप्ते यदृच्छया।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥
(७।१६५)

अत्र कुल्लूकभट्ट आह—"आत्ययिकं कार्यं शत्रोर्व्यसनादिकं तस्मिन्न कस्माज्जाते शक्तस्यैकाकिना यानमशक्तस्य मित्रसहितस्येत्येवं यानं द्विविधमभिधीयते"।

अयं विषयः कौटल्येन विस्तरेण वर्णितः —

"तुल्यसामन्तव्यसने यातव्यममित्रं वेत्यमित्रमभियायात्। तत्सिद्धौ यातव्यम्। अमित्रसिद्धौ हि यातव्यः, साहाय्यं दद्यान्नामित्रो यातव्यसिद्धौ। गुरुव्यसनं यातव्यम्, लघुव्यसनममित्र वेति। गुरुव्यसनं सौकर्यतो यायादित्याचार्याः। नेति कौटल्य। लघुव्यसनममित्रं यायात्। लघ्वपि हि व्यसनमभियुक्तस्य कृच्छ्रं भवति। सत्यं गुर्वपि गुरुतरं भवति। अनभियुक्तस्तु लघुव्यसनः सुखेन व्यसनं प्रतिकृत्यामित्रो यातव्यमभिसरेत्। पार्ष्णिं गृह्णीयात्" (७।५।१-११)।

"क्षीणलुब्धा हि प्रकृतयो भर्तरि स्निग्धा भर्तृहिते तिष्ठन्ति। उपजापं वा विसंवादयन्ति। अनुरागे सार्वगुण्यमिति। तस्मादपचरितप्रकृतिमेव यायात्। बलवन्तमन्यायवृत्तिं दुर्बलं वा न्यायवृत्तिमिति बलवन्तमन्यायवृत्तिं यायात्" (७।५।२३-२८)।

"समवायिकानामपि सन्धिविग्रहकारणान्यवेक्ष्य शक्तिशौचयुक्तौ सम्भूय यायात्" (७।५।५१)।

"शुचिः सिद्धौ चासिद्धौ च यथास्थितकारीति। तेषां ज्यायसैकेन द्वाभ्यां समाभ्यां वा सम्भूय यातव्यमिति। द्वाभ्यां समाभ्यां श्रेयः" (७।५।५३-५५)।

अत्र कौटल्येन कृता यानस्य कूटनीतिकी व्याख्या अवधेया—"विगृह्यासनहेतुप्रातिलोम्ये संधायासीत्। विगृह्यासनहेतुभिरभ्युच्चितः। सर्वसन्दोहवर्जं विगृह्य यायात्। यदा वा पश्येद् व्यसनी परः प्रकृतिव्यसनं वास्य शेषप्रकृतिभिरप्रतिकार्यं स्वचक्रपीडिता विरक्ता वास्य प्रकृतयः कर्शिताः निरुत्साहाः परस्पराद् वा भिन्नाः शक्या लोभयितुमग्न्युदकव्याधिमरकदुर्भिक्षनिमित्तं क्षीणयुग्यपुरुषनिचयरक्षाविधानपरः इति, तदा विगृह्य यायात्। यदा वा पश्येन्मित्रमाक्रन्दश्च मे शूरवृद्धानुरक्तप्रकृतिर्विपरीतप्रकृतिः परः। पार्ष्णिग्राहश्चासारश्च। शक्ष्यामि मित्रेणासारमाक्रन्देन पार्ष्णिग्राहं वा विगृह्य यातुमिति, तदा विगृह्य यायात्। यदा वा फलमेकहार्यमल्पकालं पश्येत्, तदा पार्ष्णिग्राहासाराभ्यां विगृह्य यायात्। विपर्यये संधाय यायात्। यदा वा पश्येन्नशक्यमेकेन यातुमवश्यं च यातव्यमिति, तदा समहीनज्यायोभिः समवायिकैः सम्भूय यायादेकत्र निर्दिष्टेनांशेनानेकत्रानिर्दिष्टेनांशेन" (७।४।१७-३५)। वस्तुतस्तु "गुणातिशययुक्तो यायात्" (७।१।१५)।

मनुरप्याह—

यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतं च तदा यायाद् रिपुं प्रति ॥
( ७।१७१ )

आसनम्-"विगृह्यासनमित्येव यात्रां सम्परिगृह्य च"(म०शा० ६९।६८) इत्येतट्टीकायां नीलकण्ठेन आसनस्य व्याख्या इत्थं कृता—"शत्रोर्भयप्रदर्शनार्थं यानं प्रदर्श्य स्वस्थानेऽवस्थानम्"। शुक्रेण इदमेव प्रकारान्तरेण कथितम्-"स्वरक्षणं शत्रुनाशो भवेत् स्थानात्तदासनम्" ( शुक्र० ४।१०६८ ) ।

मनुना आसनं द्विविधं स्वीकृतम्—

क्षीणस्य चैव क्रमशो दैवात् पूर्वकृतेन वा ।
मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥
( ७।१६६ )

अत्र एतद् व्याचक्षाणेन कुल्लूकभट्टेन धार्मिकदृष्टिरेव अधिकम् आश्रिता—"प्राग्जन्मार्जितेन दुष्कृतेन ऐहिकेन वा पूर्वकृतेन क्रमशः क्षीणहस्त्यश्वकोशादिकस्य समृद्धस्यापि वा मित्रानुरोधेन तत्कार्यरक्षार्थमित्येवं द्विविधमासनं मुनिभिः स्मृतम् ।"

पूर्वाचार्याणां मतानि संशोधयता आसनस्थानयोः पर्यायतां मन्यमानेन कौटल्येन आसनस्थानयोः अन्तरम् उक्तम् । आसनरूपस्य गुणस्य एकदेशे स्थान इति शब्दः प्रयुक्तोऽस्ति । द्वितीयमिदं यत् शत्रुशक्तिसमानशक्तिमत्त्वम् एव आसनम्, यदा एकदेशविशेषे शक्तेः न्यूनता स्यात्, अर्थात् यस्याम् अवस्थायां शत्रुणा अपकारे क्रियमाणेऽपि तस्य प्रतीकारः अशक्यः स्यात् । अस्याम् अल्पशक्त्यवस्थायाम् आसनस्य कृते स्थान इति शब्दः प्रयुक्तोऽस्ति । यदा स्ववृद्ध्यर्थम् एष गुणः आश्रयेत, तदा आसनं कथ्यते । उपायानां सर्वथा अप्रयोगः अल्पप्रयोगो वा उपेक्षणम् ।

"सन्धिविग्रहयोरासनं यानं च व्याख्यातम् । स्थानमासनमुपेक्षणं चेत्यासनपर्यायाः । विशेषस्तु—गुणैकदेशे स्थानम् । स्ववृद्धिप्राप्त्यर्थमासनम् । उपायानामप्रयोगः उपेक्षणम्" इति ( अर्थशा० ८।४।१-६ ) ।

एतदनन्तरं कौटल्येन आसनस्य कूटनीतिः वर्णिता-"कर्शनमात्रमस्य कुर्याद्व्यसनिनः । परवृद्ध्या तु वृद्धः समुच्छेदनम् । एवं परस्य यातव्योऽस्मै साहाय्यमविनष्टः प्रयच्छेत् । तस्मात् सर्वसंदोहप्रकृतो विगृह्यासीत । विगृह्यासनहेतुप्राति-

लोम्ये सन्धायासीत" (७।४।२३-२७)। वस्तुतस्तु "न मां परो नाहं परमुपहन्तुं शक्तः इत्यासीत" (७।१।१४)।

मनुः कथयति—

यदा तु स्यात् परिक्षीणो वाहनेन बलेन च।
तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन्॥
(७।१७२)

संश्रयः—बलवन्तं राजानम् आश्रित्य शक्तेः विस्तारः संश्रयः कथ्यते, महाभारते शान्तिपर्वणि (१९।६८)। टीकायां नीलकण्ठेन संश्रयस्य व्याख्या इत्थं कृता—"परस्यान्यस्याश्रयो दुर्गादेर्महाराजस्य वा" इति।

मनुना संश्रयः द्विविधः स्वीकृतः—

अर्थसम्पादनार्थं च पीड्यमानस्य शत्रुभिः।
साधुषु व्यपदेशार्थं द्विविधः 'संश्रयः' स्मृतः॥
(७।१६८)

अत्र कुल्लूकभट्टेन इत्थं व्याख्यातम्—"शत्रुभिः पीड्यमानस्य शत्रुपीडानिवृत्त्याख्यप्रयोजनसिद्ध्यर्थम्, असत्यामपि वा तत्काले पीडायां भाविशत्रुपीडनशङ्कया अमुकमयं महाबलं नृपतिमाश्रित इति सर्वत्र व्यपदेशोत्पादनार्थं बलवन्तमुपाश्रयणम्। एवं द्विविधः संश्रयः स्मृतः।"

कौटल्येन "परार्पणं संश्रयः" (७।१।१०) इति मन्यमानेन "शक्तिहीनः संश्रयेत्" (७।१।१६) इति उक्तम्। एतदुत्तरं च तेन 'संश्रयवृत्तिः' नामके प्रकरणे संश्रयवृत्तेः प्रयोगस्य नीतिः व्याख्याता। अनया अन्यासामपि नीतीनां समन्वयः कृतः। का नीतिः, कस्यां परिस्थितौ श्रेष्ठा इत्येतस्य विवरणम् इत्थम् अस्ति—

"सन्धिविग्रहयोस्तुल्यायां वृद्धौ सन्धिमुपेयात्। विग्रहे हि क्षयव्ययप्रवासप्रत्यवाया भवन्ति। तेनासनयानयोरासनं व्याख्यातम्। द्वैधीभावसंश्रययोर्द्वैधीभावं गच्छेत्। द्वैधीभूतो हि स्वकर्मप्रधान आत्मान एवोपकरोति, संश्रितस्तु परस्योपकरोति नात्मनः।

"यद्बलः सामन्तस्तद्विशिष्टबलमाश्रयेत्। तद्विशिष्टबलाभावे तमेवाश्रितः कोशदण्डभूमीनामन्यतमेनास्योपकर्तुमदृष्टः प्रयतेत। महादोषो हि विशिष्टबलसमागमो राज्ञामन्यत्रारिविगृहीतात्" (७।२।१-९)।

एतदुत्तरं राज्ञः स्थितिं चित्रयता कौटल्येन संश्रयिनः राज्ञः नीतिः कूटनीतिकरीत्या वर्णिता। तस्य एष सिद्धान्तः—

प्रियो यस्य भवेद् यो वा प्रियोऽस्य कतरस्तयोः ।
प्रियो यस्य स तं गच्छेदित्याश्रयगतिः परा ॥
(७।२।३०)

मनोरनुसारेण—

यदा परबलानां तु गमनीयतमो भवेत् ।
तदा तु संश्रयेत् क्षिप्रं धार्मिकं बलिनं नृपम् ॥
(७।१७४)

द्वैधीभावः-नीलकण्ठेन द्वैधीभावस्य अर्थः "उभयसन्धिकरणम्" अमन्यत । कुल्लूकभट्टेन द्वैधीभावः इत्थं व्याख्यातः (मनु० ७।१६० )—"स्वार्थसिद्धये बलस्य द्विधाकरणं द्वैधीभावः" इति ।

मनुना द्वैधीभावः द्विधाऽङ्गीकृतः—

बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये ।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥
(७।१६७)

याज्ञवल्क्य( १।३४७ )व्याख्यायां मिताक्षरायाम् "स्वबलस्य द्विधाकरणम्" द्वैधीभावः स्वीकृतम् । द्वैधीभावस्य अति महत्त्वपूर्णं कूटनीतिकं वर्णनम् अत्र श्लोके अस्ति—

बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् ।
द्वैधीभावेन तिष्ठेत् तु काकाक्षिवदलक्षितः ॥

मनुना इयं कूटनीतिकरीतिः इत्थं वर्णिता—

मन्येतारिं यदा राजा सर्वथा बलवत्तरम् ।
तदा द्विधा बलं कृत्वा साधयेत् कार्यमात्मनः ॥
(७।१७३)

कौटल्येन द्वैधीभावस्य अवस्थाविषये उक्तम् "सहायसाध्ये कार्ये द्वैधीभावं गच्छेत्" (७।१।१७)। "सन्धिनैकतः स्वकर्माणि प्रवर्त्तयिष्यामि विग्रहेणैकतः परकर्माण्युपहनिष्यामीति द्वैधीभावेन वृद्धिमा तिष्ठेत्" (७।१।६३)।

## राष्ट्रान्तरीयव्यवहारस्य आचारसंहिता

राष्ट्रान्तरीयसम्बन्धस्य मुख्यम् उद्देश्यं साफल्यमेव । एतदर्थं यस्य नियमस्य स्वरूपस्य व्यवहारस्य च आवश्यकता स्यात्, स नियमः तत्स्वरूपं

स च व्यवहारः करणीयः। अत्र राष्ट्रहितमेव नैतिकतायाः अर्थः, बहिः मैत्रीभावः अन्तश्च शत्रुनाशसङ्कल्पः एष एव सम्बन्धः। बहिस्तु शत्रुविषये मैत्रीभावं दर्शयेत्, अन्तश्च सर्पवच्छत्रुं जानीयात्।[१] बहिः सख्यपूर्णाः सम्बन्धाः शत्रुविषये दर्शनीयाः, येन एतत् प्रकाशं न यायात् यद् अयं शत्रुं कया रीत्या व्यवहर्तुं वाञ्छति इति।[२] स सदा एतच्चिन्तयेद् यत् शत्रोः कः अंशः दुर्बलः।[३] आवश्यकतानुसारं स अन्धस्य बधिरस्य च स्वरूपमपि ग्रहीतुं शक्नोति।[४] तपस्विवद् आचरन् विश्वासम् उत्पादयेत्। अवसरानुसारं 'वृक' इव आक्रमेत्।[५] परिस्थित्यनुसारं शत्रुमपि स्कन्धेन वहेत्। आवश्यकताया समाप्तौ (कार्यसिद्धौ सत्याम्) अपक्वं घटमिव शत्रुं चूर्णयेत्।[६] यथा शत्रुनाशः सम्भवेत्, तथैव आचरेत्।[७]

---

१. शत्रुं च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत्।
नित्यशश्चोद्विजेत् तस्मात् गृहात् सर्पयुतादिव॥
(महा० शा० १६०।१५)

२. वाचा भृशं विनीतः स्यात् हृदयेन तथा क्षुरः।
स्मितपूर्वाभिभाषी स्यात् सृष्टो रौद्राय कर्मणा॥
(महा० आदि० १४०।६६)

३. प्रफुल्लवदनेनैव तथा कोमलया गिरा।
क्षुरधारेण मनसा रिपोश्छिद्रं सुलक्षयेत्॥
(शुक्र० ४।११८२)

४. अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत्।
(महा० आदि० १४०।१२)

५. अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः।
लोकान् विश्वासयित्वैव ततो लुम्पेद् यथा वृकः॥
(महा० आदि० १६०।१६)

६. वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः।
ततः प्रत्यागते काले भिन्द्याद् घटमिवाश्मनि॥
(महा० आदि० १४०।२१)

७. वधमेव प्रशंसन्ति शत्रूणामपकारिणाम्।
(महा० आदि० १४०।१०)

हन्यादमित्रं दानेन तथा पूर्वापकारिणम्॥
(महा० आदि० १४०।१५)

उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः॥
(महा० शा० ६६।१७)

शत्रुतया प्राप्तः पुत्रोऽपि हन्तुं शक्यते ।[1] शत्रुनाशार्थं कस्यापि साधनस्य प्रयोगः कार्यः । येन त्वरितं शत्रुनाशः स्यात् ।[2] अत्र यया रीत्या राष्ट्रान्तरीयसम्बन्धो व्याख्यायते, तत्र इदम् अवधेयमस्ति यत् कीदृशा सम्बन्धाः स्वीकार्याः, एतच्च शत्रोः व्यवहारे एव निर्भरो भवति। चरैः एतद् अवश्यं ज्ञातव्यं यत् शत्रुपक्षः कीदृग् आचरति। यदि स मित्रवद् व्यवजिहीर्षति छलच्छद्मादिभिश्च न प्रयुयुक्षति, तदा नेदम् आवश्यकं यत् तद्विषये मायायाः प्रयोगः कार्य इति । "अमाययैव वर्तेत न कथञ्चन मायया" ( मनु० ७।१०४ ) ।

शत्रुविषये कीदृग् व्यवहरणीयमिति विषये कणिकः इत्थमुपदिशति—

क्रुद्धोऽप्यक्रुद्धरूपः स्यात् स्मितपूर्वाभिभाषिता ।
न चाप्यन्यमपध्वंसेत् कदाचित् कोपसंयुतः ॥
प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥
आश्वसयेच्चापि परं सान्त्वधर्मार्थवृत्तिभिः ।
अथास्य प्रहरेत् काले यदा विचलिते पथि ॥
प्रत्युत्थानासनाद्येन सम्प्रदानेन केनचित् ।
प्रतिविश्रब्धघाती स्यात् तीक्ष्णदंष्ट्रो निमग्नकः ॥
( महा० आदि० १४०।५५-५७,६० )

दुर्बलोऽपि शत्रुः नोपेक्षणीयः ।[3] शत्रोः दौर्बल्यन्तु जानीयात्, परन्तु स्वस्य

---

सर्वोपायैः निहन्तव्याः शत्रवः शत्रुसूदन ।
( महा० सभा० ७६।८ )
तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ॥
( महा० शा० २४।१६ )

१. पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ॥
( महा० आदि० १४०.५२ )

२. शपथेनाप्यरिं हन्याद् अर्थदानेन वा पुनः ।
विषेण मायया वापि नोपेक्षेत कथञ्चन ॥
( महा० आदि० १४०।५३ )

३. "नावज्ञेयो रिपुस्तात"—( विराट २९।४ )
शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा ॥
( महा० उद्योग० ६।२२ )

दौर्बल्यं न ज्ञापयेत्।[1] शत्रोः समृद्धिः कष्टस्य कारणम्।[2] शत्रुदेशे षड्यन्त्ररचनावसरे सर्वप्रथमं शत्रोः कोषस्य क्षतिः कथं स्यादिति विचारणीयम्। एतदर्थं किमपि साधनम् आश्रयितुं शक्यम्।[3] कोषक्षयानन्तरम् आन्तरिकेभ्यः राष्ट्रान्तरीयेभ्यश्च संकटेभ्यः तं त्रातुं कश्चिदपि न प्रभवति। कोषक्षयेण सह एव तस्य सेनाया अपि नाशः कूटप्रयोगैः आरब्धव्यः।[4] शत्रुदेशवासिनां वित्तं तेभ्यो दातव्यम्, तेषां वित्तं न अपहरणीयम् इति यावत्। शक्या विषहताः कर्तुम्" (शा० १०५।२५)।

परराष्ट्रविनाशस्य एष प्रकारः कियान् आधुनिकः—

वधेन च मनुष्याणां मार्गाणां दूषणेन च।
आगाराणां विनाशैश्च परराष्ट्रं विनाशयेत्॥
(महा० शा० ६९।६१)

---

१. नास्य छिद्रं परः पश्येच्छिद्रेण परमन्वियात्।
गूहेत् कूर्म इवाङ्गानि रक्षेद् विवरमात्मनः॥
(महा० आदि० १४०।८)

दोषान् विवृणुयाच्छत्रोः परपक्षान् विधूनयेत्।
(महा० शा० म० १२०।१६)

नात्मच्छिद्रं रिपुर्विद्याद् विद्याच्छिद्रं परस्य तु॥
(महा० आदि० १४०।२४)

२. समस्थो विषमस्थानं दुर्हृदो योऽभिवीक्षते।
जगतीस्थानिवाद्रिस्थः किमतः परमं सुखम्॥
न पुत्रधनलाभेन न राज्येनापि विदन्ति।
प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात्॥
(महा० वन० ३७।१२६)

३. कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति।
उभयत्र प्रयुक्तस्य धर्मेणाधर्म एव च॥
फलार्थंमूलं व्युच्छिद्येत् तेन नन्दन्ति शत्रवः।
(महा० शान्ति० १०५।२०-२१)

४. सिद्धेनौषधयोगेन सर्वशत्रु विनाशिना।
नागानश्वान् मनुष्यांश्च कृतकैरुपघातयेत्॥
(महा० शान्ति० १०५।२४)

महाभारते आदिपर्वणि शत्रुनाशस्य यत्स्वरूपम् अस्मिन् श्लोके वर्णितम्, तस्य व्याख्यानं विस्तरेण कृतं नीलकण्ठेन, तद् अतीव महत्त्वपूर्णम्. अतस्तदत्र उद्ध्रियते--

हन्यादमित्रं दानेन तथा पूर्वापकारिणम्।
हन्यात् त्रीन् पञ्च सप्तेति परपक्षस्य सर्वशः॥

(महा० आदि० १४०।१५)

"अमित्रं सहजशत्रुं दायादं दानेन तत्परिचारकान् वशीकृत्य विषाद्युपायैः हन्यात्। तथा सम्प्रति दासभूतमपि पूर्वापकारिणं हन्यादेवेत्युक्तं भवति। अत्रोपायमाह–हन्यादिति। परपक्षस्य क्लृप्तान् ऐश्वर्यमन्त्रोत्साहान् ऐश्वर्यं तदीयदुर्गाद्याक्रमणेन। मन्त्रं चारैः। उत्साहमाप्तद्वारा वा तेजोवधेन। तथा पञ्चैते त्वया यौवराज्याद् भ्रंशनीया इति भावः। तथा पञ्च 'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चम' इति प्रकृतिपञ्चकहनने शत्रोरैश्वर्यभ्रंशो भवतीत्यर्थः। दण्डोऽत्र सैन्यम्।

साम्ना दानेन भेदेन दण्डेनोद्बन्धनेन वा।
विषेण वह्निना वापि प्रकृतीः पञ्च निर्हरेत्॥

इत्याह सप्तेति।

कृष्णः शत्रुदेशप्रवेशस्य प्रकारम् इत्थं वर्णयति—

अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहान्।
प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्मतः॥

(महा० सभा० २१।५३)

शत्रुदेशगमनमपि न मित्रता. अपि तु विनाशनीतेः एकम् अङ्गम्। शान्तिपर्वणि उक्ता अधोनिर्दिष्टा नीतिः कूटनीतेः सीमां स्थापयति--

रमस्व परमामित्रे विषये प्राज्ञसम्मतः।
भजस्व श्वेतकाकीयैर्मित्रधर्ममनर्थकैः॥

(महा० शा० १०५।१५)

अत्र नीलकण्ठेन इत्थं व्याख्यातम्--

"शत्रुसमीपे श्वेतकाकीयैः श्वा च एतश्च काकश्च तेषामिमे धर्माः क्रमेण नित्यं जागरूकत्वभयचकितत्वपरेङ्गितज्ञत्वानि, तैः उपायैः मित्रधर्मं भजस्व"।

"राजा शत्रौ कदाऽपि न विश्वसेत्, परन्तु शत्रुः जानीयात् यद् एष मामपि विश्वसिति। इत्थं व्यवहरेत् तस्माद् भीतवद्, भीतो विश्वस्तो बहु विश्वसन्" (म० शा० १३८।२१२)।

राज्ञः कार्याणि अत्यन्तं गुप्तानि स्युः। तेषां ज्ञानं फलेनैव भवेत्, न तु फलसिद्धेः पूर्वम्--

मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता।
आकारमभिरक्षेत चारेणाप्यनुपालितः॥
नास्य कृत्यानि बुध्येरन् मित्राणि रिपवस्तथा।
आरब्धान्येव पश्येरन् सुपर्यवसितान्यपि॥

(महा० आदि० १४०।७६, ८१)

शत्रोः सर्वनाशार्थं तस्य मूलान्येव प्रथमम् उन्मूलनीयानि, येन तस्य सहायकाः स्वयमेव नाशं प्राप्नुयुः। यदि शत्रुः दीनः सन् शरणमागच्छति, तदा स रक्षणीयः।[1] किन्तु यदि तस्य शरणागतिः कूटनीतिकी स्यात्, तदा स नाशनीयः एव।[2]

बलवता राज्ञा सह शत्रुत्वं न कार्यम्--"बलवद्भिर्विरुद्धं न कार्यमेतत् त्वयानघ" (महा० वन० ३७।३२)। बलवता सह शत्रुत्वम् आचरन् दुर्बलो न कदापि सुखी भवितुं शक्नोति, यतः बलवान् राजा श्येन इव आक्रमणं करिष्यति।[3] प्रथमतस्तु

१. अमित्रमपि चेद् दीनं शरणैषिणमागतम्।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तम॥
(महा० अनु० ५६।१०)

२. दया न तस्मिन् कर्त्तव्या शरणागत इत्युत।
(महा० आदि० १४०।१४)

अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन्।
(महा० आदि० १४०।२२)

तत्त्वया न क्षमा कार्या शत्रून् प्रति कथञ्चन।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः॥
(महा० वन० २७।३६)

भार्याभिहर्ता वैरी यो यश्च राज्यहरो रिपुः।
याचमानोऽपि संग्रामे न मोक्तव्यः कथञ्चन॥
(महा० वन० २७१।४६)

अमित्रं नैव मुञ्चेत वदन्तं करुणान्यपि।
दुःखं तत्र न कर्त्तव्यं हन्यात् पूर्वापकारिणम्॥
(महा० वन० १६०।५२)

३. अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाश्वसेत्।
श्येनाभिपतनैरेते निपतन्ति प्रमाद्यतः॥
(महा० शा० ११३।२०)

बलवता सह शत्रुत्वं नाचरणीयम्—"अबलानभियुञ्जीत न तु ये बलवत्तराः" (महा० शा० ११३।२१)। यदि ईदृशी स्थितिः आयात्यपि, तदा तत्काले एव आत्मानं समर्पयेत्, अन्यथा नाश एव स्यात्।[1] बलवतः राज्ञः पुरः वैतसीं वृत्तिम् आश्रयेत- "संश्रयेद् वैतसीं वृत्तिमेतत् प्रज्ञानलक्षणम्" (महा०शा० ११३।१४)। "तिष्ठेथाः राजशार्दूल वैतसीं वृत्तिमास्थितः" (आश्रमवासिक० ६।१८)।

राष्ट्रान्तरीयसम्बन्धानां पक्षः अस्माभिरिह उपस्थापितोऽस्ति। यस्य आधुनिकाः निन्दां कुर्वन्ति। डॉ वेनीप्रसादानुसारं क्रूरतया धूर्ततया च राज्यसञ्चालनमारब्धम्।[2] राज्यस्य अस्यां व्याख्यायां मेकेवलीमहोदयस्य शक्तिराजनीत्योः समन्वयो भवति, यत्र साफल्यमेव सर्वस्वम्। एन० एन० घोषमहोदयस्य कथनं यत् शान्तिपर्वीयवचनैरेव एकम् ईदृशं पुस्तकं निर्मातुं शक्यते यत् मेकेवलीसिद्धान्ततोऽपि अधिकं कूटनीतिकं भवितुं शक्नोति।[3]

वस्तुतः आधुनिकविदुषां यः वर्गः भारतीयराजनीतिविषये कार्यं कुर्वन्नस्ति, तत्र मूलभूताः असङ्गतयः सन्ति। यदि सः प्राचीनभारतीयसाहित्यं कथञ्चिदपि परिचिनोति, तदा न स आधुनिकीं राजनीतिं जानाति। यदि च स आधुनिकराजनीतिं जानाति, तदा प्राचीनभारतीयसाहित्यं न परिचिनोति। अद्ययावन्न केनापि ईदृग् प्रयतितं येन द्वयोरपि एकीकरणं स्यात्, तेषां प्रतिभायाः समन्वयात्मकः प्रयोगः क्रियेत। पाश्चात्यानां विदुषां केचन संस्काराः ईदृशा आसन् यत् ते विद्वांसः अत्र विषये कार्यं कर्तुं समर्थाः आसन्, परन्तु तैः स्वसाम्राज्यस्थापनार्थं सम्पूर्णोऽपि एतत्सम्बन्धी विषयः अन्यथैव बोधितः, भारतीयाश्च विद्वांसः तदेव उच्छिष्टं सिद्धान्तं भारतीयसाहित्ये अन्वैष्यन्।

मेकेवलीमहोदयः मानवजीवनमेव छलछद्मपूर्णं मन्यते। महाभारतादिषु मनुष्यैः ईश्वरस्य महीमात्वम् स्वीक्रियते। ततः अधिकं पवित्रं प्रज्ञाशीलञ्च न किञ्चित्। पत्नी पुत्री च इति उभे अपि मानुष्यौ, परन्तु द्वयोरपि विषये समानो व्यवहारः अनैतिकः। एवमेव शत्रुमित्रयोरपि न एकरूपो व्यवहारः। शत्रुविषये

---

१. यो हि शत्रोर्विवृद्धस्य प्रभोर्बन्धविनाशने।
पूर्वं न सहते वेगं क्षिप्रमेव विनश्यति॥
(महा० शा० ११३।१२)

२. Beni Prasad: The State in Ancient India, pp. 61, 93.

३. N. N. Gosh: The Ramayań and MahāBhārat, A Sociological Study; Shri Ashutosh Mukherjee, Silver jubile volume, Pt. II PP. 387-8.

एकमेव उद्देश्यं भवति। तच्च विजयस्वरूपम्। विजयस्य विकल्पः पराजयः। अतो विजयप्राप्त्यर्थं सर्वविधान्यपि साधनानि अवश्यम् आश्रयणीयानि। परन्तु समाजविषये अन्ये नियमाः भवन्ति। आधुनिकैः विद्वद्भिः स्वदुर्मतिः प्राचीनराजनीतौ अन्वेषणीया अस्ति। ते अस्मिन् साधारणेऽपि अन्तरे न अवदधते।

वस्तुतः प्राचीनभारतीयराजनीतौ राष्ट्रान्तरीयनियमानां यत् सार्वभौमं स्वरूपं विकसितमस्ति, सम्यक्तया तस्य अध्ययनम् अपेक्षितम्। अस्माभिरिह संक्षेपतः सामान्याः केचनांशाः प्रस्तूयन्ते। एतच्च विस्तरेण अन्यत्र वर्णयिष्यामः।

राजदूतः

ऋग्वेदे अग्निना दौत्यम् आचरितुम् इति लभ्यते ऋग्वेदे (ऋग्वेदः १।१२।१; १।१६१।३;८।४४ ३)। एवमन्यत्र (१०।१०८।२-४) एषोऽपि निर्देशो लभ्यते यदिन्द्रेण पणिकांषं ज्ञातुं सरमा प्रहिता। इत्थं च राजदूते गुप्तचरे चेति अर्थद्वयेऽपि दूत इति शब्दः प्रयुक्तोऽस्ति। डॉक्टर-वासुदेवशरणाग्रवालमहोदयेन धार्मिकराजनीतिकदूतयोः भेदः स्वीकृतः।[1] दूतानां कर्त्तव्यस्य योग्यतायाश्च विस्तरेण वर्णनं लभ्यते।[2] मनुस्मृतौ अस्मिन् विषये इत्थं वर्णितम्—

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम्।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम्॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित्।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते॥
अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया।
नृपतौ कोशराष्ट्रे च दूते संधिविपर्ययौ॥
दूत एव हि संधत्ते भिनत्त्येव च संहतान्।
दूतस्तत्कुरुते कर्म भिद्यन्ते येन मानवाः॥

---

१. V. S. Agrawal; Embassies in Anciant India, The journal of the U. P. Historical Society. Vol. XX, 1947. pp. 6-12.

२. उद्योगपर्व ७२।७; ३७।२५; अयोध्याकाण्डम् १००।३५; मनु० ७।६३-६७; मत्स्यपुराणम् २१५।१२-१३; शांतिपर्व ८५।२६-२७; शुक्र० २।८५-८६; कामन्द० १२।२।

स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ।।
बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम् ।।
तथा प्रयत्नमातिष्ठेद् यथात्मानं न पीडयेत् ।।
(७।६३-६८। )

दूतस्य योग्यता कर्त्तव्यं च यथा मनुना स्वीक्रियते, तथैव अन्यैरपि शास्त्रकारैः। एतद्विषये महाभारतादीनां कानिचिद् वचनानि उल्लेखनीयानि सन्ति—

कुलीनः कुलसम्पन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान् दूतः स्यात् सप्तभिर्गुणैः ।।
( महा० शा० ८५।२८ )

अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं दूतं वदन्त्यष्टगुणोपपन्नम् ।।
( महा० उद्यो० ३७।२७ )

प्रगल्भः स्मृतिमान् वाग्मी शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेः दूतो भवितुमर्हति ।।
( कामन्द० १२।२ )

इङ्गिताकारचेष्टज्ञः स्मृतिमान् देशकालवित् ।
षाड्गुण्यमन्त्रविद् वाग्मी वीतभीर्दूत उच्यते ।।
( शुक्र० २।८६ )

दूतस्य योग्यतायाः कर्त्तव्यस्य च पर्यालोचनेन इदं स्पष्टं भवति यत् स राज्यस्य मुख्यम् उत्तरदायित्वं निर्वहति। पुरोहितेभ्योऽपि एतद् दायित्वं दातुं शक्यमासीत्। महाभारतयुद्धारम्भात् पूर्वं द्रुपदेन कौरवाणां सविधे पुरोहित एव प्रहितः। अर्थशास्त्रनीतिशास्त्रादिषु त्रिविधाः दूताः स्वीकृताः। कौटल्यमतानुसारं निसृष्टार्थः, परिमितार्थः, शासनहरश्चेति त्रयः दूताः।[1] एषु निसृष्टार्थः अमात्य-

१. अमात्यसम्पदोपेतो निसृष्टार्थः। पादगुणहीनः परिमितार्थः। अर्धगुणहीनः शासनहरः (अर्थशास्त्रम् १।१६।२-४)। स च त्रिविधः– निसृष्टार्थः, परिमितार्थः शासनहरश्चेति (नीतिवाक्या० १३।२)।

निसृष्टार्थो मितार्थश्च तथा शासनहारकः।
सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधः स्मृतः।।
(काम० १३।३)

सम्पद् भवति। स्वनीतिं पूर्णतया स्थापयितुम् एष समर्थः। संधिविग्रहादिषु स्वामिनदेव एषोऽपि प्रमाणम्। एवंविध एव दूतो भूत्वा कृष्णः पाण्डवानां दौत्यम् आचरत्। यत्कृते स्वामिनः संधिविग्रहौ प्रमाणम् स निसृष्टार्थः यथा कृष्णः पाण्डवानाम् (महा०. उद्योग०, ७२।८०)। कामन्दकनीतिसारस्य (१३।२) श्लोकस्य व्याख्यानावसरे जयमंगलायां शंकरार्येण दूतत्रयस्य स्वरूपं भिन्नं वर्णितम्—"निसृष्टार्थः, यथाकामेन निसृष्टः संध्यादिरर्थो यस्मिन्। परिमितार्थः त्वयैतावद् वाच्यमिति। शासनहारकः, लेखनहारकः। सामर्थ्यात् पादतो हीन इति अमात्यगुणांश्चतुर्धा विभज्य योजनीयम्। तत्र गुणसाकल्यं सामर्थ्यमस्य तदुपेतो निसृष्टार्थो वेदितव्यः। तस्य पादतो हीनः पादत्रययुक्तः परिमितार्थः। तस्यापि पादतो हीनः पादद्वययुक्तः शासनहारकः। तेन भेद्यापेक्षया पादतो हीन इति द्विरावर्त्तनीयम्।" याज्ञवल्क्यस्मृतेः (१।३२८) टीकायां मिताक्षरानुसारेण "दूताश्च ये प्रकटमेव राजान्तरं गतागतमाचरन्ति। ते च त्रिविधाः – निसृष्टार्थाः, सन्दिष्टार्थाः शासनहराश्चेति। तत्र निःसृष्टार्था राजकार्याणि देशकालोचितानि स्वयमेव कथयितुं क्षमाः। उक्तमात्रं ये परस्मै निवेदयन्ति, ते सन्दिष्टार्थाः। शासनहरास्तु राजलेखहारिणः।" वियना काँग्रेसे (१८१५)। राजदूतस्य श्रेणित्रयं तु आधुनिक्यां राष्ट्रान्तरीयनीतौ अपि स्वीकृतम्।

दूताः यत् कमपि उच्चारयन्ति स विचारः न तेषां व्यक्तिगतः, अपि तु राज्यविषयको भवति। तेषां व्यवहारेण तद्राज्यस्य व्यवहारः ज्ञातो भवति। यदा ते दूता भूत्वा आयान्ति, तदा तस्यामपि अवस्थायां तेभ्यः दण्डो न देयः, अपि तु तद्द्वारेण तद्राज्यविषये आक्रोशः व्यञ्जनीयः। 'दूतमुखा वै राजानः' इति रामायणे सुन्दरकाण्डे एतदेव मतं स्पष्टीकृतम्। "ब्रुवन् परार्थं परवान् न दूतो बधमर्हति" (५२।२१)। इत्थं दूतविषये ईदृशोऽपि अभद्रः व्यवहारः निन्दितोऽस्ति।

न तु हन्यान्नृपो जातु दूतं कस्याञ्चिदापदि।
दूतस्य हन्ता निरयम् आविशेत्सचिवैः सह ॥
यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः।
यो हन्यात् पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥
(महा० शा० ८५।२६-२७)

दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः।
(महा० उद्योग० १६२।३९)

अभिज्ञो दूतवाक्याना यथोक्तं ब्रुवतो मम ॥
दुर्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि ।
( महा० उद्योग० १६१।२ । )

न्यस्तशस्त्रौ गृहीतौ च न दूतौ वधमर्हतः ।
( रामा० युद्ध० २५।२० )

एषाम् आदर्शानां व्यवहारः सदा आसीत् । द्रुपदेन प्रहितः दूतः धृतराष्ट्रेण, भीष्मेण, विदुरेण च आदृतः ( महा० उद्यो० ४।२५;६।२०; २०।१) । इत्थमेव पाण्डवैः संजयः सत्कृतः । दुर्योधनदूतेन उलूकेन पाण्डवानां विषये अपशब्दा अपि उच्चारिताः । परन्तु प्रतिवचनं तथा तेन एतदेव श्रुतम् "उलूक न भयं तेऽस्ति ब्रूहि त्व विगतज्वरः" ( महा० उद्योग० १६१।३ ) । महाभारते केवल दुर्योधनस्य दुर्व्यवहारविषये एकम् उदाहरणं लभ्यते । यत्र दूतरूपतया संप्राप्तः कृष्णः दुर्योधनेन अवज्ञातः । द्रुपदपुरोहितेन यत्कथितं तदुत्तरतया भीष्मेण उक्तम्--"अतितीक्ष्णं ते तु वाक्यं ब्राह्मण्यादिति मे मतिः (महा० उद्यो० २१।४) । कर्णेन उत्तरं ददता कानिचिद् परुषाणि वाक्यानि प्रयुक्तानि, परन्तु न तानि दूतविषये अपि तु पाण्डवविषये । तथापि भीष्मेण कर्णस्य प्रतिवादः कृत — किं नु राधेय वाचा ते कर्म तत् स्मर्तुमर्हसि" (महा०उद्यो० २१।१६) । एतद् धृतराष्ट्रेन समर्थितम्-"धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च" महा०उद्यो० २१।१८) । "स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान्" (महा०उद्यो० २१।२१) । दुर्योधनेनापि कृष्णविषये न एतदर्थं दुर्व्यवहारः कृतः यत् कृष्णः दूतः आसीत्, अपि तु तद्दृष्ट्या कृष्ण एव सम्पूर्णायाः पाण्डवशक्तेः मूलमासीत् । अत एव तेन दुराचरितम्, न तु केवल दूत इति मत्वा—

वयमेव हृषीकेश निगृह्णीम बलादिव ।
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥
अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च ।
अस्मिन् गृहीते वरदे ऋषभे सर्वसात्वताम् ॥
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ।
( म०उद्यो० १३०।५-८ )

रावणेन हनुमता सह लांगूल-दहन-विषये यद् व्यवहृतं तद् विचारणीयमस्ति। हनुमता दूतमर्यादां विहाय गुप्तचरतया लंकायां प्रवेशकृद् आसीत्। अत एव हनुमान् रावणेन दण्डितः।

भारतीये साहित्ये दूतविषये महान् विचारः कृतोऽस्ति। तस्य सहस्रतमोऽप्यंश अद्य यावत् आधुनिकैः प्राचीनैः वा विद्वद्भिः प्रकाशम् नानितोऽस्ति। नात्र विस्तरावसरः। उद्योगपर्वणि यदि दूतसंबन्धी अंशः व्याख्यायेत, तदा स एव अंशः महान् प्रबन्धो भवेत्, इयती सामग्री दूतविषये महाभारते उपलभ्यते। स विषयः यद्यपि अत्यन्तं महत्त्वपूर्णः, तथापि तस्य दिङ्मात्रमिह प्रदर्शितम्। अत्र संक्षेपतः विषयम् उपस्थापयितुं कौटलीयस्य अर्थशास्त्रस्य केचन अंशाः प्रस्तूयन्ते। तेषाम् अंशानां पर्यालोचनेन एकः नूतनः प्रश्न उद्भवति यत् किं तदानीमपि अद्यत्वे इव दूतावासा आसन्? यतः दूतस्य परराष्ट्रे यद् उत्तरदायित्वं कौटल्येन कथितम्, तद् उत्तरदायित्वम् एकाकी दूतः कथं निर्वोढुं शक्नोति। आधुनिका विद्वांसः दूतावासात्मिकां संस्थां प्राचीनकाले न मन्यन्ते, अस्माभिः अत्र विषये कोऽपि स्वीयो विचारः न उपस्थाप्यते, अपि तु विषयस्पष्टीकरणार्थं मूलांश एव उद्ध्रियतेः—

'सुप्रतिविहितयानवाहनपुरुषपरिवापः प्रतिष्ठेत। शासनमेवं वाच्यः परः, स वक्ष्यत्येवं, तस्येदं प्रतिवाक्यमेवमतिसंधातव्यमित्यधीयानो गच्छेत्। अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत्। अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य चावेक्षेत। दुर्गराष्ट्रप्रमाणं सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत। पराधिष्ठानमनुज्ञातः प्रविशेत्। शासनं च यथोक्तं ब्रूयात्। प्राणाबाधेऽपि दृष्टे। परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं वाक्यपूजनमिष्टपरिप्रश्नं गुणकथासङ्गमासन्नमासनं सत्कारमिष्टेषु स्मरणं विश्वासगमनं च लक्षयेत्तुष्टस्य विपरीतमतुष्टस्य। तं ब्रूयात्। दूतमुखा वै राजानस्त्वं चान्ये च। तस्मादुद्यतेष्वपि शस्त्रेषु यथोक्तं वक्तारस्तेषामन्तावसायिनोऽप्यवध्याः। किमङ्ग पुनर्ब्राह्मणाः। परस्यैतद् वाक्यमेष दूतधर्म इति।

"वसेदविसृष्टः प्रपूजया नोत्सिक्तः। परेषु बलित्वं न मन्येत। वाक्यमनिष्टं सहेत। स्त्रियः पानं च वर्जयेत्। एकः शयीत। सुप्तमत्तयोर्हि भावज्ञानं दृष्टम्।"

"कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं रागापरागौ भर्तरि रन्ध्रं च प्रकृतीनां तापसवैदेहकव्यञ्जनाभ्यामुपलभेत। तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा। तेषामसंभाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः। पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत। उपलब्धस्योपजापमुपेयात्। परेण चोक्तः स्वासां प्रकृतीनां परिमाणं नाचक्षीत्। सर्वं वेद भवानीति ब्रूयात्। कार्यसिद्धिकरं वा। कार्यस्य सिद्धावुपरुध्यमानस्तर्कयेत्। किं भर्तुर्मे व्यसनमासन्नं पश्यन्। स्वं वा व्यसनं प्रतिकर्तुकामः। पार्ष्णिग्राहासारावन्तः कोपमाटविकं वा समुत्थापयितुकामः।

मित्रमाक्रन्दं वा व्यापादयितुकामः। स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः। संसिद्धं मे भर्तुर्यात्राकालमभियन्तुकामः सस्यकुप्यपण्यसंग्रहं दुर्गकर्मबलसमुत्थानं वा कर्तुकामः। स्वसैन्यानां वा व्यायामदेशकालावाकांक्षमाणः। परिभवप्रमादाभ्यां वा। संसर्गानुबन्धार्थी वा। मामुपरुणद्धीति।

"ज्ञात्वा वसेदपसरेद्वा। प्रयोजनमिष्टमवेक्षेत वा शासनमनिष्टमुक्त्वा बन्धवधभयादविसृष्टो व्यपगच्छेत्। अन्यथा नियम्येत्।"

प्रेषणं सन्धिपालत्वं प्रतापो मित्रसंग्रहः।
उपजापः सुहृद्भ्यो गूढदण्डातिसारणम्॥
बन्धुरत्नापहरणं चारज्ञानं पराक्रमः।
समाधिमोक्षो दूतस्य कर्मयोगस्य चाश्रयः॥

(अर्थ० १।१६।५-५०)

उपर्युक्तेन विवेचितेन स्पष्टं यत् ऋग्वेदतः एव पारस्परिकाणां सम्बन्धानां विस्तारार्थं दूतानां व्यवहारः आसीत्। रामायणमहाभारतादिसमये राजदूतैः सर्वमान्यस्थानं प्राप्तम् आसीत्। राजनीतिकदृष्ट्या सामाजिकदृष्ट्या च दूतानां स्थानं महत्त्वपूर्णमासीत्। कृष्णसंजयप्रभृतिभिरपि महापुरुषैः दौत्यमाचरितम्। युवराजेन अङ्गदेनापि दौत्यं कृतम्। डॉक्टर जी० एन० बनर्जीमहोदयस्य मतानुसारं सिकन्दरस्य आक्रमणसमयतः दूतस्य राष्ट्रान्तरीयं स्वरूपं पुरः आयाति (हेलेनिज्म इन इण्डिया, पृ० ५)। मजुमदारमहोदयः स्वीकरोति यदितः पूर्वम् अपि राजदूतस्य राजनीतिकं स्वरूपं व्यवस्थितम् आसीत् (एन्शेण्ट इण्डिया, पृ० ११०)। वस्तुतः सिकन्दराक्रमणात् पूर्वं राष्ट्रान्तरीयक्षेत्रे दूतस्य कार्यं प्रचलितम् आसीत्। मिस्रदेशेन सह अस्माकं दूतसंबन्धः ततोऽपि पूर्वम् आसीत्। (मिक्रिन्डिल, एंशेण्ट इण्डिया, पृ० १०८)।

मनुना (७।६६) दूतस्य यादृशं स्वरूपम् उक्तं तदनुसारेण दूताः सन्धेः विग्रहस्य च द्वाराणि सन्ति। अत एव ते पूर्णतया युद्धनियमान् शान्तिनियमांश्च मानयेयुः। एतेन सह अन्येऽपि गुणाः दूतस्य कृते आवश्यकाः। स राष्ट्रेण सह मैत्रीस्थापने दक्षः भवेत्, शत्रुराष्ट्रमपि स्वानुकूलं कर्तुं प्रभवेत्। एतन्मनुवचनं व्याचक्षाणेन कुल्लूकभट्टेन यल्लिखितं तेन सरहेनरीवाटनमहोदयस्य मतं पुरः आयाति यद् दूतः स्वदेशकल्याणार्थं देशान्तरे प्रहीयते।

कौटल्येन दूतकार्याणि यथा प्रदर्शितानि तेन दूतस्य कानिचित् कार्याणि इत्थं पुरः आयान्ति। राष्ट्रान्तरप्रधानस्य सविधे स्वदेशसन्देशस्य प्रापणम्। सन्धेः विस्तारः, स्वदेशस्य स्वस्वामिनश्च शक्तिः विस्तरेण वर्णनीयम्। शत्रुराज्येषु

मित्राणां करणम् । शत्रोः मित्राणां भेदनम् । शत्रुराजस्य सैन्यशक्तेः प्रशासनस्य च अनुसन्धानम्, तत्र भेदाद्भावनञ्च । तेषु स्वदेशानुकूलानां भावानाम् उद्बोधनम् । अतोऽन्यान्यपि यानि कार्याणि कौटल्येन निर्दिष्टानि तानि दूततोऽप्यधिकं महत्त्वपूर्णानि । तदनुसारं दूतस्य कर्त्तव्यं यद् राज्याधिकारिभिः, विशेषतः अरण्यनगरादीनाम् अधिकारिभिः सह मैत्रीं स्थापयेत् । स परराज्यस्य सैनिकविषये महत्त्वपूर्णानां स्थानानां बोधयन् । स एतदपि जानीयाद् यत् शत्रोः दुर्गशक्तिः कियती, कीदृशी च अस्ति ? तद्देशे खनिजशक्तिः कियती, कुत्र च अस्ति ? तस्याश्च सुरक्षायाः कानि साधनानि ?

कौटल्येन दूतानां यानि कार्याणि कथितानि तेषां कार्याणां सम्पादनस्य च ये प्रकाराः निर्दिष्टाः तेन स्पष्टीभवति यद् दूतावासे कर्मचारिणः बहवो गुप्तचराः भवन्ति स्म । तदनुसारं शत्रूणां गुप्ततमान् व्यवहारान् ज्ञातुं धूर्तवटुकब्रह्मचर्यादिस्वरूपाणां कर्मचारिणां प्रयोगः कर्त्तव्यः, अर्थात् कर्मचारिणः ब्रह्मचर्यादिस्वरूपं धृत्वा शत्रोः गुप्ततमान् व्यवहारान् जानीयुः ।

अस्य तात्पर्यं यद् विदेशेषु विद्यार्थीतया गुप्तचराणां कार्यं तत्समयादेव प्रचलितमस्ति अद्यापि अयं व्यवहारः आश्रियते । विदेशीयेषु दूतावासेषु गुप्तचराः सर्वाधिकं नियुज्यन्ते । सर्वे कर्मचारिणः एवं प्रशिक्षितास्तु भवन्त्येव । कौटल्यः उद्योगिरूपेण संन्यासिरूपेण च, उपदेशकतया वा दूतानां प्रयोगम् अधिकमाद्रियते । अद्यापि विभिन्नानि शिष्टमण्डलानि एतदर्थम् आयान्ति । गुप्तचरकार्यं कर्तुम् उपर्युक्तेषु स्थानेषु ग्रन्थालयः, मदिरालयः, तीर्थस्थानं मन्दिराणि च इत्यादीनि स्थानानि मुख्यानि ।

कौटल्यो दूतानां योग्यताम् उत्तरदायित्वं च यथा उपस्थापयत् तद्विवरणेन कानिचित् महत्त्वपूर्णानि तत्त्वानि अस्माकं पुरः आयान्ति । तस्य द्वे कार्ये मुख्ये—संधेः संरक्षणं स्वदेशस्थितेः दृढीकरणं च । एतत् कार्यद्वयं प्रत्येकं राज्यं दूतद्वारेण करोति । राजा आगताद् दूतात् परिचयं सम्यक् लब्ध्वा इदं अवगच्छेद् यद् अस्य किं कार्यमिति । अत एव कौटल्यः दूतेषु तत्कर्मचारिषु च सावधानतया व्यवहरणीयमिति निर्दिशति ।

ईदृशे महत्त्वपूर्णे पदे कार्यं कुर्वतः पुरुषस्य ( दूतस्य ) योग्यता कीदृशी स्याद् इति पूर्णतया अवधेयं भवति । मनूक्ते वर्गीकरणे प्रभावद्वयं स्पष्टीभवति । अभिजातवर्गीया वैयक्तिकी च योग्यता । तदनुसारं दूताः उत्तमकुलोत्पन्नाः, शास्त्रदक्षाः इङ्गितमात्रेण अभिप्रायज्ञाः, राष्ट्रभक्ताः, संविधाने राज्ञि च श्रद्दधानाः, देशकालज्ञाः, सुन्दरशरीराः सन्तुलितस्वभावाश्च स्युः ।

वर्त्तमानकालेऽपि दूतस्य कृते एषा योग्यता अपेक्षितास्ति यद् दूतः व्यक्तित्व-सम्पन्नः, वाग्मी, दक्षः, लोकप्रियः, निर्भयः स्मृतिशक्तिसम्पन्नः, व्यक्तीनां वस्तूनां च परिचेता स्यात्। यादृशी दूतस्य योग्यता मनुना निर्दिष्टा, तादृशी एव महाभारतेऽपि प्रतिपादिता। रामायणविवरणेन इदं प्रतीयते यद् दूतस्य कृते सप्तगुणाः आवश्यकाः।

कौटल्यः प्रथमस्तरीयं निसृष्टार्थं दूतम् अमात्यसमकक्षं मन्यते। अमात्यस्य कृते आवश्यकं वर्तते यत् स जनपदनिवासी स्यात्। इत्थमेव स कृतशिल्पश्चक्षुष्मान्, प्रज्ञाशीलः, वाग्मी, प्रगल्भः, प्रतिपत्तिमान्, उत्साहप्रभावयुक्तः, दृढभक्तिशीलः, बलारोग्यसत्त्वयुतश्च स्यात्।

कौटल्योक्ता गुणाः अद्यत्वे एवं व्याख्यातुं शक्या यत् स दूतः देशस्य नागरिकः, शिक्षितः, सामाजिकः, दक्षः, निर्भयः, विलक्षणप्रवक्ता, वार्तालापनिपुणः, सुन्दरव्यक्तित्वसम्पन्नः राष्ट्रभक्तश्च स्यात्। अद्यत्वे राजदूतानां नियुक्तिविषये किञ्चित् विधानमस्ति। परन्तु उक्तानां गुणानां महत्त्वपूर्णं स्थानम् अस्ति। एतद्-विषये केवलम् अपवादतया नबाब इस्माइल इत्येतद्विषयकम् एकम् उदाहरणं लब्धुं शक्यं यत् सः भारतीयनागरिकः सन्नपि पाकिस्तानीय 'हाई कमिश्नर' इति रूपतया भारते आसीत्। सामान्यतः अन्येषां नियमानाम् अपवादो न दृश्यते। एतद्मवश्यमस्ति यद् भारतीयविदेशसेवायां पत्न्याः अपि योग्यता विचार्यते।

राजदूतसंबन्धस्थापनात् पूर्वं द्वयोर्देशयोः परस्परं परामर्शः आवश्यको भवति। तयोः उभयोरपि स्वीकृतौ सत्याम् एव कूटसंबन्धस्य स्वरूपं पुरः उपतिष्ठति। यतः सर्वप्रथमं देशान्तरप्रधानस्य पुरः स्वीयपरिचयपत्रम् उपस्थाप्यैव तत्र कार्यं कर्तुं शक्नोति दूतः। एवंविधा व्यवस्था आधुनिके राष्ट्रान्तरीयविधावपि अस्ति। कौटल्यमतानुसारं राजदूतः तदैव स्वकार्यम् आरभते, यदा तदीयकार्यालयस्य कार्यं पूर्णतया व्यवस्थितं भवति। कर्मचारिणः तत्र गत्वा व्यवस्थां कुर्वन्ति। स स्वदेशतः निर्देशं लभते यत् स स्वपदं गृह्णीयात्। यत्र देशे कार्यं करणीयमस्ति, तस्य देशस्य स्वीकृतिमपि यदा लभते, तदैव स तत्र देशे गच्छति। (अर्थशास्त्रम् ११।१६)। प्रायः ईदृशा एव नियमा अद्यत्वेऽपि दृश्यन्ते (लारेन्स, प्रिंसिपुल्स ऑफ इण्टरनेशनल लॉ, पृ० २८२, २८३)

काश्चन ईदृश्यः परिस्थितय आसन् यत्र कूटसम्बन्धा विनष्टा भवन्ति स्म। कौटल्येन षण्णां स्थितीनां चित्रणं कृतम्, यत्र सम्बन्धः समाप्तिमियात्। तदनुसारं कार्यानन्तरं राजदूतेषु अनुचितव्यवहारानन्तरं च कूटसम्बन्धाः समाप्ता भवन्ति। यदि ईदृशी आशंका भवेद् यत् शत्रुभिः दूताः बन्दीकरिष्यन्ते, अथ च दण्डयिष्यन्ते, तदा दूतः स्वदेशे एव आहूयत स्म सम्बन्धश्च समाप्तः अमन्यत। राजदूता यदि मैत्रीसम्बन्धात् प्रतिकूलं कार्यम् आचरन् बन्दीक्रियेत तच्च कार्यं तस्य

राजा अनुचितं नामन्यत, तदा सम्बन्धानां समाप्तिर्भवति स्म। राज्ञः मृत्योः पश्चादपि ईदृशी स्थितिः सम्भाव्यते। द्वयोः देशयोः युद्धघोषणानन्तरं एष सम्बन्धः तत्काल एव समाप्तिं याति ( अर्थ० १।१६ )।

कस्यामपि परिस्थितौ दूतवधः, दूतावमानादिकं राष्ट्रान्तरीयनीतिविरुद्धं स्वीक्रियते। कौटल्यः कथयति यद् दूतः यत् किञ्चिदपि करोति तत् सर्वं कथनं कार्यं च न दूतस्य, अपि तु राज्ञः; यस्य राज्ञः स दूतः। अतः अस्यां स्थितौ यत् किञ्चिदपि कार्यं भवेत् तत् सर्वं राज्यविषये एव अनुष्ठेयम्, न तु दूतविषये ( अर्थ० २।२८ )। इत्थं च राजदूतविषये कृतेन विवेचनेन वयं इमं निष्कर्षमासादयामः यद् भारतीया राजनीतिकपरम्परा राष्ट्रान्तरीयक्षेत्रे प्राचीनतमा सुव्यवस्थिता च अस्ति। राष्ट्रान्तरीयनियमानां सैद्धान्तिकविवेचनस्य स्थाने एषां नियमानां प्रयोगः भारतीयपरम्परायाम् आसीत्। विभिन्नैः वैदेशिकैः यातृभिः अस्माकं राष्ट्रान्तरीयनियमाः, तेषां मर्यादा च प्रशंसिताः। अद्यापि वयं तां मर्यादां परिपालयितुं प्रयतामहे। किन्तु अद्य अस्माभिः तेषां राष्ट्राणां दूतावासविषये अत्यन्तं सावधानैः भाव्यम्, यानि राष्ट्राणि दूतावासद्वारेण गुप्तचराणां जालं प्रसारयितुं चेष्टन्ते।

चरः

राजदूतः प्रकाशचरः, चरश्च गुप्तचरः। चराणां वर्णनं ऋग्वेदत एव प्रारभ्यते।[1] गुप्तचरः सेनायाः अष्टमो विभागः ( शा० ५९।४१-४२ )। राजा दीर्घचक्षुः चारचक्षुश्च कथितः। "चारेण तस्मादुच्यन्ते, राजानो दीर्घचक्षुषः" ( रामायणम्, अरण्यकाण्डम् ३३।१० ); "चारचक्षुः महीपतिः" ( कामन्दक० १२,१८ ); "चारचक्षुः नरेन्द्रः स्यात्" ( कामन्दक० १२०।३० ); "उदासीनारिमित्राणां सर्वमेव चिकीर्षितम्। पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा" ( शा० प० ८६।२१ ); "चारचक्षूंषि क्षितिपतीनाम्" ( नीतिवाक्यमृतम् १४।१ ) इत्यादीनि वचनानि अत्र प्रमाणानि। राजा राज्यस्य आन्तरिकसंघटने मन्त्रिमण्डलत आरभ्य निम्नस्तरीयकर्मचारिपर्यन्तानां सर्वेषां कार्याणि निरीक्षितुं गुप्तचराणां नियुक्तिं कुर्यात्—

चारस्त्वविदितः कार्य आत्मनोऽथ परस्य च।

( महा० शा० १४०।४० )

---

१. ऋग्० १।२५।१३; ४।४।३; ७।६१।३, ८।; ७।८७।३; १०।१०।१-१६; १८।११९।

चारयेथाश्च सततं चारैरविदितैः परैः।
परीक्षितैर्बहुविधैः स्वराष्ट्रप्रतिवासिभिः।

( महा० आश्रम० ५।१५ )

चारेणोत्साहयोगेन क्रिययैव च कर्मणाम्।
स्वशक्तिं परशक्तिं च नित्यं विद्यान्महीपतिः॥

( मनु० ९।२९८ )

एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान्।
उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि॥

( अर्थ० १।१२।२२ )

कृत्स्ने च मण्डले नित्यं दूतान् गूढांश्च वासयेत्।
मित्रभूतस्सपत्नानां हत्वा हत्वा च संवृतः॥

( अर्थ० ७।१३।४६ )

विदेशीयेषु अष्टादशसु, स्वदेशीयेषु पञ्चदशसु विभागेषु गुप्तचरैः अवधेयं भवति—

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः॥

( महा० सभा० ५।३८ )

शान्तिपर्वणि गुप्तचराणां कार्यक्षेत्रस्य यत् स्वरूपम् उपस्थापितं तद् राज्य-सीमायाः विस्तारं स्पष्टयति। अधिकारिवर्गाणां सार्वजनिकस्थानानां भिक्षूणाञ्च निरीक्षणस्य उत्तरदायित्वं चरस्य स्वीकृतमस्ति। पण्डितानामपि आचरणानि गुप्तचरनिरीक्षणकार्येष्वेव आयान्ति। तात्पर्यमिदं यद् धर्मनाम्ना विद्यानाम्ना वा कस्यापि कार्यस्य संस्थाया वा कार्यक्षेत्रं न राज्यसीमातः बहिर्भूतम्—

प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन्।
पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान्॥
अमात्येषु च सर्वेषु मित्रेषु विविधेषु च।
पुत्रेषु च महाराज प्रणिदध्यात्समाहितः॥
पुरे जनपदे चैव तथा सामन्तराजसु।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते॥

चारांश्च विद्यात् प्रहितान् परेण भरतर्षभ ।
आपणेषु विहारेषु समाजेषु च भिक्षुषु ।
आरामेषु तथोद्याने पण्डितानां समागमे ।
देशेषु चत्वरे चैव सभास्वावसथेषु च ।
एवं विचिनुयुद्राजा परचारं विचक्षणः ।
चारे हि विदिते पूर्वं हितं भवति पाण्डव ॥

( महा० शा० ६९।८-१३ )

नीलकण्ठेन तेषाम् अधिकारिणां नामावलिर्निर्दिष्टा येषां कृते गुप्तचराणां नियुक्तिः । अस्या नामावल्या आलोचनेन स्पष्टीभवति यद् राज्येषु सार्धं मन्त्रि-मण्डलीयेषु अपि अधिकारिषु राज्ञा निरीक्षणं कार्यम् । नामावली चेत्थम्—

मन्त्री पुरोहितश्चैव युवराजश्च भूपतिः ।
पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥
कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा ।
कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥
प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा ।
धर्माध्यक्षः सभाध्यक्षो दण्डपालास्त्रिपञ्चमः ॥
षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः ।
अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥
चारान् विचारयेत्तीर्थेष्वात्मनश्च परस्य च ॥

राज्यविषये जनतायाः अधिकारिवर्गस्य च कीदृशी धारणा इत्यपि गुप्तचरैः ज्ञेयम् । जनता राजानं स्तौति इत्येतज्ज्ञानेन सहैव सा राजानं कथं निन्दति इति ज्ञानमपि राज्ञः आवश्यकम् । अवधेयम् यद् राज्ञः निरंकुशतायां जनतायाः नियन्त्रणम् इत्येतद् भारतीयराजनीतेर्वैशिष्ट्यम् । जनमतं कियद् अनुकूलम् , कियच्च प्रतिकूलम् इत्येतत्परिज्ञानं तस्य कर्त्तव्यम् । एतच्च कार्यं राजा गुप्तचरद्वारेण सम्पादयति । चराणां जनमतपरिज्ञाने साधनत्वादेव राजा चारचक्षुः कथितः । अत्र विचारे एतत् प्रमाणम्—

आन्तरेभ्यः परान् रक्षन् परेभ्यः पुनरान्तरान् ।
परान् परेभ्यः स्वान् स्वेभ्यः सर्वान् पालय नित्यदा ॥

आत्मानं सर्वतो रक्षन् राजन् रक्षस्व मेदिनीम् ।
आत्ममूलमिदं सर्वमाहुर्वै विदुषो जनाः ॥
किं छिद्रं को नु संगो मे किं वाऽस्त्यविनिपातितम् ।
कुतो मामाश्रयेद्दोष इति नित्यं विचिन्तयेत् ॥
अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः ।
गुप्तैश्चारैरनुमतैः पृथिवीमनुसारयेत् ॥
जानीयुर्यदि मे वृत्तं प्रशंसन्ति न वा पुनः ।
कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ॥

( महा० शा० ८९।१२-१६ )

अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः ।
ये च त्वाभिप्रशंसेयुर्निन्देयुरथवा पुनः ॥

( महा० शा० ८९।१८ )

कौटलीयार्थशास्त्रे प्रथमाधिकरणे दशमाध्यायतः त्रयोदशाध्यायपर्य्यन्तं गुप्तचराणां नियुक्तिकार्यादिविषये कूटनीतिकवर्णनमुपलभ्यते। साधारणेषु अधिकारपदेषु अमात्यान् नियुज्य राजा मन्त्रिपुरोहितैः सह तेषां मनसः पावित्र्यं परीक्षेत। परीक्षणानन्तरं यथास्थानं तान् नियुञ्जीत। कौटल्येन परीक्षणस्य अनेके प्रकाराः कथिताः, त एव प्रकारा अर्थोपधाः, कामोपधाः, भयोपधा इत्यादिभिः शब्दैः व्यपदिष्टाः सन्ति। अत्र पुरोहितच्छात्रादिनाम् अपि प्रयोगः कृतः। गुप्तचर-विभागे स्त्रीणां प्रयोगः अधिकं कृतः ( अर्थ० १।१० )। यथा अमात्यानां परीक्षणं आवश्यकम् तथैव गुप्तचराणां नियुक्तावपि तेषां परीक्षणमपेक्षितम्। कापटिकः, उदास्थितः, गृहपतिकः, वैदेहकः तापसः, भिक्षुः इत्यादयः तेषाम् अनेके भेदाः। कौटल्येन एतेषां स्वरूपं कार्यं च इत्थं वर्णितम्—

"उपधाभिः शुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत्। कापटिकोदास्थित-गृहपतिकवैदेहकतापसव्यञ्जनान्सत्त्रितीक्ष्णरसदभिक्षुकीश्च। परमर्मज्ञः प्रगल्भः छात्रः कापटिकः। तमर्थमानाभ्यामुत्साह्य मंत्री ब्रूयात्। राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीमेव प्रत्यादिशेति। प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्तः उदास्थितः। स वार्ताकर्मप्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म कारयेत्। कर्मफलाच्च सर्वप्रव्रजितानां ग्रासाच्छादनावसथान्प्रतिविदध्यात्। वृत्तिकामांश्चोपजपेत्। एतेनैव वेषेण राजार्थश्चरितव्यो भक्तवेतनकाले चोप-स्थातव्यमिति। सर्वप्रव्रजिताश्च स्वं स्वं वर्गमुपजयेयुः। कर्षको वृत्तिक्षीणः

प्रज्ञाशौचयुक्तो गृहपतिकव्यञ्जनः। स कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण। वाणिजको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदेहकव्यञ्जनः। स वणिक्कर्मप्रदिष्टायां भूमाविति समानं पूर्वेण। मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः। स नगराभ्याशे प्रभूतमुण्डजटिलान्तेवासी शाकं यवसमुष्टिं वा मासद्विमासान्तरं प्रकाशमश्नीयात्। गूढमिष्टमाहारम्। वैदेहकान्तेवासिनश्चैनं समिद्धयोगैरर्चयेयुः। शिष्याश्चास्यावेदयेयुरसौ सिद्धः सामेधिक इति। समेधाशस्तिभिश्चाभिगतानामङ्गविद्यया शिष्यसंज्ञाभिश्च कर्माण्यभिजनेऽवसितान्यादिशेत्। अल्पलाभमग्निदाहं चोरभयं दूष्यवधं तुष्टदानं विदेशप्रवृत्तिज्ञानमिदमद्य श्वो वा भविष्यतीदं राजा करिष्यतीति। तदस्य गूढाः सत्त्रिणश्च सम्पादयेयुः। सत्त्वप्रज्ञावाक्यशक्तिसम्पन्नानां राजभाग्यमनुव्याहरेन्मन्त्रिसंयोगञ्च। मंत्री चैषां वृत्तिकर्मभ्यां वियतेत। ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत्। अकारणक्रुद्धांस्तूष्णीं दण्डेन राजद्विष्टकारिणश्च।

पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम्।
जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्तिताः॥

(अर्थ० १।११।१-२८)

अग्रिमे द्वादशे अध्याये कौटल्येन सत्त्रि, तीक्ष्ण, रसद, संचार इत्यादीनां गुप्तचराणां गुणान् वर्णयता तेषां नियुक्तिविषयेऽपि व्यवस्था दर्शिता। एकस्याः वार्तायाः कृते अनेके गुप्तचराः नियोज्याः। यदा सर्वेषां कथनं समानं भवेत्, तदा सा वार्ता प्रामाणिकी मन्तव्या। "त्रयाणामेकवाक्ये संप्रत्ययः" (१।१२।१७)। यदि ते बारं बारं परस्परविरुद्धां वार्तां कथयेयुः, तदा तेभ्यः उपांशुदण्डो देयः, पदान्निष्कासनीया वा ते। तेषामभीक्ष्णविनिपाते तूष्णीं दण्डः प्रतिषेधो वा" (१।१२।१८)।

कौटल्येन उक्तः शत्रुदेशे गुप्तचराणां प्रयोगः अतीव श्लाघ्यः। अथ विकसिताः देशाः अविकसितानां देशानाम् अनेकैः प्रकारैः साहाय्यम् आचरन्ति। आवश्यकतायां सत्यां च विद्वांसः विशेषज्ञाः वैज्ञानिकाश्च इत्यादयोऽपि विकसितैः देशैः अविकसितेषु देशेषु प्रेष्यन्त। वस्तुतः तैः प्रेषितैः वैज्ञानिकादिभिः गुप्तचराणामेव कार्यं कारयन्ते ते देशाः। एषां नीतिः कौटल्येन इत्थं निर्दिष्टा—

"कण्टकशोधनोक्ताश्चापसर्पा परेषु कृतवेतना वसेयुः संपातनिश्चारार्थम्। ते उभय वेतनाः (१।१२।१९-२०)।

गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान्।
तांश्चारिप्रहितान्विद्यात्तेषां शौचं च तद्विधैः॥

एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान् ।
उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि ॥
अन्तर्गृहचरास्तेषां कुब्जवामनवञ्चकाः ।
शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः ॥
दुर्गेषु वणिजः संस्था दुर्गान्ते सिद्धतापसाः ।
कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः ॥
वने वनचराः कार्याः श्रमणाटविकादयः ।
परप्रवृत्तिज्ञानार्थं शीघ्राश्चारपरम्पराः ॥
परस्य चैते बोद्धव्यास्तादृशैरेव तादृशाः ।
चारसञ्चारिणः संस्था गूढाश्च गूढसंज्ञिताः ॥
अकृत्यान् कृत्यपक्षीयैर्दर्शितान् कार्यहेतुभिः ।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥

(अर्थ० १।१२।२१-२७)

स्वराष्ट्रस्य ये पुरुषाः शत्रुपक्षगामिनः, ते कृत्यपक्षीयाः, ये च न शत्रुपक्षगामिनस्तेऽकृत्यपक्षीयाः कथ्यन्ते। राज्ञः कृते आवश्यकं यत् स एतेषां उभयेषामपि रक्षाम् इत्थं कुर्यात्, येन ते शत्रुपक्षे मा गमन्। प्रशासनस्य शुद्धतायाः स्थापनार्थं प्रशासकाणां निरीक्षणं गुप्तचरनियुक्तैः मूलमुद्देश्यम्। जनमतस्य परिज्ञानञ्च द्वितीयमुद्देश्यम्। महाभारते जनमतस्य ऐक्यं वर्णितमिति अस्माभिः पूर्वं विवेचितमस्ति। कौटल्यः इमम् एव पक्षं प्रकारान्तरेण समर्थयते। तेन एतद्विषये याः युक्तयः यानि च उदाहरणानि प्रास्तूयन्त, तत्र राज्ञः उत्पत्तिः, तस्य देवत्वं, करप्राप्तिरधिकारः इत्यादिकं काल्पनिकमेव सिद्ध्यति यत् प्रजायां राजविषये श्रद्धाम् उत्पादयितुं कल्पितमस्ति।

गुप्तचरद्वारेण जनमतस्य परिज्ञानम्, जनताया राजविषये श्रद्धायाः वर्धनं च इत्येतदर्थं जनमतस्य प्रचारस्य च यत् स्वरूपं प्रस्तुतमस्ति, तत्तु काल्पनिकम्। एतेन सहैव कौटल्येन येषां कूटोपायानां प्रयोगाः कथिताः, तेऽपि जनमतेनैव संबद्धाः। स्पष्टं यत् कौटल्यः प्रजाविषये एव राज्ञः शक्तिं स्वीकरोति न तु वेदशास्त्रादिविहितनियमविषये; अर्थाद् राज्ञा स्वशक्त्या वेदशास्त्रादिविहितानां नियमानामन्यथाकरणं न शक्यते। इदमेव विषयं स्पष्टयितुं मूलांशः उद्धृयते–

"कृतमहामात्रापसर्पः पौरजानपदानपसर्पयेत्। सत्त्रिणो द्वन्द्विनस्तीर्थसभाशालापूगजनसमवायेषु विवादं कुर्युः। सर्वगुणसम्पन्नश्चायं राजा श्रूयते।

न चास्य कश्चिद् गुणो दृश्यते, यः पौरजानपदान् दण्डकराभ्यां पीडयतीति। तत्र येऽनुप्रशंसेयुस्तानितरस्तं प्रतिषेधयेत्। मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे। धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः। तेन भृता राजानः प्रजानां योगक्षेमवहास्तेषां किल्बिषमदण्डकरा हरन्ति अयोगक्षेमवहाश्च प्रजानाम्। तस्मादुञ्छषड्भागमारण्यका अपि निवपन्ति, तस्यैतद्भागधेयं योऽस्मान्गोपायति इति।

"इन्द्रयमस्थानमेतद्राजानः प्रत्यक्षहेडप्रसादाः। तानवमन्यमानान्दैवोऽपि दण्डः स्पृशति। तस्माद्राजानो नावमन्तव्या इति क्षुद्रकान्प्रतिषेधयेत्। किंवदन्तीं च विद्युः। ये चास्य धान्यपशुहिरण्यान्याजीवन्ति तैरुपकुर्वन्ति व्यसनेऽभ्युदये वा कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्त्यमित्रमाटविकं वा प्रतिषेधयन्ति तेषां मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः। तुष्टानर्थमानाभ्यां पूजयेत्। अतुष्टांस्तुष्टिहेतोस्त्यागेन साम्ना च प्रसादयेत्। परस्पराद्वा भेदयेदेनान्सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च। तथाप्यतुष्यतो दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत्। विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत्।

"गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत्। परेषामास्पदभयात्। क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः। तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसंबन्धममित्राटविकप्रतिसंबन्धं वा विद्युः। तुष्टानर्थमानाभ्यां पूजयेत्। अतुष्टान् सामदानभेददण्डैः साधयेत् (१।१३।१-२५)।

एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः।
परोपजापात् संरक्षेत् प्रधानान् क्षुद्रकानपि॥"

(१।१३।२६)

इत्थं चरस्य कार्यक्षेत्रम् अतिविस्तीर्णम् अस्ति। स देशान्तरेऽपि क्रियाशीलो भवति। स तत्र षड्यन्त्रं सञ्चालयति। एतदर्थं किमपि साधनम् आश्रयितुं शक्यते। अत्र राष्ट्ररक्षा राष्ट्रधर्मश्च सम्पूर्णायाः नैतिकतायाः स्रोतः। यदा राष्ट्रस्वातन्त्र्यं भवेत् सम्पूर्णायाः नैतिकतायाः पालनं कर्तुं शक्यते। "नश्येत् त्रयी दण्डनीतौ हतायाम्"। अतः इमम् उत्कृष्टं साध्यं साधयितुम् अनैतिकान्यपि साधनानि आश्रयितव्यानि। अत्र यदि उत्कृष्टं तदा यत्किमपि साधनं भवेत् तत्सर्वम् उत्कृष्टमेव मन्यते। शत्रुदेशे आन्तरिकं कलहम् उत्पादयितुम् अर्थकामौ साधनतया आश्रयितुं शक्येते। अत्र विषये विषतः आरभ्य विषकन्यापर्यन्तानां सर्वेषां

प्रयोगः नैतिक एव। यदि कौटल्येन इमां नीतिम् आश्रित्य सिकन्दरसेनायाम् आन्तरिकः कलहः नोत्पाद्येत, यदि वा अवैदिकसम्राजः महापद्मनन्दस्य समूलं नाशो न क्रियेत, तदा बहुशताब्दीतः पूर्वमेव देशः यवनाक्रान्तः स्यात्। वस्तुतः राष्ट्रस्य आन्तरिकरक्षार्थं बाह्यरक्षार्थं च कौटल्येन चराणां कार्यक्षेत्रं यथा व्यवस्थापितं तस्य प्रयोगम् आधुनिकानि सर्वाण्यपि राष्ट्राणि कुर्वन्ति स्म। भारतमपि यदि एवम् अकरिष्यत्, तदा कदापि परायत्तं न अभविष्यत्। अद्य अमेरिकादेशीया चरसंस्था तदेव कुरुते यत्कौटल्येन निर्दिष्टम् अस्ति। वस्तुतः राज्यरक्षा चरे एव निर्भरा।

कौटल्यः राष्ट्रे द्वे भयावहे तत्त्वे प्रस्तौति—( १ ) दूष्यम्, ( २ ) कण्टकश्चेति। दूष्यस्य यत्स्वरूपं तेन उक्तं तत् 'पञ्चमाङ्गि'वदेव। एतेषां चत्वारि कार्यक्षेत्राणि भवन्ति (१) मन्त्रिमण्डलम्, (२) सचिवालयः, (३) राजोपजीवी, (४) लोकसेवकः। जनपदनिवासिनः एतेषु भेदम् उद्भाव्य ईदृशीं स्थितिम् उत्पादयन्ति यत् ते स्वराष्ट्रस्य शत्रवः शत्रुराष्ट्रस्य च मित्राणि भवन्ति ( अर्थ० १।१३।१ )। एतेषां कार्यप्रकारा अपि कौटल्येन अग्रिमेषु सूत्रेषु निर्दिष्टाः। एतेषां कार्यस्य मार्गा अपि चत्वारो भवन्ति-(१) राजविषये प्रशंसाभावोद्भावनम्। यथा भारतीयैः साम्यवादिभिः नेहरूविषये प्रशंसाभावः उद्भावितः। परन्तु सत्कार्याणि निन्दित्वा निन्दकान् प्रोत्साह्य राज्यस्य उत्पत्तेः आधारस्य उद्देश्यस्य च सैद्धान्तिकीं व्याख्यां कृत्वा इदं साधनीयं यद् राजा तेषां पूर्तौ अशक्तः, अर्थात् सामान्यजनानां वैचारिक्याः बौद्धिक्याश्च क्रान्तेः भूमिकां विरचय्य आगन्तुकस्य तस्य शत्रोः साहाय्यं कारयेत्।

(२) द्वितीयो मार्ग एषः-किंवदन्तीनां प्रसारणम्। तस्य च उद्देश्यानि—जनतायाः मनोबलस्य अपहरणम्, आर्थिक्याः राजनीतिक्याश्च अस्थिरतायाः उद्भावनम्। अस्याश्च प्रभावः कथं भवति इति पर्यालोचनं च तत्र च उपयुक्तानां व्यक्तीनां चयनम्। तेन राज्यविषये कथमपि असन्तुष्टा जनाः स्वपक्षीयतां भजन्ते।

(३) तृतीयोऽयं मार्गः-उक्तानि उद्देश्यानि लक्ष्यीकृत्य कार्यं कुर्वतां जनानाम् आर्थिकसाहाय्यप्रदानम्। येन स्वराष्ट्रीया एव पुरुषाः शत्रुराष्ट्रस्य अभेद्याः गुप्तचरा भवेयुः। उच्चस्तरीया मन्त्रिप्रभृतयः द्रव्येण वशीकर्तुं न शक्यन्ते। सैद्धान्तिकरीत्या वशीकरणीयाः, अथवा क्रान्त्यनन्तरम् उच्चपदप्रलोभनेन स्वपक्षम् आनेयाः। य एतैरपि प्रकारैः वशं न यायात् सः सामादिभिः चतुर्भिः उपायैः वशीकरणीयः। एवं राष्ट्रं यदा निर्बलं भवेत्, तदा राष्ट्रनिवासिनः पारस्परिके गृहकलहे योजनीयाः, गृहकलहादन्यत्क्रान्त्यादिकमपि उद्भावयितुं शक्यते। एवंविधायां परिस्थितौ सञ्जातायां तत्काले एव शत्रुः आक्रमणीयः। अस्यामवस्थायां आक्रमणकारिणः

स्वागतमेव ज ाः करिष्यन्ति। कौटल्येन यादृशं वर्णनं प्रस्तुतं तत् पञ्चमाङ्गि-स्वरूपम् उपस्थापयति।

कौटल्य एतदपि मन्यते यत् समाजे केचन प्रच्छन्नाः कण्टकाः भवन्ति। तेषाम् उन्मूलम् आवश्यकम। एषु कण्टकेषु वणिक्-शिल्पिप्रभृतयः आयान्ति। ये अनुचितं लाभं विक्रयादौ कुर्वन्ति, कण्टकश्रेण्यां स्थापयितुं शक्याः। युद्धकाले एतेषां कण्टकानां विशेषतः प्रकोपो भवति। तदानीम् एतैः राष्ट्रविनाशोऽपि सम्भाव्यते। कदाचिद् इत्थमपि भवति यदेते पञ्चमाङ्गिवद् आचरन्ति अतोऽन्येऽपि राष्ट्रे नागरिकताप्रतिकूलम् आचरन्तः दुष्टदूष्यादयः कौटल्येन परिगणिताः।

कौटल्येन दूष्याणां कण्टकानां च कार्यप्रणालीविषये यत्किमपि वर्णितम्, तेन तेषां द्वे स्वरूपे पुरः आयातः—गृहयुद्धस्य स्थितेरुद्भावनम्, गुप्तचरकार्यं च। गुप्तचरकार्यं विवृण्वन् स कथयति यत् शत्रुदेशे असन्तुष्टा जनाः स्वपक्षम् आनेयाः। अत्र अवधसम्पत्तिसङ्ग्राहका अपि समायान्ति। मदिरालयादीन् गत्वा तत्र राज्य-प्रतिकूलं वातावरणम् उद्भावनीयम्। एभ्यः स्थानेभ्यः किंवदन्तीनां प्रसारणं सुकरं भवति। राजदण्डाद् भीताः जनाः अनायासत एव स्वपक्षीयाः कर्तुं शक्याः। यथावसरं मित्रदेशप्रभावः वर्णनीयः, स्वीयश्च सन्देशः श्रावणीयः मित्राणि सङ्ग्राह्याणि असन्तुष्टानां जनानां सम्बन्धः स्थापनीयः।

कौटल्येन एषां यत्स्वरूपम् उपस्थापितम् तेन ज्ञायते यदीदृशानि अराष्ट्रीयाणि तत्त्वानि राज्यशक्त्या सह मैत्रीं स्थापयितुं सम्पर्कञ्च स्थापयितुं अत्यन्तं प्रयतन्ते। अतः आवश्यकं यद् राज्यकर्मचारिषु मन्त्रिमण्डले च गुप्तचरैः सदा सावधानैः सावहितैः भाव्यम्। कौटल्यः कथयति यद् देशान्तरात् संप्राप्तेषु शरणार्थिषु विशेषतः सावहितता स्यात्। ते राजशक्त्या अनायासत एव सम्बन्धं स्थापयन्ति। यतो हि शत्रुराष्ट्रमपि शरणार्थितया गुप्तचरान् प्रेषयितुं शक्नोति। युद्धकाले शरणार्थिनां सहजोऽनुरागः स्वदेशविषये एव भवति। कौटल्यः कथयति यद् राष्ट्रान्तराद् आयाताः शरणार्थिनः तद्राष्ट्रविषयकसंघर्षे एव व्यापारणीयाः, यतस्ते आगताः। तेषां साहाय्यञ्च करणीयम्। स्वदेशीयजनपदैः स्वदेशीयया आन्तरिक्या स्थित्या च सह यथा तेषां सम्बन्धः मा भूत् तथैव प्रयतनीयम्।

एतेषां राष्ट्रकण्टकानां दूरीकरणे जनपदशक्तिः आश्रयणीया इति कौटल्यो मन्यते। जनपदस्था नागरिका एव एषां कण्टकानाम् अन्वेषणं कुर्युः। ते च (नागरिकाः) तेषु दण्डप्रयोगं विना ईदृशं व्यवहरेयुः, येन अनायासतः एव ते परिज्ञायेरन्। तद्विषये दण्डप्रयोगस्तु कदापि नाश्रयणीयः। दण्डप्रयोगेण गृहकलहस्य स्थितिः उद्भवति। गृहकलहमेव च दूष्याः कण्टकाश्च वाञ्छन्ति। तेषां

यो व्यवहारः क्रियते यो दण्डः प्रयुज्यते उपांशुदण्डः कथितः। एतदपि कौटल्यः स्वीकरोति यत् जनपदशक्त्या राज्यशक्त्या च इत्येतद् द्वाभ्यामपि ईदृशानां तत्त्वानां निराकरणे यतितव्यम्। कण्टकानां विषये तु विशेषतो राज्यशक्तिः प्रयोक्तव्या। एकः स्वतन्त्रः न्यायालय एव तेन विहितः। यस्य न्यायालयस्य कण्टकशोधनन्यायालय इति नाम अस्ति।

## १०

# अर्थशास्त्रम्

### दर्शनम्

भारतीयजीवनदर्शनस्य मुख्य आधारः ईश्वरविषयेको विश्वासः, पुनर्जन्म, कर्मफलञ्च अस्ति। अर्थशास्त्रस्य आधारभूते प्रश्नेऽपि अस्य प्रभावः भवति। अन्धता, बाधिर्यम्, खञ्जता इत्यादिकं कर्मफलमेव स्वीक्रियते। एवंविधायाः हीनतायाः प्राकृतिकविषमतायाश्च प्रभावः सामाजिक्यां विषमतायां भवति। सामाजिकविषमतापि कर्मफलसिद्धान्तस्य अङ्गम्, अर्थात् कर्मफलमेव स्वीकृतम्। इदं स्वीक्रियते यत् सर्वे मनुष्याः समानाः भवितुं न शक्नुवन्ति। यतः वैषम्यस्य मूलभूतानि तत्त्वानि कर्मानुसारं मनुष्ये विद्यन्ते। कर्मसिद्धान्तः कार्यकारणयोः यां स्थितिं प्रस्तौति, तत्र पुनर्जन्म ईश्वरविश्वासश्च इत्येतद्द्वयम् आधारो भवति। प्रत्येकं व्यक्तिः स्वयं स्वकर्मणः उत्तरदायिनी। ईश्वरः व्यक्तेः शुभानाम् अशुभानां च कर्मणां फलस्य दाता। प्रत्येकं कर्मणः फलम् अवश्यं लभ्यते। फलोपभोगार्थमेव च पुनर्जन्मापि भवति। भारतीयस्य अर्थशास्त्रस्य दर्शनम् एतत्—तत्त्वत्रये ईश्वरविषयको विश्वासः, पुनर्जन्म, कर्मफलम् एव आधृतम्।

व्यक्तेः अधिकारः तस्याः कर्मणि आधृतः। तावत्स्वेव अधिकारेषु तस्याः स्वत्वं भवति, यावत् तस्याः कर्म। भारतीयैः अर्थशास्त्रिभिः कर्म एव वेतनस्य आधारः, ते 'शक्त्यनुसारं कार्यम् आवश्यकतानुसारं च सौविध्यम्' इत्येतत्-सिद्धान्तस्य स्थाने 'योग्यतानुसारं कार्यं कार्यानुसारं च सौविध्यम्' इति सिद्धान्तं मन्यते। यतः तेषाम् अर्थशास्त्रस्य मूलभूतः आधारः कर्मसिद्धान्त एव। यं प्रायः सर्वे भारतीया दार्शनिकाः मन्यते। इत्थं च कस्यापि कर्मकरस्य अधिकारविषये पारिश्रमिकविषये च कोऽपि संघर्षः नोदेति। स तावताम् अधिकाराणाम् उपभोक्ता यावत् तस्य कार्यम्। उत्पादनविषये श्रमिकस्य क्षमता योग्यता च अधिकारान् व्यवस्थापयतः। यदि व्यक्तिः मानसिकमपि दुःखदायकं श्रमं करोति, तदा तस्यापि फलं तथैव भविष्यति।

अस्मिन्नाधारे स्वीकृते सति सहकारितायाम् आधृते उत्पादने वितरणे च काठिन्यं दृश्यते। यदि प्रत्यक्षोत्पादने शारीरिकश्रमस्य प्राधान्येऽपि सदस्याः स्वस्य भागं श्रमं च आश्रित्य स्वांशं निश्चिन्वन्ति, तदा तद्वितरणे न किमपि

काठिन्यम्। स्वर्गप्राप्त्यर्थं ऋत्विग्भ्यः यजमानेन दीयमानायां दक्षिणायामपि अप्रत्यक्षतया उत्पादनम् अस्त्येव। दक्षिणा च योग्यतानुसारमेव दीयते। अयमाशयो यद् ऋत्विग्भिः यज्ञेषु दक्षिणात्वेन यद् द्रव्यं लभ्यते, तदपि अप्रत्यक्षम् उत्पादनमेव, किन्तु कानिचिद् ईदृशानि उत्पादनानि यत्र व्यक्तेः प्राप्यस्य अंशस्य निर्धारणं दुष्करं भवति। अनेन काठिन्येन सह कर्मफलसिद्धान्तः योज्यते। ततश्च द्रव्यैकाधिकारवादिशोषणम् आरभ्यते। समस्ते विश्वे कोऽपि ईदृशः समाजः नास्ति यत्र अल्पसंख्यका धनिनः बहुसंख्यकाश्च निर्धना न भवेयुः। समाजवादिव्यवस्थायाः सङ्केतानां सत्त्वेऽपि भारतीयैः 'वीरभोग्या वसुन्धरा' इति उद्घोषितम्। 'ईश्वरः शक्तिमन्तं रक्षति' इति पाश्चात्यानां लोकोक्तिरपि एतत्पर्याय एव।

उत्पादनसाधनेषु वर्गीयस्वत्वे सति विषमता प्राकृततत्त्वं विहाय सामाजिकी भवति। यदा यत्र आवश्यकतानुसारं मूल्यनिर्धारणं भवति तदा निश्चितमेव स विषमतामूलकधनवादिसमाजः। परन्तु आवश्यकतापूर्त्तिः गणितशास्त्रीयसिद्धान्तवद् अस्ति। अत एव तत्फलं निश्चितमस्ति। अस्य सिद्धान्तस्य प्राक्तनं स्वरूपं तदा अधिकं स्पष्टीभवति, यदा वर्गीयसमाजे आवश्यकतायाः तत्पूर्त्तेश्च नियन्त्रकाः वर्गा इव असहायाः श्रमिकाः एतत्सिद्धान्तानुसारमेव स्वकार्यस्य पारिश्रमिकं याचन्ते। अस्य परिणामः एष यद् यत्र उत्पादने प्रतिदिनं विंशतिरूप्यकाणां लाभः तस्य उत्पादनस्य कृते तस्य श्रमः एकेनैव रूप्यकेण विक्रीयते, अर्थात् तस्य उत्पादनस्य कृते श्रमिकैः एकमेव रूप्यकं लभ्यते। यतः तदुत्पादनं तत्र समाजे आवश्यकतानुसारम् आवश्यकतापूर्त्त्यर्थं च प्रस्तुतं भवति। यत्र आवश्यकतायाः पूर्त्तेश्च निर्माणस्य शक्तिः तस्य हस्तगता अस्ति।

अत्र विषये भारतीयैः अर्थशास्त्रिभिः कीदृग् विचारितमस्ति इत्येतत् स्पष्टीकरणार्थं श्रीमद्भागवतीयः युधिष्ठिरनारदसंवादः प्रस्तोतव्यः अस्ति। संवादस्य सारांशः इत्थम्—यतिधर्मनिरूपणानन्तरं युधिष्ठिरेण पृष्टः नारदः गृहस्थधर्मं निरूपयितुम् आरभत। यत्किञ्चिद् भवेत् तत्सर्वं भगवत्स्वरूपं जानीयात्, यच्च किञ्चिद् गृह्णीयात् तदपि भगवतः एव मन्येत। गृहस्थैः महामुनयः सेव्याः। भगवतः अवतारकथा श्रोतव्या सत्सङ्गश्च कार्यः। यावन्तम् अर्थम् उपार्जयेत् ज्ञातिबन्धुबान्धवादीनाम् आनुकूल्यं समुपाद्य विरक्तभावेन तस्य अर्थस्य उपभोगं कुर्यात्। भगवन्निर्मितं दिव्यं भौमम् आन्तरिक्षञ्च वित्तम् इत्थमेव भुनक्तु। यावता उदरपूर्त्तिः स्यात् तावत्येव वित्ते स्वत्वं जानीयात्। अतोऽधिकं यः संगृह्णाति स चौरः दण्डनीयश्च। मृगः, उष्ट्रः, खरः, अर्कः, आखुः, सरीसृपः, खगः, मक्षिका इत्यादीन् पुत्रान् इव मन्येत। धर्मार्थकामानाम् उपभोगं समन्वयपूर्वकं कुर्यात्।

'अति सर्वत्र वर्जयेत्।' यथादेशकालं दैवेन उपपादित एव च अंशो ग्राह्यः।[1] नारदेन अग्रिमश्लोकेष्वपि महत्त्वपूर्णाः विषयाः उपस्थापिताः।

व्यक्तेः स्वत्वस्य सामाजिकसम्बन्धस्य च स्थिरीकरणे नारदेन मनुष्यः सामाजिकः प्राणी इति उक्तः। सम्पूर्णा सृष्टिश्च एकात्मिकतया अभिभूता कथिता। अर्थशास्त्रस्य क्षेत्रं पश्वादिपर्यन्तं विस्तीर्णं भवति। मनुष्यः सामाजिकः बुद्धिसम्पन्नश्च प्राणी। तस्य कर्त्तव्यं यत् स सर्वेषां कृते उपभोगस्य व्यवस्थां कुर्यात्। स्वयं च यावद् अनिवार्यम् तावदेव गृह्णीयात्।[2] ईशव्याप्ते जगति अन्यदीयस्य धनस्य स्पर्शोऽनुचितः। अथ च अन्यत्यक्त एव स्वत्वं भवति इति प्रतिपादितम् उपनिषदि।[3]

१. गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः।
वासुदेवार्पणं साक्षादुपासीत महामुनीन्॥
यावदर्थमुपासीनो देहे गेहे च पण्डितः।
विरक्तो रक्तवत् तत्र नृलोके नरतां न्यसेन्॥
ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे।
यद् वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः॥
दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम्।
तत् सर्वमुपभुञ्जान एतत्कुर्यात् स्वतो बुधः॥
यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥
मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः।
आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत्॥
त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि।
यथादेशं यथाकालं यावद्दैवोपपादितम्॥
आश्वाघान्तेऽवसायिभ्यः कामान् संविभजेद् यथा।
अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यतः॥
(श्रीमद्भागवत० ७।१४।२-११)

२. 'यावद्भ्रियेत जठरम्' इतिवदेव सुभाषितरत्नभाण्डागारेऽपि उद्धृतानि वचनानि—
वर्तते येन न विना नरो वाञ्छतु नाम तत्।
ततोऽधिकार्थप्रणयी पृष्ठो दद्यात् किमुत्तरम्॥
अभ्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः।
अपरप्रेष्यभावाच्च भूय इच्छन् पतत्यधः॥

३. ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्।
(ईशावास्योप० १।१)

नारदेन उक्त उपदेश राज्ञे प्रदत्तः। परन्तु तस्य सम्बन्धः सम्पूर्णेन समाजेन सर्वाभिश्च व्यक्तिभिश्च अस्ति।

प्राचीना भारतीया अर्थशास्त्रिणः व्यक्तिगतमहत्त्वाकाङ्क्षा, अधिकस्य अर्जनस्य भावना च स्वाभाविकी इति मन्यन्ते स्म। किन्तु सामाजिककल्याणार्थं तयोः नियन्त्रणं कुर्वन्ति।[1] वैयक्तिकसम्पदः सत्त्वेऽपि 'धनवादस्य' महान् विरोधः कृतः। एष विरोधः न प्रचारमात्रम्, अपि तु उत्पादनविषयकेषु वितरणविषयकेषु च नियमेषु एव विरोधः व्याप्तः। यत्र व्यक्तेः यावत्स्वत्वं ततोऽधिका सम्पत्तिः दृश्यते तत्र निश्चितमेव सामाजिकानां नियमानाम् उल्लङ्घनेन भाव्यम्। तत्कारणानां परिज्ञानम् आवश्यकं स्वीकृतम्। सुभाषितरत्नभाण्डागारे कुतश्चिद् एकं वचनम् उद्धृतमस्ति। तस्य एष सारांशः—परपीडनम् अन्याय्यमार्गाश्रयणं वा विना असाधारणसम्पदः सञ्चयः भवितुं न शक्नोति। तस्य कारणमिदं यद् यदा वैयक्तिकोत्पादनक्षेत्रतः जातस्य लाभस्य पञ्चसु भागेषु विभाजनम् आसीत्[2], तदा अस्याम् अवस्थायाम् असामान्यसम्पदः संग्रहः अन्यायमार्गाश्रयणं विना कथं सम्भवति ?

लोभस्य रागादिप्रवृत्तीनां च अर्थोत्पादनजन्यस्य लाभस्य सञ्चये निषेधः कृतः, किन्तु न उत्पादनविषये। यदि लाभवृत्तिर्न भविष्यति, तदा जना उत्पादने साहाय्यं न करिष्यन्ति। अत एव वानप्रस्थान् संन्यासिनश्च विहाय गृहस्थानाम् उद्देश्येषु अर्थकामयोर्महत्त्वं स्वीकृतम्। वानप्रस्थविषये कथितमस्ति यत् स्वयं परिश्रमेण स्वजीविकां सम्पादयेत्, तत्र कस्यापि अन्यस्य साहाय्यं नापेक्षेत।[3] संन्यासी आगामिदिनविषयेऽपि न चिन्तयेद् यद् आगामिदिने भिक्षाप्राप्तिः कथमिति।[4] गृहस्थो यदि उत्पादने साहाय्यं करोति, तदा तस्य अधिकतमोत्पादनवषयिणी महत्त्वाकाङ्क्षा स्यात्, किन्तु कथमपि स लाभं न चिन्तयेत्। गीतोक्तः कर्मयोगः अत्रापि सङ्क्रमयितुं शक्यते। उत्पादनमेव गृहस्थस्य ध्येयं भवेत्। सः लाभचिन्तां न कुर्यात्। तस्य योग्यतानुसारम् उत्पादनविषये यत्स्वत्वं तस्य दातारः नियमाः सामाजिकानि सङ्घटनानि च सन्ति।

१. स्वच्छन्दतो निजगृहे स्वकृषीयमन्नं, पत्नीकराग्ररचितं द्विजभुक्तशेषम्।
भुञ्जन्ति ये सुरपितॄनपि तर्पयित्वा तमुक्तवन्त इति नन्द मया न भुक्तम्॥

२. धर्माय यशसेऽर्थाय कामाय स्वजनाय च।
पञ्चधा विभजन्वित्तमिहामुत्र च मोदते॥
(श्रीमद्भागवत० ८।१९।३७)

३. श्रीमद्भागवत० ११।१८।

४. मनु० ४।७।

"योग्यतानुसारं कार्यम्, कार्यानुसारं च वेतनम्" इति श्रमिकाणां कृते नियमः अस्ति। एतन्नियमानुसारमेव च स श्रमिकः स्वयोग्यतानुसारं यत्कार्यं करोति तदनुसारमेव लाभस्य भाजनं भवति। एवमेव उत्पादकोऽपि लाभभाग् भवति। स लाभं पञ्चसु भागेषु विभाजयति। तत्र च अंशपञ्चके लाभस्य एकम् अंशं स स्वयं लभते। तेन समाजे वैषम्यं भवितुं शक्नोति। अतः वर्षत्रयाय पर्याप्तं वित्तं स्वसविधे स्थापयित्वा अन्यत्सर्वं धर्म इति कृत्वा समाजे वितरेत्।[1] मनुना 'कुसूलधान्यकः, कुम्भीधान्यकः, अश्वस्तनिकः' इत्येता उत्तमब्राह्मणस्य संज्ञा निर्दिष्टा।[2] कुटुम्बस्य भृत्यानाम्, पोष्याणाम्, नित्यनैमित्तकादिकृत्यानां च कृते वर्षत्रयार्थं यावद् धनं गृहस्थस्य अपेक्षितं तावतः धनस्य सञ्चेता कुसूलधान्यकः कथितः। एवमेव वर्षार्थम् अपेक्षितस्य धनस्य सञ्चेता कुम्भीधान्यक उक्तः। मेधातिथिना धान्यशब्देन स्वर्णादिकमपि, गोविन्देन तु अन्नमात्रं गृहीतम्। यस्य सविधे एतावतो अपि सम्पत्तिर्नास्ति स धार्मिकसामाजिककार्येषु धनदानेऽयोग्यः स्वीक्रियते। ततः कीदृगपि साहाय्यं न ग्राह्यम्, अपि तु तस्यैव साहाय्यं कार्यम्। अवधेयमस्ति यत् सम्पत्तिमतोऽपि धनग्रहणं न तस्य वैयक्तिकमहत्त्वाकाङ्क्षाणां यशसो वा पूर्त्यर्थं कार्यम्।[3]

वैयक्तिकसम्पद्भ्य उत्पन्नानां स्थितीनां परिहारार्थं भारतीयैः अर्थशास्त्रिभिर्मार्गद्वयं निर्दिष्टम्। तत्र एको मार्गः धार्मिकः, अपरश्च राजनीतिकः। धार्मिके वातावरणे नैतिकव्यक्तिविषये इदम् आशास्यते यत् स इष्टम् पूर्तं च ( इष्टश्च पूर्तश्च धर्मौ ) विधिं पालयेत्। वैदिकः यज्ञः इष्टशब्देन पूर्तशब्देन च सामाजिकं कल्याणम् उच्यते। तद्यथा कूपतडागादीनां निर्माणम्। सुखमपि द्विविधं स्वीकृतम्। एवं शान्तिरपि द्विविधा। ते च शाश्वते स्वर्गीये च। तत्र आद्यस्य सुखस्य शान्तेर्वा मोक्षेण सम्बन्धः, द्वितीयस्य च स्थित्या लोकविशेषभोगेण च सम्बन्धः। मनुष्यः इष्टेन पूर्तेन च एतद्द्वयं लब्धुं प्रभवति। अतिरिक्तं लाभं स धार्मिके सामाजिके च कार्ये विनियुङ्क्ते। एतेन तस्य व्यक्तित्वं वैयक्तिकी क्षमता च वर्धते। सामाजिकं कार्य-

---

१. यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥
(मनु० ११।७)

२. कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥
(मनु० ४।७; याज्ञवल्क्य० १।१२४)

३. मनु० ११।९–१०।

मपि प्रचलति। इत्थम् उक्तौ द्वावपि प्रकारौ आर्थिकौ धार्मिकौ च।[1] अतिरिक्त-लाभेन उपलब्धं धनं यदि मनुष्यः एतेषु कार्येषु विनियुंक्ते, तदा तस्य असामाजिक्यः प्रवृत्तयो विनिष्टा भवन्ति, व्यक्तिसमाजयोः समन्वयोऽपि स्थापितो भवति।

बौद्धसमाजस्य वैदिकसमाजस्य च तुलना कुर्वता आचार्येण उदयनेन आत्म-तत्त्वविवेके लिखितं यद् वैदिकेषु वर्णाश्रमव्यवस्था मनुष्यं सदा कार्यव्यापृतं कर्तुमस्ति। अनया व्यवस्थया स प्रातःकालतः सायंकालपर्यन्तम्, जन्मतः मरण-पर्यन्तं च कर्त्तव्ये व्यापृतो भवति। लोभेर्ष्यादिकं कर्तुं तेन अवसर एव न लभ्यते। स्वजीविकार्थम् अर्थोपार्जनमपि तस्य कृते धार्मिकं कार्यम्। वाचस्पति-मिश्रोऽपि इदमेव मतं समर्थयते। चक्रवर्तिसम्राडपि दिग्विजयानन्तरं राजसूया-श्वमेधविश्वजिदादिद्वारेण धनं वितरति। चार्वाकजैनबौद्धादयः इष्टं न मन्यन्ते। ते खलु पूर्तस्य (कूपतडागादेः) न केवलं समर्थनमेव कुर्वन्ति, अपि तु तस्य अनि-वार्यतामपि प्रतिपादयन्ति। अत एव धनसञ्चयेन जायमानम् अनुरागं प्रति बौद्धा-दयोऽपि जागरूका एव। अर्थात् सञ्चितस्य धनस्य विषये रागो न करणीयः, अपि तु सामाजिककार्येषु तद्धनं विनियोज्यमिति तेऽपि मन्वते।

समाजः एतावान् पवित्रः स्यात् यत्तत्र सामाजिकानां नियमानाम् उल्ल-ङ्घकः कश्चिदपि न स्यात्, परन्तु एतत् प्रायः असम्भवमेव। आदर्शं पुरस्कृत्य व्यावहारिकाणां नियमानाम् अवहेलनं न युज्यते। ईदृशा अपि मनुष्या ये अर्थसंच-यार्थम् असामाजिकान् अपि नियमान् आश्रयन्ति। स्मृतिकाराणां पुर इयमेव मनुष्य-विषयिणी समस्या आसीत्। मनुना अत्र विचारितम्। तदनुसारं प्रतिग्रहादिना येन धनं संगृहीतम्, परन्तु स्वधर्मे तद्धनं न विनियुक्तम्, तस्य धनं बलादपि अपहर-णीयम्। एवं कृते अपहर्तुः यशो वर्धते। यदि मनुष्यः षड्दिनानि उपोष्य सप्तमेऽपि दिने भोजनं न लभते, तदा हीनकर्मणापि स एकवारं भोजनं प्राप्तुं शक्नोति। यत्र कुत्रापि भोजनं लभ्येत, तत्रैव कुर्यात्। यदि स्वामी चौर्यादेः कारणं पृच्छति, तदा तदपि सुस्पष्टं ब्रूयात्। परन्तु अस्यामपि अवस्थायां क्षत्रियः ब्राह्मणस्य स्वं नापहरेत्। यः असाधुपुरुषेभ्यो धनम् आच्छिद्य साधुभ्यो ददाति, स येभ्यः आच्छिनत्ति येभ्यश्च ददाति, तेषाम् उभयेषामपि कल्याणं करोति। इष्टार्थम् पूर्तार्थं च यद्धनं संगृह्यते तद् देवस्वम्, यच्च ततोन्यत् तदासुरम्।[2]

१. मण्डनमिश्रः– विधिविवेकः, पृ० ४४१।

२. मनु० ११।१४-२०; योऽसाधुभ्यो धनमादाय साधुभ्यः सम्प्रयच्छति। स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ॥ ११।१९; मनु० ८।१४३ मेधातिथिः 'योऽसाधुभ्यो' आदि वचनं 'न्याय' इत्युक्तवान्। एतद्वचनन्तु स्तेयशास्त्रे उद्धृत-मस्ति। वेदान्तदेशिकेन 'परमतभंगेऽपि' इत्युद्धृतमस्ति।

वित्तस्य चतस्रः स्थितयः स्वीकृताः–दानसम्बद्धम्, अग्निसम्बद्धम्, राजसम्बद्धम्, चौरसम्बद्धञ्च। धनस्य उचितः विनियोग एव दानम् इत्यनेन अभिप्रेतः। अग्निसम्बद्धादीनामर्थः स्पष्ट एव। एषा एका सामान्या धारणा यत् समाजे केचिदेव ऐश्वर्यशालिनः धनिनश्च भवन्ति। यदि ते समाजकल्याणे धनं न विनियुञ्जन्ते तदा तस्य प्रभावः न केवलं निर्धनेष्वेव भवति, अपि तु सम्पूर्ण समाजे, अस्याम् अवस्थायां चौरवृत्तीनां दस्युवृत्तीनां च प्रकोपः हिंसा च संभाव्येते। आर्थिकवैषम्यस्य सत्त्वेन क्षुधार्थानां समूहोऽपि लुण्ठकानां साहाय्यं करोति। अस्याम् अवस्थायां सेनापि न किंचित् कर्तुं प्रभवति। यदि इयमेव दुरवस्था व्याप्ता भवति, तदा राष्ट्रिया अपि विपत्तिः पुरः आयाति। अतः अस्यां स्थितौ राज्यस्य कर्त्तव्यं यत्तल्लुण्ठकान् अपराधिनश्च दण्डयित्वा अस्याः दुरवस्थायाः कानि कारणानि इति जानीयात्, तानि च परिहरेत्। एषा स्थितिः असाधुपुरुषैः क्रियमाणेन धनसञ्चयेनैव आपतति। अतः आवश्यकं यद् असाधुपुरुषेभ्यः तेषां योग्यतानुसारं वर्षत्रयाय पर्याप्तं धनं दत्त्वा अन्यत् सर्वं द्रव्यं शिष्टनागरिकेभ्यः वितरेत्। धनस्य समानवितरणविषये वैयक्तिकसम्पत्तिविषयकाः सर्वेऽपि नियमाः गतार्थाः भवन्ति। यतः व्यक्तेः समाजस्य च कल्याणमेव वैयक्तिकसम्पत्तिरित्यस्य तात्पर्यम्। तच्च कल्याणं सामाजिकैः नियमैः निर्धार्यते। तेषां नियमानाम् उल्लङ्घनम् अपराधः।

उक्तान् नियमान् आश्रित्य व्यक्तेः आयव्ययव्यवस्थापनमपि कर्तुं शक्यते। दशानां व्यक्तीनां परिवारे यदि प्रतिदिनं प्रतिव्यक्ति अष्टाणकानां व्ययः, तदा प्रतिमासं तस्य परिवारस्य कृते पञ्चाशदधिकं शतं रूप्यकाणि अपेक्षितानि। एवम् एकस्य वर्षस्य कृते रूप्यकाणाम् अष्टादशशतकम् (१८००), वर्षत्रयस्य कृते च रूप्यकाणाम् अर्धसहस्रपञ्चकम् (४५०००) अपेक्षितम्। यद्धनं प्रतिवर्षं प्रतिशतं रूप्यकत्रयं वृद्धिः (कुसीदम्) इति रीत्या अयं धनराशिः ४९०५ रूप्यकाणि भवति। अनेनैव अनुपातेन राष्ट्रस्य जीवनस्तरं निश्चित्य व्यक्त्यर्थं परिवारार्थं च वर्षत्रयस्य कृते आवश्यकस्य धनस्य परिगणनं कृत्वा इदं निश्चेतुं शक्यते। व्यक्तिः अधिकादधिकं वैधानिकतया कियद् द्रव्यं सञ्चेतुं प्रभवति? अतः अवशिष्टं धनं कृष्युद्योगादिषु विनियुज्य उत्पादनं वर्धयितुं शक्यम्। वेशभूषादीनां विकासेन सहैव सञ्चयस्यापि संख्या वर्धते। समाने वितरणे व्यक्तेः समाजस्य समानः विकासः भवति। आर्थिकं सङ्कटं वैषम्यं वा नापतति।

इत्थं च संघटितसमाजे स्वामिसेवकसंघादीनां निर्धारणे काठिन्यं न भवति। द्वावपि पक्षौ स्वतन्त्रपरिस्थितौ स्वनियमान् निर्धारयतः पालयतश्च। अत्र उत्पादनसाधनानां कश्चिद् एकोऽधिकारी, अन्ये च अनधिकारिणः, ईदृशी स्थितिः न भवति। सामाजिकनियमानां परिपालनार्थम् अत्यन्तसंयमेन सह दण्डशक्तिरपि

आसीत्, अत एव राज्यम् 'अनावश्यकवर्गाधिकारस्य कार्यसमितिः' दुर्गुणनिधानं च इति अपास्तम्। अपि तु राज्यम् एकम् आवश्यकं साधनम्। तद्धि अर्थशास्त्रस्य सिद्धान्तस्य कार्यान्वयने साहाय्यम् आचरति। अर्थशास्त्रीयदर्शने समाजस्य व्यक्तेश्च सर्वविधं कल्याणं व्यवस्थापितम् अस्ति। तस्य च आधारो नैतिकता।

स्वरूपम्

वृत्' धातोर्भावे क्तिनप्रत्यये सति वृत्तिशब्दः जीविकावचनः सिद्ध्यति। पुनस्तस्मान्मत्वर्थीयेऽचि प्रत्यये टापि च सति वार्ताशब्दः निष्पद्यते। अतः वृत्तिः जीवनसाधनं वा वार्तापदार्थः। वार्तायाः द्वे रूपे–जीविकागतम्, शास्त्रसम्बन्धि च। जीविकापक्षे वार्तायाः विशेषतो वैश्यजातीयैः सम्बन्धः; यः सम्बन्धः उत्पादन-साधनैः सम्बद्धः, विनिमयस्य च द्वारम्। शास्त्रपक्षे प्रायः सर्वैरपि वर्णैः वार्तायाः सम्बन्धः।

विद्यानां क्षेत्रवर्णनावसरे वार्ता अर्थविषयिका अनर्थविषयिका च स्वीकृता।[१] शामशास्त्रिणा लाभ एव अर्थः, हानिश्च अनर्थ इति स्वीकृतम्। फलतः वार्ताशास्त्रं धनसम्बद्धविषयाणां विवेचकं शास्त्रम् इति वक्तुं शक्नुमः। धनसम्बद्धाः विषयाः मुख्यतया कृषिः, पशुपालनम्, वाणिज्यं च भवन्ति। अतः आचार्यैः एतत्त्रयं वार्ताविषयतया स्वीकृतम्।[२] एतत्त्रयेण सहैव वार्तायाम् ( वार्ताशास्त्रे ) अन्योऽपि चतुर्थः विषयः प्रतिपादितः।[3] एष चतुर्थो विषयः कुसीदम्। यद् वाणिज्यस्य अङ्गं स्वीकर्तुं शक्यम्, किन्तु तद् वाणिज्यस्य अङ्गमेव इति तु वक्तुं न शक्यते।

'वार्तापायुः' 'कर्मजाहस्तसिद्धिः' इत्येतत् शब्दद्वयं पुराणेषु लभ्यते। अनयोः शब्दयोः विवेचनानन्तरं जनाः इमं निष्कर्षं स्थापयन्ति यत् शिल्पानि उद्योगाश्च वार्तायाः क्षेत्रे न सन्ति। वार्तातः बहिर्भूता इत्यर्थः।[४] अयं शूद्राणां विषयः; अतः वार्तायामस्य समावेशः भवितुं न शक्नोति इति विचारः

१. अर्थशास्त्रम् १।२; अग्निपु० २३८।१; शुक्र० १।१५३; कामन्दक०१।७; महा० ३।१५०।३०-३१।

२. "कृषिपशुपाल्ये वाणिज्ये च वार्ता" कौ० १।४; कामन्दकम् २।१४; रामायणम् २।१००।१४७; कृषिर्वाणिज्यं तद्वत्तु तृतीयं पशुपालनम्। विद्या ह्येका महाभाग वार्ता वृत्तित्रयाश्रयाः। वि०पु० ५।१०।२८; कल्पसूत्रम् ( जैनग्रन्थः ) २८२ पृ०।

३. कृषिवाणिज्यगोरक्षाकुसीदं तुर्यमुच्यते। वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम्। श्रीमद्भाग० पु० १०।२४।२१; मार्क० पु० ४८।१८ टीकाकारेण 'कृष्यादिचतुष्टयरूपा' तथा 'वृत्तेर्व्याख्या' 'कृषिः, वाणिज्यः, गोरक्षा, कुसीदः' इति स्वीकृतम्।

४. विष्णुपुराणम् १।६।२०; मार्कण्डेयपु० ४६।७३।

भ्रमपूर्णः। वार्तया शूद्राणामपि सम्बन्धः अस्ति इति अग्रे विवेचयिष्यते। अयमपि विषयः वार्तायामेव स्वीकृतः बुचमहोदयेन।[१] अम्बुजनाथबैनर्जीमहोदयेन बुचमतं खण्डितम्। तच्च खण्डनम् अप्रामाणिकमेव। यतः विविधानि शिल्पान्यपि वार्ताशास्त्रविषयतया स्वीकृतानि।[२] अर्जुनेन युधिष्ठिराय कथितं यत् संसारः कर्मक्षेत्रम् इति। एषु कर्मसु कृषिः, वाणिज्यम् पशुपालनम्, अनेकाः कलाश्च, शिल्पम् इत्यादयो विषयाः प्रधानाः। अतः एतत् कथयितुं शक्यं यद् धनसम्बद्धाः कलाः उद्योगाश्च वार्तायाः विषयाः।[३]

विष्णुपुराणे भगवद्विषयिणी एका कथा अस्ति। तत्र इन्द्रपूजनस्य गौणतां प्रदर्शयता भगवता गोवर्धनपूजनं समर्थितम्। तत्र विद्यानां विवरणेन सहैव वार्तायाः सीमा अपि निर्दिष्टा। किन्तु तत्र कृषिः, वाणिज्यम्, पशुपालनं च इति त्रयमेव वार्तायाः विषयतया प्रतिपादितम्।[४] इयमेव कथा श्रीमद्भागवतेऽपि। किन्तु भागवते वार्तायां चतुर्णामपि विभागानां समावेशः स्वीकृतः।[५] वार्ताशास्त्रस्य प्रत्येकं विषयेषु पृथक् पृथग् ग्रन्थाः उपलभ्यन्ते। ये ग्रन्थाः अद्यापि भाषायां 'शास्त्रम्' इति वक्तुं शक्याः। पशुपालनादिषु गौतमशालिहोत्रादीनां ग्रन्था अद्यापि लभ्यन्ते,

---

१. बुच, इकनामिक लाइफ इन एंशेंट इण्डिया।

२. देवीपु० ६७।१३; महाभा० १२।२६७।१०-११।

३. आधुनिकार्थशास्त्रकाराणामपि मतं द्रष्टव्यम्, तत्तु न निश्चितम् स्पष्टञ्च।

४. न वयं कृषिकर्त्तारो वाणिज्याजीविनो न च।
गावोऽस्मद्दैवतं तात वयं वनचरा यतः॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथा परा।
विद्याचतुष्टयं त्वेतद् वार्त्तामत्र शृणुष्व मे॥
कृषिर्वाणिज्या तद्वच्च तृतीयं पशुपालनम्।
विद्या ह्येका महाभाग वार्त्ता वृत्तित्रयाश्रया॥
कर्षकाणां कृषिर्वृत्तिः पण्यं विपणिजीविनाम्।
अस्माकं गौः परा वृत्तिर्वार्त्ता भेदैरियं त्रिभिः॥
विद्यया यो यया युक्तस्तस्य सा दैवतं महत्।
सैव पूज्यार्चनीया च सैव तस्योपकारिका॥
(वि० पु० ५।१०।२६-३०)

५. कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते।
वार्त्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम्॥
(श्रीमद्भा० पु० १०।२४।२१)

अन्येषां ग्रन्थानां तु सङ्केतमात्रं लभ्यते। वार्तायाः महत्त्वम् अत्यधिकम् आसीत् प्राचीनभारते।[१] वार्तायाः कृते वार्तापर्यायः अर्थशास्त्रशब्दोऽपि अस्ति। इदम् अर्थशास्त्रम् उपवेद इति कथितम्। अर्थशास्त्रस्य सङ्केतः प्राचीनग्रन्थेषु विस्तरेण लभ्यते।[२] अर्थशास्त्रस्य व्याख्यां कुर्वता कौटल्येन लिखितं यत् मनुष्याणां वृत्तिरेव अर्थः। अर्थात् मनुष्येण विकसिता भूमिः एव अर्थः। तस्याः पालनसंवर्धनादौ उपायभूतं शास्त्रम् अर्थशास्त्रं कथ्यते।[3] मनुष्यो भूमित एव जीविकां प्राप्नोति। सम्पत्तेः आधारश्च भूमिरेव। अतः तस्याः पालनसंवर्धनादौ उपायभूतं शास्त्रम् अर्थशास्त्रम्। अर्थशास्त्रस्य ईदृशे स्वरूपे स्वीक्रियमाणे अर्थशास्त्रस्य क्षेत्रम् अतीव विस्तृतं भवति।

भूमिपरतया अर्थशब्दः प्रयुक्तोऽस्ति, न तु धनपरतया। उक्तव्याख्यानुसारं भूमेः प्राप्तिः, तस्याः परिपालनसंवर्धनादेः उपायश्च इत्येतद्द्वयमपि अर्थशास्त्रस्य विषयत्वेन स्वीक्रियते। अतः अत्र एकतः वार्तायाः, अपरतश्च दण्डनीतेः प्रवेशः। कौटल्यमतानुसारम् इतिहासे एव अर्थशास्त्रं समाविशति। राज्येन भूमेः प्रापणम्, राज्ये भूमिपालनक्षमत्वाधानं च इत्येतद्द्वयम् अर्थशास्त्रस्य उद्देश्यम्। एतदेव उद्देश्यं मेकेवलीमहोदयेनापि राजकुमारविषये उक्तम्। तात्पर्यमिदं यद् वार्ता दण्डनीतिश्च एतदुभयमपि अर्थशास्त्रे समाविशति। एतद्विषये शुक्राचार्येण सुस्पष्टं वर्णितम्—श्रुतिस्मृत्यादिकम् अनुरुद्धय राज्ञः मार्गदर्शकम्, अथ च सम्पदः प्राप्तेः परिपालनस्य च उपायबोधकं शास्त्रम् अर्थशास्त्रम्। डॉ० नरेन्द्रनाथलॉमहोदयेन स्वीकृतं यद् अर्थशास्त्रं राजनीतेः आर्थिकविकासस्य च व्यवस्थापकम्, किन्तु मूलतः तद्राजनीत्या सम्बद्धम्। यतः व्यवस्थितशासने सत्येव आर्थिकः विकासः

---

१. कृषिपशुपाल्ये वाणिज्या च वार्ता। धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी। (कौ० १।४।१-२)

२. अनुशासनपर्वणि बृहस्पतेरर्थशास्त्रस्य वर्णनमस्ति ३९।१०-११; द्रोणपर्वणि मनोरर्थविद्याया वर्णनं विद्यते ६।१; जायसवालमहोदयेन 'मनु एण्ड याज्ञवल्क्य' इत्यस्मिन्ग्रन्थे (पृ० ५,७,१६,२५,२७ ४१,४२,५०,८४) संकेतं दत्तम्। रामचन्द्रेण सुधन्वता अर्थशास्त्रमधीतम्—रामा० २।१००।१४; कौटल्येन स्वयं स्वीकृतं यत् "पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्तावितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्।"

३. मनुष्याणां वृत्तिरर्थः। मनुष्यवती भूमिरित्यर्थः। तस्याः पृथिव्या लाभपालनोपायः शास्त्रमर्थशास्त्रम् (जॉलीसं० पृ० १६४, शामशास्त्रिसं०, पृ० ४२८; गणपतिशास्त्रि सं०, तृतीयभागः, पृ० २४)।

सम्भाव्यते ।[1] विण्टरनित्जमहाशयेन इदं शास्त्रम् अर्थविषयकं शास्त्रं स्वीकृतम्, अर्थशब्देन च धनम् अभिप्रैति सः ।

अर्थशास्त्रं दण्डनीतिश्च इत्यनयोः अर्थैक्येऽपि एतौ शब्दौ राज्यविज्ञानस्य विभिन्नयोर्द्वयोरर्थयोः प्रयुज्यते । कामसूत्रे ( १।२० ) अर्थशब्देन शिक्षा, भूमिः, स्वर्णम्, पशुः, अन्नम्, गार्हस्थ्योपयोगीनि वस्तूनि चेत्यादिकं गृहीतम् । एतेषां व्यवहारकाले अर्थशास्त्रस्य आश्रयणं भवति, परन्तु यदा जनाः एतेषां व्यवहारे बाधाम् उपस्थापयन्ति, तदा तदेव अर्थशास्त्रं दण्डनीतित्वेन परिणमति ।[2] अत एव अर्थशास्त्रस्य दृष्टार्थकत्वमपि कथितम् । मनुस्मृतिव्याख्यानावसरे ( ७।१ ) मेधातिथिर्लिखति यद् राजधर्मः दृष्टार्थकतया प्रसिद्धः । फलतः वार्तावद् आर्थिककोशोऽपि अर्थशास्त्रे समायाति ।

कोशविषये कौटल्यः कथयति यद् राज्यस्य सर्वे व्यापारा अर्थाश्रिताः ।[3] अतः राज्ञः कर्त्तव्यं यत् स पशुः, अरण्यम्, वाणिज्यम्, आपणः इत्यादीनाम् उचितां व्यवस्थां कारयेत् ।[4] राजनीतिकः, सामाजिकः, कृषिः, भूमिः, अरण्यम्, खनिः, सिञ्चनम्, कलाः, वाणिज्यम् इत्यादीनां प्राप्तिः संरक्षणं च राज्यस्य वार्तायाश्च विषयौ । येषां समष्टिः अर्थशास्त्रम् इति कथयितुं शक्यते । आधुनिकस्य अर्थशास्त्रस्य प्रयोगः यथाकथञ्चिद् वार्तायाः कृते शक्यः, किन्तु प्राचीनानाम् अर्थशास्त्रम् इति यदभिप्रेतं न तस्य ग्रहणम् आधुनिकेन अर्थशास्त्रेण शक्यम् ।

## छात्रोऽध्यापकश्च

प्राचीनयुगस्य वैशिष्ट्यम् आलोच्य यदि वर्णाश्रमधर्मः समीक्ष्येत, तदा तस्य सर्वाधिकम् आर्थिकं महत्त्वम् । स्वस्थसमाजस्य कृते योग्यतानुसारं कार्यम्, आवश्यकतानुसारं च भोगः इत्येतत्सिद्धान्तस्य अनिवार्या व्यवस्था अस्मिन् संघर्षविहीने अन्योन्याश्रिते समाजे एव सम्भवति । नियतवृत्तितया मनुष्यः बाल्या-

---

१. इ० ए० १९१८, पृ० २३५-२३८ ।

२. नयस्य नीतिशास्त्रस्य च अर्थशास्त्रेण सम्बन्धः । एतदर्थं द्रष्टव्यानि शान्तिपर्व ५९।७४; कामन्दक० १।६; याज्ञ० ७।१७ (मिताक्षरा); रघु० १७।६८; मनु० १२।७; शान्ति० ३।७३।१३८, ३९-४३; १९६,२६८-९; अनु० १६।७; द्रोण० १६२।३९; शा० प० ३७।९; अमरकोशशब्दादिवर्गः ( क्षीरस्वामिटीका ) । मनु० ८।४३ (मेधातिथिः) । याज्ञ० १।१२३ मिताक्षरा ) ।

३. अर्थ० २।८ ।

४. अर्थ० २।१ ।

देव क्रमिकम् अध्ययनम् आरभ्य अध्ययनपूर्णतां सम्पादयितुं प्रभवति। ब्राह्मण-क्षत्रियवैश्यशूद्राणां जीविकाः क्षेत्राणि च नियतानि। एतेषाम् अर्थशास्त्रेण तदङ्गभूतेन वार्ताशास्त्रेण च अति गम्भीरः, विचारणीयः, शास्त्रीयश्च सम्बन्धोऽस्ति।

प्रत्येकं वर्णानां वृत्तयो नियताः। तदनुसारमेव च जीवनयापनं न्याय्यः। परन्तु यदा ब्राह्मणः स्ववृत्त्यनुसारं जीवनं निर्वोढुम् अशक्तः, तदा तेन क्षत्रियस्य वृत्तिः आश्रयणीया। तथापि जीवननिर्वाहे अशक्ये वैश्यवृत्तिरपि ब्राह्मणेन आश्रयितुं शक्यते।[1] एवमेव क्षत्रियवैश्यैरपि स्वस्ववृत्त्यनुसारं जीवननिर्वाहस्य अशक्यत्वे उत्तरोत्तरवर्णीया वृत्तिः आश्रयणीया। अन्यासां वृत्तीनां स्वीकारेऽपि ब्राह्मणः मांस-मदिरोर्णामधुप्रभृतीन् पदार्थान् न विक्रीणीयात्।[2] कृष्यादिषु कमपि न कुर्यात् ब्राह्मणः।[3] आपत्काले ब्राह्मणानां कृते वृत्त्यन्तराश्रयणमपि विहितम्। वृत्त्यन्तरेषु च विशेषतः वार्तायाः एव विषयाः प्रशंसिताः।[4] परन्तु एतासां वृत्तिनाम् आश्रयणं तेषां निषिद्धानां ब्राह्मणानां कृते विहितमस्ति ये ब्राह्मणाः मनुना परिगणिताः।[5] एवंविधमेव परिगणनम् अत्रिसंहितायामपि ( २४ अध्याये ) दृश्यते। अत्र अवधेय-मस्ति यद् जनाः स्ववृत्त्या जीविकानिर्वाहेऽपि वृत्त्यन्तरम् आश्रयन्ति, तदा ते दण्ड्या अमन्यन्त।

एतदेव गौतमस्मृतौ[6] लिखितम् अस्ति यद् एतन्नियमानुसारं ब्राह्मणाः उत्तमकृषकद्वारेण संचालितस्य धनागारस्य, वाणिज्यादेश्च निर्लिप्तः लाभाधिकारी शस्त्रास्त्रादिविषये गुरुश्च भवति स्म।[7] ब्राह्मणेभ्यः भूमिदानं सर्वशास्त्रसम्मतम्। एतदवश्यं यद् ब्राह्मणः कृषिं न कुर्यात्, अपि तु शूद्रादिभिः कारयेत्। ब्राह्मणानां

१. मनु० १०।८१-८३; याज्ञ० ३।२-३५; गौतम० ७।६-७।

२. मनु० १०।८४-८६; याज्ञ० ३।३६-३८; गौतम० ७।८-१५; बौधायन० २।२।२८-२९; वशिष्ठ० २।२३-३१; आपस्तम्ब० १।२०। नारद० १।५६-५७; रामायणम् २।७५-७६; महाभा० ५।३७।५; १२।७८।१०-११; श्रीमद्भागवत ७।२।१६-१७।

३. मनु० १०।८४; महा० सभा० १२।६२। १-३; श्रीमद्भागवत १।३३-३६।

४. विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः॥
( मनु० १०।११६ )

५. ३।१५०-१५१।

६. १०।५-६।

७. बुच इकनामिक लाइफ इन ऐन्शेंट इण्डिया, खं० २, पृ० २२५।

कृते राजशब्दोपजीविनः इति प्रयोगो लभ्यते। तात्पर्यमिदं यद् यद्यपि ब्राह्मणस्य कृते वार्तावृत्तेः विधानं नासीत्, तथापि आपत्काले ब्राह्मणः तामपि आश्रयितुम् अशकत्।

द्विजातीनां शुश्रूषा शूद्राणां कर्त्तव्यतया कथिता।[1] विविधानि शिल्पानि वाणिज्यं कारुकर्म इत्यादिकमपि शूद्रः कर्तुं शक्नोति।[2] मनुना तेषां कार्याणां शूद्रस्य कृते विधानं कृतमस्ति, यानि कार्याणि पतितो ब्राह्मणः कर्तुं शक्नोति। कौटल्येन वार्तायाः सर्वेऽपि विषयाः शूद्राणां विषयाः स्वीकृताः।[3] स्वगुरोः कौटल्यस्य मतं व्याचक्षाणः कामन्दकोऽपि एतदेव लिखति।[4] विष्णुपुराणेऽपि शूद्राणां कृते वाणिज्यं विहितम्।[5] इत्थं शूद्राः वार्तायाः मुख्याः विषयाः। वार्ता तेषां जीविका। अद्यत्वे शूद्राणां यादृशं चित्रणं क्रियते तत् सर्वथा भ्रमपूर्णम्।

अर्थशास्त्रदृष्ट्या रामायणस्य (२।१००), महाभारतस्य (२।५) एतस्मिन् अध्यायद्वये रामभरतयोः नारदयुधिष्ठिरयोश्च संवादः अस्ति। एतदनुसारं वार्ताशास्त्रस्य अध्ययनं राज्ञः कृतेऽत्यावश्यकम्। भगवता रामचन्द्रेण कृषिवाणिज्य-पशुपालनादिकं राजकर्त्तव्यमिति भरताय उक्तम्। रामादिभिः सुधन्वनः अर्थशास्त्रम् अधीतमासीत्। महर्षिः नारदः युधिष्ठिरं किं भवता सिञ्चनस्य प्रबन्धः कृतः? कृषेः उन्नयनार्थं किम् अन्नऋणादीनां व्यवस्था कृता? किं वणिजः सौविध्यपूर्वकं वाणिज्यम् आचरन्ति? किं कर्त्तव्यनिष्ठैः जनैः वार्तायाः प्रयोगः क्रियते? इत्यादिकम् पृच्छति। राज्ञः कृते अर्थशास्त्रस्य अध्ययनम् आवश्यकम् अमन्यत। ब्राह्मणैरपि धर्मशास्त्राध्ययनानन्तरम् अर्थशस्त्रम् अध्येयम्।[6]

---

१. मनु० ८।४१३-१४; १।६१; ११।२३६; वशि० २।२०; बौधा० १।१८-५-६; आप० १।१।६-७; गीता० १८।१४; रामा० १।६।१६; महा० १२।२६६।२१; भागवत० ७।२।१४।

२. शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन्॥

३. शूद्रस्य द्विजातिशुश्रूषा वार्ता कारुकुशीलवकर्म च। अर्थ० १।३।८।

४. वृत्तयः शूद्रस्य सर्वशिल्पानि—काम० ११।२१।

५. गौ० १०।५६,५७,६०; मनु० १०।६६; विष्णुपु० ? अध्यायः; गरुड् ४६ अध्यायः, मार्कण्डेय० २८-७, कूर्मः २।४।

६. फिक्स; सोशल अर्गनाइजेशन इन नार्थ ईस्ट इण्डिया; अनुदितम् डॉ. एस. के. मित्रेण; आप० २।२।२६; मनु० २।१६८।

शिक्षायाः द्वौ विभागौ—प्रारम्भिकः उच्चश्च। प्रारम्भिकशिक्षायां लेखनं पठनं गणितमित्यादिकम् आयाति।[१] उच्चशिक्षायाम् आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च इत्येतत् चतुष्टयम् आयाति। शिष्टेभ्यः त्रयीम् आन्वीक्षिकीं च, अध्यक्षेभ्यो वार्ताम्, वक्तृप्रयोक्तृभ्यः दण्डनीतिञ्च अधियीत।[२] राजकुमारविषये कौटल्यः कथयति यत् स दिनस्य पूर्वार्धे हस्त्यश्वादीनां विषयेऽध्ययनम् उत्तरार्धे च इतिहासश्रवणं कुर्यात्। इतिहासे एव अर्थशास्त्रमपि समायाति।[३] इयं परिभाषा अस्माकम् इतिहासस्य प्रतिनिधिः। अवधेयमस्ति यद् अत्र इतिहासपुरणेतिवृत्ताख्यायिकाः शब्दाः विभिन्नेषु अर्थेषु प्रयुक्ताः सन्ति।

ब्राह्मणविषये मनोः कथनं यद् ब्राह्मणः व्याकरणम्, मीमांसा, स्मृतिः, पुराणं चेत्यादिकेन सहैव अर्थशास्त्रमपि अधियीत।[४] परन्तु ब्राह्मणः केवलम् अर्थशास्त्रस्य अध्येता अध्यापकश्च, न तु तेन धनोत्पादकः। क्षत्रियस्य कृते केवलं शासनार्थमेव अर्थशास्त्रम् आवश्यकम् आसीत्। ते उत्पादनसाधनेषु ऐकाधिपत्यं कल्पयितुमपि नाशकन्, किं पुनः स्थापयितुम् (पृथिव्यापालनोपायः)। डॉ० नरेन्द्रनाथलामहोदयेन लिखितं यद् ब्राह्मणः न केवलं धर्मशास्त्रस्य दर्शनस्य च अध्यापक आसीत्, अपि तु अर्थशास्त्रस्यापि अध्यापकः, आपत्काले च अर्थशास्त्रस्य अध्येता च आसीत्। इदं निश्चितं यत् स अर्थशास्त्रस्य प्रयोगं कर्तुं न अर्थशास्त्रम् अधीयते स्म। इदमेव क्षत्रियविषयेऽपि। सः (क्षत्रियः) अर्थशास्त्रस्य अध्येता एव आसीत्, परन्तु शासनार्थम्।[५]

यथा कथितं प्राग् यद् वार्ता राजकुमारेण अवश्यम् अध्येया इति।[६] विभागाध्यक्षाणामपि कृते वार्ताध्ययनम् अपेक्षितम् आसीत्।[७] वार्ता राज्ञः

१. वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत. कौ० १।५।७।

२. वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः वार्तामध्यक्षेभ्यः दण्डनीतिं वक्तृप्रयोक्तृभ्यः। कौ. १।५।८।

३. पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेति इतिहासः। अर्थ० १।५।१४।

४. बुद्धिवृद्धिकराण्याशु धान्यानि च हितानि च।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्॥
(मनु० ४।१९)

५. ब्राह्मणिकल स्टडी ऑफ वार्ता, प्रकाशितम् १९१८, पृ० २४०।

६. त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीञ्चात्मविद्यां वार्तारम्भांश्च लोकतः॥
(मनु० ७।४३)

मत्स्यपु० २१५।५३; अग्निपु० २२५।२१-२२; गौतम० २०।३; रामा० २।१००।

७. कामन्दक० २।१; शु० १।२०३-४; रामा० २।१००; महा० २।५।

कुलविद्यापि स्वीकृता अस्ति।[1] वस्तुतः अर्थशास्त्रं राज्ञः प्रधानो विषयः। अर्जुनः अर्थशास्त्रविशारदः कथितः।[2] मत्स्यपुराणे कथितं यद् राजकुमारः धर्मशास्त्रम्, कामशास्त्रम्, अर्थशास्त्रम्, धनुर्वेदम्, हस्त्यश्वविद्याम्, शारीरिकव्यायामं च शिक्षेत।[3] वेदान्, तदङ्गानि, उपनिषदः, धनुर्वेदम्, धर्मशास्त्रम्, अर्थशास्त्रम्, मीमांसां च बलरामकृष्णौ अध्यैषाताम्।[4]

यथा उक्तं यत् शूद्रः अर्थशास्त्रम् अध्येतुं शक्नोति स्म। वैश्याः वार्तां प्रयोक्तुम् अशकन्। विविधशिल्पकारुकुशीलवकर्मभिः सह वार्तायाः प्रयोगं शूद्रा अपि कुर्वन्ति स्म। द्विजातीनां शुश्रूषा शूद्रस्य कर्त्तव्यम् इति यद् उक्तं तत्र द्विजातिशुश्रूषायाः नेदमेव तात्पर्यं यद् द्विजातीनां पादप्रक्षालनं कार्यम्, अपि तु प्रतिदिनम् आवश्यकानां वस्तूनाम् उत्पादनमपि। वैश्यैः शूद्रैश्च प्रयुक्तां वार्तां राजा नियन्त्रयति स्म। ब्राह्मणाश्च नियन्त्रणस्य मार्गं राजानं दर्शयन्ति स्म। एषः समाजस्य वर्गीयः अन्योन्याश्रयः आसीत्। ब्राह्मणैः अर्थशास्त्रस्य अध्यापनम् आवश्यकम् आसीत्।[5] किन्तु एतदावश्यकं नासीत् यत् स अर्थशास्त्रस्य प्रत्येकम् अङ्गस्य अध्यापको भवेत्, अपि तु कृषिः, पशुपालनम्, कारुकुशीलवकम् इत्यादीनां विषयाणाम् अध्यापकः शूद्र आसीत्। सर्वेभ्योऽपि विद्या ग्राह्या इति मनुना आदिष्टम्। इयं विद्या अर्थशास्त्रसम्बन्धिनी अपि अस्ति।[6]

इत्थं वयं पश्यामो यद् अर्थशास्त्रस्य अध्यापकः अध्येता च ब्राह्मणः शूद्रश्च भवितुम् अशक्नुताम्। ब्राह्मणक्षत्रियाः समाजकल्याणार्थम् अर्थशास्त्रम् अधीयते स्म। ते ततः धनसंचयं कर्तुं नैव अशकन्। वैश्याः शूद्राश्च अर्थशास्त्रस्य अध्ययनं प्रयोगं च कुर्वन्ति स्म। ते उत्पादनसाधनेषु एवम् अधिकारं स्थापयन्ति स्म यद् नियन्त्रणेन न शोषणम्, अपि तु समाजकल्याणमेव।

---

१. रघुवंश० १७।३।

२. महा० १।१६७।११०।

३. मत्स्य० २२।२-३; २२०।२-३।

४. श्रीमद्भागवत १०।४५।२५-२७।

५. बुच; इकनामिक लाइफ इन एन्शेंट इण्डिया, खं० १, पृ० १८।

६. ........अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि २।२३८।.....विविधानि च शिल्पानि समादेयानि सर्वतः २।२४०। अब्राह्मणादध्ययनमापत्काले विधीयते २।२४१।

धर्मशास्त्रेण सम्बन्धः

प्रशासकस्य अधिकारेण कर्त्तव्येन उत्तरदायित्वेन सहैव जनतायाः जीवनेनापि अर्थशास्त्रस्य सम्बन्धः। फलतः अर्थशास्त्रेण धर्मशास्त्रस्य निर्देशनं स्वीकार्यं भवति। अर्थात् धर्मशास्त्रनिर्देशने एव अर्थशास्त्रं प्रसरति। परन्तु धर्मशास्त्रस्य इव अर्थशास्त्रस्य उत्पत्तिः दैवस्रोतसः न जाता। अर्थशास्त्रे लौकिकजीवनस्य सर्वे अंशाः समायान्ति, यदा धर्मशास्त्रं राजशास्त्रस्य कैश्चिदंशैः सबद्धमस्ति। पुरुषार्थेषु धर्मस्य उत्कृष्टं स्थानमस्ति। परन्तु धर्मे अर्थस्य महत्त्वं न न्यूनम्, परन्तु द्वयोर्विरोधे धर्मशास्त्रमेव आद्रियते। यतः धर्मः जीवनस्य लक्ष्यभूतः, अर्थस्तु तदुपायः।[१]

अर्थशास्त्रेण इव अन्याभिरपि लौकिकशक्तिभिः धर्मशास्त्रस्य नियन्त्रणम् स्वीकार्यं भवति। धर्मशास्त्रेषु ईदृशा विषयाः सन्ति, यत्र धर्मशक्तेः सुरक्षार्थं न्यायतर्कादिभिः वस्तुस्थितिः समाधीयते। आर्षप्रमाणतः अन्येषामपि प्रमाणानाम् अपेक्षणाद् धर्मशास्त्रं तावत्यंशे लोकापेक्षं भवति। धर्मशास्त्राणां सङ्ग्रहसमये समाजे ईदृश्यः अपि व्यक्तयः आसन्, याः धर्मार्थशास्त्रयोः ऐक्यं स्वीकर्तुं नेच्छन्ति स्म। फलतः अन्यान्यपि प्रमाणानि आश्रयणीयानि अभूवन्। अस्यां स्थितौ अर्थशास्त्रीया परम्परा धर्मशास्त्रेभ्योऽपि प्रचलिता आसीत्, व्यवहारे धर्मशास्त्रं विसंवदत्।[२] ततश्च द्वयोः विरोधोऽपि उद्भूतः। अस्मिन्विरोधे यदि अर्थशास्त्रं लोककल्याणार्थं हीनानि साधनानि आद्रियते, तदा तेन वैधानिका अधिकारा लब्धुं न शक्यन्ते। धर्मशास्त्रस्य पुरः तादृशम् अर्थशास्त्रं प्रमाणतया स्थातुं न शक्नोति।[३]

धर्मशास्त्रे लौकिकेषु प्रश्नेषु मतभेदो भवति। अत्याचारिणो वधः पापाय न भवति इति एकत्र मनुना वर्णितम्।[४] अन्यत्र च स ब्राह्मणवधम् ईदृशं जघन्यं पापं मन्यते, यस्य प्रायश्चित्तेनापि निवृत्तिः कर्तुं न शक्या।[५] अस्य विरोधस्य तात्पर्यमिदं यत् प्रथमकथनं व्यवहारस्य विषयः, द्वितीयं च प्रायश्चित्तस्य;

---

१. धर्ममूलत्वात् कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धायार्थस्य सिद्धिः, सा सर्वार्थसिद्धिः। कौ० ९।७। यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिर्णयेत्। कौ० ३।१।५६।

२. आप० ध० सू० २।१५।१०।१६।

३. आप० ध० सू० १।६।२४।२२; याज्ञ० २।२१; व्यवहारमातृका १।३९।

४. मनु० ८।३५१; वि० ध० सू० ५।१९०; भा० पु० २२७।११६-११७।

५. मनु० ११।८९।

अर्थात् प्रथमकथनस्य इदं तात्पर्यं यद् यदि कश्चिद् अत्याचारिणं निहन्ति, तदा स न राजदण्डमर्हति, पापं भवेन्नाम। तस्य द्वितीयकथनस्य एष आशयः यद् यदि कश्चिद् ब्राह्मणं निहन्ति, तदा तस्य दृष्टहानिर्भवेन्मा वा भवेत्, अदृष्टहानिस्तु भवत्येव। प्रायश्चित्तं पापस्य व्याख्या न राजदण्डस्य व्यवहारः; अर्थशास्त्रस्य विषयः, न तु धर्मशास्त्रस्य। एष विषयः विश्वरूपेण मिताक्षराकृता च उपस्थापितः। तयोः निष्कर्षोऽपि उक्तविधा एव। वस्तुतः अर्थशास्त्रस्य अंशैः धर्मशास्त्रेऽपि स्थानं लब्धम् अस्ति। तैः सह समन्वये धर्मशास्त्रेण तेषां स्वतन्त्रं स्थानं स्वीकृतम्।

अर्थशास्त्रानुसारं राज्ञः कृते धनादपि अधिकं मित्रस्य महत्त्वम्। परन्तु धर्मशास्त्रानुसारं राज्ञा पक्षपातरहितेन न्यायः विधिः धर्मश्च रक्षणीयाः। एतदर्थं यदि मित्रत्यागोऽपि कर्त्तव्यः भवेत्, तदा तमपि धर्मशास्त्रम् अनुमन्यते। एवंविधानि बहूनि विरुद्धानि स्थलानि सन्ति, येषाम् आलोचनेन अर्थशास्त्रधर्मशास्त्रयोः विरोधः परिलक्ष्यते। स्वस्वक्षेत्रे द्वयोः उपयुक्ततापि सिद्धा एव। यदि द्वयोः क्षेत्रं विभज्येत, तदा अर्थशास्त्रं स्वतन्त्रं भवेत्, न धर्मशास्त्रमुखावलोकि। उत्तरवर्तिभि-र्मध्यकालिकैश्च व्याख्याकारैः अर्थशास्त्रं धर्मशास्त्रस्य पूरकं प्रायः स्वीकृतम्। वस्तुस्थितिस्तु एषा यद् अर्थशास्त्रं न धर्मशास्त्रापेक्षम्, अपि तु स्वतन्त्रमेव। धर्म-शास्त्रं स्मृतिरस्ति, अर्थशास्त्रं च उपवेदः।[1] तस्य महत्त्वं न धर्मशास्त्रापेक्षया न्यूनम्। कौटल्येन इतिहासस्य सार्वभौमपरिभाषायां धर्मशास्त्रम् अर्थशास्त्रं च इत्येतद्द्वय-मपि स्वातन्त्र्येण स्वीकृतम्।[2]

अर्थशास्त्रविषये कथ्यते यत् तद् धर्ममार्गे आपतन्तीनां बाधानां दूरीकरणे साधनम्। परन्तु व्यवहारक्षेत्रे कौटल्येन महाभारतकृता च अर्थशास्त्रस्य ईदृशानि साधनानि स्वीकृतानि यैः धर्मस्य स्वरूपं विलुप्यते। कणिकेन धृतराष्ट्राय या नीतिः उपदिष्टा, सा धार्मिकी इति वक्तुं न शक्यते।[3] न केवलं कणिकेनैव, अपि तु भीष्मेणापि ईदृशी नीतिः समर्थिता।[4] हृदयस्य कुटिलता, वाचा माधुर्यम् अवसरानुसारं छल-कपटविनयादिना स्वार्थसाधनम्, विश्वासघातः, शत्रुं मित्रं कृत्वा तस्य विपदः उद्भावनम्, आवश्यकतानुसारं परिवारीयसदस्यानां स्वसन्ततेर्वापि हननम् इत्यादयो व्यवहाराः नैतिकाः स्वीकृताः।[5] भीष्मोक्तां नीतिं श्रुत्वा तां नीतिं दस्यु-नीतिम् अकथयद् युधिष्ठिरः। व्याख्याकारैः कणिकस्य भीष्मस्य च उक्तविधायाः

१. विष्णु पु० ३।६।२८ अपरार्केण उद्धृ०, पृ० ६।

२. पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रञ्चेतीतिहासः। कौ० १।५।१४।

३. आदिपर्व १४० अध्यायः।

४. शान्तिपर्व १४० अध्यायः।

५. शान्ति० १४०।१३, १७-१८, २२, २८, ४४, ४७, ५०।

नीतेः समर्थनार्थम् आपत्काले उच्चसाध्यस्य प्राप्त्यर्थं वा ईदृशी अपि नीतिः स्वीकर्तुं युज्यते इति प्रतिपादितम्।

भीष्मेण युधिष्ठिरस्य प्रश्नः अन्यत्र समाहितः।[१] तदनुसारं सः न केवलं धर्मशास्त्रमेव स्वनीतेरेव आश्रयं मन्यते, अपि तु बुद्धिन्यायतर्कादीनपि आधारतया स्वीकरोति। राज्ञः व्यवहाराः उद्देश्येन वस्तुस्थित्या च सम्बद्धा भवन्ति, न तु धर्मशास्त्रेण। राजधर्मः एकमेव आधारं न मन्यते।[२] शान्तिपर्वणि इन्द्रेण इयं नीतिः बृहस्पतेः अधिगता इति वर्णितम् अस्ति। स्वयं भीष्मः भरद्वाजस्य मतं प्रकाशयति। राज्यरक्षार्थं यदि विषवधः क्रियते, अन्यद्वा यत्किमपि पापं क्रियते, तदा तदपि अनुमोदितं वर्तते।[३] अविश्वासस्तु राजनीतेः मूलमेव अमन्यत।[४] महाभारते शताधिकानि ईदृशानि स्थलानि सन्ति यत्र धर्मविरुद्धम् आचरितुं राजा आदिष्टोऽस्ति। वस्तुतः महाभारतम् अर्थशास्त्रधर्मशास्त्रयोः विवादस्य समन्वयं करोति, बृहस्पतिभरद्वाजादीनाम् मतानि न धर्मशास्त्रीयाणि, अपि तु अर्थशास्त्रीयाणि। तानि अर्थशास्त्राणि महाभारतात् पूर्वम् अविद्यन्त।

कौटल्येनापि एतस्य प्रश्नस्य विषये विचारः कृतः। तेनापि बृहस्पतेः भरद्वाजस्य च मतं यथा उपस्थापितं तन्मतं महाभारतीयभरद्वाजमताद् बृहस्पतिमताच्च न भिद्यते। तत्कूटनीतः विशालाक्षेण खण्डनं कृतम्। पूर्ववर्तिनाम् अर्थशास्त्रिणां मतानि संशोधयता कौटल्येन राजकुमारस्य कृते धार्मिकशिक्षायाः अनिवार्यत्वं प्रतिपादितम्।[५] भरद्वाजेन राज्ञः संक्रमणकालीनस्थितौ मन्त्रिमण्डलस्य षड्यन्त्रं रचयितुं प्रोत्साहितम्। कौटल्येन एतदपि खण्डितम्।[६] परन्तु कौटल्येन स्वयम् ईदृशानि साधनानि स्वीकृतानि यानि धार्मिकाणि नैतिकानि वा कथयितुं न शक्यन्ते।

एवं वयं पश्यामो यद् भारतीयविचारधारायाम् अर्थशास्त्रस्य स्वतन्त्रं दर्शनं स्वरूपं क्षेत्रं च आसन्। तस्य आधारो न धर्मशास्त्रम्, अपि तु लोक आसीत्। अर्थशास्त्रं लौकिकं दृष्टप्रतिपादिकं च कथितम्, तद् (अर्थशास्त्रम्) धर्मस्य पूरकमपि आसीत्। समाजे नैतिकतायाः रक्षया सममेव लोकस्य अभ्युत्थानमपि अर्थशास्त्रस्य उद्देश्यभूतम् आसीत्।

—:o:—

१. शान्ति० १४२ अध्याय।
२. शान्ति० १४।२७ और १७।
३. शान्ति० १३० अध्याय।
४. शान्ति० १३८ अध्याय।
५. कौ० १।१७।
६. कौ० ५।६।

११

# आर्थिकजीवनम्

## सामाजिकपरिवर्तनम् आर्थिककारणञ्च

विधेः नियमेषु सदा परिवर्तनं भवति। समाजस्य स्थितिषु परिवर्तनेन सह नियमेष्वपि परिवर्तनम् अवश्यम्भावि, तथा विधेः स्वरूपं परिवर्तितं भवति। एकस्मिन् काले ये नियमाः मान्याः आसन्, त एव कालान्तरे अमान्या भवन्ति। इदं परिवर्तनम् इयदवधिकं भवति यन्नैतिकतायाः अपि मान्यता परिवर्तते। एकस्य युगस्य नैतिकता युगान्तरे अनैतिकता भवति। यैः वैशिष्ट्यैः कृतत्रेताद्वापर-युगानि पुण्ययुगानि मन्यन्ते, तानि एव वैशिष्ट्यानि कलौ निषिद्धानि, यतः कलियुगे तानि वैशिष्ट्यानि नैतिकतया स्वीकर्तुं न शक्यानि। ईदृशेषु परिवर्तनेषु आर्थिक-कारणानां महत्त्वपूर्णं स्थानम् अस्ति। आर्थिककारणानां प्रभावः सामाजिकेषु परिवर्तनेषु अवश्यं भवति। भारतीयविधिविकासेऽपि सामाजिककारणानां प्रभावः परिलक्ष्यते। धर्मशास्त्रतः अर्थशास्त्रपर्यन्तम् एतेषां प्रभावः दृश्यते। विधेः विकासे आर्थिककारणानां सम्बन्धनिर्धारणे च महद् दौष्कर्यम् अस्ति, यतः भारते देशविष-यिका कालविषयिका च महती समस्या अस्ति। शास्त्राण्यपि स्थानीयानि सन्ति, किन्तु तेषां मान्यता दैशिकताम् आवृत्य अस्ति। अत एव तेषां विभिन्नाः समस्याः परस्परं विरोधिन्यो भवन्ति। अस्यां परिस्थितौ विधेः आर्थिककारणानां च समन्वयः दुष्करः, तथापि कानिचिद् ईदृशानि तत्त्वानि सन्ति, यैः इदं परिज्ञातुं शक्यते यत् सामाजिकविधिविकासे आर्थिककारणानां सहकारिता आसीदिति।

वेदेषु ऋषि-ऋणस्य उल्लेखो दृश्यते, परन्तु विवादे ऋणादानस्य प्राथम्यं स्वीकृतम्। इत्थं विधौ ऋणादानेन प्राथम्यं लब्धम्। मनोर्धर्मशास्त्रे नारदस्मृतौ च ऋणविषयकम् एकं स्वतन्त्रं प्रकरणमेव अस्ति। इयदेव न ऋणमप्रत्यावर्त्य यदि कश्चिन्म्रियते, तदा ऋणदातुः गृहे तेन जन्म लभ्यते। अथ च जन्मान्तरीयमपि ऋणं प्रत्यावर्तनीयम्। अर्थात् अस्मिन् जन्मनि यदि कश्चिद् ऋणं न प्रत्यावर्तयेत्, तदा तद् ऋणं जन्मान्तरे प्रत्यावर्तनीयं भवति। ऋणं गृहीत्वा कस्यामपि अवस्थायां न मुक्तिः सम्भवति। अन्याय्यम् अधिकं कुसीदं यः गृह्णाति, स चौरः अनैतिकश्च कथितः।[१] वर्णव्यवस्थानुसारं समाजस्य विभिन्नेषु अङ्गेषु स्थितिभेदः कृतोऽस्ति।

---

१. नारद० १।८; याज्ञ० १।१२३; वशिष्ठ० २।४१।

ऋणस्य कुसीदस्य च निर्धारणं जात्यनुसारं कार्यम् अभूत्। आवश्यकतायां सत्यामपि परिस्थितिविशेषेऽपि ब्राह्मणाः क्षत्रियाश्च कुसीदद्वारेण धनम् अर्जयितुम् अशक्ताः आसन्।[१] परन्तु याज्ञवल्क्यसमये स्थित्यां परिवर्तनं जातम्। तेन सामाजिकपरिवर्तनेन सह आर्थिकनियमानां समन्वयः कृतः। आवश्यकतानुसारं ब्राह्मणानां क्षत्रियाणां च कृते कुसीदग्रहणं विहितम्।[२]

प्रारम्भकाले ऋणशब्दस्य ज्ञानमात्रम् आसीत्, किन्तु स्मृतिकाले कुसीदस्य अवान्तराः प्रभेदा अपि कृताः, ये विकसितार्थपद्धतौ एव सम्भवन्ति। कुसीदस्य षट् प्रभेदाः स्वीकृताः–कालिका, चक्रवृद्धिः, कारिता, शिखावृद्धिः, भोगः, लाभः इति।[3] स्पष्टं यत् सामाजिकस्थितौ परिवर्तनेन सहैव आर्थिकजीवने परिवर्तनम् अभूत्। विधौ च परिवर्तनं कर्त्तव्यम् अभवत्। आर्थिकजीवनं वाणिज्यम् आर्थिकस्थितिः इत्यादीनां विकासेन कुसीदस्य अवान्तराः प्रभेदाः कर्त्तव्याः अभूवन्।

प्रायः लिखितान् अलिखितान् च आधृत्य कुसीदव्यवस्था आसीत्। सामजिक्याम् आर्थिक्यां च परिस्थितौ परिवर्तनेन सहैव कुसीदव्यवस्थायां परिवर्तनम् अभूत्। सामन्यतः विंशतौः कार्षापणे मासपञ्चमात्मकं कुसीदं प्रतिमासं गृह्यते स्म। स्मृत्यन्तरेषु ऋणस्य अशीतितमः भागः ($\frac{1}{80}$) कुसीदतया स्वीकृतः।[४] स्मृतिषु प्रतिशतं पञ्चदशरूप्यकात्मकं वार्षिकं कुसीदं विहितम् अस्ति। यदि कुसीदस्य परिमाणं लिखितम्, तत्र अनेके अपवादाः आसन्। कौटल्यसमयेऽरण्यद्वारेण समुद्रद्वारेण च वाणिज्यं भवति स्म। अत एव कुसीदस्य परिमाणम् अपरिवर्तनीयम् अभूत्। कौटल्यमतानुसारेण सामान्यवाणिज्यविषयके ऋणे प्रतिशतं पञ्चपणात्मकम्, अरण्यसम्बन्धिवाणिज्यविषयके ऋणे प्रतिशतं दशपणात्मकम्, समुद्रसम्बन्धिवाणिज्यविषयके ऋणे प्रतिशतं विंशतिपणात्मकं कुसीदं देयम्।[५] मूलधनस्य महत्त्वानुसारेण कुसीदस्य परिमाणं वर्धते। सामान्यस्थितौ दीयमानस्य ऋणस्य अपेक्षया अरण्यसम्बन्धिवाणिज्ये समुद्रसम्बन्धिवाणिज्ये च अधिकं महत्त्वम अस्ति। अत एव तदनुसारमेव कुसीदपरिमाणं व्यवस्थाप्य आर्थिक्यां सामाजिक्यां च स्थितौ समन्वयः कृतः। सामुद्रवणिग्भ्यः दीयमानम् ऋणम् अधिकं विपद्ग्रस्तम् आसीत्। अत एव तत्र ऋणान्तरापेक्षया अधिकं कुसीदं व्यवस्थापितम्।

---

१. वशिष्ठ० २।४; मनु० १०।११७।

२. याज्ञ० ३।४१-४२।

३. बृहस्पति० ११।५,६,७,८; गौतम० १२।३५; कात्यायन० ४९८,४९९, ५००।

४. याज्ञ० ३।२७; मनु० ८।१४०; कौ० ३।३; बृह० ११।३४।

५. कौ० ३।२; याज्ञ० २।३८।

सामान्यतः प्रतिशतं पणद्वयात्मकं मासिकं विंशति पणात्मकं वार्षिकं कुसीदं स्वीकृतम्।[1] अन्यत्र प्रतिशतं पञ्चमांशसहितमेकं कुसीदं विहितमस्ति। अस्य वैषम्यस्य इदं कारणं यत् पूर्वोक्तं प्रतिशतं कुसीदम् अलिखितस्य ऋणस्य विषये, यतः अलिखितऋणविषये अधिकं दायित्वं भवति। अतस्तत्र कुसीदमपि अधिकं गृह्यते। कासुचित् स्मृतिषु पणत्रयात्मकं पणचतुष्टयात्मकं पणपञ्चकात्मकं चापि प्रतिशतं कुसीदं प्रतिपादितमस्ति।[2] सामाजिकस्थित्यनुसारम् एव विधिर्निर्णीतः। येषाम् ऋणेऽधिकं दायित्वम् आसीत्, तैः तदनुसारेण कुसीदस्य परिमाणं व्यवस्थापितम्। सामाजिकस्थित्या आर्थिकनियमानां समन्वयार्थम् ऋणविषये केचन अपवादा अपि स्वीकृताः, यत्र कुसीदं न गृह्यते। यज्ञविषये शिक्षाविषये गृह्यमाणे ऋणे कुसीदग्रहणं निषिद्धम्। एवम् आतुरोऽनाथो वा ऋणं गृह्णाति, तदा तत्रापि कुसीदग्रहणं वर्जितम्। केषुचित् पारस्परिकसम्बन्धेष्वपि कुसीदं नासीत्, यदि आसीदपि तदा सामान्यमेव, न चक्रवृद्ध्यादिकम्।[3]

कुसीदस्य अधिकतमः परिमाणः कः भवेदिति निर्धारणे देशस्य प्रभावः आसीत्। मूलधनस्य द्विगुणितः अष्टगुणपर्यन्तस्य कुसीदस्य नियमः देशानुसारं लभ्यते।[4] कुसीदशोधनार्थं निर्धारितेन कालेन तदनुपातेन च कुसीदस्य परिमाणे वैषम्यं भवति स्म। यावति काले स्वर्णस्य कुसीदं द्विगुणं स्वीकृतम् तावति काले सोमस्य कुसीदम् अष्टगुणम्।[5] इत्थमेव वस्त्रौषध्यादिविषयककुसीदेष्वपि विषमता स्वीकृता अस्ति।[6] कोशसम्बद्धकुसीदविषये तत्रैव धनस्य निधाने बहिर्नयने च कुसीदस्य परिमाणं भिद्यते।[7] अन्नविषयं कुसीदं सस्यसम्पत्तिसमये गृह्यते स्म। तदानीं सस्यस्य मूल्यं न्यूनं भवति। अत एव सस्यविषयकं कुसीदम् अनुपाताद्धिकं

---

१. याज्ञ० २।३८।

२. याज्ञ० २।३७; मनु० ८।१४१; नारद० १।१००; विष्णु० ६।२; वशिष्ठ० २।४८।

३. वशिष्ठ० २ ४६; नारद० १।१०८-१०६; याज्ञ० २।५६; मनु० ८।१४३; विष्णु० ६।५; गौतम० १२।३२; कौ० ३।२।

४. नारद० १।१०६।

५. बृह० ११।१३;

६. बृ० ११।१३ १६; याज्ञ० २।३९; विष्णु० ६।१३,१६; वशिष्ठ० २।४४-४७; नारद० १।१०७; बृ० १।१३; गौतम० १२।३६; ८।१५४,१५५; कात्यायन० ५१०-५१२।

७. कौ० ३।२।

भवति। अतः सत्यसम्पत्तेः पूर्वं तद्विषयकं कुसीदं न गृह्यते स्म। सामुद्रवणिग्भ्यः यदधिकं कुसीदं गृह्यते स्म तत्र न केवलम् तेषाम् विपद्ग्रस्तता एव कारणम्, अपि तु सामुद्रवणिजां विदेशेषु अधिकः आयः भवति स्म। एतदपि तेभ्यः अधिककुसीदग्रहणे कारणम्। अनया रीत्या सामाजिकस्थित्या सह आर्थिकनियमानां समन्वयः कृतः। वस्त्रम्, औषधम्, रत्नम्, जतुः इत्यादीनां विषये निर्धारितकुसीदपरिमाणं वीक्ष्य ज्ञायते यत् आर्थिकजीवनं विधिसंहितापेक्षया अधिकं जटिलं शक्तिमच्च आसीत्। निर्धारितेऽवधौ कुसीदस्य आदाने नूतनः अनुबन्धः लिख्यते स्म। कुसीदञ्च मूलधने योज्यते। स्पष्टं यद् ईदृशी व्यवस्था आर्थिकजीवनस्य प्रभावेणैव उद्भूता।

कौटल्यकालपर्यन्तं राज्यस्य कल्याणकारिस्वरूपं विकसितम् आसीत्। कौटल्येन आपणमूल्यनिर्धारणं राज्याधिकारेषु एव निवेशितम्। वणिग्भिः विदेशेषु यानि वस्तूनि विक्रीयन्ते, तत्रापि मूल्यनिर्धारणं राज्येनैव व्यवस्थाप्यते स्म। स्थानीयोत्पादनानुसारमेव निर्यातम् आसीत्। देशजनानां उपभोगार्थं यावान् उत्पादनस्य अंशः अपेक्षितः, ततोऽवशिष्टः एव अंशः विदेशेषु निर्याप्यते। यद्यपि वाणिज्ये वैयक्तिकं स्वातन्त्र्यं स्वीकृतम् आसीत्, तथापि जनकल्याणार्थं तत्र राज्यस्य नियन्त्रणम् अपि अपेक्षितम्। वाणिज्यविभागाध्यक्षः उत्पादनम्, मूल्यम्, क्रयविक्रयादिकञ्च निरीक्ष्यते स्म। वाणिज्यवस्तूनां केन्द्रीकरणम्, तेषां मूल्यं निर्धार्य तस्य प्रसारणं च भवति स्म। तस्मिंश्च मूल्ये प्रसिद्धिमायाते आवश्यकतानुसारेण नूतनवस्तूनां घोषणा क्रियते स्म। केन्द्रीयाणि स्थानीयानि च वस्तूनि उचितेन मूल्येन विक्रेतव्यानि। एतदर्थं केन्द्रीयस्य वैयक्तिकस्य च उत्पादनस्य केन्द्रीकरणं कृत्वा आवश्यकतायाः पूर्त्तेश्च जनकल्याणेन सह सन्तुलनपुरःसरं वस्तूनि आपणेषु प्रेष्यन्त। तेषां विक्रयः निर्धारितेन उचितेन च मूल्येन आसीत्, येषां वस्तूनाम् आवश्यकता सुदीर्घकालपर्यन्तं भवेत्, तेषां विक्रये शैघ्र्यं नाक्रियत।[1] विदेशेषु वस्तूनां निर्यापका वणिजः करविशेषेभ्यः मुक्ता अपि आसन्। अर्थात् तेषां कृते करेषु सौविध्यं दीयते स्म।

राज्यं कदापि जनकल्याणप्रतिकूलं नाचरत्। मूल्यनिर्धारणविषये यस्य वस्तुनः आवश्यकता भवेत् तस्य पूर्त्तिः न कदापि अवरुध्यते, नापि तत्र केन्द्रीयतायाः बन्धनं क्रियते। स्थानीयोपभोगावशिष्टानां वस्तूनां निर्यातः निर्बाध आसीत्। तद्विषये आवश्यकतानुसारं सौविध्यमेव आसीत्। विदेशीयवणिग्भ्यः अपि यथा

---

१. कौ० २।१६।

२. कौ० २।१६।

सम्भव सौविध्यं दीयते स्म। वस्तूनाम् आयातनिर्यातविषये जनकल्याणमनुरुद्धयैव सीमा-निर्धारणम् आसीत्। केवलं लाभ एव नाद्रियत।[1] राज्यनिर्धारितेन मूल्येन क्रयविक्रयौ भवतः, न वा इत्यस्य प्रत्यहं निरीक्षणं भवति स्म।[2] मूल्यं जानतापि यदि अधिकेन मूल्येन वस्तूनि विक्रीयेरन्, तदा महान् अर्थदण्डः आसीत्।[3] विदेशीयवस्तूनामपि निश्चितमूल्यादधिकेन न्यूनेन वा मूल्येन विक्रये च एवंविध एव दण्डः आसीत्।

सेचनसाधनानां विकासः नूतनभूमौ कृषेरावश्यकता चेत्यादिकं कौटल्य-समये महदादृतम् आसीत्। अत एव कूपतडागादीनां निर्माणे राज्येन अधिकाद् अधिकं सौविध्यं दीयते स्म। नूतनभूमौ कृषिं कुर्वन्तः कृषकाः पञ्च वर्षाणि यावत्कर-मुक्ताः आसन्। कादृश्यामपि सेचनविषयकयोजनायां वर्षत्रयं यावद् ऋणे कुसीदं न गृह्यत स्म। यानि स्थानानि निर्जनानि आसन्; नासीच्च येषां कश्चिदुपयोगः, तत्र स्थानेषु जनस्थापनस्य नूतनयोजना कौटल्येन आरब्धा। एतदपेक्षया तेषां स्थानानाम् अधिक महत्त्वं आसीत्। यत्र जलविषयकं सौविध्यम् आसीत्।[4] येन उत्पादने सौकर्यम्, संरक्षणम्, आपणस्य सुव्यवस्था स्यात्। एतेन जनसंख्यायाः परिवर्तनं भवितु शक्नोति। नूतनस्थानवासिनां करः न देयः आसीत्। ब्रह्मदेयानां वस्तूनाम् आपणेषु आनयनं निषिद्धम् आसीत्। यतः तानि वस्तूनि उपयोगार्थं आसन् न प्रतियोगिलाभार्थम्। नूतनजनस्थानानां कृते तत्र राजमार्गपशुपालनौषधालयादीनां व्यवस्थां कुर्वद् राज्यं तेषाम् आन्तरिकपरिस्थितिमपि निरीक्ष्यते स्म।[5]

भूमिस्वामित्वविषयेऽपि कौटल्येन क्रान्तिकारिपरिवर्तनं कृतम्। कृषेः स्वामी स एव मन्यते स्म, यः कृषिं कुर्यात्। यदि कश्चिद् भूमौ कृषिम् अकुर्वन् करं दद्याद् अपि तदापि तस्माद् भूमिः आच्छिद्यते स्म, अर्थात् भूस्वामित्वार्थं केवलं प्रतिवर्षं प्रतिमासं वा यथानिर्धारितसमयं करदानमेव न पर्याप्तम् आसीत्, अपि तु कृषिकरणम्। एतेन स्पष्टं यद् राज्यं शुल्कसङ्ग्रहणापेक्षया राष्ट्रियमुत्पादनमेव अधिकं समाद्रियते स्म। कृषकेभ्यः पशुबीजमुद्रादीनि अन्यानि च अपेक्षितानि

१. कौ० २।१६, २।२१; मनु० ३।३३६; याज्ञ० २।२६१; वि. ५।१३० ।
२. याज्ञ० २।२५१; मनु० ८।४०२ ।
३. याज्ञ० २।२४६; कौ० २।६ ।
४. याज्ञ० २।२५० ।
५. कौ० ७।११ ।
६. कौ० २।१ ।

वस्तूनि दीयन्ते स्म राज्येन ।[१] आर्थिकसहायतादानविषये नगरप्रयुक्तः ग्रामप्रयुक्तश्च नासीत् कश्चिद् विशेषः । अवधेयमस्ति यत् कौटल्यः केवलेन करभारेण राज्यकोशं वर्धयितुं नेच्छति अपि तु उत्पादनसाधनानां विस्तारेण, अर्थात् केवलं राज्यकोश-वर्धनार्थं विविधकरयोजनं नाश्रयणीयम्, अपि तु उत्पादनसाधनानां विस्तारः कार्यः इति निर्दिशति कौटल्यः । नूतनभूमौ कृषेः प्रोत्साहनेन भूमिविषयकविधावपि परिवर्तनम् अभूत् । करव्यवस्थायाः उद्देश्यम् आसीद् राज्यकोशस्य वृद्धिः, प्रजायाः सम्वृद्धिश्च । धर्मशास्त्रेषु महाकाव्येषु च उपलभ्यमानायां करनीतौ कौटलीय-करनीतौ च अस्ति परस्परं तात्त्विको भेदः । कौटल्यः करग्रहणे कूटनीतिमपि आश्रयति । मनुस्तु कथयति यत् प्रजाभ्यः तथैव करो ग्राह्यः, यथा पुष्पेभ्यः मधुकरो रसं गृह्णाति । गौः यावदेव पुष्टा भवेत्, तावदेव अधिकं दुग्धं दातुं शक्नोति । अत एव गोः सकासाद् दुग्धग्रहणार्थं तस्याः पोषणम् आवश्यकम् । इत्थमेव प्रजाभ्यः करग्रहणे राज्ञः नीतिः स्यात् । प्रजाः पीडयित्वा ताभ्यः करो गृहीतुं न युज्यते । अनुचितरीत्या करं गृह्णन् राजा सपरिवारः विनश्यति ।[२]

इत्थं वयं पश्यामः यद् आर्थिकजीवने विकासेन सहैव राजनीतिकविधिषु सामाजिकविधिषु च परिवर्तनम् अभूत् । राज्यशक्तेः विकास एव अत्र विषये स्फुटं प्रमाणम् । विशेषविषयस्पष्टीकरणार्थं राज्यस्य आर्थिकजीवनस्य च पारस्परिके सम्बन्धेऽपि ध्यानं देयम् ।

## राज्यम्

राजतन्त्रात्मिका गणतन्त्रात्मिका मन्त्रिमण्डलाद्यात्मिका वा कापि शासन-प्रणाली भवेत्, आर्थिकसंघटनानां राज्यस्य च पारस्परिकः सम्बन्धः विकसितः आसीद् इति तु निर्विवादम् । राज्यं कृषेः प्राथमिकतां स्वीकरोति स्म । केवलं करग्रहणमेव राज्येन नाक्रियत, अपि तु भूमिः, पशुपालनम्, अन्नागारव्यवस्था, जलव्यवस्था, कृषिः इत्यादिष्वपि विषयेषु राज्यं पूर्णतया सावधानम् आसीत् । खनिजपदार्थाः, वाणिज्यम्, उद्योगाश्च परिस्थितिविशेषेषु राज्येन स्वायत्तीक्रियते स्म । कलाशिल्पप्रभृतिषु लघुषु उद्योगेषु राज्यस्य नियन्त्रणम् आसीत् । लेखनमुद्रादिषु वाणिज्यविषयकसन्धिवार्तासु च राज्यस्य आसीद्धस्तक्षेपः । यातायातसाधनानां सुव्यवस्थायाः उत्तरदायि आसीद् राज्यम् । उपभोगार्थं क्रियमाणस्य उत्पादनस्य विनिमयार्थं क्रियमाणस्य उत्पादनस्य समन्वयं राज्यमेव करोति स्म । फलतः आव-श्यकतायां सत्यां राज्यं स्वयमपि कृषिवाणिज्योद्योगादिसम्पादने उद्यतम् आसीत् ।

---

१. कौ० ५।२; ५।३ ।

२. मनु० ७।१२६; महा० १२।८८।४; १२।८७।२०,२१; १२।७१।१५; १२।८१।१२; १२।८७।२२-२३; १२।७१।१६-१७; १२।१२०।३३ ।

आसु सर्वासु परिस्थितिषु प्रत्यक्षरूपेण राज्यं समर्थम् अभूद् आर्थिकजीवनं प्रभावयितुम् । अस्यामेव अवस्थायां महाभारते "राजा कालस्य कारणम्" कथितः । यतः सः राज्यस्य मूलम् आसीत् । मूल्यनिर्धारणे लाभवितरणे वैयक्तिकोत्पादन-क्षेत्रस्य सामाजिककल्याणेन सह समन्वयने वैयक्तिकक्षमतानां कार्यान्वयने उचितावसरप्रदाने च राज्यं सदा उद्यतम् अभूत् । एषा व्यवस्था तदानीन्तनी यदा सामाजिकी शक्तिः राज्ये तिरोहिता राज्यमुखापेक्षणी च जाता । अस्यामपि परिस्थितौ श्रेणीपूगगणसंघप्रभृतयः संस्थाः आर्थिकं जीवनं प्रभावयन्ति स्म । तासां स्वातन्त्र्यं सुरक्षितम् आसीत् । राष्ट्रियसंविधानस्य राज्यसत्तायाश्च प्रतिकूलं किमपि तासां कार्यं दण्डसीमायाम् आयातुं शक्नोति[१]. परन्तु राष्ट्रियसंविधानं राजसत्तां च अनुरुद्ध्य स्थानीयसंघटनानि स्वीयव्यवहारविषयकान् नियमान् व्यवस्थापयितुं समर्थानि आसन् । उद्योगकलाकौशलवाणिज्यादिविषयकाणां विधानानां निर्माणे तेषां संघटनानां पूर्णतया अधिकारः आसीत्, तानि संघटनानि उत्पादनवृद्धाविव सामाजिके हितेऽपि ध्यानं ददति स्म । एतेषां संघटनानां माध्यमेन परस्परं सन्तुलनं भवति स्म ।

राज्यस्य सामान्यजीवनस्य च आर्थिकप्रगतेः परस्परं कः सम्बन्धः आसीद् इति स्फुटं विवेचयितुं न पार्यते । आर्थिकानां धार्मिकाणां राजनीतिकानाञ्च राज्यस्य आदर्शनम् एकं सङ्कीर्णं स्वरूपं लभ्यते । यत्र आर्थिकविषयस्य पृथक्करणं दुष्करं धर्मशास्त्रादिकारैः तेषाम् स्वरूपम् उपस्थापितम् । परन्तु तेषां विकाससम्बन्धिनी रूपरेखा न विवेचिता । यद्यपि तैः उपर्युक्तः विषयः स्फुटं न विवेचितः, तथापि स्फुटस्य व्याख्यात्मकस्य च विवेचनस्य अभावेऽपि एतद्विषयकस्तेषां दृष्टिकोणः परिज्ञातुं शक्यते । तैः उत्पादनविषयके विभाजनविषयके च सिद्धान्ते नियन्त्रणस्य आवश्यकता प्रतिपादिता, उपभोक्तृविषयकाश्च नियमाः व्यवस्थापिताः ।

समान्यतः व्यक्त्या उत्पादनविषयकं तत्साधनादिविषयकञ्च पूर्णं स्वातन्त्र्यं राज्यतः प्राप्तम् आसीत् । यदि व्यक्तिः जातिसमाजराज्यादीनां नियमान् नोल्लङ्घयेत् । एतदुल्लङ्घने तु व्यक्तेः उपर्युक्तविषयकं स्वातन्त्र्यम् आच्छिद्यते स्म । राज्येन उत्पादनक्षेत्रे व्यक्तेः प्रतिबन्धितापि आसीत् कर्तुं शक्या केवलं प्रतिस्पर्धरूपेण । इयमपि राज्यस्य प्रतिद्वन्द्विता व्यवसायम् उन्नेतुम् आसीत्, न तु नाशयितुम् । लवणस्य, मादकद्रव्याणां चापि उत्पादने वितरणे च व्यक्तेः स्थानम् आसीत्

---

१. शुक्र० १।३०५ ।

( कौ० ११।१२ )।[1] यत्र केवलं राज्यस्यैव एकाधिकारः विहितोऽस्ति। यद्यपि ईदृशानां वस्तूनाम् उत्पादनस्य वितरणस्य व्यवस्थां व्यक्तिः राज्यप्रतिनिधित्वेन संरक्षकत्वेन वा करोति स्म। एवं स्थितौ राज्यनिर्धारितानुपातानुसारं लाभस्य वितरणं भवति स्म। आचारिकं सामाजिकं प्राशासनिकञ्च नियन्त्रणं व्यवस्थापयितुं द्यूतालयव्यभिचारकेन्द्रादिषु स्वयमेव नियन्त्रणं करोति स्म राज्यम्।[2] पूर्णतया नियन्त्रणस्य असम्भवे एतेषां द्यूतालयानां प्रयोगोऽपि आसीत्, परन्तु राज्यनिर्देशने कौटल्येन स्वयं लिखितं यद् ईदृशाः अपराधाः राज्येन स्वयम् उन्मूलनीयाः।[3]

कृषिविकासार्थम् ऋणसेचनभूमिसंरक्षणादिविषयकव्यवस्थायां राज्यं व्यक्तेः साहाय्यं करोति स्म, किन्तु व्यक्तेः स्वातन्त्र्ये हस्तक्षेपो भवति स्म। व्यक्तिवादेन 'यद्भाव्यनीत्या' सह राज्यनिर्देशनस्य समन्वयः भारतीयविशेषता आसीत्। उत्पादने उद्योगे अन्येषु च एकाधिकारविषयेषु कार्येषु राज्यस्य सक्रियता दृश्यते। राज्यम् उपभोक्तुः उत्पादयितुश्च सुरक्षायां प्रयतते। मूल्यऋणपरिश्रमादिषु राजकीया नियमाः आसन्। राज्यनियन्त्रिता वैयक्तिकसम्पत्तिः आसीत्। यथा सामाजिक-कल्याणे तस्या उपभोगः भवेत्। अत एव भूमौ राज्यस्य अधिकारः स्वीक्रियते स्म।[4]

---

१. कौटल्य० २।१२।१।

(अ) लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं संगृह्णीयात्। विक्रयाच्च मूल्यं रूपं व्याजीम्। आगन्तुलवणं षड्भागं दद्यात्। दत्तभागविभागस्य विक्रयः पञ्चकं शतं व्याजीं रूपं रूपिकं च। क्रेता शुल्कं राजपण्याच्छेदानुरूपं च वैधरणं दद्यात्। अन्यत्र क्रेता षट्छतमत्ययञ्च। कौ० अर्थशास्त्रम् २।१२।२६-४१।

(ब) कुटुम्बिनः कृत्येषु श्वेतसुरामौषधार्थं वा अरिष्टमन्यद्वा कर्तुं लभेरन्। उत्सव-समाजयात्रासु चतुरहः सौरिको देयः। तेष्वननुज्ञातानां प्रहवणान्तं दैवसिकमत्ययं गृह्णीयात्। अराजपण्याः शतं शुल्कं दद्युः अर्थ० २।२५।३५-३६।

२. तदेव ३।२०।

३. तत्रस्थाः प्रकृत्यौत्पत्तिकौ व्ययौ गूढा विद्युरागन्तूंश्च। क्रेतृणां मत्तासुप्तानामलंकाराच्छा-दनहिरण्यानि च विद्युः। तन्नाशे वणिजस्तच्च तावच्च दण्डं दद्युः। वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः पेशलरूपाभिरागन्तूनां वास्तव्यानां च आर्यरूपाणां मत्तासुप्तानां भावं विद्युः। कौ० २।२५।१३-१६।

४. अर्थ० २।२४।१२— टी० ई० कोलब्रुक, डाइजेस्ट ऑफ हिन्दू लॉ, १ पृ० ४६०, ४६३।

५. इक्ष्वाकूणामियं भूमिः सशैलवनकानना।
मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि॥

( रामा० कि० १८।६ )

व्यवहारविषये भूमौ कृषकस्य स्वामित्वं स्वीकृतम्। स्वत्वविषयकाः अपि अधिकाराः तेन अधिकृता आसन्। धर्मशास्त्रकाराः मीमांसाविदश्च ईदृशान् अधिकारान् मन्यन्ते। सिद्धान्तेऽपि सम्पूर्णायां भूमौ राज्यस्य स्वामित्वं स्वीकुर्वद्भिरपि कुटुम्बानां भूमौ स्वामित्वं स्वीकृतम् आचार्यैः।[1] इत्थं भूमौ उभयस्वामित्वे वैयक्तिकं स्वामित्वं स्थापितम् अभूत्।

आर्थिकव्यवहारेष्वपि राज्यपितृत्वविषयकः सिद्धान्तः स्थापितोऽभूत्।[2] एतत्सिद्धान्तानुसारं राजा पिता इव स्वीकृतः, प्रजा च तस्य सन्ततिः। तदनुसारं प्रजा सम्पत्तिव्यवहारे अयोग्या अक्षमा। अत एव च अधिकारशून्या स्वीक्रियते स्म। राजा स्वयं संरक्षकः स्वामी च आसीत्, किन्तु ईदृशी स्थितिः भारते नासीत्। वर्णाश्रमस्थानीयसङ्घटनसदाचारादिविषयकं स्वातन्त्र्यं व्यक्तेः आसीत्। राजा पितृसमः यत्स्वीकृतः, तस्य नेदं तात्पर्यं मन्तव्यं यद् भारते रोमदेशीयः एव राजपितृत्वविषयकसिद्धान्तः व्यवहारपदवीम् आरूढः आसीदिति।[3] अत्र पितृतुलनाद्वारेण राज्ञः कर्त्तव्यानि निर्दिष्टानि[4], किन्तु एषः एकः नैतिको निष्कर्षः। सिद्धान्ते भूमौ सम्पदि च राज्ञः स्वत्वे स्वीक्रियमाणे व्यक्तेः अधिकाराः पुत्रवद् भवन्ति। यथेच्छं तत्प्रयोगे व्यक्त्या राजविधेः नियन्त्रणं स्वीकार्यं भवति। उत्तरवर्त्तिकाले राज्ञः सम्प्रभुतायाः उदये राजपितृत्वविषयकसिद्धान्तः अधिकं स्फुटति। एतदवश्यं यद् राज्ञा स्वनिर्मितविध्यपेक्षया शाश्वतस्य शास्त्रीयस्य च विधेः अनुसरणं कार्यम्।

कौटलीयार्थशास्त्रकालं यावद् राज्यस्य कल्याणकारिस्वरूपम् अधिकम् अभूत्। व्यक्तेः जीवनस्य सुरक्षा समृद्धेः उत्तरदायित्वञ्च राज्ञि एव निर्भरे अभूताम्। न्यायादिभिः सह आन्तरिक्याः बाह्याश्च सुरक्षायाः सर्वे पक्षाः व्याख्याताः सन्ति।[5]

---

१. राजा भूमेः पतिर्दृष्टः शास्त्रज्ञैरुदकस्य च। ताभ्यामन्यत्र यद् द्रव्यं तत्र स्वाम्यं कुटुम्बिनाम्। भट्टस्वामेर्व्याख्या, पृ० १३८।

२. निवृत्तपरिहारान् पितेव अनुगृह्णीयात्—कौ० २।१।२०; मूढवाताहतां पितेव अनुगृह्णीयात्—कौ० २।२८।१०; सर्वत्र च उपहतान् पितेव अनुगृह्णीयात्—कौ० ४।३।५४; दत्वा च अभयं पितेव अनुगृह्णीयात्-कौ० ७।१६।३१।

३. दृष्टेनादृष्टस्य साधनमुपमानं निवृत्तपरिहारान् पितेव अनुगृह्णीयात्—कौ० १५।१।३३।

४. के० वी० रङ्गस्वामी आयङ्गर, सम आँस्पेक्ट्स ऑफ एंशेण्ट इंडियन इकनॉमिक थॉट, पृ० ७२।

५. कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्।
खन्याकरो वनादानं शून्यानां च निवेशनम्॥
अष्टवर्गमिमं साधु स्वस्थवृत्तं विवर्धयेत्।
जीवनार्थमिहाजिव्यैः कारयेत् करणान्वितैः॥
(कामन्दक० ५।७७-७८)

शिक्षायाः मर्यादायाः निर्धनानां च व्यवस्थया सहैव सेचनमार्गनिर्माणादीनां समाजोपयुक्तानां कार्याणां व्यवस्था राज्यस्य क्षेत्रे, अर्थाद् राज्यकर्त्तव्यतया स्वीकृताः।[१] केवलं विधिपालनमेव नासीत्। राज्यं हि संरक्षणादिभिः ईदृशं वातावरणं प्रस्तौति स्म, येन आर्थिकस्य व्यवहारस्य नैतिकतापूर्णो विकासो भवेत्। अत एव आर्थिकराजनीतिकाचाराणां व्यवस्थायाश्च पारस्परिकः सम्बन्धः सुव्यवस्थितः आसीत्। उभे च परस्परं पूरके आस्ताम्। मुद्राणां सम्पत्तेश्च संवृद्ध्यर्थं कश्चिदपि अर्थशास्त्रीयनैतिकानां नियमानाम् उल्लङ्घनं नानुमन्यते।

सङ्घटनात्मकसमाजे सामाजिकं नियन्त्रणं विद्यते। राज्यं च आर्थिकसङ्घटनानां संरक्षकं भवति। राज्यं स्वयं विभिन्नानां सङ्घटनानां केन्द्रिता शक्तिः भवति। येन मानवीयकल्याणस्य वास्तविकसम्पत्तेश्च विकासः सम्भवति। उत्पादनसाधनेषु यावदेव महत्त्वं भूमेः श्रमस्य च, न ततो मनागपि न्यूनं सम्पदः। सम्पत्संवर्धनार्थं जीवनस्य सम्पदश्च पूर्णतया सुरक्षा अपेक्षिता। पारिश्रमिके कुसीदे अन्येषु च आयेषु श्रमिकाणाम् उद्योगपतीनां च कृते औद्योगिकं सङ्घटनम्, शैक्षणिकीयोग्यता च अपेक्षेते। सामाजिकसहिष्णुतायाम्, सामुदायिकसङ्घटने, औद्योगिकस्थापनायाम्, उत्पादने, आपणविस्तारे च राज्यस्य हस्तक्षेपः आवश्यकः। तथैव विनिमयोपभोगादीनाम् उचिता व्याख्या सम्भवति। साम्पत्तिकसंवृद्ध्यर्थं वैयक्तिकसम्पदि राज्यं नियन्त्रणं कर्तुं शक्नोति। यतः व्यक्तिकसम्पत् समाजेनैव दत्ता आसीत्। राज्यञ्च व्यक्तेः समाजस्य सुरक्षायाः संस्था, अत एव राज्यं कदापि ईदृशान् व्यवहारान् सोढुं न शक्नोति, ये उद्देश्यसिद्धौ बाधकाः। अत एव आर्थिकदुर्व्यवस्थाः अपाकर्तुं सर्वविधं कोषसङ्ग्रहं करोति (शुक्र० ४।१४१-१४७)।

## उद्योगाः

प्राचीनभारते व्यक्तिनाम् उद्योगाः आसन्। व्यक्तिगतसम्पदः मूलाधिकारः मुख्यः आसीत्। परन्तु अस्य व्यवस्था इत्थमासीद् यद् राजनीतिकव्यक्तिवाद इव आर्थिकव्यक्तिवादोऽपि स्थापितो न भवेदिति। एवंविधायाः व्यवस्थायाः कृते द्वौ प्रकारौ सम्भवतः—राज्यं समाजनियमनञ्चेति। राज्यमत्र द्विधा व्यवस्थां कर्तुं शक्यते—(१) स्वीये आर्थिकसङ्घटने वैयक्तिकेषु उद्योगेषु वा सकारात्मकविधिनिय-

---

१. स किं राजा यो न रक्षति प्रजा? नीतिवाक्यामृतम्, पृ० १७; प्रजापलनं हि राज्ञो यज्ञः, न पुनर्भूतानामालम्भः— नीति०, पृ० १०५;

पालनात् सर्वभूतानां स्वराष्ट्रपरिपालनात्।
दीक्षा बहुविधा राजन् सत्याश्रमपदं भवेत्॥

(महा० १२।६५।१३)

न्त्रणस्थापनेन च। इंग्लैण्डदेशे एलिज़ाबेथराज्ञ्या तत्परवर्त्तिभिश्च कैश्चिच्छद् शासकैः केषुचिद् व्यवसायेषु एकाधिकारः स्थापितः आसीत्। अष्टमहेनरी इत्यनेन अश्व-विषयकवाणिज्ये नियन्त्रणं स्थापितम्, द्वितीयेन तृतीयेन च एडवर्डमहोदयेन फ्रान्सदैशिकेन चतुर्थेन फिलिपेनमहोदयेन 'इटली'दैशिकेन फ्रेडारिकमहोदयेन वस्तूनां निर्याते उद्योगविषयेषु च विशेषाः नियमाः स्थापिताः। अद्यत्वे तु राष्ट्रान्त-रीयवाणिज्ये प्रायः सर्वैरेव राज्यैः नियन्त्रणं स्थापितम् अस्ति। एतेषां नियमानां देशीयोत्पादनेन सहापि सम्बन्धोऽस्ति।

भारतेऽपि एते नियमाः यथोचितं प्रयुज्यन्ते। राज्यं च केषुचिद् वाणिज्यविभा-गेषु एकाधिकारं स्थापयति। अत्रेदम् अवधेयं यद् 'यद्भाव्यनीतेः' प्रयोगो न भवति स्म। सहैव उद्योगपतीनां नीतिम् अनुरुद्ध्यापि वाणिज्यं भवितुं नाशकत्। बहुविधाः आर्थिक्यः सेवाः आसन्, यत्र राज्यस्य एकाधिकारः आसीत्; तद्यथा मुद्राणां निर्माणम् उन्मानपरिमाणादिसाधनानाम्। मेगस्थनीज़महोदयेन मौर्यशासनवर्णना-वसरे हस्तिविषयकवाणिज्ये हस्तीनां स्वायत्तीकरणे च राज्यस्य एकाधिकारः उल्लिखितः। कौटल्येन लवणोद्योगे राज्यस्य अधिकारः स्वीकृतः। इन्धनोद्योग-विषये खनिजोद्योगविषये च कौटल्येन नीतिद्वयमपि अनुसृतम्- राज्याधिकारः, व्यक्तिगतानाम् उद्योगपतीनाम् अनुबन्धकरणं चेति।[1] एवंविधाः केचन अन्येऽपि नियमाः आसन्, येषु राज्यक्षेत्रे वैयक्तिकी सम्पल्लेखपत्रम् आधृत्यैव प्रवेशं लब्धुम् अशकत्।

राज्यं केषुचिद् उद्योगेषु यथा खनिजोद्योगेषु वैयक्तिकसम्पदा सह स्वकीया-मपि सम्पदां विनियुङ्क्ते स्म। द्वयोः अस्तित्वं युगपदेव आरब्धम्। कृषेः कतिपयेषु अंशेषु वस्त्रवनपशुपालनादिविषयकेषु उद्योगेषु च राजकीयायाः सम्पदः विनियोगः भवति स्म इत्यपि उल्लेखो लभ्यते। राज्यसम्पद्विनियोगकारणानि विवेचयता डॉ० नरेन्द्रनाथेन लिखितं[2] यद् आर्थिकलाभः वैयक्तिकोत्पादनक्षेत्रेण सह स्पर्द्धा वा राज्यस्य उद्देश्यं नासीत्। एतन्मतानुसारं श्रमिकेषु शिल्पेषु वा उचितव्यवहारस्य स्थापन-मेव राज्यस्य उद्देश्यमासीत्। राज्यस्य हस्तक्षेपेण वस्तूनां प्रयोगे सन्तुलनं तेषां मूल्यं निर्धारितञ्च आसीत्। एतदवश्यं यद् उद्योगानां लघूनि क्षेत्राणि प्रतियोगितायै अव-शिष्टानि अभूवन्। तदानीं यातायातसाधनानां सम्पद्विकासः नासीत्। फलतः समयस्य दूरतायाश्च हेतोः एकाधिकारे प्रतियोगितायाञ्च नियन्त्रणं स्थापयितुं राज्यं स्वसम्पत्तिं विनियुङ्क्ते स्म। विशेषतः राज्यं कृषिविषयकेषु तेषु भागेषु सम्पदं

1. Studies in Ancient Hindu Polity, vol. I, P. 608.
2. Studies in Ancient Indian History and Culture, P. 129.

विन्ययुङ्क्त, यथा यत्र कृषिर्न जाता, उद्योगपतयश्च न स्वीयां सम्पदं विनियोक्तुं वाञ्छति। यतस्तत्र सम्पद्विनियोगार्थं सेतुकुल्यादीनां व्यवस्थां राज्यं करोति स्म। एतेन सहैव इदमवधेयमस्ति यदेतद्विषयकं व्ययं न जनेभ्यः अग्रहीद् राज्यम्। केचन ईदृशाः उद्योगाः आसन् येषां राष्ट्ररक्षया सह विशेषः सम्बन्धः आसीत्। व्यक्तिगतसम्पदः प्रोत्साहनमपि राज्येन क्रियते स्म। क्वचित् क्वचित्तु करोऽपि राज्येन त्यक्तः आसीत्। अर्थाद् उद्योगविषयेषु उद्योगपतयः करमुक्ता अपि आसन् (महा० सभा० ७।११८)। विदेशीयेभ्यः उद्योगपतिभ्यः देशीयानाम् उद्योगपतीनां सुरक्षायामपि प्रयत्न. क्रियते स्म।

राज्यस्य इदं कर्त्तव्यम् आसीद् यद् उद्योगानाम् उन्नयनार्थं सौविध्यपूर्णवातावरणम् उपस्थापयेत्। नियमनिर्माणयातायातसाधनानां विस्तारः, आपणानां स्थापना, उद्योगपतिषु विश्वासोत्पादनं चेत्यादिकं राज्यस्य कर्त्तव्यम् आसीत् (अर्थ० २।१)। कौटल्यस्य ईदृशी व्यवस्था आसीत्, यया आयातनिर्यातयोः उभयोरपि लाभः सम्भाव्यते। एतदर्थं कौटल्येन उद्योगपतयः प्रोत्साहिता अपि (अर्थ० २।१८)। उद्योगपतिषु राज्येन कीदृशम् उचितं व्यवहरणीयम् इत्येतद्विषये महाभारतीयो नारदयुधिष्ठिरसंवादः महत्त्वपूर्णः अस्ति। तत्र राजकर्मचारिविषयकव्यवहारस्य नियन्त्रणे नारदेन महत् प्रयतितम्। मुक्तव्यापारे (ओपनडोर) इत्येतन्नीतिद्वयमपि बहिष्कृतम् आसीत्। उद्योगपतीनां प्रोत्साहनार्थं राज्यम् ऋणमपि ददाति स्म।

"आर्थिकदुर्व्यवहारान्" निराकर्तुं राज्यं पूर्णतया सक्रियम् आसीत्। एतद्विषये (दुर्व्यवहारविषये) दण्डव्यवस्था आसीत्। कृषियोग्यभूमौ अवश्यं कृषिः क्रियते स्म। कापि कृषियोग्या भूमिः कृषिहीना नासीत्। रजकतन्तुवायादीनां कृते प्रतिबन्धाः आसन् यत् ते यथासमयं स्वकार्याणि कुर्युः (अर्थ० अधि० ४, पृ० २००)। मूल्यनियन्त्रणे राज्यं सावहितम् आसीत्। तस्य प्रयत्नः आसीद् यन्मूल्यनिर्धारणं जनकल्याणभावनामनुरुध्य भवेदिति, न तु केवलं लाभदृष्ट्या। कौटल्येन एतद्विषये एकः स्वतन्त्र एव अधिकारी व्यवस्थापितः। तस्य (अधिकारिणः) कर्त्तव्यम् आसीत् यत् स लाभस्य मूल्यस्य च प्रतिशतं निर्धारयेत् (अर्थ० ४।२)। दण्डव्यवस्थायाम् इदमेव अवहितमस्ति यद् उद्योगव्याप्तानां (स्थितानां) जनानां सुरक्षा भवेत्, किन्तु लाभमूलिका स्पर्धा मा भूत् (अर्थ० ४।२)। एवंकरणे आवश्यकतानुसारं राज्यं स्वकीयमेकाधिकारमपि स्थापयितुं शक्तम् आसीत्। यदि पूर्त्तिः असन्तुलिता भवेत्, तदा राज्यस्य कर्त्तव्यम् आसीद् यत् तदस्य विक्रयस्य केन्द्रीकरणं कृत्वा सन्तुलनं स्थापयेत्। एवंकरणे तत्प्रतियोगिभूतानां वस्तूनां विक्रयस्य नियन्त्रणेऽपि आसीत् समर्थम्। अस्य प्रयोगः प्राचीनभारते लघुहाटकेष्वपि आसीत्। पण्यपूर्णानां पोतानां (महानौकानाम्) निमज्जने

आर्थिकसंकटं परिहातुमपि मूल्यनिर्धारणं क्रियते स्म। सहैव झटिति पूर्तेरपि प्रबन्धः क्रियते स्म। ईदृशेषु परिस्थितिविशेषेषु सामान्यासु वा परिस्थितिषु जनानां लाभसम्पादनमेव राज्यस्य एकाधिकारस्य तात्पर्यमासीत्।

आर्थिकक्षेत्रस्य नियन्त्रणे सकारात्मकः नकारात्मकश्चेति उभावपि पक्षौ यथावसरं राज्येन प्रयुज्यते स्म। केषाञ्चिद् वस्तूनां प्रयोगे नैतिकाः प्रतिबन्धाः आसन्। यथा ब्राह्मणस्य कृते सुरापानम् घृतमध्वादीनां वाणिज्यम्। राज्यम् एतान्नियमान् काठिन्येन प्रयुङ्क्ते स्म। अतोऽन्यन्नकारात्मकपक्षे उद्योगेषु नियन्त्रणं स्थापयितुम् ऋणबन्धकरणेन सन्धिः, लाभभागिता इत्यादिद्वारापि राज्यं सम्बन्धं स्थापयति स्म। उत्तराधिकारविषयकेषु नियमेषु भारतीयविधानस्य प्रयोगेण राज्यम् आर्थिकसम्बन्धेषु नियन्त्रणं स्थापयति।

राज्यस्य उद्योगैः सह उचितः सम्बन्धः आसीत्। अत एव वैयक्तिकः सम्पदः प्रोत्साहनेऽपि धनवादीयायाः अर्थव्यवस्थायाः विकासः न शक्यः। भारतदेशे निःशङ्कं सम्पद् विनियुज्यते स्म। एवं विदेशीयैः सह वाणिज्यं भवति स्म। इतिहासकारेण प्लीनीमहोदयेन लिखितं यद् रोमदेशः भारतेन सह वाणिज्ये महतीं सम्पदं प्रावाहयत्। देशस्य अशेषं स्वर्णं भारते प्रहितं रोमदेशेन। डॉक्टर- शोलमहोदयेन लिखितं यद् पूर्वमध्यबिन्दुभूतं भारतवर्षं वर्षाणां सहस्रद्वयं यावन्न केवलं नैतिकं सांस्कृतिकमेव वा, अपि तु आर्थिकमपि प्रभुत्वं विश्वे स्थापयद् आसीत्। डॉ० मुकर्जीमहोदयेनापि (दि हिस्ट्री ऑफ शिपिंग) एवंविध एव विचार उपस्थापितः। देशीयवाणिज्यादेशप्रेम्णा, कार्यतत्परतया, त्यागभावनया, एवं शिल्पिनां कार्यं कौशल्येन च युगानि यावत् समुद्रे स्वीयं तस्य भौगोलिकी स्थितिः ईदृशी आसीद् यद् आस्ट्रेलियादेशेन आफ्रिकादेशे समस्ते एशियाखण्डेन च सह वाणिज्यविषयकं कौशलं तेन प्रकटितम्। तात्पर्यमिदं यत् प्राचीनभारतीयेन वाणिज्येन महत्त्वपूर्णं स्थानं लब्धम् आसीत्। अस्मिन्विषये राज्यस्य पूर्णतया उत्तरदायित्वम् आसीत्। राज्यनियन्त्रणस्य नेदं तात्पर्यमासीद् यद् राज्यम् उद्योगान् स्वायत्तीकर्तुम् इच्छति स्म। ध्येयम् इदम् आसीद् यद् उद्योगाः जनकल्याणोपयुक्ताः कथंकार्याः? एतदर्थं राज्यम् उपर्युक्तैः प्रकारैः उद्योगेषु नियन्त्रणं स्थापयद् आसीत्। उद्योगान् प्रोत्साहयच्चासीत्। एतद्विषयकसर्वेष्वपि सम्बन्धेषु सदा जागरूकता दृश्यते च।

## सहकारिता

स्वभावत एव मनुष्यः सामाजिकः वर्तते, परन्तु अस्य नेदं तात्पर्यं यत् समाजेन सह सम्बन्धस्थापने स्वीयं व्यक्तित्वं समापयति। विभिन्नताविषयिका विशिष्टताविषयिका च भावना मनुष्ये स्वभावत एव भवति। स अन्येभ्यः

सामाजिकेभ्यः सदस्येभ्यः विभिन्नतां विशिष्टताञ्च आसादयितुं वाञ्छति। अस्य एष परिणामः यत् स विविधैः साधनैः समाजे स्वस्य विभिन्नत्वं विशिष्टत्वं च स्थापयितुं चेष्टते। अस्यामेव अवस्थायां तत्र नियन्त्रणम् अपेक्षितम्। यदि तदानीं तत्र नियन्त्रणं न क्रियते, तदा तस्य महत्त्वाकाङ्क्षायाः समाजहितम् अनादृत्य सामाजिककल्याणम् उपेक्षेरन्। फलतः समाजे व्यक्तिवादिमनोवृत्तयः विकसिताः भवेयुः। अत एव इदम् आवश्यकं यद् व्यक्तिसमाजयोः मध्ये सहकारिसम्बधः स्थापनीयः। येन एकस्याः व्यक्तेः उन्नतेः तात्पर्यं सम्पूर्णस्य समाजस्य उन्नतिः भवेत्। प्राचीनभारतीयार्थशास्त्रिभिः अस्मिन्विषये अवहितम्, सहकारितायाः सफलः प्रयोगश्च कृतः।

सहकारितायाः अध्ययनार्थं सामाजिकानि दार्शनिकानि आर्थिकानि च तथ्यानि अध्येयानि। एतेषां घटकानाम् आधारः सहकारिता भवति; तदैव सहकारितायाः प्रयोगः सम्भवेत्। अस्याः एकदेशीयः प्रयोगो न सम्भवति। अत्र वयम् आर्थिकसंघटने "स नैव व्यभवत्स विशमसृत यान्येतानि देवजातानि गणशः आख्यायन्ते" ( बृ० उ० १।४।१२ ) अवधित्सामः। एष विषयः बृहदारण्यकोपनिषत्तः एव आरभ्यते, परन्तु तथ्यस्य आलोचने क्रियमाणे सति ज्ञायते यद् विड्द्वारा आर्थिकसंघटनानां प्रयोगः अरब्धः। एतद्विषयिणी वस्तुस्थितिः शाङ्करभाष्येण अधिकं प्रकाशमायाता। ब्राह्मणक्षत्रिययोः निर्माणेन ब्रह्मा न अतुष्यत्, यतः ताभ्याम् अर्थोपार्जनं कर्तुं शक्यं नासीत्। वैश्यनिर्माणेन एषा समस्या समाहिता अभूत्। वैश्योऽपि तदैव साफल्यं लब्धुं शक्नोति स्म, यदा स गणम् आश्रयेत्। यतः एकाकिना अर्थस्योपार्जने काठिन्यं वैफल्यं च भवति। समूहेनैव अर्थोपार्जनं कर्तुं शक्यते।[1] विट्शब्दवत् पणिशब्दोऽपि वर्तते। यद्यपि पुराकाले विनिमयरूपेऽर्थे पणिशब्दो व्यवह्रियते स्म, परन्तु सहकारितया सह विनिमयस्य सम्बन्धः, अत उत्तरकाले पणिशब्दस्यापि सहकारिभावनया सह सम्बन्धोऽभूत्।

जातककथासु ईदृश्यः बह्व्यः कथाः वर्णिताः, याभिः इदं स्पष्टं प्रतीयते यद् वाणिज्ये समभागितायाः प्रयोग आसीत्।[2] कूटवणिग्जातके वाराणसेयानां वणिक्संघानाम् उल्लेखो लभ्यते।[3] उदीच्याम् अश्वविक्रयिवणिजां संघाः सन्ति उल्लिखिताः।[4]

१. कः पुनरसौ विट् ? यान्येतानि देवजतानि। स्वार्थनिष्ठाय एते देवजातिभेदाः इत्यर्थः। गणशः गणाः आख्यायन्ते कथ्यन्ते गणप्राया हि विशः प्रायेण सहता हि विशः वित्तोपार्जनसमर्था नैकेशः।

२. चुल्लगजातकः, ख० १, पृ० १४४।

३. कूटवणिक०, ख० १, पृ० २०।

४. सुहुजातकः, खं० २, पृ० ३०, १८१।

कौटल्येनापि अत्र विषयेऽवहितम्। नारदेन ( ३।१-९ ), बृहस्पतिना ( १४।१-३२ ), याज्ञवल्क्येन ( २।६२ ) च सम्भूय समुत्थानविषयिणी व्यवस्था स्पष्टीकृता। नारद-मतस्य एष सारांशः–"वणिजः सम्भूय वाणिज्यमाचरेयुः"। एतदेव सम्भूय समुत्थानं कथ्यते। अत्र वणिजः संयुक्तरूपेण सम्पत्तिं विनियुञ्जते। सम्पद्‌विनियोगे वैषम्यमपि भवितुं शक्नोति। विनियुक्तसम्पदनुपातानुसारमेव लाभभागिता हानिभागिता च। अत एव सर्वैः अपि स्वीयः भागः न्यायमार्गेण ग्राह्यः। न तत्र छलं कार्यम्। इत्थं च वाणिज्यार्थं संघः स्मृतिकारमतानुसारं सम्भूय समुत्थानम् अस्ति। हानौ लाभे व्यये च अनुपात एव आश्रयणीयः। बृहस्पतिरपि एतदेव मतं समर्थयते। कौटल्यः याज्ञवल्क्यश्च अत्र केवलम् एतावदेव संशोधनं कुरुतः यद् अनुबन्धकरणानन्तरं सम्पदनुपातापेक्षया अनुबन्धीयप्रश्नानाम् अधिकं महत्त्वम् आसीत्। अनुबन्धसिद्धान्तेन ईदृशा अपि सदस्याः लाभान्विता भवितुं शक्नुवन्ति येषां सविधे सम्पन्नास्ति, परन्तु प्रतिभा क्षमता च स्तः।

वाणिज्यसंघानां सफलता न तथा सम्पदि निर्भरा, यथा दक्षतायां प्रतिभायाञ्च निर्भरा। आलस्यवताम् ईर्ष्यावतां निष्क्रियाणाञ्च सदस्यानां सत्त्वे संघस्य विनाशः ध्रुवः।[1] अत एव बुद्धिमन्तः वस्तूनि मुद्राश्च परिचिन्वन्तः निष्कपटाश्च ईदृशा एव संघस्य सदस्याः कार्याः। सहकारितायाः येऽपि नियमा भवेयुः, ते सर्वैरपि सदस्यैः स्पष्टं स्वीकार्याः। केनापि सदस्येन सह गुप्तोऽनुबन्धः न कार्यः। यदि कस्यचित् सदस्यविशेषस्य प्रमादेन कूटनीत्या वा संघस्य हानिः भवेत्, तदा स सदस्य एव तस्याः हानेः उत्तरदायी। यदि कस्यचित् सदस्यस्य विषये सन्देहः भवेत्, तदा स सन्देहः सप्रमाणं तेन सदस्येन निराकरणीयो भवति। तत्र च शपथस्यैव विशेषतो महत्त्वम् अस्ति। अर्थात् शपथमाधृत्यैव तेन सदस्येन स्वविषयकः आरोपः निराकरणीयः।

एवं च वयं पश्यामो यत् सहकारितासंघटने वैयक्तिक्याः योग्यतायाः महत्त्व-पूर्णं स्थानम् अस्ति। व्यक्तिगतम् उत्तरदायित्वमपि स्वीकृतम्। आवश्यकतानुसारं सर्वे सदस्याः साक्षिणः न्यायाधीशाश्च भवितुं शक्नुवन्ति। अत एव इदं वक्तुं शक्यते यत् संघैः पञ्चनिर्णयेन स्वकीयो नैयायिकोऽधिकारः स्थापित आसीत्। तदीयनिर्णये राज्यस्य अन्येषां संघानां वा हस्तक्षेपं कर्तुं नासीद् अधिकारः, किन्तु संघीयनिर्णयस्य कार्यान्वयने राज्यमासीद् उत्तरदायि। यदि संघीयकार्ये काचिद् बाधा उपतिष्ठेत, तदा राज्यस्य कर्त्तव्यं यद् राज्यं तां बाधां निराकुर्यात्। सदस्यानां

१. बृ० १४ अध्यायः।

दण्डने संघः स्वीयान् नियमान् प्रयोक्तुं शक्त आसीत्, परन्तु शारीरिकदण्डदाने एष एव संघः विशेषतः अर्थदण्डमेव व्यवस्थापयति स्म; अर्थात् अर्थदण्डे संघस्य आसीदधिकारः। सोऽपि निर्धारितसंघीयनियमाननुरुध्यैव। शारीरिकदण्डने तु नैवासीत् संघस्य अधिकारः, अपि तु राज्यमेव तत्र व्यवस्थापकम्। यः सदस्यः दण्डनीयः, तस्य व्यक्तित्वसमापनमेव मुख्यो दण्डः आसीत्। येन स सदस्यः संघान्तरेष्वपि सदस्यतां लब्धुम् अनर्हः। यदि कश्चित् सदस्यः स्वसम्पदः राज्यकोषाद् वा संघीयसम्पदं परित्रायेत, तदा यावत्याः सम्पदः परित्राणं तेन कृतं तस्याः दशमोंऽशः तस्मै पुरस्कारतया दीयते स्म।[1] यदि कश्चित् सदस्यः वाणिज्य-कार्यं कुर्वन्नेव म्रियते, तदा तदीयो भागः तस्य उत्तराधिकारिणे दीयते स्म।[2] परन्तु भागनिर्धारणे राज्यस्य अधिकारः आसीत्। राज्यमेव तस्य समुचितां व्यवस्थाम् करोति स्म। आवश्यकतानुसारं सदस्यः स्वीयं सञ्चितं भागं ग्रहीतुम् अशकत्।

लघूद्योगेषु कृषिक्षेत्रेऽपि च सहकारिता-सिद्धान्तः आश्रितः। एतद्विषये किमपि राजकीयम् अनिवार्यम् अवबन्धनं नासीत्। अत्रापि सम्पदः वैयक्तिक्याः क्षमताया अपि आसीत् महत्त्वम्। अस्य एष परिणामोऽभूत् यद् क्षमतायाः वैषम्यभागस्यापि वैषम्यं भवति स्म। अर्थाद् वैयक्तिकक्षमतानुसारं भागनिर्धारणम् आसीत्। स्वर्णरजतादिधातुविषयककलासु वैयक्तिकक्षमतया एव अधिको लाभः भवति। अत एव अत्र कौशल्यमपि अधिकम् आदृतम्।[3] सङ्घटनकर्तृभिः सञ्चालकैश्च श्रमिकेभ्यः द्विगुणाधिकः लाभः बौद्धिकक्षमताम् आश्रित्यैव लभ्यते स्म। सङ्गीतज्ञेभ्यः एवंविधेभ्यः अन्येभ्यश्च कलाकारेभ्यः तेषां कौशल्यम् आश्रित्यैव अधिको भागः दीयते स्म। किं बहुना, चौर्येऽपि साहसं कौशलञ्च आश्रित्य भाग-व्यवस्था क्रियते स्म चौरैः। चौरनायकेन स्वीयक्षमतामाश्रित्यैव अन्येभ्यः अधिकः भागः लभ्यते स्म। व्ययेऽपि आयानुसारमेव आसीत् सम्बन्धः। निगृहीतेषु सद-स्येषु नायकेन अधिकः व्ययः करणीय आसीत्। यतः सः अधिकस्य आयस्य अधि-कारी।[4] यज्ञेषु श्रमेषु संस्कारेष्वपि च दक्षतानुसारम् योग्यतानुसारञ्च दक्षिणा-याम् ऋत्विगाचार्यब्रह्मादीनां पदेषु च अन्तरम् अभवत्।

१०० वणिजाम्, ५०० वणिजाम्, ७०० वणिजाम् च संघा जातकेषु उल्लि-खिताः। एवंविधे महति संघटने सहकारितायाः आसीत् कार्यान्वनम्। बौद्धसाहित्ये वणिग्वर्गस्य प्रतिनिधिः 'सेत्थी' इति शब्देन व्यवहृतः। कस्यापि विषयस्य निर्णये

---

१. बृ० १४।१०; नारद० ३।६; याज्ञ० २।२६३।

२. याज्ञ० २।२६७; नारद० ३।७।

३. बृ० १४।२८।

४. वीरमित्रोदयः, पृ० ३२७।

संघप्रतिनिधेः विचाराः संघेन अवश्यम् अपेक्ष्यन्ते स्म। चिरकालात् प्रचलितेन अनेन विधिना वणिजः पूर्णतया लाभान्विता भवन्ति स्म।[१] सहकारितायाः देश-व्यापिप्रयोगस्य निष्कर्षेण इदं ज्ञायते यद् भारतीयपरम्परायां सहकारितायाः यादृशः प्रयोगः अभूत्, सः अतिव्यक्तिवादस्य अतिसमाजवादस्य चेति उभयोः साम्यबिन्दुरस्ति। अस्य निर्देशनं राज्यद्वारा भवितुं शक्नोति, न तु नियन्त्रणम्। वैयक्तिकस्वत्वेन वैयक्तिकसङ्कल्पेन च पूर्णतया विकसितुम् अवसरः लभ्यते स्म। सम्पत्तिः वैयक्तिक स्वामित्वञ्च ध्रुवे आसक्तम्। अनिवार्यतया सहकारितायाः प्रयोगः कर्त्तव्यः, अस्मिन्विषये राज्यस्य सामर्थ्यं न विद्यते, यतो हि व्यक्तिद्वयमध्ये भावात्मकतां नैतिकतां च आश्रित्यैव सहकारिता सम्भाव्यते; शासनद्वारा च हृदय-परिवर्तनं कथं शक्यम्? समाजद्वारैव सहकारिता समाश्रयणीया। राज्येन च तस्याः संरक्षणं प्रोत्साहनञ्च कार्यम्। अद्यत्वेऽपि अनया प्रणाल्या प्राचीनपरम्परायाः नवीनीकरणं कर्तुं शक्यते। अनेन प्रकारेण प्रत्येकं ग्रामस्य पूर्णतया गणस्वरूपता, भारतस्य च अनेकगणानां केन्द्रस्वरूपता; इत्थं सर्वेषाम् अर्थशास्त्राङ्गभूतानां विषयाणां सम्यगध्ययनेन व्यक्तेः समाजस्य राज्यस्य च कीदृशाः अधिकाराः इत्येव विषयः प्रकाशम् आनेतुं शक्यते। अर्थशास्त्रिणः काश्चन समस्याः शाश्वताः सन्ति। आर्थिकसन्तुलनावस्थायां सर्वैरपि समाजैः ताः अनुभूताः समाहिताश्च। भारतीयैः अर्थशास्त्रिभिः वैयक्तिकी सम्पत् स्वीकृता, तस्याः विकासे प्रयतितञ्च। किन्तु अतिरिक्तलाभस्य सामाजिकीकरणं विधाय आर्थिकं सन्तुलनं व्यवस्थापितम्। यापि व्यवस्था आसीत् सा पारिवारिकसदस्यरूपेण। अतः आर्थिकक्षेत्रे श्रेणिस्त-रादिविषयिका उच्चनिम्नविषयिका च भावना नासीत्। उत्तरवर्त्तिकाले विभिन्नानां सामाजानां पारस्परिकेण सम्बन्धेन श्रेण्यादिविषयकाः भेदाः अवश्यं पदम् अल-भत्। परन्तु शोषकस्य भावना कदापि नासीत्। अर्थशास्त्रेषु च स्त्रीशूद्रदास-प्रभृतयः अन्ये च एवंविधाः वर्गाः आयाताः। येषां सम्पद्विषयकः अधिकारः नासीत्। किन्तु एष सामाजिकः प्रश्नः, अर्थशास्त्रेण तदैव आर्थिक-सन्तुलने प्रयतितम्।

—:०:—

१. कौ०, पृ० ३५९ ( ग्रामशास्त्र० )

# १२

# आर्थिक-सङ्घटनम्

श्रेणीपूगगणव्रातसंघानां समृद्धिसुव्यवस्थितविकसितवर्गतया स्मृतिषु वर्णनम् उपलभ्यते–

गणाः पाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः ॥

समूहरूपे अर्थे एव श्रेणिशब्दः ऋग्वेदे प्रयुक्तः। "श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः" ( ऋ० १।१६३।१० )। व्रातगणशब्दावपि प्रयुक्तौ स्तः।[1] ब्रह्मचारिसंघस्यापि ( यदि ब्रह्मचारिशब्दस्य तात्पर्यं छात्ररूपे अर्थे, तदा छात्रसंघस्यापि ) उल्लेखो दृश्यते–"तस्मादुह व ब्रह्मचारिसंघं चरन्तं न प्रत्याचक्षीतापि"। "तेष्वेवंविध एव व्रतः स्यादिति हि ब्राह्मणम्" ( आ० ध० १।१।३।२६ )। "व्रातेन जीवति" (५।२।२१)। "बहुपूगगणसंघस्य तिथुक्" (५।२।५२) इति पाणिनिसूत्रस्थेन महाभाष्येण च एतेषां वर्गाणां समाजशास्त्रीयता प्रकाशम् आयाति–"नानाजातीया अनियतवृत्तयः उत्सेधजीविनः संघाः व्राताः तेषां कर्म व्रातं तेन व्रातकर्मणा जीवतीति व्रातिनः।' काशिकाकारस्यापि इदमेव मतम्–"नानाजातीया" इत्यादि उपर्युक्तमेव लिलेख काशिकाकारः। कौटल्येनापि वृत्तिम् आधृत्य इमे वर्गाः वर्णिताः–"आयुधीयप्रायः श्रेणीप्रायो वा मे जनपदः" (५।१)। "काम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः" ( ११।१।५ )।

कात्यायनेन एषु वैषम्यं स्वीकृतम्। एकनगरस्य समानस्तरीयाणां नागरिकाणां संघटनं नैगमः; शस्त्रजीविसैनिकानां संघटनं व्रातः। वणिक्संघटनं पूगः, ब्राह्मणानां

---

१. ऋग्वे० २।२६।६; ५।५३।११; पूगो वै रुद्रः। तदेनं स्वेन पूगेन समर्धयति—कौ० ब्रा० १६।७।

विदुषां च संघटनं गणः।[1] न्यायपालिकादृष्टिं पुरोधाय याज्ञवल्क्येन पूगः श्रेण्याः उच्चः न्यायालयः अमन्यत। एतद्व्याचक्षाणेन मिताक्षराकृता विभिन्नजातीयानां विभिन्नधर्माणां विभिन्नवृत्तीनां च जनानां संघः पूगः विभिन्नजातीयानां परन्तु समानवृत्तीनां संघः श्रेणी इति व्यवस्थापितम्।

"स नैव व्यभवत्, स विशमसृजत, यान्येतानि देवजातानि गणशः आख्यायन्ते" ( बृहदारण्यकोपनिषद् १।४।१२ )। अत्र शंकराचार्यस्य भाष्यम्-

"क्षात्रसृष्टोऽपि नैव व्यभवत् कर्मणि ब्रह्म तथा न व्यभवत् वित्तोपार्जनयितुरभावात्। स विशमसृजत, कर्मसाधनानि वित्तोपार्ज्जनाय। कः पुनरसौ विट्, यान्येतानि देवजातानि ! स्वार्थे निष्ठा। य एते देवजातिभेदाः इत्यर्थः। गणशः गणम्। आख्यायन्ते कथ्यन्ते गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जनसमर्थाः नैकैकशः।"

एवं स्पष्टं यद् आर्थिकसहकार्ये कार्यकरणस्य प्रयोगः विटद्वारेण उपनिषत्सु विकसितः आसीत्। वेदेषु पणिनाम् ईदृशानि एव संघटनानि वर्णितानि। स्पष्टं यद् भारतीयजीवने सहकारिजीवनस्य आरम्भः वैदिककालत एव भवति।

गौतमेन वैश्यानां वृत्तिः उल्लिखिता ( गौ० ध० सू० १०।४९ )। तासु च वृत्तिषु विधानानां नीर्माणस्य अधिकारोऽपि सङ्केतितः ( गौ० ध० सू० ११।२१ )। जातकेषु एषाम् आर्थिकगणानां उल्लेखोऽस्ति। तत्र राज्ञः हस्तक्षेपो नासीत्, अपि तु तैः गणैरेव विधानानि निर्मीयन्ते स्म इत्यपि अस्ति उल्लिखितम् ( विनय० ४।२२६ )। कौटल्येन श्रेणीबलस्य प्रयोगो विहितः। वार्ताशस्त्रोपजीविनां क्षत्रियश्रेणीनामपि ( ९।२।३ ) उल्लेखो लभ्यते। याः श्रेण्यः कम्बोजदेशे सौराष्ट्रदेशे च

---

१. एकपण्यशिल्पोपजीविनः श्रेणयः— याज्ञवल्क्यः ( २।१९२ ) मिताक्षराव्याख्या। नानायुधधरा व्राताः समवेताः प्रकीर्तिता — कात्यायन० (६७८); ब्राह्मणानां समूहस्तु सगणः परिकीर्तितः— कात्यायन० (६८०); नैगमा ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादय — राजनीतिप्रकाशिका पृ० १२०; नानापौरसमूहस्तु नैगमः प्रकीर्तितः— कात्या०; पूग —स्मृ० चं० ३ पृ० ५२३; कात्या० ६७९; पाखण्डाः वेदोक्तलिङ्गधारिव्यतिरिक्ताः सर्वे लिङ्गिनः, ते हि मठादिहिता चारणाद्याः समयाः सन्ति— याज्ञवल्क्यस्य भाष्ये ( २।१९२ ) विज्ञानेश्वरः; पाषण्डिनो वेदबाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुक्षपणकादयः, विकर्मस्थाः प्रतिषिद्धवृत्तिजीविनः, बैडालव्रतिकबकवृत्ती वक्ष्यमाणलक्षणौ, शठा वेदेष्वश्रद्दधानाः, हैतुका वेदविरोधितर्कव्यवहारिणः— कुल्लूकभट्टः ( मनु० ४।३० )।

२. ऐ० ब्रा० ३।३०।३; कौषी० ब्रा० २८।६; तै० ब्रा० ३।१।४।१०; पञ्चविंशमहा० ६।६।२५; १७।१५।१२; तै० सं० १।८।१०।२।

आसन्। धर्मशास्त्रानुसारं राजा एवंविधानाम् आर्थिकसङ्घटनानां नियमान् समीक्ष्य तेषां परिपालनं कुर्वन्नासीत्—

जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित्।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्॥

(मनु० ८।४१)

मनुयाज्ञवल्क्य( २।१८७-९२ )प्रभृतीनां मतं यत् संघानां समक्षं अनुबन्धम् आश्रित्यैव तेषां विवादः निर्णयः-

यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम्।
विसंवदेन्नरो लोभात्तं राष्ट्राद् विप्रवासयेत्॥
निगृह्य दापयेच्चैनं समयव्यभिचारिणम्।
चतुः सुवर्णान् षण्निष्कांश्च्छतमानं च राजतम्॥

( मनु० ८।२१९-२० )

विष्णुरपि "गणद्रव्यापहर्तृविवादस्य" इति विधत्ते। संघानां गणानां वा व्यवस्था निम्नलिखितैः याज्ञवल्क्यस्मृतिवचनैः प्रकाशम् आयाति—

निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः॥
गणद्रव्यं हरेद् यस्तु संविदं लंघयेच्च यः।
सर्वस्वहरणं कृत्वा तं राष्ट्राद् विप्रवासयेद्॥
कर्त्तव्यं वचनैः सर्वैः समूहहितवादिनाम्।
यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम्॥
समूहकार्य आयातान् कृतकार्यान् विसर्जयेत्।
स दानमानसत्कारैः पूजयित्वा महीपतिः॥
धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः।
कर्त्तव्यं वचनं तेषां समूहहितवादिनाम्॥
श्रेणि-नैगम-पाषण्डिगणानामप्ययं विधिः।
भेदञ्चैषां नृपो रक्षेत् पूर्ववृत्तिश्च पालयेत्॥

( याज्ञ० २।१८६-९२ )

एतासां परिस्थितीनां महाभारते इत्थं वर्णनं वर्तते—

आददीत बल राजा मौलं मित्रबलं तथा।
अटवीबलं भृतञ्चैव तथा श्रेणीबलं प्रभो॥

तत्र मित्रबलं राजन् मौलं चैव विशिष्यते।
श्रेणीबलं भृतं चैव तुल्ये एत्रेति मे मतिः॥
तथाऽऽचारबलं चैव परस्परसमं नृप।
विज्ञेयं बहुकालेपु राज्ञा काल उपस्थिते॥
(आश्रमवासिक० ७।७-९)

अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः।
श्रेणीमुख्योपजापेन वीरुधश्छेदनेन च॥
(शा० ५९ ४९)

श्रेणिमुख्योपजायेषु वल्लभानुनयेषु च।
अमात्यान् परिरक्षेत भेदसंघातयोरपि॥
(शा० १४०।६४)

ब्राह्मणाः श्रेणिमुख्याय तथोदासीनवृत्तयः।
किं मां वक्ष्यन्ति किं चापि प्रतिवक्ष्यामि तानहम्॥
(वन० २४८।१६)

जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः।
वर्जयन्ति च ये धर्मं तेषां धर्मो न विद्यते॥
(शा० ३६।१९)

संविदव्यतिक्रमः

मनुना (८।५) अष्टादशसु विवादेषु संविद्व्यतिक्रमोऽपि स्वीकृतः। नारदेनापि (१३।१) एष निगदितः। आपस्तम्बेन 'धर्मज्ञसमयः प्रमाणं वेदाश्च' (१।१।१।२) "अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः" (२।४।८।१३) यस्मिन विधेऽर्थे प्रयुक्तः तस्मिन्नेव अर्थे याज्ञवल्क्येन "गन्धर्वः समयान्मिथः" (२।१६१) इति प्रयुक्तम। मनोः (८२१८। ) श्लोकव्याख्यावसरे मेधातिथिना इदं स्पष्टीकृतम्—"समयाः शपथास्याचारकालसिद्धान्तसंविदः"। अग्रिमश्लोक व्याख्यावसरे मेधातिथिना यल्लिखितं तत्र संघशब्दः एषु अर्थेषु संघटनेषु प्रयुक्तोऽस्ति। तत्र आर्थिकसंघटनस्य स्पष्टम् उल्लेखः; तथा च मेधातिथिवचनम् (मनु०८।२१९) "एवं ग्रामसमुदायो देशसंघः, एकधर्मानुगतानां नानादेशवासिनां नानाजातीयानामपि प्राणिनां समूहः।" अत्र मेधातिथिवचने प्रयुक्तस्य संघशब्दस्य व्याख्यानं पाश्चात्त्यैः विद्वद्भिः

अन्यथैव कृतं यत् सर्वथा अयुक्तम्।[१] अमरकोशे समयशब्दः आचारशब्दः संविद्-शब्दश्च पर्यायाः स्वीकृताः। स्मृतिचन्द्रिकायाम् अनेकेषां संघटनानां समयस्य विवरणं प्रस्तुतम्:- "पूगव्राते चान्योन्यमुत्सृज्य समरे न गन्तव्यम् इत्यादयः सन्ति समयाः। गणे तु पञ्चमेऽह्नि पञ्चमे वाब्दे कर्णवेधः कर्त्तव्य इति एवमादिरस्ति समयः। गणादिष्वत्रादिशब्देन ब्रह्मपुरीमहाजनः परिगृहीतः। तत्र गुरुदक्षिणाद्यर्थमागतो माननीय इत्यादिसमयोऽस्ति। दुर्गे तु धान्यादिकं गृहीत्वा अन्यत्र यास्यतो न तद् विक्रेयम् इति अस्ति समयः। जनपदे तु क्वचिद् विक्रेतृहस्ते दशबन्धग्रहणं कार्यं क्वचित्क्रेतृहस्ते इत्यादिकोऽस्ति अनेकविधः समयः। जनपदे तथेत्यत्र तथाशब्दोऽनुक्तग्रामघोषपुरादीनां प्रदर्शनार्थः। तत्र न गोप्रचारस्थाने ख्यातव्यम् इत्यादिकोऽस्ति ग्रामे समयः। आभीरस्त्रीपुरुषव्यभिचारे न दण्ड: इत्यादिकोऽस्ति घोषे समयः" (स्मृ० चं० २, पृ० २२३)।

स्मृतिचन्द्रिकायां निम्नलिखितस्य नारदवचनस्य उपर्युक्तं विवेचनं कृतम् अस्ति- "पाषण्डिनैगमश्रेणीपूगव्रातगणादिषु। संरक्षेत् समयं राजादुर्गे जनपदे तथा-(नारद० १३२।" मिताक्षरायाम् "समानवृत्तिजीविनाम्", कात्यायनग्रन्थे (६८०) ब्राह्मणगणस्य, राजतरङ्गिण्यां च पुरोहितसंघस्य उल्लेखो लभ्यते। उपर्युक्तस्मृतिचन्द्रिकावचनाद् अन्यान्यपि बहूनि वचनानि लभ्यन्ते, यैः इदं परिज्ञायते यत् परसहस्रम् ईदृशः समयाः आसन् ये परस्परं विरुद्धाः। तेषां मान्यताविषये धर्मशास्त्रीयं मतम् अतिमहत्त्वपूर्णम्। कश्चिदपि समयो भवेत्; भवेच्च स सुदीर्घकालपर्यन्तं प्रचलितः, परन्तु यदि स वेदविरुद्धः, तदा न स राज्यविधिपदवीम् आरोढुं शक्नोति, अपि तु स राज्येन प्रतिबद्ध्यते।

दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम्।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत्॥

(नारद० समयस्यानपाकर्म ७)

इदं व्यवहारप्रकाशे (पृ० ३३७) स्पष्टीकृतम् "यल्लोभादिदोषवत्करणं श्रुतिस्मृतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितं तद् बहुकालप्रवृत्तमपि राज्ञा निवर्तनीयमित्यर्थः"।

अत्र विवेचने यस्याः जानतान्त्रिकमान्यतायाः प्रयोगः अस्ति, स समाजस्य उच्चतां द्योतयति। कोऽपि आचारः समाजे पदं लब्धुं शक्नोति यदा स न आम्नायविरुद्धः[२]। सोऽपि च तस्यैव समुदायस्य कृते यस्य समुदायस्य स आचारः

---

१. S. B. E., vol 25, P. 293.

२. नारद० १३।४-५,७; मनु० ८।२२० (मेधातिथिः)।

परम्परागतः। एतदर्थम् इदम् आवश्यकं यत् क आचारः शास्त्रसम्मतः इत्येतन्निर्णेतुं स्थानीया समितिः स्यादिति। याज्ञवल्क्येन (२।१९१) बृहस्पतिना च स्थानीयाः समितयः विहिताः–

द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः।
कर्त्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः॥

(बृह० स्मृ० चं० २, पृ० २२४)

एवंविधायाः समितेः सदस्याः गणकार्यार्थं राज्ञः सविधं गच्छन्ति। ते च राज्ञा सत्कृता भवन्ति। यदि च राजा सत्काररूपेण तेभ्यः द्रव्यं ददाति, तदा तद् द्रव्यं सम्पूर्णस्य गणस्य सम्पत्तिः स्वीक्रियते, न तु तेषां सदस्यानां तत्र स्वत्वम्। गणम् उद्दिश्य यत्किञ्चिदपि क्रियते लभ्यते वा, तत्सर्वं सामूहिकमेव भवति, न तु वैयक्तिकम् –

यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम्।
राजप्रसादलब्धं च सर्वेषामेव तत्समम्॥
गणमुद्दिश्य यत्किञ्चित् कृत्वर्णं भक्षितं भवेत्।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत्॥
गणानां श्रेणिवर्गाणां गताः स्युर्ये तु मध्यताम्।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते॥

(कात्यायन० सरस्वतीविलासः, पृ० २३०)

एतेषां सङ्घटनानां समयस्य कार्यान्वयनं न कस्यचिद् व्यक्तिविशेषस्य इच्छया, अपि तु समूहस्य इच्छया अर्थात् जानतन्त्रिकरूपेण भवेत् –

ग्रामश्रेणिगणार्थं तु सङ्केतसमयक्रिया।
बाधाकाले तु सा कार्या धर्मकार्ये तथैव च॥
चाटचौरभयं बाधा सर्वसाधारणा स्मृता।
तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित्॥

(बृ० १७।५-६)

एतेन बृहस्पतिवचनेन इदमपि प्रकाशमायाति यद् आसन्नभयान्मुक्तिः कर्त्तव्यपालनस्य आवश्यकता चेति द्वयं समयस्य उद्देश्यमस्ति। "कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम्। विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरम्"।

यद्यपि कात्यायनमतानुसारम् समूहानां तु यो धर्मस्तेन धर्मेण ते सदा। प्रकुर्युः सर्वकार्याणि स्वधर्मेषु व्यवस्थिताः इदमेव समयस्य कार्यक्षेत्रं किन्तु बृहस्पतिना समयस्य कार्यक्षेत्रस्य सूची निर्दिष्टा अस्ति। बृहस्पतिना इत्थं व्यवस्था दर्शिता—

सभाप्रपादेव गृहतडाकारामसंस्कृतिः।
तथाऽनाथदरिद्राणां संस्कारो योजनक्रिया॥
कुलायनं निरोधश्च कार्यमस्माभिरंशतः।
यत्त्वेवं लिखितं पत्रं धर्म्या सा समयक्रिया॥
पालनीयाः समर्थैस्तु यः समर्थो विसंवदेत्।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात्॥
तत्र भेदमुपेक्षां वा यः कश्चित् कुरुते नरः।
चतुःसुवर्णाः षण्निष्कास्तस्य दण्डो विधीयते॥
यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा।
संवित्क्रियां विहन्याच्च स निर्वास्यः पुरात्ततः॥
अरुन्तुदः सूचकस्य भेदकृत्साहसी तथा।
श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यते ततः॥
कुलश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः।
वाग्धिग्दमं परित्यागं प्रकुर्युः पापकारिणाम्॥
तैः कृतश्च स्वधर्मेण निग्रहानुग्रहं नृणाम्।
तद्राज्ञोऽप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः॥
बाधां कुर्युर्यदेकस्य सम्भूता द्वेषसंयुताः।
राज्ञा ते विनिवार्यास्तु शास्याश्चैवानुबन्धिनः॥
मुख्यैः सह समूहानां विसंवादो यदा भवेत्।
तदा विचारयेद् राजा स्वमार्गे स्थापयेच्च तान्॥
........................यः समर्थो विसंवदेत्।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात्॥
सम्भूयैकतमं कृत्वा राजभाव्यं हरन्ति ये।
ते तदष्टगुणं दाप्या वणिजश्च पलायिनः॥

ततो लभेत यत्किञ्चित् सर्वेषामेव तत्समम् ।
षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः ॥
देयं वा निःस्ववृद्धान्धस्त्रीबालातुररोगिषु ।
सन्तानादिकादिषु तथा धर्म एष सनातनः ॥
यत्नैः प्राप्तं रक्षितं वा गणार्थे वा पणं कृतम् ।
राजप्रसादलब्धं वा सर्वेषामेव तत्समम् ॥

( १७।११-२५ )

संघटनानि केषामपि वर्गाणां भवेयुः, किन्तु संविदः व्यवस्थायां व्याख्यातुं प्रभवति—

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत् तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्यकरास्तेषां प्रदद्याद् गृहभूमिकाः ।
मुक्ता भाव्याश्च नृपतिर्लेखयित्वा स्वशासनैः ॥
नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथा ॥

( बृ० १७।२-४ )

विवादरत्नाकरे कात्यायनस्य एकं वचनम् उद्धृतम् अस्ति । येन ज्ञायते यत् प्रक्रियावसरे मतं व्यक्तीकर्तुं स्वातन्त्र्यम् आसीत्–

युक्तियुक्तञ्च यो हन्याद् वक्तुर्यो नावमाशदः ।
अयुक्तञ्चैव यो ब्रूयाद् प्राप्नुयात् पूर्वसाहसम् ॥

कात्यायनवचनम् उद्धरता वीरमित्रोदयकृता ( पृ० ४३२ ) इदं प्रतिपादितं यद् मध्ये सदस्यतां प्राप्नुवतः सदस्यस्यापि तानि सर्वाणि सौविध्यानि भवन्ति यानि अन्यसदस्यस्य कृते सन्ति–

गणानां श्रेणिवर्गाणां गताः स्युर्यो मध्यताम् ।
प्राकृतस्य धनर्णस्य समांशाः सर्वमेवेति ॥
तथैव भोज्यवैभव्यदानधर्मक्रियासु च ।
समूहस्थोंऽशभागी स्यात् प्राग्गतस्त्वंशभाग् न त्विति ॥

ये सर्वसम्मत्या गणादिमध्यप्रविष्टाः, तेऽपि सर्वे पूर्वधनस्य ऋणस्य च भागिनो भवन्तीत्यर्थः। एतेन स्पष्टं यत् सदस्यताप्राप्तौ सर्वेषां सम्मतिः अपेक्षिता। अतोऽप्यधिकं जानतन्त्रिकं स्वरूपं दृश्यते यद् यदि संघस्य नेता (मुख्यः) कर्त्तव्यच्युतः, तदा संघः तं बहिष्कर्तुं प्रभवति। "मुख्यदण्डेन समूहस्याधिकारः।" मित्रमिश्रेण अस्मिन् विषये कात्यायनवचनम् उपस्थापितम्—

साहसी भेदकारी च गणद्रव्यविनाशकः।
उच्छेद्याः सर्व एवैते विख्याप्यैव नृपे भृगुः॥

एतदेव बृहस्पतिना विशदीकृतम्—

मुख्यैः सह समूहानां विसंवादो यदा भवेत्।
तदा विचारयेद् राजा स्वधर्मे स्थापयेच्च तान्॥
(१७।२०)

समूहस्य पूर्णतया अधिकारः यत् समूहः कर्त्तव्यच्युतं नेतारम् अभियुनक्ति, परन्तु तस्य अभियोगस्य निर्णये कार्यान्वयने च राजैव अधिकारी "समूहाशक्तौ तस्य दण्डो राज्ञा विधेयः"। प्रस्तुते विवेचने राज्ञः समूहस्य च परस्परं कीदृशः सम्बन्धः इत्येतद्विषयिणी समस्या उदेति। नारदमतानुसारं राज्ञा समूहाय न ईर्षितव्यम्—

प्रतिकूलञ्च यद्राज्ञः प्रकृत्यवमतञ्च यत्।
बाधकञ्च यदर्थानां तत्तेभ्यो विनिवर्तयेत्॥ ४॥
मिथः संघातकरणमहिते शस्त्रधारणम्।
परस्परोपघातञ्च तेषां राजा न मर्षयेत्॥ ५॥
दोषवत्करणं यत्स्यादनाम्नाय प्रकल्पितम्।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत्॥ ७॥

मित्रमिश्रेण बृहस्पतेर्वचनमुद्धृतम् "अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा। श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यतेततः"। अत्र तेन इत्थं व्याख्यातम्-"समूहस्थानान्निर्वास्यते समूहेनेति शेषः। न च समूहस्य दण्डकरणेऽनधिकारात् समूहेति शेषकरणमयुक्तमिति वक्तव्यम्। पूर्वोक्तकात्यायनवचनेन समूहस्यैव मुख्यदण्डनेऽधिकारस्य प्रतिपादितकत्वात्"। नारदवचनस्य प्रस्तुता व्याख्या विषयम् अधिकं स्पष्टीकरोति।

"अत्रेदं निर्वाच्यम्। पाषण्डादिभिर्या संविन् मिलित्वा कृता सा एव चेद् रक्षणीया तदतिक्रमे तु ते राज्ञा दण्ड्यास्तदा वयं सर्वे राज्ञे प्रजानां करदानं वारयाम इत्यस्माभिः सर्वदा नग्नैर्भाव्यमिति द्यूतं चरिष्याम इति वेश्यां रमयिष्याम इति राजपथे सवेगं धावाम इति शाखोटकस्थलं पूजयामेत्येवमादिप्रतिज्ञा अपि अवश्यं रक्षन्ताम् इति तन्निरासाय वचनम् इदमिति।"

एतेन विवेचितेन एष निष्कर्षः आसादितो भवति यत् संघाः स्वीयेषु आन्तरिकेषु कार्येषु स्वतन्त्रा आसन्, परन्तु यदि तेषां पारस्परिकव्यवहारस्य सुरक्षा आवश्यिका तदा राजा सुरक्षां कुर्यात्। यदि ते (सङ्घाः) स्वीयान् समयान् उल्लङ्घयेयुः, तदा ते समयान् पालयितुं राज्ञा बाधनीयाः। समयनिर्माणस्य अधिकारः संघानामेव। एतदवश्यं यत् समयाः शास्त्रविरुद्धाः मा भूवन्।[1] शास्त्रविपरीताः समयाः न मान्याः। इत्थं समयानाम् उल्लङ्घनं शास्त्रविपरीतम् आचरणं वा यदि संघाः कुर्युः, तदा तत्र राजा हस्तक्षेपं कर्तुं प्रभवति। यथाशास्त्रं यथा समयञ्च आचरणे तु संघाः स्वतन्त्राः।

### सम्भूय समुत्थानम्

निश्चितनियमानुसारं परस्परसहयोगभावनया शिल्पिभिः वणिग्भिर्वा समवेतैः सद्भिः यत्क्रियते तदेव सम्भूय समुत्थानमिति कथ्यते–

समवेतास्तु ये केचिच्छिल्पिनो वणिजोऽपि वा।
अविभज्य पृथग्भूतैः प्राप्तं तत्र फलं समम्॥

(कात्यायन ६२४)

बृहस्पतिमतानुसारम् एवंविधे संयुक्तवाणिज्यभागिनाम् अधोनिर्दिष्टाः योग्यताः अयोग्यताश्च सन्ति–

कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात् सह क्रियाः॥
समोऽतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः।
क्षयव्ययौ तथा वृद्धिस्तस्य तत्र तथाविधा॥
अशक्तालसरोगार्तमन्दभाग्यनिराश्रयैः।
वाणिज्याद्याः सहैतैस्तु न कर्त्तव्या बुधैः क्रिया॥

(१३।१-३)

---

१. देशजातिकुलधर्माश्च आम्नायैः अविरुद्धाः प्रमाणम्। कर्षकवणिक्पशुपालनकुसीदकारवः स्वे स्वे वर्गे। गौ० ११। २-२३।

स्मृतिचन्द्रिकाकृता अपरार्कवचनम् उद्धृत्य इत्थं विवेचितम्--"सह क्रियां वाणिज्यकृषिशिल्पक्रतुसङ्गीतस्तैन्यादिमकामित्यर्थः । तत्र वाणिज्यक्रिया नाणकवेदिभिरायव्ययज्ञैः सम्भूय कार्या । कृषिक्रिया तु आयव्ययज्ञैः । शिल्पक्रिया च प्राज्ञैः-पृ० १८४ ।" लाभस्य हानेश्च भागः वाणिज्ये विनियुक्तं द्रव्यमनुश्रित्यैव निर्धारयितुं शक्यते—

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥
समो न्यूनोऽधिको वांशो येन क्षिप्तस्तथैव सः ।
व्ययं दद्यात् कर्म कुर्यात् लाभं गृह्णीत चैव हि ॥

(बृ० १३।४-५)

वणिजः उपस्थिताः अनुपस्थिताः वा तेषु न्यायमेव व्यवहरणीयम्—

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।
नानापण्यानुसारात्ते प्रकुर्युः क्रयविक्रयौ ॥

(व्यासः)

यदि ते कथञ्चिद् विवदेरन् तदा तत्र विवादे त एव निर्णायकाः साक्षिणश्च भवेयुः । सन्दिग्धेंऽशे ( विषये ) शपथमाश्रित्य निर्णयः-

परीक्षकाः साक्षिणश्च त एव प्रोक्ताः परस्परम् ।
सन्दिग्धेऽर्थेऽवञ्चनायां न चेद् विद्वेषसंयुताः ॥
यः कश्चिद् वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात् सर्ववादे त्वयं विधिः ॥[1]

(बृ० १३।६-७)

वाणिज्ये द्वेधा द्रव्यहानिः सम्भाव्यते—दैववशेन, प्रमादेन वा । यदि दैववशाद् हानिर्भवति, तदा सर्वेऽपि सदस्याः तस्याः भागिनः, यदि कश्चित् सदस्यस्य प्रमादेन हानिः भवति, तस्याः भागी स एव सदस्यः ।

क्षयहानिर्यदा तत्र दैवराजकृताद्भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया तथांशतः ॥

---

१. तुलनीयम्–Section 12 and 13 of the Indian Partnership Act.

अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद् भवेद् देयं सर्वेषां समवायिनाम् ॥
राज्ञे दत्वा तु षड्भागं लभेरंस्ते यथांशतः ।
दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ॥

( बृ० १३।८-१० )

प्रमादान्नाशितं दाप्यः प्रतिसिद्धकृतश्च यत् ।
असन्दिष्टश्च यत्कुर्यात् सर्वसम्भूयकारिभिः ॥

( नारद० ६।५ )

येन सदस्येन अग्निचौरजलादिभ्यः सम्पत्तिः परिरक्षिता भवेत् , तस्मै सदस्याय तस्याः सम्पदः दशमोंऽशः तस्मै पुरस्कारतया देयः—

चोरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ॥

( कात्या० ६३१ )

शुल्कस्थानं वणिक्प्राप्तः शुल्कं दद्याद्यथोचितम् ।
न तद्व्यभिचरेद्राज्ञां बलिरेष प्रकीर्तितः ॥
नैवं तस्करराजाग्निव्यसने समुपस्थिते ।
यस्तु स्वशक्त्या रक्षेत्तु तस्यांशो दशमः स्मृतः ॥

( बृ० १३।१२-१३ )

यदि कश्चिद् सदस्योऽन्यायमाचरेत् तदा अन्ये सदस्याः तं निष्कासयितुं शक्नुवन्ति। यदि कश्चिन् सदस्यः कार्यकरणे अक्षमः, तदा सः स्वस्थाने अन्यं नियोजयितुं शक्नोति ( याज्ञ० २।२-६५ )। यदि कश्चित्सदस्यः विदेशं गतः तत्रैव च मृतः, तदा तस्य सदस्यस्य अंशं तस्य उत्तराधिकारी लब्धुं शक्नोति। यदि उत्तराधिकारी अक्षमः, तदा अन्ये सदस्याः तदीयमंशं लब्धुं शक्नुवन्ति। तेषामपि अक्षमत्वे तु राज्यमेव तस्य अधिकारि। परन्तु तदीयमंशम् आदातुं राज्यं १० वर्षाणि यावत् प्रतीक्षेत यत्सः तस्य कश्चिद् उत्तराधिकारी वा नोपतिष्ठेत् ( याज्ञ० २।२६४; नारद० ६।७ )। सम्भूयकर्मकुर्वतामेकस्य ह्यानौ निर्णयः—

यदा तत्र वणिक्कश्चित् प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तै राजपूरुषैः ॥

यदा कश्चित् समागच्छेत् तदा रिक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥
राजाऽऽददीत षड्भागं नवमं दशमं तथा ।
शूद्रविट्क्षत्रजातीनां विप्राद् गृह्णीत विंशकम् ॥
त्र्यब्दादूर्ध्वं तु नागच्छेद्यत्र स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणान् श्रयेत् ॥
एवं क्रियाप्रवृत्तानां यदा कश्चिद् विपद्यते ।
तद् बन्धुना क्रिया कार्या सर्वेषां सहकारिभिः ॥
( बृ० १३।१४-१८ )

बृहस्पतिना सम्भूयकर्मप्रकारः सम्यग् उपस्थापितः—

बहूनां सम्मतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद् वापि सर्वैरेव कृतं भवेत् ॥
ज्ञातिसम्बन्धिसुहृदामृणं देयं सम्बन्धकम् ।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा ॥
स्वेच्छा देयं हिरण्यंतु रसधान्यं तु सावधि ।
देशस्थित्या प्रदातव्यं गृहीतव्यं तथैव तत् ॥
समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न याचते च यः कश्चिल्लाभात् स परिहीयते ॥
( बृ० १३।२२-२५ )

वणिजाम् इव शिल्पिकृषकऋत्विकप्रभृषिनामपि संघटनानि आसन् । कात्यायनेन शिल्पिनां चत्वारः स्तराः ( वर्गाः ) स्वीकृताः शिष्यः, अभिज्ञः, कुशलः, आचार्यश्चेति । एतेषाम् अंशनिर्धारणमपि एतत्स्तरानुसारमेव भवति—

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता तु कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः ॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं निवेशं लभेरंस्ते यथांशतः ॥

शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्थभागान् लभेयुस्ते यथोत्तरम् ॥
हर्म्यं देवगृहं वापि धार्मिकोपस्कराणि च ।
सम्भूय कुर्वतां चैषां प्रमुखो द्व्यंशमर्हति ॥
नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः ॥

( बृ० १३।३३-३७ )

चौराणामपि समूहस्य व्यवस्था कृता अस्ति । कात्यायनेन बृहस्पतिना च एतत्समूहव्यवस्थायां राज्यस्यापि भागः स्वीकृतः । राज्यचौरसमूहयोः परस्परं सन्धि-वार्ता अपि भवति स्म इति प्रतीयते, परन्तु एषा सन्धिवार्ता तैः जातिभिः क्रियते स्म, याः जातयः सीमावर्तिन्यः आसन् । परदेशेषु चौर्यं च अकुर्वन् । चौर्यं कृत्वा परदेशेभ्यः प्रतिनिवृत्तिसमये तद्देशीयराज्याय चौर्यप्राप्तधनस्य भागं ददति स्म च । स्वदेशे ताः चौर्यं कर्तुं नाशकन् । एवंविधा जातयः अद्यापि देशे सन्ति, येषां कार्यं चौर्यमेव वर्तते । एवंविधानां चौरसंघटनानां विषये कात्यायनेन बृहस्पतिना च इत्थं व्यवस्था निर्दिष्टा अस्ति—

परराष्ट्राद् धनं यत्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञो दशांशमुद्धृत्य विभजेरन् यथाविधिः ॥
चौराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव वा ॥
तेषां चेत् प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः ॥

( कात्यायनः )

स्वाम्याज्ञया तु यश्चौरैः परदेशात् समाहृतम् ।
राज्ञे दत्वा तु षड्भागं भजेयुस्ते यथांशतः ॥
चतुरोंऽशांस्ततो मुख्यः शूरस्त्र्यंशं समाप्नुयात् ।
समर्थस्तु हरेद् द्व्यंशं शेषाः सर्वे समांशिनः ॥

( बृ० १३।३८-३९ )

कृषकसमूहानां कृते इयं व्यवस्था प्रस्तुता—

बाह्यवाहकबीजाद्यैः क्षेत्रोपकरणेन च ।
ये समाः स्युस्तु तैः सार्धं कृषिः कार्या विजानता ॥
बाह्यबीजात्ययाद्यत्र क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥
पर्वते नगराभ्यासे तथा राजपथस्य च ।
उषरं मूषिका व्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥
गर्तानूपं सुसेकञ्च समन्तात् क्षेत्रसंयुतम् ।
प्रकृष्टं च कृतं काले वापयन् फलमश्नुते ॥
कृशातिवृद्धं शूद्रं च रोगिणं प्रपलायिनम् ।
काणं खञ्जं विनाऽऽदद्यात् बाह्यं प्राज्ञः कृषीवलः ॥

( बृ० १३।२७-३३ )

यदि एतेषां समूहानां नियमाः न निश्चिताः, तदा तेषां भागवत्ताम् अनुसृत्य निर्णयः कार्यः—

वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेव निर्णयः ॥

( कात्या०, व्य० प्र०, पृ० ३०५; परा० मा० ३, पृ० ३१२ )

ऋत्विपुक्‌रोहितादिसमूहानां व्यवस्था भागवत्ताम् आश्रित्य कृता अस्ति—

रथं हरेद्यथाऽध्वर्युर्ब्रह्माऽऽधाने च वाजिनम् ।
होता निविद्वरं चाश्वमुद्गाता चाप्यनःक्रये ॥
सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥
आगन्तुकाः क्रमायातास्तथा चैव स्वयंकृताः ।
त्रिविधास्ते समाख्याता वर्तितव्यं तथैव तैः ॥

( बृ० १३।१९-२१ )

पुरोहितविषयकान् नियमान् विविच्य तेषां सामान्यीकरणं कुर्वता मनुना लिखितं यदा मनुष्यः समूहे सहकारिताम् आधृत्य कार्यं करोति, तदा तस्य योगदानं कार्यक्रमत्वं चाश्रित्य तदीयो भागः निर्णेयः—

ऋत्विग् यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्मानुरूपेण देयोंऽशः सह कर्तृभिः ॥
दक्षिणासु च दत्तासु स्वकर्म परिहापयन् ।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥
यस्मिन् कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः ।
स एव ता आददीत भजेरन् सर्व एव वा ॥
रथं हरेत चाध्वर्युर्ब्रह्माधाने च वाजिनम् ।
होता वापि हरेदश्वमुद्गाता चाप्यनःक्रये ॥
सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥
संभूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेन विधियोगेन कर्त्तव्यांशप्रकल्पना ॥

( मनु० ८।२०६-२११ )

यज्ञभाजां ब्राह्मणानां दक्षिणादिविषये तेषां स्तरम् ( योग्यताम् ) आश्रित्य कुल्लूकभट्टेन व्यवस्था दर्शिता ( मनु० ८।२१० )—

'तं शतेन दीक्षयति' इति श्रूयते । तत्र सर्वेषां षोडशानाम् ऋत्विजां मध्ये ये मुख्याः ऋत्विजो होत्रध्वर्युब्रह्मोद्गातारः समग्रदक्षिणायास्तेऽर्धहरा अष्टचत्वारिंशद् गोभाजो भवन्ति । अत एव कात्यायनेन 'यद्द्वादशाद्येभ्यः'[१] इति प्रत्येकं गोदानं विहितम् । यद्यपि तस्यार्धं पञ्चाशद् भवति, तथापि इह न्यूनार्धग्रहणेनापि इमेऽर्धिनः उच्यन्ते, सामीप्यात् । अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्ते मुख्यर्त्विग्गृहीतदक्षिणार्धग्रहणेनार्धिन उच्यन्ते । तृतीयिनोऽच्छावाकनेष्ट्रग्नीत्प्रतिहर्तारस्ते मुख्यर्त्विग्गृहीतस्य तृतीयमंशं लभन्ते । ...एतच्च 'षट् षड् द्वितीयेभ्यश्चतस्रश्चतस्रश्च तृतीयेभ्यस्तिस्रस्तिस्रश्चतुर्थेभ्यः' इति सूत्रयता कात्यायनेन स्फुटीकृतम् ।

१. कात्यायनश्रौतसूत्रम् (१०।२।२५)—"यथारम्भं द्वादशद्वादशाद्येभ्यः षट् षड् द्वितीयेभ्यश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः ।"

धर्मशास्त्रेषु सम्भूय समुत्थानविषयकाणि यानि विवरणानि लभ्यन्ते, तैः भारतीयसमाजस्य अधिकसहकारिता पूर्णतया प्रकाशमायाति। धार्मिका आर्थिकाश्चेति द्विविधा अपि समूहा आसन्। मनुना धार्मिकविषयका नियमा एव तेषु सर्वेष्वपि मानवसमूहेषु प्रवर्तिताः, ये भागवत्ताम् आश्रित्य कार्यं कुर्वन्ति। एतेन स्पष्टं यद् धार्मिकसमूहानामपि तदेव स्थानं यद् अन्येषां लौकिकसमूहानाम्। तत्र सौविध्यमूलकं न किमपि वैषम्यम्। धार्मिकवर्गेण सह राज्यस्य स एव सम्बन्धः, यः अन्यैः आर्थिकवर्गैः।

एतेषां समूहानां स्वायत्तता आसीत्। एतेषां स्वसंघटनीयनियमानां निर्माणे कार्यान्वयने च पूर्णतया स्वातन्त्र्यम् आसीत्। एतेषां विवेचनेन एतत् स्पष्टं भवति यत् केचन समूहाः वैदिकपरम्पराम् अतिवर्तमानाः (अवैदिकपरम्परायाः प्रतीकभूताः) अपि आसन्।

एवंविधानां श्रेणीनां गणानां संघानां च स्फुटाः उल्लेखाः लभ्यन्ते। तत्रापि सम्भूयव्यवस्था आसीत्। एवंविधा स्वायत्तता तेष्वपि अधिकासीत्। अस्य एषोऽपि परिणामः सम्भाव्यते यत्ते (सङ्घाः) अवैदिकव्यवस्थापनेऽपि एतस्याः स्वतन्त्रतायाः (स्वायत्ततायाः) उपभोगं कर्तुं शक्नुयुः। अतस्तेषु राज्यस्य नियन्त्रणं स्वीकृतं यद् राज्यं तेषां व्यवस्थां समीक्ष्य तान् समूहान् सम्यक् प्रतिष्ठापयेत्। अस्मिन्नवसरे तेषाम् आन्तरिककार्येष्वपि हस्तक्षेपं कर्तुं राज्यम् अशकत्।

तदापि राज्यं हस्तक्षेपं कर्तुं शक्नोति स्म, यदा एते वर्गाः निश्चितान् नियमान् अतिवर्तेरन्। समयाः संविदो वा संघैः स्वयमेव निश्चियन्ते स्म। तानेव च निश्चितान् समयान् अनुसृत्य संघानां सञ्चालनं भवति स्म। समयव्यतिक्रमः द्वेधा सम्भाव्यते। सदस्यैः स्वयमेव समयस्य अवहेलने राज्यविश्वासघाते वा। अस्मिन् परिस्थितिद्वयेऽपि राज्यं हस्तक्षेपं कर्तुम् अशकत्। एताः परिस्थितीः विहाय संघानां पूर्णतया स्वातन्त्र्यम् आसीद् यत् स्वातन्त्र्यम् अद्यत्वे जनतान्त्रिकसमाजानामपि नास्ति। तद् का चर्चा अधिनायकवादीयसमाजानां तादृशस्य स्वातन्त्र्यस्य?



# १३

# उत्पादनं वितरणमुपभोगो विनिमयश्च

आर्थिकजीवने उत्पादनस्य वितरणस्य च मुख्या समस्या एव आधुनिक-मार्क्सवादानुयायिनः समाजशास्त्रस्य मूलभूतम् आधारं मन्यन्ते। उत्पादनशक्तिषु अधिकारेण वितरणस्य प्रकारेण च समाजदर्शनं ज्ञातुं प्रयत्न एव मार्क्सद्वारेण प्रतिष्ठितस्येतिहासस्य भौतिकीऽव्याख्या। अत्र सिद्धान्तविषये विचारः नास्माभिः कर्त्तव्योऽस्ति, अपि तु प्राचीनभारते उत्पादनस्य वितरणस्य च कीदृशी स्थितिः आसीदित्येव अत्र अस्माकं विचारणीयो विषयः।

धर्मशास्त्रेषु, अर्थशास्त्रेषु नीतिग्रन्थेषु च एतद्विषये विचारितम् अस्ति। कौटल्येन उत्पादनविषये अध्यायद्वयं लिखितम् अर्थशास्त्रे। तदानीं प्रयुक्ताभिः शब्दपङ्क्तिभिः वर्णनेन च विषयस्य परिज्ञाने आधुनिकैः विद्वद्भिः काठिन्यम् अनुभूयते। वाणिज्यविकासः, पशुपालनम्, खाद्यसामग्री, कोषसंरक्षणम्, कृषिः इत्यादिषु भूमेर्महत्त्वम् अस्ति। अरण्यम्, जलयातायाते, गृहनिर्माणम्, यातायातम्, खनिः, खनिजपदार्थः इत्यादीनां सम्पत्साधनानाम् उचिता व्यवस्था कृता आसीत्। तात्त्विकनियन्त्रणेन सममेव भूमौ वैयक्तिकं स्वत्त्वमपि स्वीकृतमासीत्। जले, खनिजपदार्थेषु खनिषु राज्यस्य अधिकार आसीत्। धातुसम्बन्धिवाणिज्येऽपि राज्यस्य निर्देशनम् आसीत्। श्रमस्य उचितविनियोगविषये आपणसाधनानां विषये च राज्यं सक्रियमासीत्। आर्थिकसाधनानाम् उचितेन उपयोगेन सहैव तेषां संरक्षणे संवर्धने च राज्यं सावहितम् आसीत्।

ग्रामसङ्घटनस्य संस्थापनस्य च विषये विचारयता कौटल्येन ग्रामे निवसतां जनानां विषये नियमः उक्तः। सुव्यवस्थितजनतया राज्यतः सौविध्यं साहाय्यं च लभ्यते स्म। जनेभ्यः केन प्रमाणेन कराः ग्राह्याः, कथञ्च तेषाम् अभ्युत्थानं कार्यमित्येतद्विषयेऽपि विचारितम् अस्ति। कौटल्यमतानुसारम् अधिकादधिकं यावती जनसंख्या एकत्र नगरे अपेक्षिता, ततः यदि अधिका जनसंख्या भवति, तदा तान् जनान् प्राचीनेषु विनष्टग्रामेषु, अथवा नूतनेषु स्थानेषु वासयेत्। ऋषयोऽपि जन-सङ्ख्यायाः वृद्धितः न त्रस्यन्ति स्म, अपि तु तत्रापि तैः व्यवस्था उक्ता एव। जन-संख्यायाः वृद्ध्या सहैव तस्याः उचितो विनियोगः आर्थिकं स्रोतश्च इत्येतद्

द्वयमपि समन्वयात्मकदृष्ट्या दृश्यते स्म ।[१] प्रत्येकं नागरिकस्य कर्त्तव्यमासीद् यत् स स्वसम्बद्धानां जनानां सुरक्षादिकं व्यवस्थाप्यैव गृहत्यागं कर्तुं शक्नोति, अन्यथा स दण्डनीय आसीत् ।[२] यज्ञाद्यर्थं निःशुल्कं भूमिः दीयते स्म । ब्रह्मदेया भूमिः सीमिता आसीत् । अस्याम् अवस्थायां दीयमानायाः भूमेः विषये करादिकं नासीत् ।[३]

तस्मै भूमिः नादीयत, यः भूमिं गृहीत्वा तत्र कृषिं न कुर्यात् । कृषिकर्ता आजीवनं भूमेः अधिकारी आसीत् ।[४] तत्काले अनुत्पादिका भूमिः निःशुल्कं पुरुषाय अदीयत ।[५] यदि भूमिं गृहीत्वा कृषिं न कुर्यात्, तदा ततो भूमिम् आदाय सा भूमिः अन्यस्मै कृषकाय ग्रामसहकारिसमितये वा समर्प्यते स्म । राज्यसहायकेभ्यः, राजसेवकेभ्यः, अध्यक्षेभ्यः, गोपेभ्यः, स्थानिकेभ्यः, अनीकस्थेभ्यः, चिकित्सकेभ्यश्च निःशुल्कं भूमिः दीयते स्म । किन्तु तत्र कृषिकार्यम् अवश्यं कर्त्तव्यम् आसीत् ।[६] अवधेयमस्ति यत् कौटल्यः जन्मना भूस्वामित्वं न मन्यते, अपि तु कृषिकर्मणा । अर्थाद् यः कृषिकर्म करोति स एव भूस्वामी, यस्तु कृषिकर्म न आचरति, स परम्परागतायाः भूमेः न स्वामी ।

कृषेः विकासार्थम् अपेक्षितानां सौविध्यानां पूरणेन सहैव कृषकस्य स्वास्थ्यार्थं राज्यकोषतः धनमपि दीयते स्म । प्रतिग्रामम् औषधालयः आवश्यकः आसीत् । राजकोशानुदानयोः सन्तुलनम् आवश्यकम् । ईदृशम् अनुदानं न देयं येन राजकोशः क्षीयेत । तद्वृद्ध्यर्थं च नूतनाः कराः योजनीयाः स्युः ।[७] उत्पादनवृद्ध्यर्थं

---

१. दशास्यां पुत्रानधेहि पतिमेकादशं कृधि—ऋ० ५।१०।८५,४५;
यथार्थं भोजनं येषां संतानाय च मैथुनम् ।
वाक्सत्यं वचनार्थं च दुर्गाणि तरन्ति ते ॥
म०भा० १०।१०।२२; प्रजायै गृहमेधिनाम्—रघुवंशः १।७ ।

२. पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वसाहसदण्डः । स्त्रियं च प्रव्राजतः— अर्थशास्त्रम् २।१।३६-३७ ।

३. अर्थशास्त्रम् २।१; ३।१० ।

४. करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् । अकृतानि कर्तृभ्यो नादेयात्—अर्थ० २।१।१०-११ ।

५. अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत् । ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तोऽपहीनं दद्युः—अर्थ० २।१।१४-१५ ।

६. अर्थशास्त्रम् २।१ ।

७. अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातकौ वर्जयेत् । निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात्—अर्थशास्त्रम् २।१ ।

कृत्रिमनद्यवरोधकुल्यावृक्षारोपणादीनां व्यवस्था राज्येन कार्या।[१] ईदृशे सामाजिके कार्ये सर्वेषां साहाय्यम् अपेक्षितम् आसीत्। यदि व्यक्तिः स्वयं साहाय्यं कर्तुम् अशक्तः, तदा पशुद्वारेण धनद्वारेण वा साहाय्यम् आचरेत्। यदि स पुरुषः एवं न करोति, तदा तत्कार्यभागस्य सम्पूर्णः व्ययः ततो ग्राह्यः। कार्यसमाप्त्यनन्तरञ्च स लाभेन वञ्चितः कार्यः।[२] स्पष्टं यद् उत्पादनवृद्ध्यर्थं जनानां साहाय्यम् अनिवार्यम् आसीत्।

कूपतडागादीनाम् अन्येषां च कृष्युपयोगिनां वस्तूनां निर्माणं जनतया राज्येन च क्रियते स्म।[३] निर्माणकार्येण सहैव उत्पादनकार्यव्यापृतानां जनानां सुरक्षा अपि अवधेया आसीत्। जलस्थलमार्गाणां सुरक्षार्थं विशेषः प्रबन्धः आसीत्।[४] दुर्भिक्षम्, पशुः, नदीपूरः इत्यादिभ्यः उत्पन्नायाः परिस्थितेः प्रतीकारः जनैः राज्येन च क्रियते स्म। वर्षत्रयार्थम् अपेक्षितस्य अन्नस्य संचयं स्वयं राज्यं जनानां कृते करोति स्म।[५]

सामाजिकानां सर्वेषां सदस्यानां कृते लाभस्य यथोचिता व्यवस्था कथं कार्या इति वितरणविषये समस्या अस्ति। एतदर्थं वेतनम्, लाभः, कुसीदम्, दरिद्रसेवाम्, अन्यानि सामाजिकानि संघटनानि च प्रति आर्थिकसंस्थानाम् उत्तरदायित्वस्यापि प्रश्नः उदेति। जातकस्य अनाथपिण्डककथा एकम् आदर्शं प्रस्तौति, किन्तु तया कश्चित्सिद्धान्तः स्थापयितुं न शक्यते। वितरणविषये भारते पक्षद्वयम् आसीत्—नैतिका वैधानिकाश्च। नैतिकपक्षे ईदृशानां वातावरणानां निर्माणं क्रियते स्म, यत्र व्यक्तिः वैयक्तिकीं सम्पदं रक्षितुं प्रभवेत्। यदि तत्र सः असफलः भवति, तदा लोभादिवृत्तिवशीभूतः सन् सामाजिकान् नियमान् उल्लङ्घयति। तस्याम् अवस्थायां शासकेन विधेः पालनं कार्यते स्म।

---

१. अर्थशास्त्रम् २।१।

२. सम्भूय सेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः। व्ययकर्मणि च भागी स्यात्— अर्थ० २।१।२५-२६।

३. शुक्रनीति० १।३००-३०१; ४।६०-६१।

४. वल्लभैः कार्मिकैः स्तेनैरन्तपालैश्च पीडितम्।
शोधयेत् पशुसंघैश्च क्षीयमाणं वणिक्पथम्॥
(अर्थ० २।१।४६;)

चतुर्दण्डान्तरा रथ्याः। राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः— अर्थ० २।४; ३।१०।

५. धान्यानां संग्रहः कार्यो वत्सरत्रयपूर्तिदः।
तत्तत्काले स्वराष्ट्रार्थं नृपेणात्महिताय च॥
(शुक्र० ४।२१।२)

उपनिषदि सम्पूर्णं विश्वम् ईश्वरस्वरूपं कथितमस्ति। तत्र तावत्येव वैयक्तिकं स्वत्वं स्वीकृतं यावद् अन्येषाम् उपभोगतः अवशिष्टम्।[1] उपनिषत्सु मधुविद्या उपदिष्टा। तस्याः इदं तात्पर्यं यदेकः मनुष्यः मनुष्यान्तरीयसुखस्य साधनं भवेत्। परिवारः, ग्रामः, प्रान्तः, राष्ट्रम्, विश्वम् इत्यादितः पितृदेवलोकपर्यन्तं कल्याणभावनायाः उदय आवश्यकः। मनुष्यः स्वस्मिन् विराट्स्वरूपम् दृष्ट्वा इमां भावनां करोति यद् विश्वस्य सर्वेऽपि प्राणिनः स्वीयानि अङ्गान्येव। यदि कश्चिदपि प्राणी दुःखी भवति, तदा तद्दुःखं स्वीयमेव जानीयात्। अत एव "आत्मनः प्रतिकूलानि परेषां न समाचरेत्" इति ईदृशी उदात्ता भावना दर्शिता। अस्मिन्नवसरे विश्वं नीडकल्पं भवति–"यत्र विश्वं भवत्येकनीडम्।" अस्याम् आदर्शस्थितौ नियमानां राज्यस्य आर्थिकसंघटनादेश्च आवश्यकता न भवति। प्राणिमात्रे सहजभ्रातृत्वभावना उदेति।

परन्तु एषः भावः आदर्शभूत एव, व्यवहारक्षेत्रे तु नास्य कृते अधिकं स्थानम्। तदर्थम् आदर्शसमाजः अपेक्षितः। भारतीयाः तस्मिन् अपि समाजे आसन् यत्र शोषणं पीडनं विश्वासघातश्च आसीत्। स्त्री, धनम्, प्रभुत्वम् इत्येतद्विषयकसंघर्षेण मित्रमपि शत्रुः भवितुम् अशकत्। फलतः केवलम् आदर्शं पुरोधाय नियमानाम् अवहेलनं कर्तुं न युज्यते। तेषां नियमा अपि इदम् आदर्शं लब्धुमेव प्रवृत्ता आसन्। अत एव धार्मिकः आध्यात्मिकश्च तेषाम् आधार आसीत्।

भारतीये अर्थशास्त्रे वैयक्तिकी सम्पत्तिः स्वीकृता; किन्तु तस्याः लाभविषये नियन्त्रणं कृतम्। अतिरेकः विषमतायाः मूलम्। आधुनिका धनवादिनः अर्थशास्त्रिणः अतिरिक्तलाभवितरणविषयकं सिद्धान्तं न स्वीकुर्वन्ति। सम्पत्तिविकासस्य तेषां परम्परा एव अस्य पृष्ठभूमिः। फलतः ते समाजाद् विषमतां दूरीकर्तुं न अशकन्। भारतीयैः अर्थशास्त्रिभिः लाभस्य पञ्च भागाः स्वीकृताः। धर्माय, यशसे, अर्थाय, कामाय, स्वजनाय इत्येवं रीत्या पञ्चधा वित्तं तैर्विभाजितम्।[2] धर्मनाम्ना यज्ञनाम्ना च क्रियमाणेन वितरणेन वैयक्तिकी क्षमता विकसति, धार्मिकं च वातावरणं भवति। अत्र उपासनयज्ञीयकर्मकण्डादिकमेव धर्मपदेन न अभिप्रेतम्, अपि तु सम्पूर्णस्य सामाजिकजीवनस्य समावेश एव अत्र अभिप्रेतः धर्मः इति।

---

१. ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥
(ईशावास्योपनिषत्)

२. धर्माय यशसेऽर्थाय कामाय स्वजनाय च।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते॥

स्वजीवनयापनाय धनं योजयितुरधिको लाभः भवितुं शक्नोति। पुनः स्थितेः सन्तुलनं कर्तुं नियमः आसीद्यद् वर्षत्रयाय पर्याप्तं यावद् वित्तं भवेत्, ततः अधिकम् अवशिष्टं वित्तं सोमयागादिषु विनियोज्यम्।[1] यदि एवमपि विषमता तदवस्थैव, अथ च समाजस्य कश्चित् सदस्यः अत्यधिकधनवान्, तदा निश्चितमेव स सामाजिकान् नियमान् उल्लङ्घयति। तं चोरं मत्वा तस्य आयव्ययौ परीक्षणीयौ।[2] ईदृशाः मनुष्याः समाजे आदरं लब्धुं न शक्नुवन्ति।

मरणावसरे सम्पत्तिकर्म क्रियते। तदानीं पिता पुत्रं कथयति "त्वं ब्रह्म, त्वं यज्ञः, त्वं लोकः।" पुत्रः प्रतिवक्ति "अहं ब्रह्म, अहं यज्ञः, अहं लोकः।" अस्येदं तात्पर्यं यत् पुत्रः पितुः समक्षं प्रतिजानीते यद् अनधीतम् अधीतम्, अकृतं सम्पन्नम्, अपूर्णं पूर्णम्, अवशिष्टलोकस्य सम्पादनं च करिष्ये इति। यदि स एवं न करोति, तदा सः असाधुः। स उत्तराधिकारी भवितुं नार्हति। यदि उत्तराधिकारी समष्टिकल्याणमूलकपरम्पराणां पालनं न करोति, तदा स उत्तराधिकाराद् वञ्चनीयः। एवं रीत्या वैयक्तिकसम्पद्विषये नियमाः सन्ति। तेषां नियमानाम् अपरिपालकोऽसाधुः स्वीकृतः। असाधोः सम्पत्तिः आच्छेत्तव्याः।[3]

उत्तराधिकारकरपारिश्रमिकादिविषयकाणाम् अन्येषां च विविधानां नियमानां सत्त्वेन असाधारणाः धनिनः न भवन्ति स्म। नियमा आसन् यद् व्यक्तिः स्वजीवनयापनार्थं वर्षत्रयस्य कृते यावद्धनम् अपेक्षितं ततः अधिकं धनं सञ्चेतुं न शक्नोति। मनुष्यैः त्यागार्थं स्पर्धा क्रियते स्म। प्रत्येकं व्यक्तिः अहं व्यक्त्यन्तरापेक्षया अधिकं त्यागं करवाणि इति स्पर्धते स्म।[4] ब्राह्मणातिरिक्ताः सर्वे नागरिकाः राष्ट्रहितं व्यक्तिहितं च अनुरुध्य एव वर्षत्रयाय अपेक्षितं वित्तं सञ्चिन्वन्ति स्म।

---

१. यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥

(मनु० ११।७)

२. यावद् भ्रियेत् जठरं तावत् स्वत्वं हि देहिनाम्।
ततोऽधिकं यो मन्येत स स्तेनो दण्डमर्हति॥

३. योऽसाधुभ्यो अर्थमादाय साधुभ्यः सम्प्रयच्छति।
स कृत्वा प्लवमात्मानं संतारयति तावुभावपि॥

४. कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥
मनु० ४।७; याज्ञ० १।१२८।१२४; विष्णु० ५९।९-१०; वसिष्ठ० ८।१०; शंखः उद्धृतम् अपरार्केण, पृ० १८७।

किन्तु यदि ते उत्पादनवृद्धौ न चेष्टेरन्, तदा ते दण्ड्या आसन्।[1] दानस्य यज्ञीयविधीनां च सम्बन्धः अर्थशास्त्रनियमैः आसीत्। व्यक्तिः आर्थिकसञ्चयेन आदरं नालभत, अपि तु आर्थिकवितरणविषयकप्रयासेनैव व्यक्तिः आदरभाजनं भवतिस्म। उचितस्य आयस्य, उचितस्य कुसीदस्य, उचितस्य लाभस्य च स्थितिः यत्र समाजे स्यात्, तत्र व्यक्तिसमाजयोः परस्परं संघर्षो न भवति। भारतीयसमाजव्यवस्थायाः आर्थिक्यां व्याख्यायां क्रियमाणायाम् इदं सिद्ध्यति यत् कश्चिदपि मनुष्यः निरुद्योगः नासीत्। शारीरिकं मानसं वा श्रमं सर्वेऽपि अकुर्वन्। आयवेतनलाभविषये निर्धारितानां नियमानां समीक्षणे क्रियमाणे इदं परिज्ञायते यद् व्यक्तिः उत्पादनम् आधृत्य स्वीयं भागं लभते। सा उपयोगितानुसारं येन अनुपातेन उत्पादनं वर्धयति तेनैव अनुपातेन सा लाभभाग् अपि भवति। स लाभः तस्या सामाजिकावश्यकतानुसारम् अधिकः न्यूनश्च भवितुं शक्नोति।

इत्थम् उत्पादनविषयकाणां वितरणविषयकाणां च नियमानाम् एकीकरणे ज्ञायते यदेषां नियमानां पालने क्रियमाणे सामाजिकं वैषम्यं भवितुं न शक्नोति। प्राचीनभारते अस्य आदर्शस्य व्यवहारविषये अव्यवहारविषये च इतिहासेषु भूयांसि प्रमाणानि लभ्यन्ते। परन्तु सिद्धान्तविमर्शे तु अस्य आदर्शस्य सैद्धान्तिकता अस्वीकर्तुं न शक्या। अद्यतने वातावरणेऽपि तद्व्याख्या शक्या।

### उपभोगः

उपभोगसिद्धान्तेन च जीवनलक्ष्यस्य अनिवार्यः सम्बन्धोऽस्ति। धर्मेण कामेन मोक्षेण च सह अर्थस्य अस्ति सम्बन्धः। विभिन्नानां पुरुषार्थानां पारस्परिकसम्बन्धविषये च नास्ति मतैक्यम्—

धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।
अर्थ एवेह वा श्रेयः त्रिवर्ग इति तु स्थितिः॥
(मनु० २।२२४)

अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा (वशिष्ठ० १।१); एवं धर्मं चर्यमाणमर्थानुत्पद्यन्ते (आ० १।२०।३); "एषां समवाये पूर्वः पूर्वः गरीयान्। अर्थश्च राज्ञः। तन्मूलत्वाद् लोकयात्रायाः" (कामसू० १।२।१५-१६)।

---

१. धान्यानां संग्रहः कार्यो वत्सरत्रयपूर्तिदः।
तत्तत्काले स्वराष्ट्रार्थं नृपेणात्महिताय च॥
चिरस्थायी समृद्धानामधिको वापि चेष्यते।
(शुक्र० ४।२१।२)

"समं वा त्रिवर्गम् अन्योन्यानुबन्धम्"

(कौ० १।७।८)

अर्थव्यवस्थायां वैयक्तिकं स्वातन्त्र्यं पूर्णतया अस्ति मान्यम्, किन्तु ईदृशं स्वत्वं समुदायसापेक्ष्यम्। ईदृशश्च समुदायः परिवारादारभ्य राज्यं यावद्, अर्थाद् ईदृशे समुदाये परिवारतः राज्यपर्यन्तानां समावेशो भवितुं शक्नोति। धर्मशास्त्रेऽर्थशास्त्रे च परिवारः सामाजिकसंघटनतया आर्थिकसंघटनतया च स्वीकृतः। एवं स्थितौ पारिवारिकस्य कस्यापि सदस्यस्य आये न केवलं तत्सदस्यस्यैव अधिकारः, अपि तु सम्पूर्णस्य परिवारस्य।[१] कुलविषयेऽपि एवंविध एष नियमः प्रयोक्तुं शक्यते। एषा परम्परा ग्रामेभ्यः आरभ्य राज्यं यावद् विकासम् आयास्यति। अन्ततो मूलसिद्धान्त एवं भविष्यति यद् वैयक्तिकं स्वत्वं समाजं राज्यं च अपेक्षिष्यते। सामान्यतः कौटल्योऽपि इमामेव व्यवस्थां दर्शयति स्म—

"अपत्यदारान् मातापितरौ भ्रातॄन् अप्राप्तव्यवहारान् भगिनीः कन्याविधवाश्च अबिभ्रतः शक्तिमतो द्वादशपणो दण्डः। अन्यत्र पतितेभ्यः। अन्यत्र मातुः" (अर्थ० २।१।३४-३५)।

एतदेव शुक्रेणापि उक्तम्—"भूत्वा महाधनः सम्यक् पोष्यवर्गं तु पोषयेत्" (३।१९९) "सदेशः प्रवरः यत्र कुटुम्बपरिपोषणम्" (३।२६३)। वर्णाश्रमव्यवस्थया मनुष्यस्य सामान्यं स्वरूपं व्यज्यते। उपभोगस्य त्यागस्य विनिमयस्य प्रक्रिया अनयैव सम्बद्धा। अस्यामेव व्यवस्थायाम् उन्नतमात्राः आर्थिकसमृद्धेः सर्वस्वत्यागस्य च सम्यक् समन्वयः आसीत्। सर्वस्वत्यागी ब्राह्मणोऽपि अथ सञ्चिनुते। विद्यार्थिनः कृते यथा क्षणस्यापि महत्त्वम्, तथैव धनार्थिनः कणस्य महत्त्वम् इति प्रतिपादितम्। इदमपि जीवनस्य कृते अनिवार्यम्—

क्षणशः कणशश्चैव विद्यामर्थञ्च साधयेत्।
न त्याज्यौ तु क्षणकणौ नित्यं विद्याधनार्थिना॥

(शु० ३।१७०)

'भोग्य' इति शब्दः सम्पत्तिशब्दस्य पर्यायः अस्ति। एतेन स्पष्टं यद् उपभोग एव सम्पत्तेः उद्देश्यम्, न तु सञ्चयः। अस्मिन् उपभोगे उक्तसमाजसापेक्षताविषयकाः पुरुषार्थादिविषयकाश्च नियमाः प्रवर्तन्ते—

सुभार्यापुत्रमित्रार्थं हितं नित्यं धनार्जनम्।
दानार्थञ्च विना ह्येतैः किं धनैश्च जनैश्च किम्॥

(शु० ३।१७१)

---

१. नारद० ५।४१।

संसृतौ व्यवहाराय सारभूतं धनं स्मृतम्।
अतो यतेत तत्प्राप्त्यै नरः सूपायसाहसैः॥
सुविद्यया सुसेवाभिः शौर्येण कृषिभिस्तथा।
कौसीदवृद्धया पण्येन कलाभिश्च प्रतिग्रहैः॥
(शु० ३।१७६-१७७)

एतद्विषये लिखितव्यवहारविषये यं स्वरूपं शुक्रेण उपस्थापितमस्ति तत् प्रचलति अद्यत्वेऽपि–

यथा न जानन्ति धनं सञ्चितं कति कुत्र वै।
आत्मास्त्रीपुत्रमित्राणि सलेखं धारयेत् तथा॥
नैवास्ति लिखिताद् अन्यत्स्मारकं व्यवहारिणाम्।
न लेख्येन विना कुर्याद् व्यवहारं सदा बुधः॥
(शु० ३।१८१-१८२)

कीदृशः वेशभूषादिविषयक आचारः आसीद् इत्येतद्विषये स्पष्टीकरणम् अस्ति अपेक्षितम्। मितव्ययितायाः सात्त्विकतायाश्च प्रशंसायाः एतत्तात्पर्यं यद् धनस्य उचितः प्रयोग आसीत्।

मोक्षप्राप्त्यर्थं ये आश्रमाः व्यवस्थापिताः, तत्र भौतिकवस्तूनाम् उपभोगस्य त्यागः अनिवार्यः। तानेव मुमुक्षुजनविषयिकां व्यवस्थां पुरस्कृत्य पाश्चात्त्यैः विद्वद्भिः उपभोगविषयकं भारतोयम अर्थशास्त्रम् उपेक्षितम्। किं बहुना, ब्राह्मणानामपि बुद्धेन यद्वर्णनं प्रस्तुतं तदालोच्य इदं वक्तुं शक्यते यत् साधारणस्य नागरिकस्यापि जीवनम् अत्युच्चम् आसीत्। केचन नागरिकाः करमुक्ताः अपि आसन्, येषाम् उत्पादकधनेन सम्बन्धो नासीत् "ब्राह्मणपरिव्रजितबालवृद्धव्याधितशासनहरगर्भिण्यो नावध्यक्षसमुद्राभिः तरेयुः" (कौटल्य० २।२८।२४)।

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः।
ब्राह्मणाः लिङ्गिनश्चैव न दाप्यास्तारिकं तरेः॥
(मनु० ८।४०७)

राजा षष्ठं धनं हरेद् अन्यत्र ब्राह्मणात्।
(वशि० १। ४२)

म्रियमाणोऽपि आददीत न राजा श्रोत्रियात् करम्।
(मनु० ७।१३३)

अदायादकं राजा हरेत्। अन्यत्र श्रोत्रियद्रव्यात्।
(कौ० पृ० १६१)

अशोकेन कलिङ्गलेखे ब्राह्मणः निर्धनः, परन्तु उच्चजातिगुणविशिष्टः इति प्रतिपादितम्। परन्तु उपभोगाय यादृशी आवश्यकता देशे आसीत् ततोऽप्युत्पादनक्षमता स्वीकर्तुं शक्यते। उपभोग एव हि धनस्य उद्देश्यः–

उपभोगाय च धनं जीवितं येन रक्षितम्।
न रक्षिता तु भूर्येन किं तस्य धनजीवितेषु॥
(शु० ३।५१९)।

उत्पादनविषये यथा भूमेः महत्त्वं शुक्रेण स्वीकृतम्, तथैव तत्र श्रमस्यापि कौटल्येन प्रतिपादितम्–"कर्मकरस्य कर्मसम्बन्धम् आसन्ना विद्युः। यथा संभाषितं वेतनं लभेत" (कौ० ३।१३।३७-३८)। उत्पादनविषये तृतीयं साधनं धनमस्ति।[1] इत्थञ्च धनं भूमिः श्रमश्च इति त्रयम् उत्पादने मुख्यम्। धनस्य योजकेन सह अनिवार्यः सम्बन्धः; फलतः उत्पादने येषां चतुर्णाम् (धनम्, भूमिः, श्रमः, योजकः) आवश्यकता, ते उपभोगस्य स्तरं प्रस्तुवन्ति। शुक्रनीतौ वृत्तेः यत्स्वरूपं प्रस्तुतम्, तेन आर्थिकजीवनं भवति प्रभावितम्–

कृषिस्तु चोत्तमा वृत्तिर्या सरिन्मातृका मता।
मध्यमा वैश्यवृत्तिश्च शूद्रवृत्तिश्चाधमा॥
याच्ञाधमतरा वृत्तिर्हि उत्तमा सा तपस्विषु।
क्वचित् सेवोत्तमा वृत्तिर्धर्मशीलस्य नृपस्य च॥
अध्वर्यवादिकं कर्म कृत्वा या गृह्यते भृतिः।
सा किं महाधनायैव वाणिज्यमलमेव किम्॥
राजसेवां विना द्रव्यं विपुलं नैव जायते।
(शु० ३।२६४-२६६)

स्पष्टं यद् उत्पादने भूमेः सर्वाधिकं महत्त्वम्; कृषेः सुरक्षा च अवश्यं स्यात्। कृषकाणाम् उपकरणानि सुरक्षितानि भवेयुः। तेभ्यश्च आवश्यकं सौविध्यं देयम्–

"नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः। निराश्रयत्वाद् ग्रामाणां क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविशिष्टद्रव्यधान्यरसवृद्धिर्भवतीति" (कौ० २।१।४२)।

---

१. कौ० ३।६; रामा० २।१००।५५-५६; शुक्र० १।३६१-६२।

ग्रामीणानां सैनिकेभ्यः कीदृशोऽपि त्रासः न स्यात्—

नृपकार्यं विना कश्चिन्न ग्रामे सैनिको विशेत् ।
तथा न पीडयेत् कुत्र कदापि ग्रामवासिनः ॥
सैनिकैर्न व्यवहरेन्नित्यं ग्राम्यजनोऽपि च ।
युद्धक्रियां विना सैन्यं योजयेन्नान्यकर्मणि ॥
( शु० ४।१३२४-१३२६ )

कथमपि क्षेत्रस्य दुरुपयोगो न कार्यः। तस्यैव क्षेत्रं यः कृषेत्—"करदेभ्यः कृत-क्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत्। अकृतानि कर्तृभ्यो नादेयात्" (कौ० २।१।१०-११)। अरण्यभूमिरपि कृष्यर्हा कर्तुं शक्यते।

'स्थाणुच्छेदस्य केदारमाहुः शाल्यवतो मृगम्" ( मनु० ९।४४ )। ऊषरभूमौ अरण्यभूमौ ईदृश्यां वा भूमौ यस्याः कश्चिदुपयोगः न क्रियते; कृषिं कुर्वतः कृषकस्य विशेषसौविध्यानि दीयन्ते स्म। कृष्युपकरणानां व्यवस्थापनं राज्यस्य कर्त्तव्यम् आसीत्।[1] उत्पन्नवस्तूनां कृते आपणस्य व्यवस्था[2], उत्पादनानुसारं मूल्यव्यवस्था चेत्यादिविषयकाः नियमाः व्यवस्थिता आसन्। "अकृषताम् आच्छिद्य अन्येभ्यः प्रयच्छेत्" इति कौटल्यस्य सामान्यः सिद्धान्तः। राज्यकार्यविनियुक्तैः सौविध्यम् उपलब्धम् आसीत्—

"सहोदकमाहार्योदकं वा सेतुं बन्धयेत्। अन्येषां वा बध्नतां भूमिमार्ग-वृक्षोपकरणानुग्रहं कुर्यात्। पुण्यस्थानारामाणां च। संभूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः। व्ययकर्मणि च भागी स्यात्। न चांशं लभेत" ( कौ० २।१।२२-२७ )।

भूमेः वास्तविके उपयोगे जनशक्तिः उपेक्षिताऽस्ति। जनसंख्यायाः वृद्धेः समस्या न तावती मुख्या, यावती अस्याः उचितोपयोगस्य। फलतः जनसंख्यायाः

---

१. "यः शाखिनां गर्तदाहो गोऽस्थिकृशकृद्भिः काले दौहृदञ्च प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत्" (कौ० पृ० ११७); "अकृष्यायां भूमौ पशुभ्यो विनीतानि प्रयच्छेत्" (अर्थ० २।२।१); "तुषारपायनमूष्णशोषणञ्च सप्तरात्रादि इति धान्यबीजानाम् त्रिरात्रं वा कोशीधान्यानां मधुघृतसूकरवसाभिः सकृद्युक्ताभिः काण्डबीजानां छेदलेपो मधुघृतेन कन्दानाम् अस्तिबीजानां सकृद् आलेपः" ( पृ० १७० )।

२. "आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत्" ( कौ० २।१।२१ )।

वृद्धेः उचितविनियोगस्य च समस्या अस्ति प्रधाना। "अपत्यार्थं स्त्रियः" अस्य सिद्धान्तस्य समर्थनम् "प्रजायै गृहमेधिनाम्" इति अनेनापि भवति। भूमिं जनसंख्याञ्च अर्थशास्त्रम् एवं प्रस्तौति—

"दुर्गापाश्रया वा भूमिरिति। पुरुषापाश्रया श्रेयसी। पुरुषवद्धि राज्यम्। अपुरुषा गौर्वन्ध्येव किं दुहीत।"

'तत्रापि बहुकुण्ठाल्पशूरयोरल्पशूरं श्रेयः। शूरेषु हि युद्धम्। अल्पाः शूरा बहून् शूरान् भञ्जन्ति। ते भग्नाः स्वसैन्यावघातिनो भवन्ति" इत्याचार्याः, नेति कौटल्यः—"कुण्ठा बहवः श्रेयांसः स्कन्धविनियोगादनेकं कर्मकुर्वाणाः स्वेषामपाश्रया युद्धे। परेषां दुर्धर्षा विभीषणाश्च। बहुषु हि कुण्ठेषु विनयकर्मणा शक्यं शौर्यमाधातुम्; न त्वेवाल्पेषु शूरेषु बहुत्वम्" इति।

## सामान्यविवेचनम्

अमरकोषे धनस्य एते पर्याया उक्ताः—"द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु। हिरण्यं द्रविणं द्युम्नमर्थं रयि विभवा अपि"। तस्यां सम्पदि धनशब्दः प्रयुक्तोऽस्ति या पुनरुत्पादने क्षमा ( हरिवंशपुराणे ७९।५५ )।

स्वस्वरूपेऽर्थे धनशब्दः प्रयुक्तः। एतानि प्रयोजनानि आलोच्य 'कैपिटल' इति व्यवह्रियमाणेऽर्थे प्रयोक्तुं शक्यते। अमरकोषोक्तेषु धनपर्यायेषु द्रव्यशब्दः वित्तशब्दश्च अर्जितायां सम्पदि, स्वापतेयशब्दश्च वैयक्तिक्यां सम्पदि प्रयुज्यन्ते; हिरण्यशब्दः स्वर्णे, अर्थशब्दः सञ्चितायां या अर्जितास्ति। सम्पदि श्रीर्लक्ष्मीः विभवः शब्दाः समृद्धौ, भोगशब्दः उपभोगार्थायां सम्पदि, व्यवहार्यशब्दश्च विनिमयशीलायां सम्पदि प्रयुज्यन्ते। पुरुषार्थचतुष्टये अर्थशास्त्रसम्बन्धे च अर्थशब्दः प्रचुरं प्रयुज्यन्ते। 'गुड्स' इति 'वेल्थ' इति च व्यवह्रियमाणयोः अर्थयोः अपि अर्थधनशब्दौ प्रयोक्तुं शक्येते।

आर्थिक्यः क्रियाः मूलभूताः सन्ति, किन्तु शक्तिसापेक्षतायाः स्थाने तासाम् आध्यात्मिकतया स सम्बन्ध एवमर्थं क्रियते, येन ताः स्वयं व्यक्तेः इच्छया सञ्चालिताः स्युः। आर्थिकविकासार्थम् अपेक्षितार्थानां सर्वेषां साधनानां विकासः समाजतः व्यक्तितश्च भवेत्, एवमर्थं राज्यशक्तिः आध्यात्मिकशक्तिश्च इत्येतद् द्वयमपि आश्रितम् —

इष्टापूर्तौ तु कर्तव्यौ ब्राह्मणेन प्रयत्नतः।
इष्टेन लभते स्वर्गं पूर्तेन मोक्षमवाप्नुयात्॥

एकाहमपि कर्त्तव्यं भूयिष्ठमुदकं शुभम्।
कुलानि तारयेत् सप्त यत्र गौर्वितृषा भवेत्॥
वापीकूपतडागानि देवतायतनानि च।
पतितान्युद्धरेद् यस्तु स पूर्तफलमश्नुते॥

( शङ्खलिखितस्मृतिः १-४ )

"सहोदकमाहार्योदकं वा सेतुं बन्धयेत्। अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्"।

आध्यात्मिकतया सह सम्बन्धयोजनं कथमपि भाग्यवादः कथयितुं न शक्यते। "कर्मणैव कारणं चात्र सुगतिं दुर्गतिं प्रति" एष एव सिद्धान्तो मुख्यः।

विनिमयः

मूल्यनिर्धारणे शुक्रनियमाः अति महत्त्वपूर्णाः—

येन व्ययेन संसिद्धः तद्व्ययस्तस्य मूल्यकम्।
सुलभासुलभत्वात् च अगुणत्वगुणसंश्रयैः॥

( शु० २।३४८ )

यथा कामात् पदार्थानामर्घं हीनाधिकं भवेत्। २।३४९।
न मूल्यं गुणहीनस्य व्यवहाराक्षमस्य च। ४।२१६।
रत्नभूतं तु तत्तत्स्याद् यद्यदप्रतिमं भुवि। ४।२१५।
यथादेशं यथाकालं मूल्यं सर्वस्य कल्पयेत्। ४।२१५।

एभिः श्लोकैः शुक्रेण मूल्यनिर्धारणविषयकः आधुनिकः सिद्धान्तः उत्प्रेक्षितः। तन्मतानुसारम् उपयोगिताम्, सुलभताम्, दुर्लभताम्, अप्रतिमताम्, गुणवत्ताम्, देशकालं च आश्रित्य मूल्यनिर्धारणं भवति। कौटल्येनापि एतदनुसारमेव मूल्यनिर्धारणं व्यवस्थापितम्—

"पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्ग्वर्घान्तरं प्रियाप्रियताञ्च विद्यात्। तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान्" ( २।१६।१-२ )।

मनुस्मृतौ उत्पादनविषये मूलधनस्य निर्धारणम् इत्थं व्यवस्थापितम्—

क्रयविक्रयमध्वानं भक्तञ्च सपरिव्ययम्।
योगक्षेमञ्च सम्प्रेक्ष्य वणिजो दापयेत् करान्॥

( मनु० ७।१२७ )।

आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ।
विचार्य सर्वपण्यानां कारयेत् क्रयविक्रयौ ॥

( मनु० ८।४०१ )

अत्र देशकालयोरपि आवश्यकं योजनम्। याज्ञवल्क्यस्यापि इत्थमेव व्यवस्था—

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम्।
अर्घोऽनुग्रहकृत्कार्यः क्रेतुः विक्रेतुरेव च ॥

( याज्ञ० २।२५३ )

आन्तरिकाणि बाह्यानि च वाणिज्यानि स्वीकृतानि। विनिमये स्थानीयानाम् आपणानां विशेषं महत्त्वम् आसीत्, यतः श्रेण्यादिविषयकेषु राज्येन हस्तक्षेपः न क्रियते स्म। अतः आपणानां संघटने व्यवस्थायां च स्थानीयजनमतस्य प्रभावः अवश्यंभाव्यासीत्। आपणानां स्वातन्त्र्यम् आसीत्। यद्वणिक्शोपणमपि कर्तुं शक्नुयाद्, अर्थात् केवलं लाभमेव उद्दिश्य वणिग् अन्याय्यं व्यवहर्तुं नालम्। वैयक्तिक्याः स्थानीयाः वा स्वतन्त्रताया इदमेव लक्ष्यम् आसीद् यदुत्पादनस्य उपभोगस्य च जनकल्याणे विनियोजनम्। एते यथा जनकल्याणे उपयुक्ताः स्युः, तथैव आसीत् प्रयत्नः। एतत्प्रतिकूलम् आचरणे राज्यं हस्तक्षेपं कर्तुं दण्डञ्च दातुम् अशकत्। "वैदेहकानां वा संभूय पण्यमारुन्धताम् अनर्घेण विक्रीणतां वा सहस्रं दण्डः" ( अर्थ० ४।२।२० )।

अर्थशास्त्रानुसारं न लाभः, अपि तु जनकल्याणं विनिमयस्य मुख्यं ध्येयम् आसीत्। यदि कस्यचिद् वस्तुनः उत्पादनम् अधिकं भवति, तदा तस्य मूल्यम् अपकृष्यते। अतः अस्यां स्थितौ राज्यस्य कर्त्तव्यं यद् राज्यं सर्वाण्यपि वस्तूनि स्वाधिकार्ये संगृह्य पूर्तौ च नियन्त्रणं कृत्वा तेषां मूल्यवृद्धिं कुर्वीत। मूलधनस्य प्राप्तौ मूल्यम् अल्पं स्थिरं वा कुर्यात्। फलतः उत्पादकस्य हानिर्न भवति। अन्ततश्चाल्पमूल्येन वस्तूनि प्राप्यन्ते—"यच्च पण्यं प्रचुरं स्यात् तदेकीकृत्यार्घम् आरोपयेत्। प्राप्तेऽर्घे वार्घान्तरं कारयेत्" ( अर्थ० २।१६।३-४ )। स्वदेशोत्पन्नवस्तुभ्यः परदेशोत्पन्नवस्तुषु एवं भेदः यत् स्वदेशोत्पन्नवस्तूनां विक्रयस्य व्यवस्थामेकत्र स्थाने कुर्यात्; परदेशोत्पन्नवस्तूनां च अनेकत्र "स्वभूमिजानां राजपण्यानाम् एकमुखं व्यवहारं स्थापयेत्" अर्थात् तेन यदि जनानां कष्टं भवति, तदा जनकल्याणमेव आदर्तव्यम्—"उभयञ्च प्रजानामनुग्रहेण विक्रापयेत्। स्थूलमपि च लाभं प्रजानाम् औपघातिकं वारयेत्" (२।१६।७।८)। "बहुमुखं वा राजपण्यं वैदेहकाः विक्रीणीरन्। भेदानुरूपञ्च वैधरणं दद्युः" (२।१६।१०-११)। विदेशीयवणिग्भिः तानि सर्वाणि सौविध्यानि अधिगतानि यानि अद्यापि राष्ट्रान्तरीयवाणिज्यतुलनायां नूतनानि प्रतीयन्ते—

"परभूमिजं पण्यम् अनुग्रहेणावाहयेत्। नाविकसार्थवाहेभ्यश्च परिहारम् आयतिक्षमं दद्यात्। अनभियोगश्चार्थेषु आगन्तूनाम् अन्यत्र सभ्योपकारिभ्यः" (२।१६।१५-१७)।

एतैः सौविध्यैः सह कौटल्यः एतद्विषयेऽपि अवदधाति यदेषां दुरुपयोगो मा भूत्। एतद्विषयकं विवेचनं तेनेत्थं प्रस्तुतम्—"संस्थाध्यक्षः पण्यसंस्थायां पुराणभाण्डानां स्वकरणविशुद्धानाम् आधानं विक्रयं स्थापयेत्। तुलामानभाण्डानि चावेक्षेत पौतवापचारात्" (४।२।१-२)।

व्यापारिणो यदि वस्तूनां पूर्त्तौ नियन्त्रणं विधाय तानि च वस्तूनि प्रकाशपथं नानयन्ति, पुनः कञ्चित्कालमतीत्याधिकेन मूल्येन विक्रीणीयुः, तर्हि ते दण्ड्याः—"वैदेहकानां वा संभूय पण्यमारुन्धतामनर्घेण विक्रीणतां वा सहस्रदण्डः" (४।२।२०)। अनुचितलाभजन्यदोषं वारयितुमेव आवश्यको नियमोऽस्ति यद् वणिजामेकैकदिवसीयलाभस्य मानक्रमो द्रष्टव्यो भवेत्। राजकीयव्यापारेऽथ च विदेशीयव्यापारे जनकल्याणं ध्यानपथं नीत्वैवंरूपा व्यवस्था कृताऽस्ति—

"क्रेतृविक्रेत्रोरन्तरपतितमादायादन्यद् भवति। तेन धान्यपण्यनिचयांश्चानुज्ञाताः कुर्युः। अन्यथा निचितमेषां पण्याध्यक्षो गृह्णीयात्। तेन धान्यपण्यविक्रये व्यवहरेतानुग्रहेण प्रजानाम्। अनुज्ञातक्रयादुपरि चैषां स्वदेशीयानां पण्यानां पञ्चकं शतमाजीवं स्थापयेत्। परदेशीयानां दशकम्। ततः परमार्घं वर्धयतां क्रये विक्रये वा भावयता पणशते पञ्चपणाद्द्विशतो दण्डः। तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता। सम्भूयक्रये चैषामविक्रीतेतान्यं संभूयक्रयं दद्यात्। पण्योपघाते चैषामनुग्रहं कुर्यात्। पण्यबाहुल्यात्पण्याध्यक्षः सर्वपण्यानेकमुखानि विक्रीणीत। तेष्वविक्रीतेषु नान्ये विक्रीणीरन्। तानि दिवसवेतनेन विक्रीणीरन्ननुग्रहेण प्रजानाम्। देशकालान्तरितानां तु पण्यानाम्।

प्रक्षेपं पण्यनिष्पत्तिं शुल्कं वृद्धिमवक्रयम्।
व्ययानन्यांश्च संख्याय स्थापयेदर्घमर्घवित्॥

(अर्थ० ४।२।२५-३९)

स्पष्टतः उपभोक्तुर्महत्त्वं सर्वमान्यं स्वीकृतमस्ति। वस्तुविक्रये शुद्धवस्तूनि अपद्रव्यमेलनम् तुलामानमित्यादिविषये राज्यस्य विशेषदायित्वमासीत्।[1] वैध-

१. मनु० ६।२८६-९१; याज्ञ० २।२६६; २।२४५-४६; विष्णु० ५।१२४।

प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥

(मनु० ६।२५७)

व्यापारे यथासम्भवं साहाय्यदानं राज्यस्य कर्त्तव्यमस्ति। एतदर्थं राज्यपक्षत आर्थिकं यातायातादिसम्बन्धि च साहाय्यं प्राप्यते स्म। शुल्कस्याधारः—

राष्ट्रपीडाकरं भाण्डमुच्छिन्द्यादफलञ्च यत्।
महोपकारमुच्छुल्कं कुर्याद् बीजं तु दुर्लभम्॥
(अर्थ० २।२१।३९)

अतो नवपुराणानां देशजातिचरित्रतः।
पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः॥
(अर्थ० २।२३।१५)

वणिग्भिः वस्त्वागाराणि राज्यतः उपलब्धान्यासन्। विदेशीयवाणिज्यं सर्वविधैः साधनैः प्रोत्साह्यते स्म। "नाविकसार्थवाहेभ्यः परिहारम् आयतिक्षमं दद्यात्"। आयातनिर्यातविषयकेषु स्वभूमिजपरभूमिजवाणिज्यादिविषयकेषु च विधिनिषेधेषु सन्तुलनं राज्येन अवश्यं कर्त्तव्यम् आसीत्। एवंविधसन्तुलनाय राज्यीयं वस्त्वागारम् आवश्यकं स्वीकृतम्। कौटल्यसोमदेवसूरिभिः आचार्यैः एतद्-विषये व्यवस्था दर्शिता अस्ति। शुक्रोक्ता व्यवस्था इत्थम्—

धान्यानां सङ्ग्रहः कार्यो वत्सरत्रयपूर्तिदः।
तत्तत्काले स्वराष्ट्रार्थं नृपेणात्महिताय च॥
चिरस्थायी समृद्धानामधिको वापि चेष्यते।
सुपुष्टं कान्तिमज्जातिश्रेष्ठं शुष्कं नवीनकम्॥
ससुगन्धवर्णरसं धान्यं संवीक्ष्य रक्षयेत्।
सुसमृद्धं चिरस्थायी महार्घमपि नान्यथा॥
विषवह्निहिमव्याप्तं कीटजुष्टं न धारयेत्।
निःसारतां नहि प्राप्तं व्यये तावन्नियोजयेत्॥
व्ययीभूतं तु यद् दृष्ट्वा तत्तुल्यं तु नवीनकम्।
गृह्णीयात् सुप्रयत्नेन वत्सरे वत्सरे नृपः।
औषधीनाञ्च धातूनां तृणकाष्ठादिकस्य च॥
मन्त्रशास्त्राग्निचूर्णभाण्डादेर्वाससां तथा।
यद्यच्च साधकं द्रव्यं यद्यत्कार्ये भवेत् सदा॥

संग्रहस्तस्य तस्यापि कर्त्तव्यः कार्यसिद्धिदः ।
संरक्षयेत् प्रयत्नेन संगृहीतं धनादिकम् ॥
(शु० ४।१४०-१४७)



# १४

# श्रमः

देशस्य महत्यामार्थिकसमृद्धौ प्राकृतिकस्रोतांसि इव श्रमशक्तिरपि कारणम् अस्ति। खनिः, अरण्यम्, भूः, नदी, पशुः, पक्षिणः वृक्षाश्चेत्यादिभिः सह देशस्य जनशक्तिः सन्तुलिता आसीत्। श्रमिकाणां शिल्पिनां च उद्योगादिषु महत्त्वपूर्णं स्थानम् आसीत्। तेषां विषये सामाजिकाः राज्यसम्बन्धिनश्च निश्चिता नियमा अपि आसन्। कुशलाः श्रमिकाः देशाद् देशान्तरं गन्तुं स्वतन्त्राश्च आसन। अत एव कांश्चिद् उचितान् पणान् आधृत्य अनुबन्धकरणे उत्पादने साहाय्यकरणे च तेषां कृते कोऽपि प्रतिबन्धः नासीत्। वर्णव्यवस्थया श्रमविशेषेषु समुदायविशेषाणाम् एकाधिकारः आसीत्। उत्पादनेन उपभोगेन च समम् उत्पादनशक्तीनां समन्वयेन वृत्तिहीनता नासीत्। आवश्यकतानुसारं श्रमस्य पूर्तिरासीत्। अत एव कस्यापि श्रमस्य वैयर्थ्यं नासीत्। यतः उत्पादनम् आर्थिकोपभोगेनैव सामाजिकेन विकासेन विधिना च सम्बद्धम् आसीत्। श्रेणीविभागेन जातिविभागेन च श्रमस्य संरक्षणं संवर्धनम् उचिता प्रतिष्ठा च आसीत्।

व्यापकतया सेवकशब्दस्य प्रयोगे क्रियमाणे राजापि श्रमिक एव आसीत्। यतः स जनानां वेतनभोगी सेवकः कथितोऽस्ति। राज्ञः अनुबन्धः तथैव आसीत्, यथा सेवकस्वामिनौ परस्परम् अनुबन्धं कुरुतः। अनुबन्धनियमानाम् उल्लङ्घने राज्यं हस्तक्षेपं करोति स्म। कस्याप्यनुबन्धस्य राज्येन स्वीकृतौ सत्यामेव स प्रामाणिको मन्यते स्म।[1] वेतनवितरणस्य कृते तिथिरपि निश्चिता आसीत्। श्रमिकाणां न्यूनतमवेतनस्य सीमापि आसीद् निश्चिता। अनेन न्यूनतमवेतनेन सहैव तेषां न्यूनतमानाम् आवश्यकतानामपि सन्तुलनं क्रियते स्म। आवश्यकतया सहैव कार्यं यदुत्तमं कियति च समये भवति इत्यादिकमपि अवधेयम् आसीत्। कार्यस्य समयो निश्चितः आसीत्।[2] कार्यसमयेन सहैव प्रतिदिनं प्रतिपक्षं च अवकाशसमयोऽपि निश्चित आसीत्। अवकाशदिनम् अवकाशसमयश्च श्रमिकाणां विभागानुसारम् आस्ताम्। श्रमिकाणाम् अनेके वर्गाः आसन्। तेषां कृते पृथक् पृथक् सौविध्यान्यपि आसन्।

---

१. शुक्र० २, ३ अध्यायौ।

२. तदेव।

गृहभृत्याय दिने घण्टात्रयस्य रात्रौ च घण्टानवकस्य अवकाशो दीयते स्म। इतोऽप्यन्ये रुग्णावकाशाः आकस्मिका अवकाशाश्च आसन्। अवसरविशेषेषु अवकाशः निश्चितः आसीत्। सार्धवर्षपञ्चकं येन कार्यं कृतं भवेत्, तादृशाय भृत्याय अतिरिक्तं मासत्रयस्य वेतनं पुरस्कारतया दीयते स्म। वर्षं यावद् येन कार्यं कृतं भवेत्, तेन भृत्येन पञ्चदशदिनात्मकः वैतनिकः अवकाशः अलभ्यत। चत्वारिंशद् वर्षाणि यावद् येन सार्वजनिकं कार्यं कृतं भवेत्, स आजीवनं वेतनार्धं लभते स्म। यदि सेवां कुर्वन्नेव कश्चित् म्रियेत, तदा तस्य परिवाराय तदीय-वेतनार्धम् अदीयत; यावत्तस्य पुत्रः कार्यक्षमः न भवेत्। कुशलैः श्रमिकैः वेतनस्य अष्टमांशः पुरस्कारतया प्रतिवर्षं प्राप्यत। कार्यं कुर्वत एव श्रमिकस्य यदि आकस्मिकः मृत्युः स्यात्, तदा तदीयपरिवारस्य पोषणम् आवश्यकम् आसीत्। स्वप्रतिनिधिं स्थापयित्वा वर्षं यावत् श्रमिकः अवकाशं ग्रहीतुम् अशकत्।[१] ईदृशी व्यवस्था अन्यत्रापि निर्दिष्टा अस्ति ( अर्थशास्त्रम् ३।१२ )।

---

१. भृत्यानां गृहकार्यार्थं दिवा याम समुत्सृजेत्।
निशि यामत्रय नित्यं दिने भृत्येऽर्धयामकम्॥
तेभ्यः कार्यं कारयीत ह्युत्सवार्हैर्विना नृपः।
अत्यावश्यं तूत्सवेऽपि हित्वा श्राद्धदिनं सदा॥
पादहीनां तु भृतिं त्वार्ते दद्यात् त्रैमासिकं ततः।
पञ्चवत्सरभृत्ये तु न्यूनाधिक्यं यथा तथा॥
षाण्मासिकीं तु दीर्घार्ते तदूर्ध्वं न च कल्पयेत्।
नैव पक्षार्धमार्तस्य हातव्याल्पापि वै भृतिः॥
शत्ं-त्सरोषितस्यापि ग्राह्यः प्रतिनिधिस्ततः।
सुमहद्गुणिन त्वार्तं भृत्यर्धं कल्पयेत् सदा॥
सेवां विना नृप· पक्षं दद्याद् भृत्याय वत्सरे।
चत्वारिंशत् समानीताः सेवया येन वै नृपः॥
ततः सेवां विना तस्मै भृत्यर्धं कल्पयेत् सदा।
यावज्जीवं तु तत्पुत्रेऽक्षमे बाले तदर्धकम्॥
भार्यायां वा सुशीलायां कन्याया वा स्वश्रेयसे।
अष्टमांशं पारितोष्यं दद्याद् भृत्याय वत्सरे॥
कार्याष्टमांशं वा दद्यात् कार्यं द्राग्यधिकं कृतम्।
स्वामिकार्ये विनष्टो यस्तत्पुत्रे तद्भृतिं वहेत्।
यावद् बालोऽन्यथा पुत्रगुणान् दृष्ट्वा भृतिं वहेत्॥
षष्ठांशं वा चतुर्थांशं भृतेर्भृत्यस्य पालयेत्।
दद्यात्तदर्धं भृत्याय द्वित्रिवर्षेऽखिलं तु वा॥

( शुक्र० २।३९७-४०७ )

श्रमिकाणां सुरक्षा यथाकथमपि अवश्यं कर्त्तव्या इति कौटल्येन प्रतिपादितमस्ति। असहायस्य अनाथस्य श्रमिकस्य तत्परिवारस्य च सुरक्षां समाजः राज्यं च कुरुतः स्म। यावत् तत्परिवारस्य सदस्यः वयस्थः न भवेत्, तावत् तदीया सम्पत्तिः ग्रामाधिकारिणा रक्षणीया आसीत्। स्वपरिवारस्य सम्यग् व्यवस्थाम् अकृत्वा एव यदि कश्चित् संन्यासी भवेत्, तदा स दण्डनीयो भवति स्म। संन्यासावस्थायां सत्यां संन्यासं गृह्णीयात् स्वसम्पदश्च समुचितां व्यवस्थां कुर्यात्। एवं यः न कुर्यात्, स दण्डभाग् भवति स्म।[१] ग्रामेऽशान्ति श्रमविकासे च बाधां कुर्वन्तः जनाः निःसारणीया आसन्। शुक्रः कथयति यद्राजाज्ञां विना कश्चिदपि सैनिकः ग्रामं प्रवेष्टुं नालम्।

वैदिककालतः विकासम् आसादयन्ती भारतीयसभ्यता स्मृतिकालपर्यन्तं सुस्पष्टा परिवर्तिता च अभूत्। यद्यपि तस्याः मूलं स्थिरम् आसीत्। वैदिकसमाजे दासाः आसन्, न सेवकाः। दासाः समाजान्तराद् उपलभ्यन्ते स्म। तेषाम् उपलब्धौ कारणं किमपि भवेत्। यदा आर्थिकाः वर्गाः स्फुटा अभवन्, तदा स्वामिनः सेवकाश्च अभूवन्। तेषां नियमा अपि कल्पिताः। एष विषयः धर्मशास्त्रैः विशेषतः प्रकाशम् आयाति। तत्र सेवां कुर्वन्तः शुश्रूषकाः कथिताः। ते शुश्रूषकाः पवित्राः अपवित्राश्चेति द्विविधा आसन्।[२] सम्मार्जनम्, द्वारादीनाम् अन्येषां च मलिनस्थानानां स्वच्छीकरणम्, काष्ठाहरणम्, मूत्रपुरीषादीनाम् अपनयनम्, स्वामिनः अङ्गमर्दनम् इत्यादीनि कार्याणि अपवित्रशुश्रूषकाणाम् आसन्। अतोऽन्यानि कार्याणि पवित्राणि स्वीकृतानि। अपवित्रकार्याणि दासाः अकुर्वन्। दासः वैधानिकदृष्ट्या सेवकः ( Employee ) न स्वीकृतोऽस्ति। अत एव स स्वामिना सह अनुबन्धं कर्तुं न शक्नोति, न वा सम्पदम् अर्जयितुं प्रभवति, स पुरस्कारमपि नालभत। स सदा स्वामिना शासनीय आसीत्।[४]

नारदोक्तं परिगणनं शुश्रूषकविषयकम्। ते ( शुश्रूषकाः ) पञ्चविधा भवन्ति।[५] सेवकस्य अधिकारो यत् सोऽनुबन्धनियमानुसारं स्वीयस्वत्वप्राप्तौ शक्त आसीत्। वास्तवः सेवकः पवित्राणि कार्याणि करोति स्म। धर्मशास्त्रेषु सेवकाः

१. अर्थशास्त्रम् २।१।

२. गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥
इष्टतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः।
( नारद० ५।६-७ )

३. नारद० ५।७।

४. कौ० ३।१३; नारद० १।२९।

५. नारद० ५।२।

कर्मकराः कथिताः। नारदः सेवकान् चतुर्धा विभाजयति—(१) शिष्यः, (२) अन्तेवासी, (३) भृत्यः, (४) अधिकर्मकृत्।[1] उपनयनपूर्वकम् अध्ययनकर्ता शिष्यः। शिल्पविषयकः शिक्षार्थी अन्तेवासी। वेतनेन कार्यकर्ता भृतकः। कौटिम्बिकव्यापारे नियुक्तः अधिकर्मकृत्।[2] वेतनभाजः सेवकाः त्रिविधाः—(१) उत्तमः, (२) मध्यमः, (३) अधमश्चेति।[3] नारदेन शक्तिं भक्तिं कर्म च आश्रित्य इदं परिगणनं कृतम्। भृतिः कर्माश्रया भवति, अर्थात् कर्मानुसारं भृतिः निर्धार्यते। यदि शक्तिरस्ति किन्तु भक्तिर्नास्ति, तदा भृतिः अल्पा प्राप्यते। एवमेव यदि भक्तिरस्ति शक्तिर्नास्ति। शक्तिं भक्तिं च आश्रित्य यत्कर्म क्रियते तदनुसारमेव भृतिः लभ्यते। इत्थं शक्त्यनुसारं कर्म श्रमानुपातश्च वेतनस्य आधारौ।[4]

बृहस्पतिना वेतनविषये जातिः, कर्म, व्यवसायः, विशेषयोग्यता चेत्यादिकम् आधारतया स्वीकृतम्। एतदनुसारं वेतननिर्धारणम् इति यावत्।[5] जात्या सह तदीयवैयक्तिक्याः क्षमतायाः अपि प्रभावः आधारतया स्वीकृतोऽभवत्। किन्तु श्रम उत्पादनं च इत्येतद् द्वयं वेतनस्य अधारतया अमन्यत। नारदेन शिष्यः अन्तेवासी च कर्मकरेषु परिगणितौ। तौ केवलं वैधानिकदृष्ट्या एव कर्मकरश्रेण्यां निवेशितौ, न हि तौ वेतनं गृह्णीतः।[6] यः परार्थं कर्म कुर्यात् स कर्मकरः कथ्यते। वेश्या अपि श्रमिकाः स्वीकृताः। तेषां श्रमः परार्थो भवति, अत एव ताः दासकोटौ स्वीकृताः।[7] ताभिः क्रियमाणोऽनुबन्धः संवित्तया न स्वीकृतः, अपि तु शुल्कतया स्वीकृतः।[8] नारदोक्तेषु वेतनविषयकनियमेषु वेश्याविषयिका चर्चा न दृश्यते।

---

१. शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्।
एते कर्मकराः प्रोक्ता दासास्तु गृहजादयः॥
(नारद० ५।३)

२. भवस्वामिनो व्याख्या।

३. भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः।
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः॥
(नारद० ५।२०)

४. नारद० ५।२०।

५. बृह० १२।३।

६. ऋत्विजः—कौटल्य० ३।१४; गुरुः—नारद० ५।८, ५।२१; व्यापारिवर्गः, कौ० ३।१३; नारद० ५।२२।

७. कौटल्य० २।२७ वेश्या, गणिका, रूपजीवा, पुंश्चली, बंधकी, रुपदासी इत्यादयः शब्दाः प्रयुक्ताः।

८. नारद० ६।२०-२२।

भृत्याः त्रिविधाः स्वीकृताः-(१) उत्तमः, (२) मध्यमः, (३) अधमश्चेति। आयुधजीवी उत्तमः, कृषकः मध्यमः, भारवाहकोऽधमः।[१] नारदेन व्यवसायमाधृत्य (कार्य) परिगणनं कृतम्। बृहस्पतिना तु जातिमाश्रित्य परिगणने व्यवस्थाप्यमाने क्षत्रियः वैधानिकदृष्ट्या श्रमिकेषु आयास्यति। कुटुम्बविषयककार्यं कुर्वतां कौटुम्बिकश्रमिकाणां नारदेन बृहस्पतिना च प्रथमम् उल्लेखः कृतः।[२] सेवामुक्तश्रमिकाणां विषये स्वामिसेवकविषयकनियमा न प्रवर्तन्ते। जातिं व्यवसायं च आधृत्य सेवामुक्तिः आसीत्। नारदः निर्भरताविषयकं सामान्यसिद्धान्तं सर्वेषु श्रमिकेषु प्रवर्तयते। अस्याः सम्पूर्णायाः स्थितेः प्रभावः संविदायां भवति स्म। जातौ आये कार्ये च श्रमिकाणां स्तरः निर्भरः आसीत्। अत एव जातिः व्यवसायस्य चेति विभिन्नता स्पष्टीभवति। जातिः जन्माश्रिता आसीद् इत्येतद्विषये प्रमाणमपि लभ्यते।

कार्यारम्भात् पूर्वं द्वयोः पक्षयोः संविदा भवति स्म। श्रमिकैश्च तच्छुल्कं प्राप्यते।[३] संविदनुसारं सेवायाः वेतनस्य च क्रमः निश्चितोऽभवत्। यं निश्चितं क्रमं सेवकाः स्वामिनश्च अनुसरन्ति स्म। इत्थं च विवादस्य अवसर एव नाभूत्। यदि विवादः समुपतिष्ठेत, तदा तन्निर्णयः सुकर आसीत्। ईदृशे विवादे नारदेन वेतनस्यापाकर्म इति कथितम्। बृहस्पतिरपि इमम् आधारं स्वीकरोति।[४] एषु अध्यायेषु वेतनस्य के के आधाराः सन्ति इत्येतद्विषये विचारः कृतोऽस्ति। संविद्विषये पूर्णतया वैधनिकता आश्रयणीया आसीत्। अत एवात्र तिथिः, वर्षम्, वर्षार्धम्, ऋतुः, दिनम्, स्थानम्, ग्रामः, क्षेत्रम्, स्वीकृतिः, नाम, नियुक्तिः, जातिः, गोत्रम्, विवरणम्, विशेषः, सेवाकार्यम्, वेतनम्, संविद्विधिः, पक्षद्वयस्य स्थितिः इत्यादीनाम् उल्लेखः आवश्यक।[५] विधिप्रतिकूलं लोकाचारप्रतिकूलं च संविल्लेखनं भवितुं नाशक्यत।[६]

संविदः विधेः पूर्णतायां पक्षद्वयेनापि तत्पालनम् अनिवार्यमासीत्। केचन अपवादाः अवश्यं आसन्, यत्र व्यक्तिः अक्षमा अमन्यत। पत्युरनुपस्थितौ पुत्रस्य[७]

१. नारद० ५।२२; बृह० १६।१०।

२. नारद० ५।२२; बृह० १६।१०।

३. बृह० १४।६।

४. नारद० ६; बृह० १६।२।

५. नारद० १।७१, २३३, २३८; कौटल्य० ३।१; मनु० ८।१६३; नारद० १।१३६, १।७१।

६. मनु० ८।१६४; नारद० १।३६; विष्णु० ७।११।

७. विष्णु० ७।१०; नारद० १।२३, १।३७; याज्ञ० २।३१; बृह० ८।२३।

८. नारद० १।२७।

राज्ञोऽभिभावकस्यापि[१] साक्षित्वाभावे स्त्रिया सह कृतः अमान्यः। अष्टवर्षेभ्यः न्यूनवयस्केन सह[२], षोडशवर्षादारभ्य एकोनविंशवर्षाभ्यन्तरे वर्तमानेन पौगण्डावस्थामाश्रितेन सह,[३] मातापित्रोः जीवितोरपि पराश्रितेन सह[४] च कृतोऽनुबन्धोऽमान्यो भवति स्म। नारदः त्रीनेव स्वाश्रितान् मन्यते–(१) राजा, (२) आध्यात्मिकगुरुः, (३) गृहपतिश्चेति।[५] स्वाश्रिताः सन्तोऽपि मानसिकसन्तुलनविहीनाः अनुबन्धं कर्तुं न शक्नुवन्ति। एतत्कृता वा अपि अनुबन्धाः न मन्यते स्म, यथा ये क्रोधप्रेमादिवशीभूताः, रुग्णाः, दैवविपद्ग्रस्ताः, शत्रुभिः मित्रैर्वा प्रभाविताः, आसन्नमरणाः, उन्मत्ताः, मूर्खाः, अत्यन्तवृद्धा वा सन्ति। भयलोभादिग्रस्ताः अनधिकारिणः अपराधिनः नास्तिकाश्चापि अनुबन्धं कर्तुं नाशकन्।[६] अनुबन्धः असत्यो मा भूत्।[७] कौटल्येन अनुबन्धविषये एषा शब्दावली निर्दिष्टा अस्ति–– 'भवान् मत्स्थाने अन्यं श्रमिकं नियोक्तुं न शक्नोति। अहमपि स्वस्थाने अन्यं न उपस्थापयिष्यामि'।[८] कौटल्यः कथयति यत् पार्श्ववासिनामपि कृतस्य अनुबन्धस्य ज्ञानं स्यात्।[९] अनुबन्धः लिखितः स्यात्, यतः स एव असन्दिग्धो भवति।[१०] अवधेः समाप्तौ ततः पूर्वं वापि अनुबन्धः सम्पन्नः भवितुं शक्नोति। एतदर्थं पवित्राणाम् अपवित्राणां च कार्याणां भिन्नाः विषयाः सन्ति।[११]

वेतनविषये महत्त्वपूर्णः आधारः अनुबन्ध एवास्ति। उभावपि पक्षौ यत्किञ्चिद् निश्चिनुतः, तदेव प्रामाणिकं मन्यते। वेतनमात्रावध्यादीनां कार्यान्वयनं

---

१. मनु० ५।१४८, ६।३; वशि० ५।२; वि० २५।१३; याज्ञ० १।८५; महा० १३।४६।१४।

२. वि० १७।१०; मनु० ८।१६६; नारद० १।३५,३६,३९, याज्ञ० २।३२; बृह० ८।२३।

३. नारद० १।३५, १३७।

४. वि० ७।१०; नारद० १।२६; मनु० ८।१६३; कौ० ३।१। नारद० १।२४,२६,३०; मनु० ८।१६७; विष्णु० ६।३६।

५. नारद० १।३२,३३।

६. नारद० १।४०-४१; कौ० ३।१; विष्णु० ७।१०; मनु० ८।१६३; याज्ञ० २।३;२ बृह० ८।२३; याज्ञ २।३१; नारद० १।१३७; बृह० ८।२२।

७. मनु० ८।१६३; विष्णु० ७।७-९।

८. कौ० ३।१४।

९. कौ० ३।१५।

१०. नारद० १।७१।

११. विष्णु० ५।१५३; ५।१५७, बृह० १६।६, नारद० ६।१०; ५।२४; ५।७; ५।६।

लिखितान् नियमानाश्रित्यैव आसन्। यदि अनुबन्धपत्रे एतद्विषयस्य उल्लेखो न स्यात्, तदा कार्यमाश्रित्यैव वेतनं निर्धार्यते स्म। एतद्विषये सामान्य-भूता विशेषभूताश्च नियमा आसन्। कौटल्ययाज्ञवल्क्ययोः मतं यद् योग्यतानुसारं कार्यं कार्यानुसारञ्च वेतनं निर्धारणीयम्।[1] नारदकौटल्यमतयोः मूलभूतमन्तरं नास्ति। धर्मशास्त्रानुसारमर्थशास्त्रानुसारञ्च वेतनसिद्धान्त इत्थं निर्धार्यते—योग्यतानुसारं कार्यं कार्यानुसारञ्च वेतनम्।

अतोऽप्यन्ये विशेषनियमाः सन्ति। व्यापारकृषिखनिविभागादिषु विशेषनियमाः सन्ति।[2] भूमौ कार्यं कुर्वते कृषकश्रमिकाय उत्पादनस्य दशमोऽशो दीयते स्म।[3] उत्पादने श्रमिकस्य भागं मन्यमानो बृहस्पतिः उत्पादनस्य पञ्चमं तृतीयं वा भागं श्रमिकस्य मन्यते। अत्र विकल्पे इयं व्यवस्था बृहस्पतेरभिप्रेता यद् यदि श्रमिकाय भोजनवस्त्रादिकं दीयेत, तदा उत्पादनस्य पञ्चमो भागः श्रमिकाय देयः; यदि च केवलमुत्पादनस्यैव भागः तस्मै दीयते भोजनादिकं च पृथग् न दीयते, तदा तृतीयांशः श्रमिकाय देयः। क्षत्ररक्षकाय उत्पादनस्य अंशो न देयः, अपितु वेतनरूपेण द्रव्यं देयम्।[4] पशुपालकेभ्यः श्रमिकेभ्यः नवनीतस्य दशमोऽशः दीयते स्म।[5] यदि पारिश्रमिकं निश्चितं भवेत्, तदा पशुसंख्यानुसारं पारिश्रमिकं देयम्।[7] अष्टमदिनस्य सम्पूर्णं दुग्धं पशुपालकेभ्यः श्रमिकेभ्यो देयमिति बृहस्पतिः वक्ति।[8] पारिश्रमिकस्य अनिश्चितत्वे पशुजन्यलाभस्य दशमोऽशः श्रमिकेभ्यो देय इति याज्ञवल्क्यस्य मतम्।[9] वाणिज्ये नियुक्तेभ्यः श्रमिकेभ्यः लाभस्य दशमांशः देयः।[10] एवंविधा नियमाः श्रमिकविषये प्रचलिता आसन्। अन्यासु सेवासु अनुबन्धाः आवश्यका आसन्। शिल्पिनां वेतनं तत्तत्कार्याणां वैशिष्ट्यानुसारं निर्धार्यते स्म।[11] गणिकानां विषये स्वतन्त्रो नियम आसीत्।

---

१. कौ० ३।१३; याज्ञ० २।१९६।
२. बृ० ५।२२।
३. बृ० १६।११।
४. कौ० ३।१३; नारद० ६।३।
५. बृ० १८।१२-१३।
६. कौ० २।२४।
७. कौ० ३।१४; नारद० ६।३।
८. बृ० ६।१०।
९. बृ० १६।१९।
१०. याज्ञ० ३।१९४।
११. कौ० ३।१३; नारद० १६।३; याज्ञ० २।१९४।

अनुबन्धाभावे साक्षिण आधृत्य वेतनं निश्चीयते स्म। साक्षिणामप्यभावे कार्यानुसारं वेतननिर्णय आसीत्।[१] क्षेत्ररक्षापशुपालनादिकार्येषु श्रमिकेभ्यो मुद्रास्थाने उत्पादनांशोऽपि दीयते स्म।[२] मद्यपोऽपि श्रमिकः वेतनाधिकारी अस्ति इति मन्यते कौटल्यः।[३] यदि स्वामिनः अनवधानतया श्रमिकस्य क्षतिर्भवेत्, तदा यावतः क्षतिस्ततः पञ्चगुणं द्रव्यं स्वामिना श्रमिकाय देयमिति कौटल्येन व्यवस्थापितमस्ति।[४] यदि वेतनादिदाने स्वामी अनवधानतामाचरेत्, तदा पञ्चगुणं दशगुणं वा द्रव्यं क्षतिपूर्त्यर्थं दण्डरूपेण वा स्वामिना अवश्यं देयम्। अत एव यथासमयं वेतनं देयम्।[५]

यथासमयं वेतनस्य वितरणाभावे कुसीदेन सह वेतनं देयं भवति इत्याह नारदः।[६] बृहस्पतिर्वेतनदाने समयातिक्रमे कुसीदं न मन्यते।[७] तस्यामवस्थायां स्वामिना दण्डतया अधिकं द्रव्यं देयं भवति इति मन्यते। बृहस्पतिस्तु अस्यां स्थितौ पारिश्रमिकस्य पञ्चगुणं दशगुणं वा द्रव्यं स्वामिना श्रमिकाय देयं भवति इत्याह।[८] मध्ये एव स्वामी कार्यं स्थगयितुमपि न शक्नोति। यदि स मध्ये एव कार्यं स्थगयेत्, तदा सम्पूर्णस्य समयस्य वेतनं देयं भवति; पूर्णसमयं यावत् कार्यं भवेत्, मा वा भवेत्।[९] वेश्याभ्यः निश्चितद्रव्यदानाभावे द्विगुणद्रव्यं दण्डरूपेण ताभ्यः देयमासीत्। वेतनस्य क्रमः याज्ञवल्क्येन सामान्यतो निर्धारितः।[१०]

स्वहितरक्षार्थं न्यायस्यान्तिममास्पदं (राजानम्) यावत् श्रमिकाः गन्तुं स्वतन्त्राः आसन्। श्रमिकेभ्यः वेतनं दातुं तेषां क्षतेः पूर्तिं च कर्तुं राज्ञा स्वामी बाध्यते स्म।[११] निश्चितसमयात् पूर्वमेव कार्यविरामे श्रमिकः राजानं

---

१. कौ० ३।१३।
२. कौ० ३।१३।
३. कौ० २।२४।
४. कौ० २।२५।
५. कौ० ३।१३।
६. नारद० ६।२।
७. नारद० ६।१६।
८. बृ० १६।६।
९. कौ० ३।१३।
१०. कौ० २।१६६।
११. याज्ञ० २।१६७-६८।

सम्बोध्य प्रार्थनापत्रं दातुं प्रभवति स्म। यदि कार्यस्य अवधिः निश्चितो न भवेत्, तदा कार्यपूर्त्यनन्तरं स प्रार्थनापत्रमददात्।[1] विवरणाभावे एव एषोऽनुबन्धः व्यवहारपदवीमासादयत्। स्वामिना अनुबन्धः अवश्यं पालनीयः आसीत्।[2] श्रमिकविषयेऽपशब्दं प्रयोक्तुं स्वामी न नाशकत्। यदि स्वामी श्रमिकविषयेऽपशब्दं प्रयुञ्जीत, तदा निश्चितशुल्कस्य अष्टगुणाधिकं द्रव्यं दण्डतया तेन देयमासीत्।[3] यदि कीदृगपि अभद्रं स्वामी व्यवहरेत्, तदा स दण्डभागासीत्।[4]

अनुबन्धीयानां नियमानां पालनं श्रमिकस्य कृतेऽपि अनिवार्यमासीत्। अनुबन्धं स्वीकृत्य तदवहेलनम्, लिखितनियमानामुल्लङ्घनं वा अपराधः अमन्यत।[5] यदि वेतनं श्रमिकेण न लभ्यते, अथवा श्रमिकस्य अस्वास्थ्यादिकं भवति, तदा सः अनुबन्धनियमेभ्यः मुक्तो भवति। परन्तु उक्तानां परिस्थितीनामभावेऽपि यदि श्रमिकः अनुबन्धनियमान् उल्लङ्घयेत्, तदा स दण्डभाग् भवति स्म।[6] एतदवश्यं यत् तेन यावत्कार्यं कृतं भवेत्, तावतः कार्यस्य वेतनं तस्मै दीयते स्म।[7] यदि कृषकाय श्रमिकः वचनं दत्त्वापि कार्यं न कुर्यात्, तदा द्विगुणदण्डः तेन देयो भवति। तच्च दण्डस्वरूपं स्वामिना प्राप्यते।[8] अस्मिन्नपराधे शारीरिकदण्डं व्यवस्थापितमस्ति।[9] अनुबन्धपालनस्य असामर्थ्यविषये विचार्यते स्म यदनेन कुतः हेतोः अनुबन्धपालनं न कृतम्।[10] वेतनं गृहीत्वा यदि श्रमिकः कार्यं न कुर्यात्, तदा तेन वेतनस्य द्विगुणादधिको दण्डः देय इति याज्ञवल्क्यः। अस्यामवस्थायां वेतनप्रत्यावर्तनपुरस्सरं शतपणात्मकः दण्डः तेन राज्ञे देय इति विष्णुश्च निरदिशत।[11] वेतनं गृहीत्वा श्रमिकः यदि कार्यं न कुर्यात् तदा राजा ततः वेतनं प्रत्यावर्तयितुम्, अथ च दण्डं ग्रहीतुं शक्नोति इति बृहस्पतिः।[12]

---

१. बृ० १६।१८।
२. नारद० ६।२।
३. नारद० ६।९।
४. आपस्तम्ब० २।११।२८।२-३।
५. नारद० ५।१; ६।५; याज्ञ० २।१९७-९८; नारद० ६।९।
६. मनु० ८।२१५; बृ० १६।१६।
७. कौ० ३।१४।
८. कौ० ३।१०।
९. आपस्तम्ब० २।११।२८।२-३।
१०. कौ० ३।१३; मनु० ८।२१७।
११. याज्ञ० २।९९; वि० ३।१५३।१५४।
१२. बृ० १६।१५-१६; नारद० ६।५।

किञ्चित् कार्यं कृत्वा मध्ये एव यदि श्रमिकः कार्यं त्यजेत्, तदा वेतनस्य निर्धारणं कथं भवेत्? बृहस्पतिमतानुसारं श्रमिकस्य वेतनं गृहीत्वा स न्यायालयमानेयः।[१] एषा व्यवस्था तस्य श्रमिकस्य विषये, यः अनुबन्धप्रतिकूलं असमये, कार्यपूर्तेः पूर्वमेव वा कार्यत्यागं कुर्यात्। यदि स्वामी अस्यामवस्थायां वेतनं दातुं नेच्छति, तदा स न वेतनं दातुं बाधयितुं शक्यते।[२] कौटल्यः कार्यानुसारं वेतनसिद्धान्तं प्रतिपादयति। यदि श्रमिकः अस्वास्थ्यादिदशायां स्वप्रतिनिधिं दातुमिच्छेत्, तदा स स्वीयं वेतनं लब्धुमशकत्,[3] परन्तु प्रतिनिधेरभावे उचितरीत्या कार्याकरणे ना श्रमिकः वेतनं प्राप्तुं नाशकत्।[४]

अनुबन्धे निर्दिष्टात् कार्यादधिककार्यकरणेऽधिकं वेतनं लब्धुं नाशकत् श्रमिकः; किन्तु याज्ञवल्क्यः इदं मतं न अनुमन्यते, यदि श्रमिकः स्वयोग्यतानुसारं स्वशक्त्यनुसारञ्च अधिकमुत्पादनं करोति, तदा अवश्यमधिकवेतनभागिति मन्यते सः।[५] यदि श्रमिकः उचितमुत्पादनं न कुर्यात्, उचितेन मूल्येन वस्तूनि न विक्रीणीयात्, अथवा श्रमिकस्य अनवधानतया उत्पादनक्षतिर्भवेत्, तदा स्वामिनः अधिकारो यत् स्वामी स्वेच्छानुसारं तस्मै वेतनं दातुं शक्नोति।[६]

अनुबन्धकरणानन्तरमपि काश्चन ईदृश्यः स्थितयः स्वीक्रियन्ते यासु स्थितिषु श्रमिकः बहिष्कर्तुं शक्यते। यदि स कार्येऽक्षमः, तदा सः अनुबन्धनियमैर्न बद्ध्यते।[७] यदि स्वास्थ्यसम्पत्त्यनन्तरं श्रमिकः कार्यं पूरयति, तदा स पूर्णवेतनभाक्।[८] अनुबन्धे उल्लिखितेभ्यः कार्येभ्यः अन्यानि कार्याणि श्रमिकेण कारयितुं वाञ्छति यदि स्वामी, तानि कार्याणि श्रमिकस्य इच्छायां निर्भराणि, श्रमिकः स्वेच्छानुसारं तानि कार्याणि कुर्यान्न वा कुर्यात्; न तत्र स्वामिनः कश्चित् प्रतिबन्धः। यदि सः अनुबन्धोल्लिखितकार्येभ्यः अन्यानि गुरुतरकार्याणि स्वामिनः आदेशेऽपि न करोति, तदापि स न दोषभाक्। यदि केनचित् तृतीयेन मनुष्येण कार्ये काचिद् बाधा उपस्थाप्येत्, येन कार्यपूर्तिर्न भवेत्, तदापि श्रमिकः

१. बृ० १६।१४।
२. कौ० ३।१४।
३. कौ० ३।१४।
४. मनु० ८।२१७।
५. याज्ञ० २।१९५।
६. याज्ञ० २।१९५ मिताक्षरा।
७. नारद० ६।१७; मनु० ८।२१६; याज्ञ० २।१९६; कौ० ३।१४।
८. मनु० ८।२१६।

पूर्णवेतनभाग् भवति। परिस्थितिविशेषवशेन यदि श्रमिकः कार्यं पूरयितुं न शक्नोति, तदा यावत्कार्यं[१] तेन कृतं भवेत्, तावतो वेतनस्य सः अधिकारी। यदि उपर्युक्तायां परिस्थितौ द्व्यधिकाः श्रमिकाः भवेयुः, तदा मध्यस्थानां निर्णयानुसारं वेतनव्यवस्था कार्या।[२] यदि वेतनस्य मात्रा निश्चिता न भवेत्, तदा श्रमिकः कार्यानुपातेन वेतनस्य अधिकारी।[३]

यदि कार्ये काचिद् बाधा आपतति, येन श्रमिकः कार्यं कर्तुं न प्रभवति स्वामी च तं कार्यकालात् पूर्वमेव निष्कासयति, तदा स्वामिना श्रमिकाय पूर्णं वेतनं देयं राज्ञे च शतपणात्मको दण्डः देयः।[४] स्वाम्यादेशानुसारं यदि कार्यस्य क्षतिर्भवति तया च क्षत्या श्रमिकस्य न कश्चिल्लाभः, तदा तस्याः क्षतेः उत्तरदायी स्वामी एव।[५] स्वाम्यादेशानुसारं स चौर्यसदृशमपराधं करोति, तदा तल्लब्ध-सम्पत्तेः उत्तरदायी स्वामी एव, परन्तु चौर्यस्य दण्डं श्रमिकः भजते।[६] दैनिकेषु कार्येषु श्रमिकः स्वीयानि उपकरणानि आनयति स्म। यदि यन्त्रोपकरणादि-व्यवस्थां स्वामी सम्यग् न सम्पादयति, येन उत्पादनस्य क्षतिर्भवति, तदा तस्याः उत्तरदायी स्वामी एव, न श्रमिकः।[७] श्रमिकः यदि ईदृशमपराधमाचरति यत् तेन दण्डो देयो भवति, दण्डद्रव्यस्य दाने यदि स अशक्तः, तदा स दण्डस्थाने श्रमं दातुं शक्नोति।

सहकारिसङ्घानां श्रमिकसमितीनाञ्च विधानानां कार्यान्वयनमारब्ध-मासीत्। उद्योगपतिभिः श्रमिकैश्च सम्भूय लाभार्थं समितये सामान्यभाण्डारस्य स्थापनायां क्रियमाणायां समानभागवत्ता पुरः आयाति।[८] समानभागवत्ता-माश्रित्यैव सामान्यभाण्डारः स्थाप्यते स्म।[९] अत एव प्रत्येकं सदस्येन उचितः

---

१. कौ० ३।१४।

२. याज्ञ० २।१९६।

३. याज्ञ० २।१९६ मिताक्षरा।

४. विष्णु० ५।१५६।

५. बृ० १६।१७।

६. नारद० ६।४।

७. नारद० ६।४; कौ० ३।१४।

८. नारद० ३।१-२; याज्ञ० २।२५६।

९. नारद० ३।२।

स्वभागः देयः।[१] सर्वे सदस्याः समितिनिर्धारितनियमानुसारं स्वस्वकर्त्तव्यं पालयन्ति स्म।[२] श्रमिकसङ्घानामपि सङ्केतो लभ्यते।[३] धर्मशास्त्रेषु वणिक्सङ्घानामिव सङ्घान्तराणामपि उल्लेखो दृश्यते। एषु च सङ्घान्तरेषु श्रमिकसङ्घा अपि स्वीकर्त्तुं शक्यन्ते। कौटल्येन श्रमिकसङ्घस्य सदस्यानाम् अधिकाराः कर्त्तव्यानि च निरदेक्ष्यन्त।[४] याज्ञवल्क्येनापि सुस्पष्टमेतन्निर्दिष्टम्।

एवं वयं पश्यामो यत् श्रमस्य विकासविषये, सुरक्षाविषये गौरवविषये च भारतीया अर्थशास्त्रिणः व्यवहिता आसन्। तदानीन्तन्यां परिस्थितौ यत्किञ्चित् शक्यमासीत्, तत्तैः कृतम्। इदं तु स्वीकार्यमेव यत् तेषां विधानेषु तानि तत्त्वानि स्वीकृतानि सन्ति यानि गौरवपूर्णसामाजिकव्यवस्थायाः कृते आदर्शभूतानि।

## दासता

अल्बेटुबायमहोदयैः दक्षिणभारते चिरमुषितम्। एतेषां मतं यत् सामन्तानाम्, मठाधीशानां वणिजां च गृहेषु दासकार्यं कुर्वन्तः दासाः एकोनविंशतिशताब्दीं यावल्लभ्यन्ते। 'ईस्ट इण्डिया कम्पनी' नियमानुसारं डॉ० हेमिल्टनमहोदयेन एतदेव सर्वेक्षणे कृते स्वीकृतम्।[५] अनेकैः आङ्गलदेशीयैः अधिकारिभिः एतद्विषयकाः ग्रन्थाः लिखिताः।[६] कोलब्रुकमहोदयेन तु एषः प्रश्नः ब्रिटिशसंसदि

---

१. नारद० ३।२।

२. मनु० ७।२११; याज्ञ० २।२५६।

३. नारद० ३।१; याज्ञ० २।१६२; बृ० १५।१।

४. कौ० ३।१४।

५. F. H. Buchanan (i) An Account of the District of Purnea.
(ii) An Account of Bhagalpur.
(iii) An Account of Bihar and Patna.
(iv) Journal of Dr. Buchanan...Bhagalpur.
(v) Journey through Mysore Fanara and Malabar, Vols. I and II.
M. Martin, History of Eastern India, Vols. II and III.

६. Parliamentary Process in British India, London, 1834.

अपि उत्थापित आसीत्।[१] अस्मिन् अन्वेषणे आन्दोलने च एतद्विषयकाणि बहूनि प्रमाणानि प्रास्तूयन्त यद् दासप्रथा चिरकालत एव व्यवहारक्षेत्रे पदं निहितवती अस्ति। बङ्गभाषायां मैथिलभाषायां च उपलब्धानि दासपत्राण्यपि प्रस्तुतानि अभूवन्, यानि दासानां विक्रयाय लिखितान्यासन्। यूनानीलेखकैस्तु दासप्रथायाः प्राचीनता समर्थितैव। मनुस्मृतिमाश्रित्यैव बॉलनमहोदयेनापि भारतवर्षे तादृशी एव दासता स्वीकृता यादृशी युरोपीयदेशेषु प्रचलिता आसीत्। तन्मतानुसारं शूद्राः दासाश्च एक एव। एकोनविंशतिशताब्द्याः अन्तिमे चरणे लेटुर्नीमहोदयेन विभिन्नानामादिवासिनामध्ययनेन एष एव निष्कर्षः स्थापितः। नेवूर अनेन तदेव अनुकृतः।[२] एकोनविंशतिशताब्द्याः अन्तिमे चरणे विषयाध्ययनेन सह समाजशास्त्रीयपक्षोऽपि योजितुमारब्धः। आर० फिकमहोदयेन दासता समाजघटकानां सन्दर्भे स्वीकृता यत् प्रत्येकं भूस्वामी वणिक् च दासानां स्कन्धे एव निर्भरः।[3]

रिजडेविड्समहोदयस्य विचारः उपर्युक्तानां विदुषां पक्षं नानुवर्तते।[४] स दासतां भारते नैव मन्यते। एतदपि मन्यते यत् पाश्चात्त्यैः कृषकाणां यादृशं वर्णनं कृतमस्ति, तदपि अतिशयोक्ति पूर्णमेव।[५] वस्तुतः पाश्चात्त्यैः विद्वद्भिः गृहभृत्याः एव दासाः स्वीकृताः। अत्र विषये उभावपि पक्षौ स्तः।[६] कौटल्येन "नहि आर्यस्य

१. Encyclopaedia of India and of Eastern and Southern Asia of Balfoure, Vol, III. P. 672.

२. H. J. Niectoer, Slavery as an Industrial System.

३. R. Fick, The Social Organisation in N. E. India.

४. Budhist India, P. 63.

५. तदेव, Cambridge History of India, vol. I.

६. S. N. Basu, Slavery in the Jatakas, JBRS, vol IX, PP. 369-375 f·

L. Sarup, Some Aspects of Slavery, journal of Pajab Historical Society, vol. VIII PP. 174-84.

N. C. Benerjee, Economic life in Ancient India, vol. I.P. 27. Slavery in Ancient India, Calcutta Review, August 1930, PP. 249-69.

R. L. Mehta, Pre-Budhist India.

A. N. Bose, Origin of Slavery in Indo-Aryan Economy, 19th, August 1940.

U. N. Ghoshal, The Beginning of India Histriography P. 36.

दासभावः" इति स्पष्टं घोषणा कृता। तदानीन्तनेन मेगस्थनीजेनापि लिखितं यद् भारतीयाः दासान्न अधिकुर्वन्ति स्म। पाश्चात्त्यैः विद्वद्भिः यैः दासता समर्थिता अस्ति, तैः त्रिपिटकजातके इत्यादिबौद्धसाहित्यकथाः मूलतया आश्रिताः। श्रीपादडाङ्गेमहोदयेन, डी० डी० कौशाम्बी—इत्यादिभिः एंजेल्ससूत्राणि भारतीय-साहित्ये चरितार्थयद्भिः महन् प्रयतितम्। फलतः एतेषां मतमेकदेशीयं भवति। भारतीयविदुषामध्ययनमपि प्रायेण पाश्चात्त्यदृष्टिकोणेन पाश्चात्त्यवासनया च प्रभावितमस्ति।[1] इदं तथ्यं यद् विश्वस्य अनेकेषु प्राचीनेषु समाजेषु दासप्रथा प्रचलन्ती आसीत्, किन्तु साम्राज्यवादः यः युरोपीयदासतारूपेण विकसितः अभूत्, सर्वथा सः अमान्यः आसीत्। डॉ० आर० के० मुखर्जीमहोदयेन दास इत्येष उपाधिः स्वीकृतः।[2] याज्ञवल्क्यकुमारिलभट्टप्रभृतिभ्यः महापुरुषेभ्यः 'दासाः दत्ताः' इति वर्णनं लभ्यते।[3] एतेन स्पष्टं यत् ते दासाः सेवकाः आसन्। अन्यथा एतेषां कृते दासानां का आवश्यकता आसीत्?

ऋग्वेदे आर्याणां दासानाञ्च विभाजनार्थमिन्द्रः प्रार्थितोऽस्ति।[4] दस्यवः दासाश्च एक एव स्वीक्रियन्ते।[5] एकस्यामेव ऋचि दस्युशब्दः दासशब्दश्च दृश्येते। एतेषां दस्युदासानां साम्ये 'अकर्मता' 'अन्यव्रतता' 'अमानुषता' च मूलम्। येन उभयेऽपि आर्याणां समानाः शत्रवः आसन्।[6] अन्यत्र इन्द्रः समानरूपेण दासान् दस्यूंश्च निहन्ति इत्यपि वर्णितम्।[7] दस्यूनां कृते 'अयज्ञः' 'अव्रतः' 'मृध्रवाक्' 'अनासः' इत्येतानि विशेषणानि यथा प्रयुक्तानि सन्ति, तेन ज्ञायते यद् दस्यूनां स्वतन्त्रं सामाजिकमहत्त्वमासीत्। ते वैदिकसमाजमान्यतातः बहिर्भूता आसन्।

---

१. Encyclopaedia of Social Sciences, vol. XIV, P. 74.

२. Westermarck, Origin and Development of the Moral Ideas, vol. I.

३. Dev Raj Chanana, Slavery in Ancient India. P. 7.

४. ऋग्वेद० १।५१।८; १।१०३।३; १।११७।२१; २।११।२, ४, १८, १९; ३।२९।६; ५।७०।३; ७।५।६; ९।८८।४; ६।१८।३; ६।२५।२।

५. अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः।
त्वं तस्यामित्रहन् वधर्दासस्य दम्भय॥
(ऋग्वेद० १०।२२।८)

६. न्यक्रतून् ग्रथिनो मृध्रवाचः पणिरश्रद्धाँ अवृधाँ अयज्ञान्।
प्र प्र तान्दस्यूँरग्निर्विवाय पूर्वश्चकारा पराँ अयज्यून्॥
(ऋग्वेद० ७।६।३)

७. ऋग्वेद० १।५१।८; १।१७५।३; ६।१४।३; ७।६।३; ५।२९।१०।

तेऽसुरा अपि कथिताः।[१] शम्बरः ऋग्वेदे दास इति दस्युः इति च कथितः।[२] वर्चिन एकत्र दासोऽन्यत्रासुरः इति कथितः।[3] तैत्तिरीयसंहितां यावद् ईदृशः प्रयोगः प्रचलति।[४] दासानाम् आर्याणां च पारस्परिकं शत्रुत्वं सुस्पष्टम् अस्ति।[५] एतेन. विवेचितेन स्पष्टं यद् ऋग्वेदे दासः सामाजिकसङ्घटनतया निर्दिष्टः। विरलमेव ईदृशं स्थलं लभ्यते यत्र सेवके 'दास' इति शब्दः प्रयुक्तः।[६] उत्तरवर्तिसंहितासु पुरुषाणां स्त्रीणां च दानस्य उल्लेखो लभ्यते।[७]

"आत्मनो वा एष मात्रामाप्नोति यो उभयादत्प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरः द्वादशकपालं निर्वपेदुभयादत्प्रतिगृह्य" (तै० सं० २।२।६।३); "सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्याय" (बृ० उ० ४।४।२३); "गोऽश्वमिह महिमेत्याचक्षते हस्ति हिरण्यं दासभार्यं क्षेत्राण्यायतनानि" इति (छा० उ० ७।२४।२)।

एतेषु सर्वेष्वपि उद्धरणेषु दासविक्रयः क्वापि नोल्लिखितः यः दासतायाः मूलाधारः अस्ति। 'शूद्रश्च धर्मशास्त्रत्वात्' इति जैमिनीयसूत्रं व्याचक्षाणेन च शबरस्वामिना (६।७।६) विषयः स्पष्टीकृतमस्ति। "शूद्रश्च न देय इत्यन्वादेशः। कुतः। धर्मशास्त्रत्वात्। धर्मशासनोपनतत्वात्तस्य। एवमसौ तस्मै त्रैवर्णिकायोपनत इमं शुश्रूषमाणो धर्मेण सम्मन्तस्य इति। सोऽन्यस्मै दीयमानो नेच्छेदपि। न चानिच्छतस्तस्य स प्रभवति।"

मनुनिर्दिष्टव्यवस्थानुसारं दास्यतात्पर्यमिदं वर्तते—

दास्यन्तु कारयँल्लोभाद् ब्राह्मणः संस्कृतान्द्विजान्।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट्॥

(८।४१२)।

१. ऋ० ६।१८।८।

२. ऋ० ६।३१।४; ६।२६।५।

३. ऋ० ४।३।१५; ६।४७।२१; ७।६६।५।

४. तेन दस्यून् व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः। तै० सं० ४।३।११।३।

५. ऋ० २।११।४; १।१४७।७; ३।१२।६; ६।६०।६; ७।८३।१; ६।२२।१०; १०।६९।६; १०।८३।१; १०।१०२।३।

६. शतं मे गर्दभानां शतमूर्णावतीनाम्। शतं दासाँ अति स्रजः। ऋ० ८।५६।३।
यो मे हिरण्यसन्दृशो दश राज्ञो अमंहत। अधस्पदा इच्चैद्यस्य कृष्टयश्चर्मम्ना अभितो जनाः। अदान्मे पौरकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्। ऋ० ८।१९।३६।

७. ऐ० ब्रा० ३९।८।

कुल्लूकभट्टेन पादप्रक्षालनादिकं दास्यकर्मतया प्रतिपादितम्। अग्रिमेषु श्लोकेषु 'क्रीतदासस्य' उल्लेखोऽस्ति—

शूद्रन्तु कारयेद् दास्यं क्रीतमक्रीतमेव वा।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवा॥
न स्वामिना निसृष्टोऽपि शूद्रो दास्याद् विमुच्यते।
निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति॥
ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः॥

(८।४१३-४१५)

इत्थं सप्तविधा दासाः। कुल्लूकभट्टेन च ते इत्थं व्याख्याताः—

"यस्मादसौ ध्वजाहृतत्वादिना दासत्वं गतः स तेन त्यक्तः स्वदास्याभावोऽपि शूद्रो ब्राह्मणस्य दास्यान्न विमुच्यते। तस्माद्दास्यं शूद्रस्य सहजम्। कः शूद्रत्वजातिमिव दास्यमपनयति। अदृष्टार्थमपि अवश्यं शूद्रेण ब्राह्मणादिद्विजशुश्रूषा कर्त्तव्येत्येव परमेतत्। अन्यथा वक्ष्यमाणदास्यकरणपरिगणनमनर्थकम् ।४१४।"

"सङ्ग्रामस्वामिसकाशाज्जितो, भक्तलोभाद्युपगतदास्यो भक्तदासः, तथा दासीपुत्रः, मूल्येन क्रीतः, अन्येन दत्तः, पित्रादिक्रमागतः, दण्डादिधनशुद्धयर्थं स्वीकृतदास्यभावः इत्येतानि सप्तध्वजाहृतत्वादीनि दासत्वकारणानि ४१५।"

नारदेन च पञ्चदशविधाः दासाः वर्णिताः—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः।
अशनादिभृतस्तद्वदाधत्तः स्वामिना च यः॥
ऋणाच्च मोक्षितोऽनल्पाद् युद्धप्राप्तः पणे जितः।
तवाहमित्युपगतः प्रव्रज्यापसृतः कृतः॥
भक्तदासश्च विज्ञेयस्तथैव बडबाभृतः।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः॥
तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम्॥
यश्चैषां स्वामिनं कश्चिन्मोक्षयेत् प्राणसंशयात्।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च॥

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
सम्भक्षितं यद् दुर्भिक्षे न तच्छुध्येत कर्मणा ॥
आधत्तोऽथ धनं दत्वा स्वामी यद्येनमुद्धरेत् ।
अथोपगमयेदेनं सोऽपि क्रीतादनन्तरः ॥
दत्वा तु सोदयमृणमृणी दास्याद् विमुच्यते ।
कृतकालाभ्युपगमात् कृतकोऽपि विमुच्यते ॥
तवाहमित्युपगतो युद्धप्राप्तः पणे जितः ।
प्रतिपूरुषदानेन मुच्येरंस्तुल्यकर्मणा ॥
राज्ञ एव तु दासः स्यात् प्रव्रज्यापसृतो नरः ।
न तस्य प्रतिमोक्षोऽस्ति विशुद्धिर्वा कथञ्चन ॥
भक्तस्य उपेक्षणात् सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद् बडबायाश्च मुच्यते बडबाभृतः ॥
विक्रीणाति स्वतन्त्रः सन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥
चोरापहृतविक्रीता ये च दासीकृता बलात् ।
राज्ञा मोक्षयितव्यास्ते दासत्वं तेषु नेष्यते ॥
वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद् दासता मता ॥
तवास्मि इति य आत्मानमस्वतन्त्रः प्रयच्छति ।
न स तं प्राप्नुयात् कामं पूर्वस्वामी लभेत तम् ॥
अधनास्त्रय एवोक्ता भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥
स्वदासमिच्छेद् यं कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्याथ भिन्द्यात् कुम्भं सहाम्भसा ॥
अक्षताभिः सुपुष्पाभिर्मूर्धन्येनमवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥
( नारदीयमनुसंहिता ५।२४-४१ )

नारदेन दासतायाः सर्वांशेन परिपूर्णा व्यवस्था निर्दिष्टा। अत्र दासतायाः आर्थिकाः सामाजिकाश्च आधाराः प्रकाशमायान्ति। दासानां द्वौ वर्गौ स्तः। तत्र केचन ईदृशाः दासाः ये कदाचित् मुक्ता अपि भवन्ति। केचन कथमपि मुक्तिं न प्राप्नुवन्ति। धर्मान्तरपरिवर्तिता दासता अपि भवति स्म। स्पष्टं यद् धर्मान्तरीयैः जनैः सह यदा वैदिकधर्मस्य सम्बन्धः आरब्धः आसीत् तदा धर्मान्तरप्राप्ता अपि दासाः विहिताः। सेवापरतया प्रयुक्तायाः दासतायाः श्रमपरतया प्रयुक्तायाः दासतायाश्च भेदोऽपि प्रकाशमायाति। दासान् पण्यवत् क्रेतुं-विक्रेतुं च शक्यन्ते। दासस्वामी अन्यस्मै दासं वस्तुवद् दातुमपि शक्नोति। केषाञ्चिन्मतं यत् ते एव शूद्राः दासाः भवितुमशक्नुवन् यैः धर्मान्तरम् अवलम्ब्यते स्म। अत्र विषये अर्थशास्त्रीयव्यवस्था अवश्यं प्रस्तोतव्या—

"उदरदासवर्जमार्यप्राणमप्राप्तव्यवहारं शूद्रं विक्रयाधानं नयतः स्वजनस्य द्वादशपणो दण्डः। वैश्यं द्विगुणः। क्षत्रियं त्रिगुणः। ब्राह्मणं चतुर्गुणः। परजनस्य पूर्वमध्यमोत्तमवधाः दण्डाः क्रेतृश्रोतॄणां च। म्लेच्छानामदोषः प्रजां विक्रेतुमाधातुं वा। न त्वेवार्यस्य दासभावः। अथ वार्यमाधाय कुलबन्धनम्, आर्याणामापदि निष्क्रयं चाधिगम्य बालं साहाय्यदातारं वा पूर्वं निष्क्रीणीरन्। सकृदात्माधाता निष्पतितः सीदेत्। द्विरन्येनाहितकः। सकृदुभौ परविषयाभिमुखौ। वित्तापहारिणो वा दासस्यार्यभावमपहरतोऽर्धदण्डः। निष्पतितप्रेतव्यसनिनामाधाता मूल्यं भजेत। प्रेतविण्मूत्रोच्छिष्टग्राहणमाहितस्य नग्नस्तापनं दण्डप्रेषणमतिक्रमणं च स्त्रीणां मूल्यनाशकरम्। धात्रीपरिचारिकार्धसीतिकोपचारिकाणां च मोक्षकरम्। सिद्धमुपचारकस्याभिप्रजातस्यापक्रमणम्। धात्रीमाहितिकां वा कामां स्ववशामधिगच्छतः पूर्वः साहसदण्डः। परवशां मध्यमः। कन्यामाहितकां वा स्वयमन्येन वा दूषयतः मूल्यनाशः शुल्कं तद् द्विगुणश्च दण्डः। आत्मविक्रयिणः प्रजामार्यां विद्यात्। आत्माधिगतं स्वामिकर्माविरुद्धं लभेत पित्र्यं च दायम्। मूल्येन चार्यत्वं गच्छेत्। तेनोदरदासाहितकौ व्याख्यातौ। प्रक्षेपानुरूपश्चास्य निष्क्रयः। दण्डप्रणीतः कर्मणा दण्डमुपनयेत्। आर्यप्राणो ध्वजाहृतः कर्मकालानुरूपेण मूल्यार्धेन वा विमुच्येत। गृहे जातदायागतलब्धक्रीतानामन्यतमं दासमूनाष्टवर्षं विबन्धुमकामं नीचे कर्मणि विदेशे दासीं वा सगर्भामप्रतिविहितगर्भभर्मण्यां विक्रयाधानं नयतः पूर्वः साहसदण्डः क्रेतृश्रोतॄणां च। दासमनुरूपेण निष्क्रयेणार्यमकुर्वतो द्वादशपणो दण्डः। संरोधश्चाकारणात्। दासद्रव्यस्य ज्ञातयो दायादाः। तेषामभावे स्वामी। स्वामिनोऽस्यां दास्यां जातं समातृकमदासं विद्यात्। गृह्या चेत् कुटुम्बार्थचिन्तनी माता भ्राता भगिनी चास्या अदासाः स्युः। दासं दासीं वा निष्क्रीय पुनर्विक्रयाधानं नयतो द्वादशपणो दण्डः। अन्यत्र स्वयं वादिभ्यः। इति दासकल्पः।" (३।१३।१-३६)।

दासताविषयकाणां धर्मशास्त्रीयाणाम् अर्थशास्त्रीयाणां च मतानाम् उपस्थापने स्पष्टं भवति यद् अर्थशास्त्रं कस्यामपि परिस्थितौ आर्याणां दासतां न समर्थयते। अवयस्कबालकानां विक्रये दण्डः व्यवस्थापितोऽस्ति। अत्र विषये अर्थशास्त्रे व्यवस्थाद्वयी लभ्येते। तत्र एका व्यवस्था वैदिकसमाजीयव्यक्तीनां कृते, अपरा च म्लेच्छानाम्। स्वसमाजानुसारं व्यवस्था करणे म्लेच्छाः स्वतन्त्रा आसन्। फलतः यदि ते स्वपुत्रान् स्वस्त्रियो वा विक्रेतुम् इच्छन्ति तदा तेषामासीत् स्वातन्त्र्यम्। अर्थात् स्वेच्छानुसारं म्लेच्छाः पुत्रादीनि विक्रेतुं प्रभवन्ति स्म, किन्तु आर्याः एवं कर्तुं न अक्षमन्त। यदि परिस्थितिविशेषे आर्यः दासतया बद्धः स्यादपि तदा तस्य मुक्तौ प्रयतनीयम्। एतेन न तस्य आर्यत्वं विनश्यति। आर्यः न कदापि आर्यत्वविहीनः भवितुं शक्नोति। धर्मशास्त्रेषु दासताविषयेऽपि अनुलोमप्रतिलोमविधिः दृश्यते। धर्मशास्त्रेषु आर्यस्य दासता विहिता एतावानेव प्रतिबन्धः यद् उच्चवर्णेन निम्नवर्णस्य दास्यं नाचरणीयम्।

कात्यायनमतानुसारं ब्राह्मणं विहाय सर्वेऽपि (क्षत्रियादयः) दास्यमाचरितुं शक्नुवन्ति। यदि कश्चिद् ब्राह्मणः दास्यं कर्तुमिच्छेदपि तदा तेन इदमवधेयं यत् तत्कर्म जघन्यं न भवेत्। अर्थात् जघन्यकर्मविषयकं दास्यं कदापि ब्राह्मणेन नाचरणीयम्। आधुनिकभाषायां कथयितुं शक्नोति यद् अर्थशास्त्रानुसारं राष्ट्रियता दासतायाः आधारः आसीत्। धर्मशास्त्रानुसारं च दासतायाः आधारः जन्म। अर्थशास्त्रं तु दासानामपि जघन्यकर्माचरणं निषेधति। नारदस्तु शुभकर्म जघन्यकर्म चाश्रित्य दासानां मुक्तिभेदं च व्यवस्थापयति। अर्थशास्त्रं दासान् अधिकारहीनान् मन्यते। तेषामधिकाराणां सुरक्षायाः उत्तरदायित्वं राज्येऽस्ति। यः तैः जघन्यं कर्म कारयति, सः अर्थशास्त्रानुसारं दण्डनीयो भवति, यदि तत्कर्म प्रतिज्ञापत्रे नोल्लिखितं भवेत्। तेषु (दासेषु) अशोभनो व्यवहारोऽपि कर्तुं न शक्यते स्म। अत्रापि अस्ति दण्डव्यवस्था, विशेषतः दासीनां सतीत्वस्य सुरक्षायां ध्यानं दत्तम् आचार्यैः। दासीशीलभङ्गः न केवलं पापमेव अपि तु अपराधोऽपि। तत्स्तरानुसारम् अपराधानुसारं च विभिन्नाः दण्डाः सन्ति व्यवस्थापिताः। यदि दासः प्रतिज्ञातानि कार्याणि सम्यक् परिपालयति, स्वामी च तं न मुञ्चति, फलतः दासः आर्यत्वं लब्धुम् अशक्तो भवति। अस्यां परिस्थितौ स्वामिने प्रथमं साहसदण्डः दीयते स्म। एवंविधा दण्डानां व्यवस्थाः प्रायः धर्मशास्त्रेषु न दृश्यन्ते यथा अर्थशास्त्रे मनुमतानुसारं दासता जन्मनि निर्भरा। अस्यां स्थितौ ततो मुक्तेश्च चर्चैव नोदेति। दासीशीलसुरक्षा धर्मशास्त्रेषु अवश्यं समर्थिता। दासानां सम्पत्तिविषयकेषु अधिकारेष्वपि धर्मशास्त्रस्य अर्थशास्त्रस्य च अस्ति वैमत्यम्। 'काण्ट' मतानुसारं दासः स्वयं सम्पत्तिम् अर्जयितुं प्रभवति। तां च अर्जितां सम्पत्तिं स्वापत्याय उत्तराधिकारितया दातुं शक्नोति। मनुनारददेवलकात्यायन-

प्रभृतयः धर्मशास्त्रकारास्तु अतो विपरीतमेव मन्यन्ते यद् दासस्य सम्पदि अधिकारः नैव भवति। स यत्किमपि अर्जयति तत्सर्वं स्वामिनः भवति। एतद्-वश्यं यत् शूद्रोत्पन्नदासस्य उत्तराधिकारं सीमिताधिकारं च मनुः याज्ञवल्क्यश्च स्वीकुरुतः —

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत्।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः॥

(मनु० ९।१७९)

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।

(याज्ञ० २।१३३)

न्यायसम्बन्ध्यधिकारविषये अर्थशास्त्रधर्मशास्त्रयोः न कश्चिद् भेदः। परन्तु दासमुक्तिविषये तु अस्त्येव मतभेदः। कौटल्यः दासमुक्तिं विशदं वर्णयति। याज्ञवल्क्यः नारदश्चापि दासानां मुक्तिं स्थापयतः। नारदेन पञ्चदशविधानां दासानां द्वौ वर्गौ प्रस्तुतौ। तत्र केचन ईदृशाः दासाः वर्णिताः येषां मुक्तिः स्वामिनः इच्छानुरूपं भवति स्म। याज्ञवल्क्यनारदकात्यायनप्रभृतीनां मतमिदं यद् दासानां मुक्तिः नैव विद्यते इति। कौटल्येन दास्यान्मुक्तिः अतोऽप्यधिकं सारल्यं नीता किन्तु धर्मशास्त्रेषु न ईदृशी व्यवस्था। मनुमतानुसारं तु जन्मैव दास्याय जायते। नारदः मुक्तदासेषु आर्याणां सर्वान् गुणान् तु मनुते, केषांचिद् दासानां मुक्तिं नैव विधत्ते। आपस्तम्बेन मनुना च दासस्य सुरक्षायाः व्यवस्था निर्दिष्टा—यतः सः छायाकल्पः—छाया स्वो दासवर्गश्च (मनु० ४।१८५)। पतञ्जलिः शूद्रम् आर्य इति मन्यते (२।४।१०)।

कौटल्येन दासकल्पे समाजः द्वेधा विभाजितः, तत्र वर्णाश्रममर्यादासम्पन्नः एकः समाजः, अपरश्च तद्बहिर्भूतः, यः म्लेच्छ इति कथितः। म्लेच्छद्वारा कृते दासप्रथाप्रयोगे तेन किञ्चिदपि न नियन्त्रितम्। आर्याणां दासताविषयकः अधिकारस्तेन समापितः। कौटलीयार्थशास्त्रविषये किञ्चिद् विवेचनात् पूर्वम् अर्थ-शास्त्रे दासकल्पादन्यत्र उपलब्धदासविषयकाणि वचनानि इह प्रस्तूयन्ते—

दास्यो वा'''चारं निर्हारयेयुः। १।१२।१५।

अतुष्यतः'''गुप्तपुत्रदारान् आकरकर्मान्तेषु वा वासयेत्।१।१३।१८-२०।

संसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत्।१।२०।२८।

शयनादुत्थितः स्त्रीगणैः धन्विभिः परिगृह्येत्।१।२१।१।

स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः। ताभिरधिष्ठिता वा शिल्पिनः।१।२१।२८–२९।

दासाहितकबन्धून् अशृण्वतः राजा विनयं ग्राहयेत् ।२।१।२६।
स्तेनम् अनिसृष्टोपजीविनश्च बद्ध्वा कर्म कारयेत् दण्डोपकारिणश्च। २।१२।२१-२२।
कणिका दासकर्मकरसूपकाराणाम् ।२।१५।८१।
दासकर्मकरवर्गश्च विष्टिः ।२।१५।८३।
दासकर्मकरेभ्यो वा वेतनं दद्यात् ।२।१५।
याश्च अनिष्कासिन्यः...आत्मानं बिभृयुः, ताः स्वदासीभिः अनुसार्य सोपग्रहं कर्म कारयितव्याः ।२।२३।१२।
दण्डप्रतिकारिणीभिः...वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत् ।२।२३।२।

बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत् ।२।२४।२। दासकर्मकरेभ्यः यथापुरुषपरिवापं भक्तं कुर्यात् । सपादपणिकं मासं दद्यात्। २।२४।३८-९। वणिजस्तु...स्वदासीभिः पेशलरूपाभिः आगन्तूनां वास्तव्यानां च आर्यरूपाणां मत्तसुप्तानां भावं विद्युः ।२।२५।१६। दासहितकामाभ्याम् ।३।१।१३। प्रेतस्य व्यसनिनो वा साक्षिवचनमसारम् अभियोक्तारं दण्डयित्वा कर्म कारयेत् ।३।१।४६। न भोगेन हरेयुः। उपनिधिम्, आधिम्...स्त्रियं सीमानम् ।३।१६।३६-३७। परविषयाद्वा विक्रमेणानीतं यथाप्रदिष्टं राज्ञा भुञ्जीत, अन्यत्र आर्यप्राणेभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्च ।३।१६।२९।

स्वामी वा।...स्वकरणेन पञ्चपणिकं द्विपदरूपस्य निष्क्रयं दद्यात्। ३।१६।२४। महापशुमनुष्य...द्विशतावरः पञ्चशतपरो मध्यमः साहसदण्डः। ३।१७।९। दास्या गर्भम् औषधेन पातयतश्च पूर्वः साहसदण्डः ।३।२०।२१। परिगृहीतां दासीम् आहितिकां वा संरुद्धिकाम् अधिगच्छतः पूर्वः साहसदण्डः ।४।९।५४।

एकं दासं दासीं वा अपहरतः...द्विपादवधः षट्छतो वा दण्डः ।४।१०।१९। कन्यां दासीं वा सहिरण्यामपहरतः...वामहस्तद्विपादवधः नवशतो वा दण्डः ।४।१०।२२।

मनुष्य...अपहारिण उत्तमो दण्डः शुद्धवधो वा ।४।१०।२४।
दासस्य दास्या वा...साचिव्यावकाशदाने कर्तृसमो दण्डः ।४।१२।३५-३७।
परचक्राटवीहृताम्....निष्क्रयेण वापहयेत् ।४।१२।४५-४६।
स्वयं प्रकृता राजदास्यं गच्छेत् ।४।१२। ( लिङ्गच्छेदनं वधश्च )। सकामा तदेव लभेत । दासपरिचारकाहितकभुक्ता च ।४।१३।४३-४४।

'दासकल्पेन' उक्तवचनैश्च विषयविवेचनावसरे दासव्यवस्थायाः स्वरूपं परिज्ञातुं शक्नुमः। युद्धप्राप्तदासविषये राज्ञः एव अन्तिमनिर्णयस्य अधिकारः राजशक्तेर्विकासस्य द्योतकः अस्ति। कारागृहे बद्धानामपि दासानां मुक्तिः सम्भवति यदि श्रमेण ते हानिं पूरयेयुः। केचन अपराधाः इत्थं सन्ति यत्र ब्राह्मणोऽपि दास इव श्रमं कर्तुम् आकरे प्रेषयितुं शक्यते। एवंप्रकारेण दण्डितानां जनानां परिवारस्य सुरक्षायाः उत्तरदायित्वं राज्ये आसीत्।

अनार्येषु प्रचलितायां दासप्रथायां कौटल्येन प्रतिबन्धः स्थापितः। स्वामी दासम अन्यहस्ते विक्रेतुं न शक्नोति स्म; न वा तं बन्धकं कर्तुम। दासविषयकेषु स्वामिनोऽधिकारेषु कौटल्येन प्रचुरं नियन्त्रणं कृतम। वर्षाष्टकान्न्यूनायुषाः बालकाः अत्यन्तापत्समये एव बन्धकाः कर्तुं शक्यन्ते स्म। अनेन नियमेन पुत्रस्योपरि पितुः अधिकारो नियम्यते। बन्धनगतानां व्यक्तीनामपि अधिकाराः व्यवस्थापिताः। तैः सर्वप्रकाराणि कार्याणि पूरयितुं न शक्यन्ते। दास्याः कृते अन्यविधापि स्वतन्त्रता प्रदत्ता आसीत्। एतेषां नियमानां स्वामिकृतोल्लङ्घने दासाः दास्यश्च दास्यात् मुक्तिं लभन्ते स्म। पुत्रवती दासी स्वत एव दास्यात् मुक्ता भवति स्म। न केवलं पुत्रोत्पत्त्या दास्याः मुक्तिरेव अपि तु तस्याः पुत्रः सर्वविधान् अधिकारान अधिगच्छति स्म। इत्थं कौटल्येन दासप्रथायां दासानां स्वातन्त्र्यं समर्थितम। पुत्रवत्याः दास्याः अधिकाराः इत्थं समर्थिताः यत् तस्याः सम्बन्धिनोऽपि दास्यात् मुक्तिं लब्धुं शक्नुवन्ति स्म। दासीषु दुर्व्यवहारे कठोरः दण्डो व्यवस्थापितः। गर्भवत्याः स्त्रियः बन्धनम् अवैधानिकम् अमन्यत। स्पष्टं यद् ऋणदातुः स्वामिनो वा अधिकारेषु महत् नियन्त्रणं कौटल्येन स्थापितम्। इदं मतं केचन आधुनिकाः विद्वांसः खण्डयन्ति[1]। किन्तु यानि वचनानि पुरस्कृत्य ते कौटल्यस्य असङ्गतिं प्रस्तुवन्ति तानि वचनानि न कौटलीयानि मानवानि च।

---

1 Dev Raj Chanana, Slavery in Ancient India, PBH., P,99.

कौटल्येन कार्यार्थमपि दासता स्वीकृता।[१] अस्य मतस्य संस्थापकाः आधुनिका विद्वांसः कौटल्यस्य तानि वचनानि उपस्थापयन्ति यद् 'दासस्य मुक्तेः पश्चात् तस्य आर्यभावः' इति कथनस्य तात्पर्यं यद् दासता आर्येष्वपि आसीत्। वस्तुतः एवंविधा विद्वांसः 'आर्य' 'अनार्य' इति जातिद्वयं मन्यन्ते। वस्तुस्थितिस्तु एषा यद् 'अनार्य'नामिका कापि जातिः भारते नासीत्। साम्राज्यवादिभिः इतिहासकारैः सा कल्पिता अस्ति। तत्कल्पने सन्ति कूटनीतिकानि कारणानि। आर्यनामिका न कापि जातिः। आर्यशब्दः श्रेष्ठेऽर्थे प्रयुज्यते स्म संस्कृतसाहित्ये। अत्र कौटल्येनापि आर्यभाव इति शब्दः श्रेष्ठरूपार्थे एव प्रयुक्तः, न तु जातिविशेषरूपार्थे। अनेन प्रकारेण भारतीयानां म्लेच्छेभ्यः श्रेष्ठताबोधनायैव आर्यशब्दप्रयोगः, न तु जातिपर्यायतया। दासोऽपि मुक्तेः पश्चादेव आर्यभावं श्रेष्ठभावानां वा लब्धुं शक्नोति। स्पष्टं यद् भारतीयानाम्, आर्याणां वा कथमपि दासतां न मन्यते कौटल्यः।

सिकन्दराक्रमणेन सह यूनानभारतयोः सम्बन्धो जात इति विशेषतः ऐतिहासिकैः प्रमाणैः सिध्यति। तदानींतनैः यूनानीयलेखकैः स्पष्टं स्वीकृतमस्ति यद् भारते 'दासता' इति नासीत्;[२] किन्तु श्रीरमेशचन्द्रमजूमदारप्रभृतीनां लेखकानां मतं यद् यूनानीयलेखकैः भारते दासेषु स्वामिनः क्रियमाणं मानवीयं व्यवहारं दृष्ट्वा भारते दासता नासीदिति भ्रान्तम्। वस्तुतः पश्चिमदेशे यादृशी दासता आसीत्, तादृशी दासता भारते नासीत्। अर्थशास्त्रे यत् स्वरूपम् उपस्थापितमस्ति तेन अतीव महत्त्वपूर्णा स्थितिः पुरः आयाति यद् वैदिकसमाजे दासता नासीत्। अस्याः प्रयोगः अवैदिकसमाजेषु अवैदिकविधिशासितेषु समाजेषु च आसीत्। धर्मशास्त्रेषु दासताविषयकाः केचन उल्लेखाः एवंविधाः सन्ति—

"नाग्निं चित्वा रामाम् उपेयात्। कृष्णवर्णा हि रामा रमणाय न धर्माय"—वसि० १८।१७-१८।

अनार्यं शयने विभ्रत्...तृणेष्वासीत् पृष्ठतम्—आपस्तम्ब० १।९।१७; यदेकरात्रेण करोति पापं कृष्णां वर्णां ब्राह्मणः सेवमानः—आप० १।१०; अकृत्स्नं पात्रमादाय दासः—गौ० २०।२-४।

१. तदेव।

२. McCrindle; (i) The Invasion of India by Alexander the Great.
(ii) Ancient India As Described by Megasthanese.
(iii) Ancient India As Described by Ktesies.
(iv) Ancient India As Described by Classical Literature.
(v) India of Arrian.

दास्या वा नक्तमाहृतम्—आप० १।५।१६।

दासा वा राजकुलादाहृत्यातिथिवत् शूद्रं पूजयेयुः—आप० ११।२।४।

काममात्मानं भार्यां पुत्रं वोपरुध्यान्नं त्वेव दासकर्मकरम्।

आप० २।४।९।

क्रीता द्रव्येण या नारी सा न पत्नी विधीयते।

सा न दैवे न सा पित्र्ये दासीं तां काश्यपोऽब्रवीत्।

( बौ० १।११।२१-२ )

प्रस्तुतविवेचनेन स्पष्टं यत् प्राचीनभारते दासप्रथा आसीत्; वैदिकयुगे एषा दासता अवैदिकसमाजे आसीत्। त एव ( अवैदिकसमाजीयाः ) दासाः क्रियन्ते स्म। इत्थम् अवैदिकीयो दासः वैदिकसमाजे सर्वथा वैधानिकाद् अधिकारात् वञ्चितः आसीत्। अर्थात् तस्य कोऽपि वैधानिकोऽधिकारः नासीत्। इदमवधेयमासीद् यद् दासशब्दः सेवके प्रयुज्यते स्म। अस्यां स्थितौ एकत्र समाजस्य समस्ताः सदस्याः दासाः कथिताः। अस्मिन् समाजे कृषकाः पशुपालकादयश्च आसन्। वैदिकयुगे अवैदिकसमाजीयस्य दासस्य स्वाम्यधिकारविपरीताः सामान्याः अधिकारा आसन्। ये कस्यापि विजितस्य समाजस्य दासानां सम्भवन्ति। वैदिकसमाजस्य नैतिकतायाः परिणाम एष आसीद् यद् दासैः सम्मानपूर्णानि स्थानानि लब्धान्यासन्।

वैदिकोत्तरकाले समाजान्तराणां सम्मिश्रणम् आरभ्यते। समाजेऽवैदिकानां सम्प्रदायानां भवति उद्भावः। वर्णसाङ्कर्यविषयिणी समस्याः पुरः आयाति। अस्यां सामाजिकस्थितौ दासानां स्वरूपं भवति परिवर्तितम्। मनुनारदादिभिः धर्मशास्त्रकारैः दासानां नूतनं परिगणनं प्रस्तुतम्। तेषां कृते च नूतनानि विधानानि व्यवस्थापितानि। तेषाम् अधिकाराः विवेचयितुम् आरभ्यन्ते। दासशब्दस्य सम्बन्धः अवैदिकैः दस्युभिः दासैश्च सह आसीत्, ये वैदिकेषु विधिषु न श्रद्दधते। अस्यां नूतनायां परिस्थितौ पुनः ईदृशाः सम्प्रदायाः समाजश्च पुरः आयान्ति, ये वैदिकविधितः बहिस्तिष्ठन्ति। फलतः धर्मशास्त्रेषु तेषां समानतायाः वैदिकसमाजीयोपलब्धिषु भागवत्तायाः वा प्रश्न एव न उदेतुम् अशकत्। कैश्चित् वैदिकवर्णैः अवैदिकसमाजानां मान्यताः स्वीकृताः। अतस्तेऽपि दासवर्गे निवेशिताः। अस्यां स्थितौ वैदिकसमाजेऽपि जन्मना शूद्राः, किन्तु अवैदिकसमाजे दीक्षिताः व्यक्तयः लब्धाः, ते दासा अपि कर्तुं शक्यन्ते स्म। वस्तुतः एवंविधजनास्तु जन्मना वैदिकसमाजीयाः शूद्रा एव आसन्। अतस्तेषां दासतायाः विधानस्य समर्थनं वीक्ष्य एव निष्कर्षः न स्थापनीयः यद् भारते पाश्चात्त्यदेशेष्विव दासप्रथा प्रचलिता आसीत्।

❀—❀—❀

१५ (१)

# कोशः

राज्यप्रकृतिषु स्वाम्यादिषु काश्चन प्रकृतयः पूर्वं विवेचिताः सन्ति। तत्र नीतिकारमतानुसारं कोशस्य अतीव महत्त्वम् अस्ति—"कोशमूलाः कोशपूर्वाः सर्वारम्भाः। तस्मात् पूर्वं कोशमवेक्ष्येत्" (कौ० २।२)।

कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः। कोशमूला हि राजानः कोशो वृद्धिकरो भवेत्॥ (शां० ११९।१६)

"कोशमूलो हि राजेति प्रवादः सार्वलौकिकः (का० १३।३३)", "कोशस्तु सर्वथा अभिसंरक्ष्यः" इत्याह गौतमः। "तन्मूलत्वात् प्रकृतीनाम्" इति (स० वि० बृ० ४६)।" स्पष्टं यत् नीतिकारैः राज्यव्याख्यायां कोशस्य यादृशं महत्त्वं स्वीकृतम् अस्ति, तत्र प्लेटोमहोदयेन कृता राज्यस्य नैतिकव्याख्या न दृश्यते, नापि आदर्शवादिभिः एकाङ्गिराज्यस्य सर्वोच्चता स्वीकृता अस्ति। तैर्हि राज्यस्य यथार्थवादिनी व्याख्या कृता यत्र राज्यस्य आर्थिकं स्वरूपम् अति महत्त्वपूर्णम् अस्ति। इमामेव व्याख्यां स्वीकुर्वता गौतमेन कोशः अन्येषां षण्णां राज्याङ्गानां मूलं स्वीकृतः। प्रकृतीनां पारस्परिकसम्बन्धविषये शान्तिपर्वणि भीष्मस्य मतम् इत्थम् अस्ति—

स्वराष्ट्रात् परराष्ट्राच्च कोशं संजनयेन्नृपः।
कोशाद्धि धर्मः कौन्तेय राज्यमूलं च वर्धते॥ १३३।१॥
न कोशः शुद्धशौचेन न नृशंसेन जातुचित्।
मध्यमं पदमास्थाय कोशसङ्ग्रहणं चरेत्॥ १३३।२॥
अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम्।
अबलस्य कुतो राज्यं अराज्ञः श्रीर्भवेत् कुतः॥ १३३।४॥

अस्यां स्थितौ राज्यं कोशविभागेन सह साक्षात् व्यक्तिगतं सम्बन्धं स्थापयेत्[१]। कोशस्य मूलं करः। राजा न स्वेच्छया, नापि स्वार्थेन, अपि तु स्मृत्युक्ता व्यवस्था अनुरुध्य करान् व्यवस्थापयेत्।[२] स्मृतिविधानां सम्बन्धः सैद्धान्तिकतया अस्ति। वस्तुभिः समयेन च सह तेषां विधानानां समन्वयनं कृत्वा करनिर्धारणम् आवश्यकम् आसीत्। सामान्यस्थितौ संक्रमणकालिकस्थितौ च भेदोऽस्ति। तद्यथा—उत्पादनस्य षष्ठः अंशः करो देय इति नियमः

१. मनु० ७।६५; याज्ञ० १।३२७-२८; काम० ५।७७; शुक्र० १।२७६–२७८; राजतरङ्गिणी ७।५०७-८।

२. महा० शान्ति० ७१।१५।

आसीत् सामान्यस्थितौ।[१] आपत्कालिकस्थितौ तु तृतीयांशः करतया गृहीतुम् अशक्यत।[२] अवधेयम्—एवंविधे राजा स्वीयम् अधिकारं मन्तुं न शक्नोति। एष करो हि आपत्कालिकभिक्षाकल्पः, यं राजा याचते। एतदर्थं 'प्रणय' इति शब्दस्य प्रयोगः कृतोऽस्ति—"कोशमकोशः प्रत्युत्पन्नार्थकृच्छ्रः सङ्गृह्णीयात् जनपदं महान्तमल्पप्रमाणं वा देवमात्रिकं प्रभूतधान्यं धान्यस्यांशं तृतीयं चतुर्थं वा याचेत;·······इति कर्षकेषु प्रणयः·······।·······इति व्यवहारिषु प्रणयः·······सकृदेव न द्विः प्रयोज्यः" (अर्थ० ५।२)।[३]

षडेतान् पुरुषो जह्याद् भिन्नां नावमिवार्णवे।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥
अरक्षितारं राजानं भार्यांश्चाप्रियवादिनीम्।
ग्रामकामञ्च गोपालं वनकामञ्च नापितम् ॥

(शा० ५६।४४-४५)

"दुर्भिक्षस्तेनाटव्युपघातेपु च पौरजानपदान् उत्साहयन्तः शस्त्रिणो ब्रूयुः—राजानम् अनुग्रहं याचामहे निरनुग्रहाः परत्र गच्छामः इति।"

शान्तिपर्वणि करनीतिविषये विस्तरेण विचारितं भीष्मेण। तत्रत्याः केचन अंशाः सन्ति उल्लेखनीयाः—

इयमापत्समुत्पन्ना परचक्रभयं महत्।
अपि चान्ताय कल्पन्ते वेणोरिव फलागमा ॥
अरयो मे समुत्थाय बहुभिः दस्युभिः सह।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् ॥
अस्यामापदि घोरायां संप्राप्ते दारुणे भये।
परित्राणाय भवतः प्रार्थयिष्ये धनानि वः ॥
प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये।
नारयः प्रतिदास्यन्ति यद्हरेयुः बलादितः।
कलत्रमादितः कृत्वा सर्वं वो विनशेदिति ॥

---

१. गौतम० १०।२४; मनु० ७।१३०; वि० ध० सू० ३।२२-२३।

२. कौ० ५, २; मनु० १०।११८; शा० ८७; शु० ४।२-९,१०।

३. रुद्रदामनस्य जूनागढस्थशिलालेखे 'प्रणय'शब्दस्य प्रयोगः उपर्युक्तेऽर्थे लक्ष्यते (C. I. vol VIII P. 36,11,15-16)।

अपि चेत् पुत्रदारार्थमर्थसञ्चय इष्यते ।
नन्दामि वः प्रभावेण पुत्राणामिव चोदये ॥
यथा शक्त्युपगृह्णामि राष्ट्रस्यापीडया च वः ।
आपत्स्वेव च वोढव्यं भवद्भिः पुङ्गवैरिव ॥
न च प्रियतरं कार्यं धनं कस्याञ्चिदापदि ॥

( ८७।२७-३३ )

सामान्यस्थितौ करसिद्धान्तस्य एष मूलाधारः आसीत्, यद्राजा तथाकरं गृह्णीयात्, यथा जनैः करदाने किमपि काठिन्यं नानुभूयेत्।[1] इयं करनीतिः शान्तिपर्वणि उद्योगपर्वणि च प्रदर्शिता अस्ति—

यथादेशं यथाकालं यथाबुद्धि यथाबलम् ।
अनुशिष्यात् प्रजा राजा धर्मार्थी तद्धिते रतः ॥
यथा तासां च मन्येत श्रेय आत्मन एव च ।
तथा कर्माणि सर्वाणि राजा राष्ट्रेषु वर्तयेत् ॥
मधुदोहं दुहेद् राष्ट्रं भ्रमरा इव पादपम् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥
जलौकावत् पिबेद् राष्ट्रं मृदुनैव नराधिपः ।
व्याघ्रीव च हरेत् पुत्रान् संदशेन्न च पीडयेत् ॥
यथा शल्यकवानाखुः पदं धूनयते सदा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥

( शा० ८८।२-६ )

यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान् मनुष्येभ्यः आदद्यादविहिंसया ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥

( उद्यो० ३४।१७-१८ )

---

१. यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ॥ संवेक्ष्य तु यथा राज्ञा प्रणेयाः सततं कराः । नोच्छिन्द्याद् आत्मनो मूलं परेषां चापि तृष्णया ॥ ईहा द्वाराणि संरुध्य राजा संप्रीतदर्शनः ॥ ( शान्ति० ८७।१७-१८; मनु० ७।१३९ )

अनुचितरीत्या अधिकं करं गृह्णन् राजा स्वयमेव स्वस्य मूलं कृन्तति (मनु० ७।१३९)। करवृद्धिविषयकनीतौ महाभारतस्य मतं यत् तत्रोग्रतापूर्णा अधैर्यपूर्णा च त्वरा न कार्या[1]—

अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत्।
ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत्॥

(शा० ८८।७)

करः देशकालानुसारं ग्राह्यः—

न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत्।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि॥

(शा० ८८।११)

आददीत फलं काले त्रिवर्गपरिवृद्धये।
यथा गौः पाल्यते काले दुह्यते च तथा प्रजा॥

(काम० ५।८३-८४)

वणिक्षु करस्य निर्धारणावसरे मूलधनेन सह अन्येऽपि विषयाः अवधेयाः—

क्रयविक्रयमध्वानं भक्तं च स परिव्ययम्।
योगक्षेमञ्च सम्प्रेक्ष्य वणिजो दापयेत् करान्॥

(मनु० ७।१२७)

एष एव श्लोकः महाभारते शान्तिपर्वणि अपि दृश्यते (२७।१३)। शिल्पिसु करस्य निर्धारणात् पूर्वं तेषां कार्यफलानाम् आवश्यकतायाश्च परिज्ञानम् आवश्यकम्—

उत्पत्तिं दानवृत्तिं च शिल्पिनः सम्प्रेक्ष्य चासकृत्।
शिल्पं प्रति करानेवं शिल्पिनः प्रतिकारयेत्॥

(महा शा० २७।१५)

सर्वैरपि नागरिकैः करोऽवश्यं देय आसीत्। यस्य पुरुषस्य यथा उत्पादन-सामर्थ्यम् आसीत्, स तथा एव करं ददाति स्म[2]—

कारुकाञ्छिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः।
एकैकं कारयेत् कर्म मासि मासि महीपतिः॥

(मनु० ७।१३८)

---

१. यथापि भमरो पुप्फं वण्णगन्धं अहेयं। पलेति रसमादाय एवं गामे मुनी चरे॥ धम्मपदो ४९; पराश० १।६२; शुक्र० ४।२।११३; शा० ७१।२०।

२. गौ० १०।३१-३४; विष्णुध० सू० ३।३२।

कोशसञ्चयः विनियोगश्च इत्यादिकं शास्त्रानुसारमेव स्यात्—

बह्वादानोऽल्पनिःस्रावः ख्यातः पूजितदैवतः।
ईप्सितद्रव्यसम्पूर्णो हृद्यः स्वाप्तैरधिष्ठितः।
मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः॥
धर्मार्जितो व्ययः स कोशः कोशज्ञसम्मतः।
धर्महेतोस्तथार्थाय भृत्यानां भरणाय च॥
आपदर्थं च संरक्ष्यः कोशः कोशवता सदा।

(काम० ४।६२-६४)

करः राज्ञो वेतनम् अस्ति। यं स प्रजासंरक्षणपारिश्रमिकतया प्रजाभ्यो लभते[1]—

स्वभागभृत्या दासत्वे प्रजानां च नृपकृतः।
ब्राह्मणः स्वामिरूपस्तु पालनार्थं हि सर्वदा॥
बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्।
शास्त्रानीतेन लिप्स्येथा वेतनेन धनागमम्॥

(शा० ७१।१०)

नारदमतानुसारं राज्ञा लभ्यमानाः कराः संरक्षणस्य पुरस्काराः, अर्थाद् राजा प्रजासंरक्षणनिमित्तकं पुरस्काररूपेण करं लभते (ना० १८।४८)। "कर्त्तव्यच्युताय राज्ञे करो न देयः"। यदि राजा संरक्षणं न करोति तदा स न करम् आदातुम् अर्हति। एष एव सिद्धान्तः भारतीयानां नीतिकारणाम् अभिमतोऽस्ति—

योऽरक्षन्बलिमादत्ते करं शुल्कञ्च पार्थिवः।
प्रतिभागं च दण्डश्च स सद्यो नरकं व्रजेत्॥
अरक्षितारं राजानं बलिषड्भागहारिणम्।
तमाहुः सर्वलोकस्य समग्रमलहारकम्॥
अनपेक्षितमर्यादं नास्तिकं विप्रलुम्पकम्।
अरक्षितारमत्तारं नृपं विद्यादधोगतिम्।

(मनु० ८।३०७-९)

---

१. गौतम० १०।२८-२९; नारदप्रकीर्णक० ४८; महा० शा० ६७; ७०।१०; बौ० ध० सू० १।१०।१; नारद० १८।४८।

वस्तुतः—

अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः।
तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥

( मनु० ९।३०५ )

कामन्दकेन करस्य अष्टवर्गाः प्रतिपादिताः—

कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्।
खन्याकरो वनादानं शून्यानां च निवेशनम् ॥

( ५।७७ )

मानसोल्लासे कथितं यत् करस्य तृतीयम् अंशं सुरक्षितं कृत्वा अवशिष्टोऽशः जनकल्याणे विनियोजनीयः। शुक्रमतानुसारं करस्य षष्ठांशं पृथक् निधाय अवशिष्टस्य अंशस्य अर्धं सेनायां विनियोजनीयः। वर्षत्रयं यावद् राष्ट्रसंरक्षणार्थं यावद् धनम अपेक्षितं तावद् धनं सदैव कोशे विधेयम्। परन्तु सेनासम्बन्धी कोशः एवं सुरक्षितः स्याद् यद् विंशतिवर्षपर्यन्तं तेन कोशेन सेनायाः संरक्षणादिकं कर्तुं शक्येत। परिस्थितिविशेषेषु अर्थशास्त्रे इत्थं व्यवस्था उपवर्णिता—"सारतो वा हिरण्यान् आढ्यान् याचेत"। अर्थोपकारं वा स्ववशां वा यद् उपहरेयुः स्थानच्छत्रवेष्टनविभूषाश्चैषां हिरण्येन प्रयच्छेत् ( अर्थशास्त्रम् ५।२ )। कौटल्येन (५।२) करविषयकनीतेः यद् विस्तृतं स्वरूपं प्रस्तुतम्, तत्र करनीतावपि धर्मः, नीतिः इत्यादीनामपि प्रयोगः कृतः। कौटल्यस्यैव नीतेः नीतिवाक्यामृते, परशुरामप्रतापे च अनुकरणं कृतम् अस्ति—

धातुवादप्रयोगैश्च विविधैर्वर्धयेद् धनम्।
ताम्रेण साधयेत् स्वर्णं रौप्यं बङ्गेन साधयेत् ॥

आपत्काले राष्ट्रऋणं शुक्रेण व्यवस्थापितम् अस्ति—

धनिकेभ्यो भृतिं दत्वा स्वापत्तौ तद्धनं हरेत्।
राजा स्वापत्समुत्तीर्णस्तत्स्वं दद्यात् स वृद्धिकम् ॥

( शुक्र० ४।२।११ )

धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः।
वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै ॥
अङ्गमेतन्महद्राज्ये धनिनो नाम भारत।
ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥

( शा० ८८।२९-३० )

धर्मशास्त्रेषु, अर्थशास्त्रेषु, शिलालेखेषु च बहुविधानां कराणाम् उल्लेखो लभ्यते। करपर्यायः 'बलि' इति शब्दोऽस्ति। 'बलिभृत्' 'बलिकृत्' इत्यनयोः शब्दयोरुल्लेखो वेदेभ्य आरभ्यते।[1] धर्मशास्त्रेषु षष्ठांशरूपे बलिशब्दः प्रयुक्तः।[2] भागशब्दोऽपि अस्मिन्नेवार्थे दृश्यते।[3] शुल्कशब्दः 'तटकर'प्रभृतिषु करेषु प्रयुज्यते। राज्यस्यायस्य त्रीणि मुख्यानि साधनानि—करः, शुल्कम् , धनदण्डश्च—

बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्।

फलतः कृषकाः, वणिजः, शिल्पिनः श्रमिकाश्च मुख्याः करदातारः भवितुं शक्नुवन्ति। 'दण्डविवेके' मनुवचनम् (८।३०७) उद्धरता वर्धमानेन व्याख्यातं यत् करः प्रतिवर्षं वर्षे द्विवारं वा देयः। करनिर्धारणविषये विभिन्नानां परिस्थितीनामपि उल्लेखो दृश्यते[4]—

शूकधान्येषु षड्भागं शिम्बिधान्येष्वथाष्टकम्।
राजा बल्यर्थमादद्यात् देशकालानुरूपतः॥

शूकशिम्ब्यतिरिक्ते धान्ये मनुगौतमोक्तो द्वादशो दशमो वा भागः; तथा बृहस्पतिः—

दशाष्टषष्ठं नृपतेर्भागं दद्यात् कृषीबलम्।
खिलात् वर्षावसन्ताच्च कृष्यमाणाद्यथाक्रमम्॥

स एवाह—

देशस्थित्या बलिं दद्युर्भूतं षण्मासवार्षिकम्।
एष धर्मः समाख्यातः कीनाशानां (राक्षसानाम्) पुरातनः॥

(राजनीतिप्रकाशिका २६२।६३)

शुक्रोक्ता व्यवस्था अति महत्त्वपूर्णा। यदि कृषकः कूपतडागादीन् निर्माय कृषिं विकासयेत्, तत्र तावत् पर्यन्तं करः स्थापयितुं न शक्यते यावत् स कृषकः उत्पादनेन कृतस्य व्ययस्य द्विगुणं लाभं नासादयति।[5] कौटिल्यः कथयति यद् राज्येन बीजपशुसेचनादिविषयकं कृषकाणां साहाय्यं कार्यं, येन ते कोशवृद्धिं कर्तुं शक्नुयुः—"धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात् तान्यनुसुखेन दद्युः; अनुग्रहपरि-

१. स निरुद्ध्यानहुषो यह्वो अग्निर्विषश्चक्रे बलिहृतः सहोभिः—ऋ० ७।६।५।
अथो त इन्द्रः केवलीर्विषो बलिहृतस्करत्—ऋ० १०।१७३।६।
हरन्त्यस्मै विषो बलिम्—तै० ब्रा० २।७।१८।३।

२. मनु० ७।८०; मत्स्य० २१५।५७; रामायण० ३।६।११; विष्णुधर्मसू० ३।२२; आपस्तम्बधर्मसू० २।१०।२६।१०; मनु० ७।१२८, १२९, १३१; वशि० १९।२३; वि० ध० सू० ३।२६-२७।

३. मनु० ७।१३०-३१; ८।३०५; वि० ध० सू० ३।२५।

४. मनु० ७।१३०; गौतम० १०।२४; वि० ध० सू० ३।२२।

५. शुक्र० ४।२।१२१-२२।

हारौ चैभ्यः कोशवृद्धिकरौ दद्यात्" (अर्थ० २।१।१५-१६)। देशकालपरिस्थित्यनुसारं करविषयका ये निर्णयाः सन्ति, तदनुसारं करमात्राविषये तृतीयांशतः पञ्चाशत्तमांश-पर्यन्तं व्यवस्था लभ्यते।[1]

शुल्कं द्विविधं भवति—स्थलमार्गीयवस्तुविषयकम्, जलमार्गीयवस्तु-विषयकञ्च। गौतमेन स्वदेशे विक्रीतस्य वस्तुनो विंशत्तमोऽंशः शुल्कः अमन्यत।[2] इदं व्याचक्षाणाभ्यां हरदत्तनन्दपण्डिताभ्यां स्वीकृतं यन्मूल्यस्य 'प्रतिशतं पञ्च' राजा शुल्कतया गृहीतुं शक्नोति, परन्तु नीतिप्रकाशिकामतानुसारम् एषः प्रतिशतं पञ्च-विषयकः नियमः न सम्पूर्णमूल्यविषयकोऽपि तु लाभविषयकः, अर्थात् विक्रेतुः यावान् लाभो भवति तस्य लाभस्य प्रतिशतं पञ्च राजा शुल्कतया गृह्णीयात्, न तु यावता मूल्येन तद्वस्तु विक्रीतं तस्य मूल्यस्य प्रतिशतं पञ्च। राजनीति-प्रकाशिकावदेव मेधातिथिकुल्लूकभट्टयोरपि मतम् अस्ति—

शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत्॥
(मनु० ८।३९८)

"स्थलजलपथव्यवहारतो राजग्राह्यो भागः शुल्कम्। तस्यावस्थानेषु ये कुशलास्तथा सर्वपण्यानां सारासारज्ञास्ते पण्येषु यमर्घं मूल्यमनुरूपं कुर्युः, ततो लाभधनाद् विंशतिभागं राजा गृह्णीयात्।"

विष्णुधर्मसूत्रे (३।२९-३०) स्वदेशीयवस्तुषु प्रतिशतं दश विदेशीयवस्तुषु च प्रतिशतं पञ्च शुल्कं व्यवस्थापितम्। याज्ञवल्क्यः (२।२६१) सामान्यतः पञ्च प्रतिशतं शुल्कं स्वीकरोति। कौटिल्येन शुल्काध्यक्षप्रकरणे एतद्विषयको विचारः विस्तरेण उपस्थापितः—"वैवाहिकं मन्वायनम्, औपयनिकम्, यज्ञकृत्य-प्रसवनैमित्तिकम्, देवेज्या चौलोपनयनगोदानव्रतदीक्षणादिषु क्रियाविशेषेषु भाण्डमुच्छुल्कं गच्छेत्। अन्यथा वादिनः स्तेयदण्डः।" (अर्थ० २।२१।२२-२३)। राष्ट्रस्य हानिकारणानि अनुत्पादकानि च वस्तूनि नाशनीयानि (अर्थ० २।२१।३९)। शुल्कव्यवहारविषयकेण कौटिलीयमतेन इदं स्पष्टं भवति यद्राष्ट्रान्तरीयशुल्कनीतिः कीदृशी स्यादिति।

शुल्कव्यवहारो बाह्याभ्यन्तरं चातिथ्यम्।१। निष्क्राम्यं प्रवेश्यञ्च शुल्कम्।२। प्रवेश्यानां मूल्यपञ्चभागः।३। पुष्पफलशाकमूलकन्दवाल्लिक्यबीजशुष्कमत्स्यमांसानां षड्भागं गृह्णीयात्।४। शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत् कृत-कर्मप्रमाणकालवेतननिष्पत्तिभिः।५। क्षौमदुकूलक्रिमितानकङ्कटहरितालमनःशिला-

---

१. मनु० ७।१३०; गौतम० १०।२५; वि० ध० सू० ३।२४।

२. गौतम० १०।२६; वि० ध० सू० ३।२९।

हिङ्गुलुकलोहवर्णधातूनां चन्दनागरुकटुककिण्वावराणां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानामजैलकस्य च दशभागः पञ्चदशभागो वा ।६। वस्त्रचतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्ममृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः पञ्चविंशतिभागो वा ।७। द्वारादेयं शुल्कपञ्चभागम्, आनुग्रहिकं वा यथादेशोपकारं स्थापयेत् ।८। जातिभूमिषु च पण्यानामविक्रयः ।९। खनिभ्यो धातुपण्यादानेषु षट्छतमत्ययः ।१०। पुष्पफलवाटेभ्यः पुष्पफलादाने चतुष्पञ्चाशत्पणो दण्डः ।११। षण्डेभ्यः शाकमूलकन्दादाने पादोनं द्विपञ्चाशत्पणो दण्डः ।१२। क्षेत्रेभ्यः सर्वसस्यादाने त्रिपञ्चाशत्पणः ।१३। पणोऽध्यर्धपणश्च सीतात्ययः ।१४। अतो नवपुराणानां देशजातिचरित्रतः । पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः ॥ अर्थशास्त्र० २।२२।१-१५ ।

मानसोल्लासे वेलापुरस्य सुरक्षादीनां व्यवस्थायाः उल्लेखोऽस्ति । काकतीयराजागणपतिदेवस्य मोटुपल्ली इति स्तम्भलेखेऽपि तद्वदेव व्यवस्था—"पूर्वराजानः पोतपात्रेष्वन्यदेशाद् देशान्तरप्रवृत्तेषु दुर्वातेन समापतितेषु भग्नेष्ववतीर्थसङ्गतेषु च सम्भृतानि तुरगरत्नादीनि वस्तूनि सकलानि बलाद् अपहरन्ति । वयमपि प्राणेभ्योऽपि गरीयो धनमिति समुद्रयानकृतमहासाहसेभ्यस्तेभ्यः क्लृप्तशुल्काहृते कृपया कीर्त्यै धर्माय च सर्वं वितराम इति । तच्छुल्कपरिमाणम्" ( ए० इ० खण्डः १२ : पृ० १९५ ) ।

गृहकार्यसम्बन्धिषु श्रोत्रियसम्बन्धिषु च वस्तुषु शुल्कं न भवति, परन्तु यदि तानि वस्तूनि लाभार्थं प्रयुज्यन्ते, तदा तत्रापि शुल्कं देयमभवत्[1] । शतपथब्राह्मणे ब्राह्मणानां करमुक्तेः उल्लेखोऽस्ति—"अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य यदन्यद् भूमेश्च ब्राह्मणस्य वित्तात्" ( १३।६।२।१८ ) । शतपथब्राह्मणोक्तवद् व्यवस्था धर्मसूत्रेष्वपि लभ्यते—"अकरः श्रोत्रियः" ( आप० ध० सू० २।१०।२६।१० ); "राजा तु धर्मेण अनुशासत् षष्ठं धनस्य हरेत् । अन्यत्र ब्राह्मणात्" (वसिष्ठः १।४२-४३ ); "ब्राह्मणेभ्यः करादानं न कुर्यात् । ते हि राज्ञो धर्मकरदाः" ( वि० ध० सू० ३।२६-२७ ) । शतपथब्राह्मणोक्त एव अर्थः वसिष्ठेनापि प्रतिपादितः—"इष्टापूर्तस्य तु षष्ठमांशं भजतीति ह । ब्राह्मणो वेदमाढ्यं करोति । ब्राह्मण आपद उद्धरति । तस्माद् ब्राह्मणो नाद्यः । सोमोऽस्य राजा भवतीति ह । प्रेत्य चाभ्युदयिकमिति ह विज्ञायते ।" ब्रह्मदेयभूमिः करमुक्ता प्रतिपादिता कौटिल्येन—ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत् (अर्थ० २।१) ।

वैदिकपरम्परायाः अभिव्यक्तिः शाकुन्तलेऽपि भवति ।[2] आपस्तम्बमतानुसारमिव वसिष्ठेन विस्तरेण वर्णितम्—"करः अकरः श्रोत्रियो राजपुमाननाथ-

१. नारद० सम्भूयसमुत्थानम्—१४-१५ ।
२. यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ २।१३ ।

प्रव्रजितबालवृद्धतरुणप्रजाताः" (१९।२३)। एष एव अर्थः मनुस्मृतावपि लभ्यते—

अन्धो जडः पीठसर्पी सप्तत्या स्थविरश्च यः।
श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित् करम्॥
(८।३९४)

कृषिकर्ता ब्राह्मणोऽपि पराश्रयेण करमुक्तः स्वीकृतः—

ब्राह्मणस्तु कृषिं कुर्वन् वाहयेरिच्छया धराम्।
न किञ्चित् कस्यचित् विद्यात् स सर्वस्य प्रभुर्यतः॥

शान्तिपर्वणि श्रोत्रियाश्रोत्रियभेदेन ब्राह्मणं द्वेधा विभज्य अश्रोत्रियेभ्यः ब्राह्मणेभ्यः करग्रहणं विहितम—

विद्यालक्षणसम्पन्नाः सर्वत्र समदर्शिनः।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः॥
ऋग्यजुःसामसम्पन्नाः स्वेषु कर्मसु अवस्थिताः।
एते देवसमाः...अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः॥
तान् सर्वान् धार्मिको राजा बलिं विष्टिं च कारयेत्।
... ...एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः।
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च॥
(शा० ७६।२-३,५,९)

वस्तुतः ब्राह्मणाः, सर्वजातीयाः स्त्रियः, अवयस्का बालकाः, अन्तेवासिनः, धर्मनिष्ठाः संन्यासिनः, अन्धाः, बधिराः, पङ्गवः, असाध्यरोगिणः, वृद्धाः (अतिक्रान्तसप्ततिवर्षाः) इत्येतेषु करं न समर्थयन्ते धर्मशास्त्रकाराः।[1] सर्वेषां ब्राह्मणानां कृते ईदृशी करमुक्तिः नासीत्, अपि तु श्रोत्रियाणां वेदविदां च ब्राह्मणानामेव।[2]

भूगतेषु वस्तुषु राज्यस्य एकाधिकारो भवति।[3] राजा सम्पद्विषये करं शुल्कं भागं वा लभते। अतस्तत्र तस्य स्वत्वं भवति इति न मन्तव्यम्, अपि तु तत्करादिकं प्रजासंरक्षणनिमित्तकं वेतनमेव तस्य। कानिचिद् वस्तूनि राज्यं स्वयमेव उत्पादयति। तत्रापि राजा षष्ठांशं करम् आदत्ते। कौटिल्येन भूगतसम्पत्तौ द्वादशविधाः कराः निर्दिष्टाः। भूगतसम्पत्ताविव हस्तिषु अन्यासु च सैन्यसामग्रीषु राज्यस्य एकाधिकारः। अन्तपालद्वारा राजा यातायातसाधनेषु

१. गौत० १०।६।१२; आप० २।१०।२६; वसिष्ठ० १।४२-४६; १९।२३-२४; मनु० ८।३९४।
२. वि० ध० सू० ३।२६।
३. धनानामीश्वरो राजा ब्रह्मणा परिकल्पितः।
भूगतानां विशेषेण भर्ता असौ विबुधाधिपः॥

एकाधिकारं प्रयुङ्क्ते—"अन्तपालः सपादपणिकां वर्तनीं गृह्णीयात् पण्यवहनस्य। पणिकामेकखुरस्य पशूनामर्धपणिकां क्षुद्रपशूनां पादिकामंसभारस्य माषिकाम्। नष्टापहृतञ्च प्रतिविदध्यात्" (अर्थ० २।२१।२८-३०)। बृहत्पाराशरेण आयसाधनानि इत्थं व्याख्यातानि—

नृपस्य यदि जातानि देवद्रव्याणि कोशवत्।
आदाय रक्ष्यं चात्मानं ततस्तत्र च तत्क्षिपेत्॥
वित्तं वार्धुषिकाणां तु कदर्यस्यापि यद् भवेत्।
पाषण्डिगणिका वित्तं हरन्नातो न किल्विषी॥
देवब्राह्मणपाषण्डिगणका गणिकादयः।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः॥

तीर्थकरस्यापि उल्लेखो दृश्यते। राजतरङ्गिण्याः (८।१००८) अध्ययनेन इदं प्रतीयते यद् गयायां श्राद्धकरणे काश्मीरदेशीयानां करः देयः आसीत्, अर्थात् यदि कश्चित् काश्मीरदेशीयः गयायां श्राद्धं कर्तुं कामयेत, तदा तेन करो देयः आसीत्। पञ्चमविक्रमादित्यस्य एकस्मिन् शिलालेख (ए० १५, खण्डः २०, पृ० ६४) उपनयनेषु विवाहेषु वैदिकयज्ञेषु च करः उल्लिखितोऽस्ति। सिद्धनाथेन सोमनाथेन च यात्रायां करः उल्लिखितोऽस्ति। यः करः तेन सिद्धनाथेन मातुः आग्रहेण वर्जितः। स्पष्टं यदीदृशानां कराणाम् अशास्त्रीयतया एते कराः राज्ञो निरङ्कुशतामेव द्योतयन्ति। एष प्रश्नः यद्राज्ञः निरङ्कुशता कथं नियन्त्रयितुं शक्या इति। कौटिल्यमतानुसारं निरङ्कुशतायाः परिणामः राज्यक्रान्तिः, या राजानं नाशयति—

अप्रदानैश्च देयानामदेयानाञ्च साधनैः।
अदण्डनैश्च दण्ड्यानामदण्ड्यानां च दण्डनैः॥
अग्राह्यानामुपग्राहैर्ग्राह्यानाञ्चानभिग्रहैः।
···अरक्षणैश्च चोरेभ्यः स्वयं च परिमोषणैः॥
····राज्ञः प्रमादालस्याभ्यां योगक्षेमवधेन च।
प्रकृतीनां क्षयो लोभो वैराग्यश्चोपजायते।
क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम्॥
विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम्।
(७।५।३३-३९)

राजस्वं कया रीत्या बिनियोजनीयम् इत्येष प्रश्नः। अत्र विषयेऽधोनिर्दिष्टा व्यवस्था शुक्रेण दर्शिता—

ग्रामस्य द्वादशांशेन ग्रामपान्सन्नियोजयेत् ।
त्रिभिरंशैर्बलं धार्यं दानमर्धांशकेन च ॥
अर्धांशकेन प्रकृतयो ह्यर्धांशेनाधिकारिणः ।
अर्धांशेनात्मभोगश्च कोशोंऽशेन च रक्ष्यते ॥
आयस्यैवं षड्विभागैर्व्ययं कुर्यात् तु वत्सरे ।
(१।६३१-३५)

राष्ट्ररक्षायाम अत्यधिकं ध्यानम् आसीत् । सञ्चितकोशे राज्यस्य व्यापकोऽधिकारः यत् समर्थोऽस्ति राज्यस्य आन्तरिक्यायाः बाह्यायाश्च रक्षायाः दायित्वमेव तस्य आधारः भवितुं शक्नोति । अवधेयमस्ति यत् प्राचीनभारते स्थानीयसङ्कटनैः करसंग्रहणस्यापि अधिकारः अधिगतः आसीत् । इत्थं स्थानीयार्थिकव्यवस्थाया अपि दायित्वं तेषामेव स्वीकर्तुं शक्यते । केन्द्रियप्रशासकेषु मुख्यतया सुरक्षायाः उत्तरदायित्वम आसीत् । एतेन सहैव जनकल्याणविषयकमपि दायित्वं महत्त्वपूर्णम् आसीत् । राजस्वस्य अनेकानि स्रोतांसि आसन् । कौटिल्येन एतानि स्रोतांसि सप्तसु भागेषु विभक्तानि—

"समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथञ्च अवेक्ष्येत । शुल्कं दण्डः पौतवं नागरिको लक्षणाध्यो मुद्राध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारम् । सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारवाहिकादेयं च दुर्गम् । सीताभागो बलिः करो वणिक् नदीपालः तरो नावः पट्टनं विवीतं वर्तनी रज्जूश्चोररज्जूश्च राष्ट्रम् । सुवर्णरजतवज्रमणिमुक्ताप्रवालशंखलोहलवणभूमिप्रस्तररसधातवः खनिः । पुष्पफलवाटपण्डकेदारमूलवापाः सेतुः । पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् । गोमहिषम् अजाविकं खरोष्ट्रमश्वाश्वतराश्च व्रजः । स्थलपथो वारिपथश्च वणिक्पथः । इत्यायशरीरम् । (२।६।१-९)" ।

चौरादिभ्यः लब्धस्य धनस्य व्यवस्था इत्थं मनुना दर्शिता अस्ति—

प्रणष्टाधिगतं द्रव्यं तिष्ठेद् युक्तैरधिष्ठितम ।
यांस्तत्र चौरान् गृह्णीयात् तान् राजेभेन घातयेत् ॥
ममायमिति यो ब्रूयान्निधिं सत्येन मानवः ।
तस्याददीत षड्भागं राजा द्वादशमेव वा ॥
(८।३४-३५)

निधीनां तु पुराणानां धातूनामेव च क्षितौ ।
अर्धभाग्रक्षणाद् राजा भूमेरधिपतिर्हि सः ॥
(मनु० ८।३९)

दातव्यं सर्ववर्णेभ्यो राजा चौरैर्हृतं धनम्।
राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्विषम्॥
(मनु० ८।४०)

करग्रहणस्य विषयकाः केचन सामान्याः सिद्धान्ताः अस्माभिर्विवेचिताः। वस्तुतः प्राचीनाः भारतीयाः करव्यवस्थाः करविषयिण्याः सुव्यवस्थायाः सामाजिक्याः व्यवस्थायाः द्योतिकाः, तस्याः मुख्यम् उद्देश्यं जनकल्याणम् आसीत्। जनकल्याणं साधयन्नेव राजा करग्रहणस्य अधिकारी आसीत्। जनकल्याणम् उपेक्षमाणस्य तु राज्ञः नासीत् करग्रहणस्य अधिकारः। अद्यत्वे सम्पत्तिः आयो वा करस्य आधारः अस्ति। पुराकाले योगक्षेमोऽपि अत्र योजितः आसीत् (मनु० ९।२१९)। योगक्षेमविषये अर्थशास्त्रीयं विवेचनम् अति महत्त्वपूर्णम् अस्ति, परन्तु न तदिह अस्माभिः उपस्थाप्यते।[1] राज्यम्, समाजः, व्यक्तिः, वस्तु चेत्यादिकम् आश्रित्यैव करो निर्धारयितुं शक्यते। एकस्मिन् वस्तुनि वारद्वयं न कदापि करो ग्रहीतुं शक्यते।

वस्तुजातस्य एकवारं शुल्कग्राह्यं प्रयत्नः। "क्वचिन्नैव असकृत् शुल्कं राष्ट्रे ग्राह्यं नृपैश्छलात्" (शुक्र० ४।२।२१४)। ये आर्थिकं करं दातुम् असक्ताः बन्दिनो वा, तेभ्यः विष्टिं गृहीत्वा मार्गादीनां निर्माणं कार्यम्, अर्थात् तादृशाः जनाः मार्गनिर्माणादिकार्येषु योजनीयाः, येन तेषां श्रम एव करस्थानीयः भवेत्।

मार्गान् सुधाशर्करैर्वा घटितान् प्रतिवत्सरम्।
अभियुक्तानि रुद्धैर्वा कुर्याद् ग्रामजनैर्नृपः॥
(शुक्र० १।५३६)

नीचकर्मकरं कुर्याद् बन्धयित्वा तु पापिनम्।
मासमात्रं त्रिमासं वा षण्मासं वापि वत्सरम्।
यावज्जीवं तु वा कश्चिद् न कश्चिद् वधमर्हति॥
(शुक्र० ४।१८।७-८)

स्वभावदुष्टानेतान् हि ज्ञात्वा राष्ट्राद् विवासयेद्।
मार्गसंस्करणे योज्याः कदन्नन्यूनभोजनाः।
तत्तज्जात्युक्तकर्माणि कारयीत च तैर्नृपः॥
(शुक्र० ४।१०४-५)

---

1. Amar Nath Ray, "Yogakshema" Bulletin of School of oriental Studies in London. VII. Part. Ant. I. PP. 133-37.

शुक्रोक्तायाः अस्याः करनीतेः एप आशयो यत् सम्पत्ताविव व्यक्तावपि करो योजनीयः। व्यक्तेः आलस्यमसामाजिककार्यञ्च निराकर्तुं तस्याः समाजीकरणस्य प्रक्रियायामेव—एषा राज्यस्य नीतिः। एतया सहैव सामाजिककल्याण-सिद्धान्तस्यापि सफलः प्रयोगः आसीत्। करस्य अधिकतमो भारः धनिकेषु आसीत्। अन्धानाम, बधिराणाम, अङ्गहीनानां च मार्गप्राप्तेरधिकारः आसीत्। "अन्धस्य पन्थाः, बधिरस्य पन्था व्यङ्गस्य पन्थाः।" सामाजिककल्याणादिकं विचार्यैव करव्यवस्था कृता आसीत्। राज्येन 'केनापि प्रकारेण कस्मिन्नपि वस्तुनि करः' इति नीतिस्थाने सामाजिकनीतिकता कल्याणादिः स्थितिपुरस्सरं व्यवस्थाप्यते—

"पट्टछतमत्ययमन्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्। प्रमादनिर्णयनमसम्पत्तिञ्च सुरायाः, प्रमादभयात् कर्मसु निर्दिष्टानां मर्यादातिक्रमभयाद् आर्याणाम उत्साहभयाच्च तीक्ष्णानां लक्षितमल्पं वा चतुर्भागम, अर्धकुडुबम, कुडुबमर्धप्रस्थ प्रस्थं वेति ज्ञातशौचा निर्हरेयुः। पानागारेषु वा पिबेयुः असञ्चारिणः" ( अर्थ० २।२५।२-५ )।"

स्पष्टं यद्राज्यैः करनीतिनिर्धारणावसरे सामाजिक्यां नैतिकतायां ध्यानं देयम्। कोशवृद्धिविषयककरनीतिं विशदयितुं नीतिवाक्यामृतस्य वचनानि इह उद्ध्रियन्ते—

"देवद्विजवणिजां धर्माध्वरपरिजनानुपयोगिद्रव्यपरिभागैः आढ्यविधवा-विनियोगिग्रामकूटगणिकासंघपापण्डिविभवांशपत्यादानैः समृद्धैः पौरजानपद-द्रविणसंविभागप्रार्थनैः अनुपक्षयः, श्रीकरणमन्त्रिपुरोहितश्रोत्रियमित्रसामन्तपाला-नुनयप्रग्रहधनाभ्यां क्षीणकोशं कुर्यात।"

—:०:—

१५ (२)

# भूस्वामित्वम्

उत्पादनसाधनेषु भूमिरपि अन्यतमं साधनम्। पुराकाले भूस्वामित्वस्य वैधानिकी अवस्था सम्प्राप्ता आसीत्। धर्मशास्त्रकारैर्थशास्त्रकारैश्च अत्र तद्विषये विचारितम्। सामान्यतः भूमौ वैयक्तिकं स्वामित्वं स्वीकृतम्। राजतन्त्रस्य सर्वग्राहि-विकाससमये राजा भूपतिर्भूपालश्च अमन्यत—भूस्वामी भूपतिशब्दस्यार्थो भूपालशब्दस्य च भूरक्षकः; अर्थाद् राजा भुवः स्वामी रक्षकश्च स्वीकृतः। कौटिल्यग्रन्थं व्याचक्षाणेन भट्टस्वामिना जलविषये राज्ञः स्वत्वं स्वीकृतम्, अन्यत्र च व्यक्तेः।[1] परन्तु इमं सिद्धान्तम् असम्मन्यमानेन कात्यायनेन भुवि राज्ञः व्यक्तेश्च स्वत्वं स्वीकृतम्। राज्ञः भुवि सामान्यः अधिकारः व्यक्तेश्च विशेषः अधिकारः। राज्ञः भुवि सामान्यः अधिकारः, अत एव स भूपाल इत्युच्यते, उत्पादनस्य षष्ठम् अंशं च लभते।[2] आकरः, कर्मान्तद्रव्यम, हस्तिधनम्, वनम्, व्रजः, वणिकपथ-प्रचारः, वारिस्थलम्, आपणः इत्यादिषु राज्ञः स्वत्वं कौटिल्येन स्वीकृतम्—

"आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तानि च निवेशयेत्। मत्स्यप्लवहस्तिपण्यानां सेतुषु राजा स्वाम्यं गच्छेत्" (अर्थ० २।१)।

भूगर्भस्था सम्पत्तिः यदि लभेत्, सा च शतात् सहस्राद् अधिका भवति, तदा तत्र राज्ञः अधिकारः। यदि च सा अतो न्यूना भवति, तदा लब्धा एव तस्याः स्वामी भवति; केवलं तस्य षष्ठांशे राज्ञः अधिकारः।[3]

भूस्वामित्वविषये आधुनिकैः विचारकैः बहु विचारितमस्ति।[4] तेषां द्वौ पक्षौ स्तः। एकः पक्षः सम्पत्तिं वैयक्तिकीं मन्यते। तस्याश्च सामाजिकेन सह

---

१. राजा भूमेः पतिर्दिष्टः शास्त्रज्ञैरुदकस्य च।
ताभ्यामन्यद् यद् द्रव्यं तत्र स्वाम्यं कुटुम्बिनाम्॥ भट्टस्वामी।

२. भूस्वामी तु स्मृतो राजा नान्यद्रव्यस्य सर्वदा।
तत्फलस्य हि षड्भागं प्राप्नुयान्नान्यथैव तु॥
भूतानां तन्निवासित्वात् स्वामित्वं तेन कीर्तितम्।
तत्क्रियाबलिषड्भागं शुभाशुभनिमित्तजम्॥ वीरमित्रोदये उद्धृतम्।

३. शतादूर्ध्वं राजगामी निधिः। ऊने षष्ठांशं दद्यात्—कौ० ४।१।

४. काशीप्रसादजायसवाल, हिन्दू पॉलिटी, भागः १, पृ० १७४-१८३।
यू० एन० घोषाल, हिस्ट्री ऑफ रेवेन्यू सिस्टम, (१६१६)।
एग्रेरियन सिस्टम इन एंशियेण्ट इण्डिया, १९३०।

समन्वयनं करोति। द्वितीयः पक्षः सामन्तवादिनः भूस्वत्वसम्बन्धिनश्च दोषान् भारतेऽस्वीकुर्वन इदं साधयितुम् ईहते यत् समाजशक्तिः राज्ञः बलवती आसीत्; अथ च वैयक्तिकसम्पद एव महत्त्वम आसीत। अर्थात उपर्युक्तदोषाः भारते नासन। अथ च समाजशक्तेरेव प्राधान्यम् आसीद् इति अस्य पक्षस्य आशयः। कोलब्रुकमहोदयेन परम्परावादिनोऽनुसारं भुवि राज्यस्य अधिकारो मन्यते। कोलब्रुकविचाराणां सारांशः विषयस्पष्टीकरणार्थम इह उद्ध्रियते—

"विश्वजित्प्रभृतिषु यज्ञेषु राजा सर्वस्वं पुरोहितेभ्यो ददाति। एष प्रश्नः— यत्किं राजमार्गगोचरजलाशयादिभिः सम्पन्नां भूमिं सार्वभौमः राजा प्रदातुं शक्नोति? अस्य एतदुत्तरं यत्सार्वभौमस्यापि राज्ञः भुवि न स्वत्वम, येन तां प्रदातुं स प्रभवेत। नापि अन्येषां सामन्तानां भुवि स्वत्वम। विजयेन राजा तावदेव स्वत्वं लभते, यावत् स्वत्वं विजितस्य आसीत। अधिकादधिकं विधिना एतदेव प्रतिपादयितुं शक्यते यद् दैवीं सम्पदं विहाय अन्यत्सु सर्वविधास्वपि सम्पत्सु राज्ञः स्वत्वम इति। परन्तु दुष्टेभ्यः शिष्टानां सम्पदां च यद्रक्षां करोति तन्मूलक-मेव इदं स्वत्वम। एतदर्थं तेन करूपतया भुवः षष्ठः अंशः लभ्यते। परन्तु भूमौ न तस्य स्वत्वम। तस्यां हि सर्वेषां समानः अधिकारः। श्रमानुसारं योग्यता-नुसारञ्च सर्वे एव स्वीयं भागं लभन्ते। अतः भुवः भागस्य दानन्तु शक्यम, न तु सम्पूर्णायाः भुवः। क्षेत्रगृहादिषु स्वत्वं सम्भवति। अतस्तेषामेव दानमपि कर्तुं शक्यते, न तु अशेषा भूः राज्ञा प्रदातुं शक्या।[1]"

वैयक्तिकस्वत्वस्य भूदानस्य प्रसङ्गः जैमिनीये मीमांसाशास्त्रे दृश्यते। जैमिनीयमते हि भूमिः देया न स्वीक्रियते, यतः सा सर्वान् प्रति अविशिष्टा—"न" भूमिर्देया स्यात् सर्वान्प्रति अवशिष्टत्वात्। "पाठान्तरमिदं वर्तते यत् "न भूमिः सर्वान्प्रति अविशिष्टत्वात्" (जै० ६।७।२)। अत्र सर्वथा भुवः दानविषये चर्चां कुर्वन् शबरस्वामी भूमेः स्वरूपं जिज्ञासते। स्वयं समादधच्च लिखति यद् भूगोलकस्य निर्माता मनुष्यो नास्ति, अतः सर्वस्यां भुवि तस्य स्वत्वं न स्यात्। भूखण्डे विशेषे तु अस्ति अवश्यं तस्य अधिकारः। स सार्वभौमिकस्यापि स्वत्वं भूगोलकस्य न स्वीकरोति। तस्य च एतन्मतं यत् सार्वभौमोऽपि सम्पूर्णां भूमिं प्रदातुं न प्रभवति, यतः न तत्र तस्य स्वत्वम्—

---

डॉ० किशोरमोहन गुप्त, लैण्ड सिस्टम इन साउथ इण्डिया (१९३३)।
एच० टि० कोलब्रुक तथा डॉ० एल० डी० बार्नेट, ज० रा० ए० सो०, पृ० ६९५-५०६, ५९३
के० वी० रंगस्वामी आयङ्गार, एंशियेण्ट इण्डियन इकॉनॉमिक थॉट्, पृ० १७१-१८१।

१, एच० टी० कोलब्रुक्, मिस्सेलिनियस एसेज, खण्ड० १, पृ० ३२०-३२१।

"अत्रैव सर्वदा मे संशयः किं भूमिर्देया न" इति। का पुनर्भूमिः अत्र अभिप्रेता? यदेतन्मृदारब्धं द्रव्यान्तरं पृथिवीगोलकं न क्षेत्रमात्रं मृत्तिका वा? तत्किं प्राप्तम्? अविशेषाद् देया, प्रभुत्वसम्बन्धेन हि तत्र स्वशब्दो वर्तते; शक्यते च मानसेन व्यापारेण स्वतः निर्वर्त्तयितुमिति एवं प्राप्ते ब्रूमः—

"न भूमिर्देया इति। कुतः? क्षेत्राणाम् ईशितारो मनुष्याः दृश्यन्ते, न कृत्स्नस्य पृथिवीगोलकस्य इति। आह, य इदानीं सार्वभौमः स तर्हि दास्यति। सोऽपि न इति, ब्रूमः। कुतः? यावता भूमिभोगेन सार्वभौमो भूमेरीष्टे तावता अन्योऽपि; न तत्र कश्चिद् विशेषः। सार्वभौमत्वेऽस्य त्वेतदधिकं यदसौ पृथिव्यां सम्भूतानां व्रीह्यादीनां रक्षणेन निर्विष्टस्य कस्यचिद् भागस्य ईष्टे न भूमेः। तन्निविशिष्टाश्च ये मनुष्याः तैरन्यत् सर्वप्राणिनां धारणचङ्क्रमणादि यद्भूमिकृतं तत्रेशितं प्रति न कश्चिद् विशेषः। तस्मात् न भूमिर्देया।"

व्यवहारमयूखेऽपि सम्पूर्णायां भुवि राज्ञः स्वत्वं न स्वीकृतम्। एतदेव च प्रमाणयितुं जैमिनीयं वचनम् उद्धृतम् (व्यवहारमयू० पृ० ९१)। शास्त्रदीपिकायां पार्थसारथीमिश्रस्य वचनं नीलकण्ठेन व्यवहारमयूखे (पृ० ५६ गुजरातप्रेस०) इत्थम् उद्धृतम्—

"एवं क्षत्रियादेर्जयादिरिति तु युक्तम्। जयेऽपि जितस्य यत्र गृहक्षेत्र-द्रव्यादौ स्वत्वम् आसीत्, तत्रैव जेतुरपि उत्पद्यते। जितस्य करग्राहिता यान्तु जेतुरपि सैव न स्वत्वम्। अत एव सार्वभौमेन सम्पूर्णा पृथिवी, माण्डलिकेन च मण्डलं न देयम् इत्युक्तं षष्ठे। सम्पूर्णमण्डलस्य तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिका-दीनामेव, राज्ञां तु करग्रहणमात्रम्। अत एव इदानींतनपारिभाषिकक्षेत्रदानादौ न भूदानसिद्धिः; किं तु वृत्तिकल्पनमात्रमेव। भौमिकेभ्यः क्रीते तु गृहक्षेत्रादौ स्वत्वमपि अस्त्येव।"

न्यायमालायां (आनन्दाश्रम० पृ० ३५८) माधवाचार्यस्य मतमिदम्—

देया न वा महाभूमिः स्वत्वाद् राजा ददातु ताम्।
पालनस्यैव राजत्वान्न स्वभूर्दीयते न सा॥

यदा सार्वभौमो राजा विश्वजिदादौ सर्वस्वं ददाति, तदा गोपथराजमार्ग-जलाशयाद्यन्विता महाभूमिस्तेन दातव्या। कुतः? भूमेः तदीयधनत्वात्। "राजा सर्वस्येष्टे ब्राह्मणवर्जम्" इति स्मृतेः। इति प्राप्ते ब्रूमः—

"दुष्टशिक्षाशिष्टपरिपालनाभ्यां राज्ञः ईशितृत्वं स्मृत्यभिप्रेतम् इति न राज्ञो भूमिर्धनम्, किन्तु तस्यां भूमौ स्वकर्मफलं भुञ्जानानां सर्वेषां प्राणिनां साधारणं धनम्। अतोऽसाधारणस्य भूमिखण्डस्य सत्यपि दाने महाभूमिर्दानं नास्ति।"

भट्टदीपिकायां ( मैसूरसंस्करणम् २।३।१७ ) खण्डदेवस्य मतमपि अवधेयम्—

"सार्वभौमस्यापि न तस्यां स्वत्वम्, जयस्यापि च शत्रुस्वामिक-धनगृह-क्षेत्रादिविषये एव स्वत्वोत्पादकत्वात्। महापृथिव्यान्तु राज्यमात्राधिकारस्यैव जयेन सम्पादनात्। राज्यं हि स्वविषयपरिपालनकण्टकोद्धारणरूपं तन्निमित्तकञ्च कर्षकेभ्यः करादानं दण्डयेभ्यश्च दण्डादानम् इत्येतावन्मात्रम्। न त्वेतावता तस्यां स्वत्वम्....परिक्रयादिलब्धं गृहक्षेत्रादिकन्तु देयमेव।"

कात्यायनस्य तथा तदुपरि वीरमित्रोदयस्य च विचारः—

भूस्वामी तु स्मृतो राजा नान्यद्रव्यस्य सर्वदा।
तत्फलस्य हि षड्भागं प्राप्नुयान्नान्यथैव तु॥
भूतानां तन्निवासित्वात् स्वामित्वं तेन कीर्तितम्।
तत्क्रियाबलिषड्भागं शुभाशुभनिमित्तजम्॥

अस्य अर्थः—राजा, भुवः स्वामी स्मृतः। अन्यद्रव्यस्य, भूसम्बन्धिद्रव्यस्य, न स्वामी। अन्यथा भूस्वाम्याभावे। भूतानां प्राणिनाम्। तन्निवासित्वात्–भूनिवासित्वात्। स्वामित्वं राज्ञः इति शेषः। इत्यतः तत्क्रियाबलिषड्भागं प्राप्नुयात्।

उक्तसिद्धान्ताद् ज्ञायते यद् राजा भूस्वामी भवति। मध्ययुगे राजशक्तेः विकाससमयेऽस्याः विचारधारायाः प्रभावः आसीत्।[१] राष्ट्रपति-विषयपति-भोगपतिशब्दाः तदानीं विशेषतः प्रयुक्ता आसन्।[२] याज्ञवल्क्यव्याख्याकर्तुः मिताक्षराकारस्य मतं यद् राजैव भूदानं कर्तुं प्रभवति। प्रान्तीयाः स्थानीया वा प्रशासकाः नैतदधिकारिणः। याज्ञवल्क्यव्याख्यायां मिताक्षरायाम् अन्येषां स्मृतिकाराणां वचनानि उदाहृत्य व्याख्या कृता। इदन्तु स्वीकृतमेव यद् भूदानविषये स्वग्रामस्य ज्ञातीनां सामन्तानां दायादानां च अनुमतिः अवश्यमेव अपेक्षणीया—"स्वग्रामज्ञातिसामन्तदायादानुमतेन च। हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी।" अत्र राज्ञः उल्लेखो नास्ति, अत एव व्यक्तिगतसम्पदः दाने राज्ञः अनुमतिः नापेक्षिता।[३] परन्तु राजानुमितौ सत्यामेव दानस्य वैधानिकता सम्भवति।[४] अत्र एषः मुख्यः प्रश्नः यत् मिताक्षराकृता व्यक्तिगतदानं कथं स्वीकृतम् इति। सहैव एतदपि विचारणीयम् अस्ति यत् ज्ञातिग्रामसामन्तदायादाः यदि दानं

---

१. अनेन भूपतेरेव भूमिदाने निबन्धदाने वाधिकारो न भोगपतेरिति दर्शितम्—(याज्ञ० १।३१८) मिताक्षरा।

२. गुप्त इन्स्क्रिप्शन्स, संख्या २४, पृ० १००।

३. पी० वी० काणे, हिस्ट्री ऑफ धर्मशास्त्र, खण्ड २, पृ० ४६७।

४. गुप्त इन्स्क्रिप्शन्स, संख्या ३१, पृ० १३५।

नानुमन्येरन. तदा दानं कर्तुं शक्यते न वा? यदि अस्याम् अवस्थायां दानं शक्यते, तदा कथं व्यक्तेः स्वत्वम्? यदा च स्वत्वमेव न, तदा दानस्य विधानमेव कथं युज्यते? यदि च अस्ति व्यक्तेः स्वत्वम्, तदा का ज्ञात्यादीनाम् अनुमितेरावश्यकता? अत्र उक्तप्रसङ्गे भूमिः द्वेधा विभज्यते—भूमिः महाभूमिश्चेति। महाभूमेः दानं न शक्यते। नापि तत्र व्यक्तिविशेषस्य स्वत्वं सम्भवति।

"सार्वभौमस्यापि न तस्यां स्वत्वम्।"[1] अतस्तस्याः दानं विक्रयश्चापि सम्भवतः[2]। वैयक्तिकं स्वत्वं विना दानं न सम्भवति। अतो राजा केवलं करग्रहणविषये दुष्टदमनविषये च तस्याः अधिकारी, न तत्र महाभूमौ राज्ञोऽपि स्वत्वम्। परिक्रयादीनां लब्धेषु गृहक्षेत्रादिषु तस्य स्वत्वं भवति। अतः राजा तेषां दानं कर्तुं शक्नोति। महाभूमेः दानस्य निषेधः न्यायमालायां माधवाचार्येणापि प्रतिपादितः। भूस्वामित्वविषये उपलभ्यमानानां विचाराणां निष्कर्षा एवं स्थापयितुं शक्यन्ते—

(१) खनिजपदार्थेषु सर्वेषां जनानां कृते उपयुक्तायां भूमौ च वैयक्तिकं स्वत्वं न भवति। तत्र राज्यस्य स्वत्वं भवति।[3]

(२) भूमिनिखातायां सम्पदि राज्यस्य स्वत्वम्। यदि सा सम्पत् निश्चित-परिमाणात् न्यूना भवति, तदा राज्यं केवलं तस्याः अंशं गृह्णाति, न तु सम्पूर्णाम्।[4]

(३) यस्यां भूमौ राज्यस्य स्वत्वं न भवति तद्भूमिविषये राज्यं केवलं शुल्कं (करम्) गृह्णाति, तस्याः भूमेः यदुत्पादनं भवति तस्य उत्पादनस्य अंशविशेषं कररूपेण राज्यं गृह्णाति। कल्याणकारिण्यः सर्वाः अपि योग्यताः राज्ये स्युः, अन्यथा (तादृशयोग्यतारहितम्) राज्यं करग्रहणे न अधिकारी।

(४) राज्ञा ब्राह्मणेभ्यः प्रदत्तायाः भूमेः विषये करः न भवति। ईदृशं भूदानं केवलं जीवनायैव भवति। यदि च तस्याः भूमेः दुरुपयोगः भवेत्, तदा स राज्येन प्रत्यावर्तयितुं शक्यते। भूमिः यदि कृष्यर्थं प्रदीयते, तदा तद्विषये इदम् अवश्यमवधेयं यत् ततः भूमेः उत्पादनं ग्रहीत्रा क्रियते न वा?

(५) वृक्षेषु, वनस्पतिषु, अन्येषु च जनकल्याणोपयोगिषु वस्तुषु राज्यस्य अधिकारः न भवति, परन्तु तेषां रक्षायाः पूर्णतया राज्ये उत्तरदायित्वम्।

---

१. पूर्वमीमांसादर्शनम् इत्यस्य भट्टदीपिका टीका, मैसूरसंस्करणम्, खं० २, पृ० ३१७।

२. इण्डियन एण्टिक्वेरी (१९१०), पृ० १९९।

३. आकरकर्मान्तद्रव्यहस्तिवन ··· कौ० २।१।

४. शतसहस्रादूर्ध्वं राजगामी निधिः। ऊने षष्ठांशं दद्यात्—कौ० ४।१।

(६) कृषिविषये राज्यं कथमपि बाधकं न भवेत्। राजपुरुषा अपि राजाज्ञां विना ग्रामं प्रवेष्टुं न शक्नुवन्ति।[१]

एवं वयं पश्यामः यद् भूमौ द्वयोः स्वामित्वम्, राज्यस्य व्यक्तेश्च। अस्यां स्थितौ (उभयोः स्वामित्वे) यथेष्टप्रयोगार्हत्वरूपस्य स्वत्वस्य समन्वयः कथं शक्यः? द्वाभ्यां स्वामिभ्याम् एकस्य वस्तुनो यथेष्टम् उपयोगः कथं कर्तुं शक्यते? अस्यां समस्यायां सामान्यविशेषस्वत्वयोः व्यवस्था अवश्यं स्वीकार्या, अर्थाद् व्यक्तिराज्ययोः मध्ये एकस्य सामान्यम्, अपरस्य च विशेषं स्वत्वं स्वीकार्यम्, न तु उभयोरपि समानम्। राज्यस्य भूमौ सामान्यस्वत्वम् अस्ति। अत एव च राज्यं विशेषं स्वत्ववतः भूस्वामिनः (व्यक्तेः) करं गृह्णाति। एतदेव तस्य सामान्यं स्वत्वम्। व्यक्तेः विशेषस्वत्वस्य बहूनि कारणानि सन्ति, परन्तु तेषां कारणानां विवादग्रस्ततया तद्विषये नात्र विचार्यते। अत्र इयत् स्वीकार्यं यद् भूभागविशेषे व्यक्तेः विशेषं स्वत्वं भवति इति। व्यक्तिस्तस्य यथेच्छमुपयोगं कर्तुं शक्नोति, परन्तु एषा व्यक्तेः भूभागविशेषविषये स्वतन्त्रता सीमिता अस्ति इति प्रतिपादितं पुरा। विशेषस्वत्ववता विशेषाः नियमाः अवश्यं पालनीयाः। अन्यथा यदि व्यक्तिः एतान् नियमान् न परिपालयेत्, तदा तस्याः स्वत्वं न तिष्ठेद्, अन्यस्याः च व्यक्तेः स्वत्वं तत्र स्थापितं भवेत्।

मुस्लिमशासनकाले ब्रिटिशशासनकाले च सामन्तवादिन्याः परम्परायाः भारतीयविचारेषु यः प्रभावोऽभूत्, तेन केचन सनातनधर्मानुयायिनः विद्वांसोऽपि सम्भ्रान्ता अभूवन्। ते भूमेः ईदृशं वैयक्तिकं स्वामित्वं स्वीकृतवन्तः यद् भूमिः कस्यामपि अवस्थायां तत्स्वामिनः ग्रहीतुं न शक्यते। किं बहुना, ईदृशैः विद्वद्भिः कारणविशेषेण भूस्वामित्वादेरपि (जमीनदारी, जागीरदारी) धर्मता स्वीकृता। यद् भूस्वामित्वादिकं देशद्रोहस्य कारणमस्ति[२]। एवंविधं विचारकाः सनातनीयायां विचारधारायां सम्यगवगन्तुम् अतः न शक्नुवन्ति यतस्ते पूर्वाग्रहग्रस्ता भवन्ति। कौटिल्यः योग्यतानुसारं भुवि स्वामित्वं स्वीकरोति। 'भूमिः तस्यैव यः तत्र कृषिं करोति' इति कौटिल्यस्य मतम्। एतदेव मनुरपि समर्थयते। असाधोः भूमिम् आच्छिद्य साधुपुरुषाय सा देया। केवलं करं गृहीत्वा दानं कौटिल्यो वाञ्छति, तत्रापि

१. नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः। निराश्रयत्वाद् ग्रामाणां क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवति इति। कौ० २।१।

नृपकार्यं विना कश्चिन्न ग्रामं सैनिको विशेत्।
तथा न पीडयेत् कुत्र कदापि ग्रामवासिनः॥ शुक्रनीतिः ५।८४-८५।

२. अकृषतामाच्छिद्य अन्येभ्यः प्रयच्छेत्। ग्रामभृतकवैदेहका वा कृषेयुः। अर्थशास्त्र० २।१।

३. मनु० ११।१६।

भुवि ग्रहीतुः स्वजीवनपर्यन्तमेव अधिकारः, न तु तन्मरणानन्तरं तद्वंश्यानाम्। या भूमिः कृष्यर्हा नास्ति, परन्तु तत्र कृष्यर्हता सम्पाद्यते, सा भूमिः ग्रहीतुं न शक्यते।[1]

केचन भूमौ ईदृशं वैयक्तिकं स्वत्वं धर्म्यं मन्यन्ते, यद् भूमिम् ईश्वरोऽपि ग्रहीतुं न शक्नोति, का कथा राज्यस्य? भारते भूमिव्यवस्थायाः उद्योगिकरणस्य च अवसरे ईदृश्यः विचारणाः उपस्थिताः। एतैः विचारकैः परस्परम् असङ्गताः विचाराः उपस्थापिताः। एकतस्तु राज्यं कस्यचित् सम्पत्तिं बलाद् ग्रहीतुं न शक्नोति इति ते कथयन्ति, अन्यतस्तु "योऽसाधुभ्यो धनमादाय" इति मनोः नियममपि स्वीकुर्वन्ति यद् असाधुभ्यः बलात् सम्पत्तिः ग्रहीतुं शक्यते इति। केनचित् कारणविशेषेण यदि वैयक्तिकस्य स्वत्वस्य अपहरणं शक्यते, तदा जन्मना स्वत्वस्य सिद्धान्तः विचलितो भवति। 'वैध' इति 'धर्म्य' इति वा कृत्वा स सिद्धान्तः स्थिरीकर्तुं न शक्यते। अद्यतने समाजे व्याप्तस्य आर्थिकस्य असन्तुलनस्य समर्थनमशक्यम्। शास्त्रकारा अपि असन्तुलनं न मन्यन्ते स्म। अस्माभिः कौटिल्यस्य मतं प्रदर्शयद्भिः स्थितिः स्पष्टीकृता। कौटिल्येन हि स्पष्टमेव उक्तं यद् 'भूमिः तस्यैव यस्तत्र कृषिं करोति'। एवमेव स्वायत्तीकृतायामपि सम्पदि स्वत्वम् उत्पद्यते विनश्यति च, अत्र विषये अवधेयमस्ति।

भाषायां 'कब्जा' इति व्यपदिश्यमानः अर्थः 'भुक्तिः' 'भोगः' इति वा कथितः। एवञ्च भोगः 'सागमः' 'अनागमश्चेति' द्विविधः। स्वत्वस्य हेतुः आगम इति अभिप्रेतः।[2] यदि भोगः उक्तस्वरूपेण आगमेन सहितः, तदा तत्र भोक्तुः स्वत्वं भवति।[3] एष एव च सागमो भोगः। यदि भोगः आगमविहीनः, तदा न तत्र भोक्तुः स्वत्वम्। भोगविषये व्यासेन पितामहेन च पञ्चहेतवः उक्ताः—सागमकता, दीर्घकालिकता, भोगस्य (कब्जा) अविच्छिन्नता, अविरोधः, द्वयोरपि पक्षयोः एतद्विषयकं ज्ञानञ्चेति।[4] आगमं विना न भोगस्य महत्त्वम्। स्वत्वोत्पत्तौ आगमः भोगस्येति द्वयमपि आवश्यकम्।[5] यदि केनचित् आगमस्तु लब्धः, परं न भोगः, तदा स चौर एव मन्यते।[6]

१. करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत्। अकृतानि कर्तृभ्यो न देयात्। अर्थ० २।१।

२. मनु० ८।२००; याज्ञ० २।२७; नारद० ४।८४; कात्यायन० २१७; स्मृतिचन्द्रिका० २ पृ० ७३।

३. नारद० ४।८५; बृहस्पतिरुद्धृतं स्मृतिच० पृ० ७०।

४. स्मृतिचन्द्रिका० २।५० पृ० ५०,७१।

५. याज्ञ० २।२७; नारद० ४।७७; ४।८५।

६. नारद० ४।८५।८६।

भोगेन अधिकारोत्पत्तेः समयोऽपि निर्धारितोऽस्ति। यदि भोक्ता दश वर्षाणि भोगं करोति, इमं च भोक्त्रा क्रियमाणं भोगं भूस्वामी जानाति, अथ च भूस्वामी भोक्तुः किमपि प्रतिकूलं न चेष्टते, तदा भोक्तुः अधिकारतया परिणमति, अर्थात् भोक्ता तावत्कालानन्तरम् अधिकारी भवति।[1] अत्र अधिकारोत्पत्तिकाल-विषये आचार्याणां मतभेदोऽपि दृश्यते। उक्तस्य वर्षदशकात्मककालस्य विंशति-वर्षात्मकः षष्ठिवर्षात्मकः शतवर्षात्मकश्चापि कालः विभिन्नैः आचार्यैः अधिकारो-त्पत्तौ स्वीकृतः।[2]

बृहस्पतिना वर्षत्रयमेव अत्र विषये अवधित्वेन स्वीकृतम्। भोगस्य मध्ये विच्छेदेऽपि यदि सागमता, तदा स भोगः अधिकाराय अलम्।[3] एतेन स्पष्टं यद् भूस्वामित्वविषयकः भारतीयसिद्धान्तः समाजकल्याणम् अनुरुणद्धि। व्यक्तिः राज्यं वा नैतत्सिद्धान्तम् उपेक्षितुं क्षमते। सामन्तवादीयः धनवादीयश्च भूस्वामित्वसिद्धान्तः भारते नासीत्।

## वैधानिकं निर्वचनम्

योगिनाम् अवस्थाविशेषः भूमिरिति कथितः।[4] संस्कृतसाहित्ये भूमिशब्दस्य अनेके पर्यायाः लभ्यन्ते।[5] पुराणेषु धर्मशास्त्रेषु च भूमेरुत्पत्तेः भारस्य दानस्य च वर्णनं दृश्यते।[7] महाभारते मोक्षधर्मनिरूपणावसरे स्थिरता, गुरुत्वम्, काठिन्यम्,

१. याज्ञ० २।२४; मनु० ८।१४७–१४८; नारद० ४।७६–८०।

२. गौतम० १ ।३४; विष्णुधर्मसूत्रम् ५।१८७; स्मृतिचन्द्रिका० २ पृ० ७१; कात्यायन० ३२;

३. सरस्वतीविलासः, पृ० १३५।

४. पराशरमाधव० ३, पृ० १४४-१४५; स्मृ० चं० २ पृ० ४७।

५. गूढार्थदीपिकायां मधुसूदनः।

६. वैदिकपर्यायाः—गौः, ग्मा, ज्या, क्ष्मा, क्षा, क्षाया, क्षोणी, क्षितिः, अवनिः, पृथ्वी, मही, रिपः, अदितिः, इला, निर्ऋतिः, भूः, भूमिः, पूषा, गातु, गोत्रा वेदनिघण्टुः, १ अध्यायः। भूमिपर्यायेषु आकाशस्यापि ग्रहणं भवति। निघण्टुः १।३। अस्य उदाहरणम् ऋग्वेदे लभ्यते "सादाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम"। "पृथिवी इत्यन्तरिक्षम्" इति सायणः। मेदिनी भवन्ति भूतान्यस्यामिति। पृथिवी स्थानमात्रम्; वैद्यरत्नमाला—भूर्भूमिः, पृथिवी, पृथ्वी, मेदिनी, वसुधावनिः। गन्धा गुरुत्वं शक्ति च संघातः स्थापना धृतिः॥

७. उत्पत्तिः ब्रह्मवैवर्ते, प्रकृतिखण्डे पृथिव्युपाख्याने खण्डे ७ अध्यायः। भारः तत्रैव श्रीकृष्णजन्मखण्डे ४ अध्याये। दानम् बृहस्पतिः, महाभारतम् पद्मोत्तरखण्डे ४६ अध्यायः।

प्रसवार्थता ( उर्वराशक्तिः ), गन्धः, संघातशक्तिः, स्थापना, धृतिश्चेत्येते भूमेर्गुणाः कथिताः। एतेषां शब्दानां नीलकण्ठेन यद् व्याख्यानं कृतमस्ति तेन ज्ञायते यद् अद्यतनानां भूगर्भशास्त्रिणाम् इव प्राचीनानामपि शास्त्रकाराणां भूमिविषयकम् अध्ययनम् आसीत्। भूमेः अध्ययनं बहुभिः प्रकारैः कर्तुं शक्यते, भवति च। अत्र तस्य वैधानिकप्रयोगविषये किञ्चिद् विचारयामः।

राजा सम्पूर्णायाः भूमेः स्वामी कथितः, किन्तु यदा भूगर्भस्थितसम्पद्विषयकस्याधिकारस्य चर्चोपतिष्ठते तदा भूगर्भस्थिताया अपि सम्पदः स ( राजा ) स्वामी स्वीक्रियते। एतेनेदं तु स्पष्टमेव यद् भूमिशब्देन न केवलं भूमेः उपरितनो भाग एव गृह्यतेऽपि तु अन्येऽपि अंशा गृह्यन्ते। फलत एष प्रश्नः पुर आयाति यत्प्राचीनैर्भारतीयैर्विधिविद्भिरस्य विषयस्य वैधानिकं विवेचनं कया रीत्या कृतमस्ति।

भूः, क्षितिः, पृथ्वी त्येते शब्दाः भूमिशब्दस्य पर्यायाः। आङ्ग्लभाषायाम् एतेषां शब्दानां स्थाने स्वॉयल, लैण्ड, कण्ट्री इति शब्दाः प्रयुज्यन्ते। यदा विधेः क्षेत्रे भूशब्दः प्रयुज्यते तदा तस्यार्थो भिन्नो भवति। लार्डक्रूकमहोदयेनेतद्विषये इत्थं व्याख्यातं यद् वैधानिकक्षेत्रे कश्चिद् भूभागः, उपरितनः भागः, तत्सम्बन्धी वा यथा गोचरभूमिः, अकृष्टभूमिः, ऊसरभूमिः, स्थली (बञ्जरभूमिर्भाषायाम्)जलम् , गृहम् , कीदृग् अपि भवनम् , राजप्रासादः इत्यादिकं भूमिशब्देन गृह्यते। भवनशब्देन आधारभित्तिः आकारः इत्येतद्द्वयमपि संगृह्यते।[1] स्टीपेन्शन्महोदयेनैष विषयोऽतोऽप्यधिकं स्पष्टीकृतः। तन्मतानुसारमऽन्तस्थमूर्ध्वगतञ्चेति द्वयमपि भूमिपदेन संगृह्यते। ऊर्ध्वगतमित्यस्य तात्पर्यमिदं यद् भूभागे यस्याधिकारः तत्सम्बन्धिनि आकाशप्रान्तेऽपि तस्यैव अधिकारः, एवमेव यावति भूभागे यस्य अधिकारस्तावद् भूभागगर्भगतेऽपि तस्यैव अधिकारः।[2]

एतेन स्पष्टं यद् भूमिशब्देन न केवलम् उपरितन एव भागो गृह्यतेऽपि तु तदन्तःस्थस्तदुपरितनो भागश्च भूमिशब्देन गृह्यते।[3] उपर्युक्ते महाभारतस्य मोक्षधर्मे भूमिशब्दव्याख्याने नीलकण्ठेन इत्थम् विवेचनं प्रस्तुतम्—स्थैर्यम् , अचाञ्चल्यम् , गुणत्वम् , पतनप्रतियोगिगुणाः, काठिन्यम् , प्रसवार्थता, धान्या-

---

१. क्रूक, पृ० ४२।

२. स्टीपेन्शन कमो०, भागः १ पृ० ९४।

३. तत्रैव, पृ० ६०।

द्युत्पत्तिस्तदर्थता बन्धः, गुरुत्वम्, पिण्डपुष्टिः शक्तिः, गन्धग्रहणसामर्थ्यम्, संघातः, श्लिष्टावयवत्वम्, स्थापनं मनुष्याद्याश्रयम्, धृतिः पाञ्चभौतिके शरीरे धृत्यंशः।

मेदिन्यां भूमेः पर्यायद्वयम् उक्तम्—पृथिवी, स्थानम् इति। मोनियरविलियम-महोदयेन भूमिपर्यायतया 'अर्थ' ( Earth ) 'स्वॉयल' 'लेण्ड' एते शब्दा उक्ताः। भारतीयशास्त्रेषु क्वापि भूमिशब्दव्याख्या न दृश्यते। "धातूनामेव च क्षितौ" "भूमेरधिपतिर्हि सः" इत्येते मनुवचने आश्रित्य कथयितुं शक्यते यद् आङ्ग्लभाषायां 'लेण्ड' इति 'स्वॉयल्' इति व्यपदिश्यमानेऽर्थे भूमिशब्दः संस्कृतसाहित्ये प्रयुक्तः। अत्र ( ८।३९ ) मनुः भूमिशब्देन अन्तःस्थम् ऊर्ध्वस्थञ्च भागं गृह्णाति। क्षितिशब्दः 'अर्थ' ( Earth ) इति आङ्ग्लभाषायां व्यपदिश्यमानेऽर्थे प्रयुक्तः। अत्र एतदपि स्पष्टं भवति यद् आङ्ग्लभाषीयस्य 'लेण्ड' इति वैधानिकशब्दस्य अर्थेऽपि भूमिशब्दः प्रयुक्तोऽस्ति। राजनिघण्टुकारेण स्वर्णस्य प्रकारत्रयं वदता स्वर्णं भूमिजं स्वीकृतम्।[1] कामन्दकनीतिसारे दर्शितेन परिगणनेन एष विषयः सुस्पष्टो भवति। पाश्चात्त्यैरुक्तपरिगणनान्न कश्चित् तस्य भेदः।[2] उक्तेन विवेचितेन स्पष्टं यद् आकरः भूमेर्भागः यदा भूमेरुक्तोऽर्थः स्वीक्रियते तदैव कामन्दकोक्तम् "सस्याकरवती" इति भूमेर्विशेषणम् उपयुज्यते। एवं विधमेव भूमेः विशेषणं पृथ्व्युत्पत्तिवर्णनावसरे ब्रह्मवैवर्तपुराणेऽपि उक्तम्—"पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुक्ता। काञ्चनीभूमिसंयुक्ता सर्वं दुर्गं समन्विता" ( ब्रह्मवैवर्त्त० उ० खं० ८।१८ )। अत्र पृथिवीविषये काञ्चनी-भूमिसंयुक्ता इत्युक्तम्। शब्दकल्पद्रुमे 'भूमिजातचम्पकः वृक्षविशेषः' इति भूमिचम्पकशब्दस्य व्याख्यानं कृतमस्ति। अत्रापि भूमिशब्दस्य पूर्वोक्त एव अर्थः प्रतीयते। ऋग्वेदे एकस्याम् ऋचि भूमिपर्यायतया यदाकाशशब्दः प्रयुक्त-स्तेन भूमिसम्बन्धी आकाशोऽपि भूमिशब्देन संगृह्यते इति स्पष्टं भवति।

भूमेरुक्तव्यवहारेण राजनीतिक्षेत्रे राज्ञः आन्तरिकी सम्प्रभुता परिज्ञाता भवति। भूम्यैव सम्बद्धः राष्ट्रशब्दोऽपि अस्ति। वेदेभ्यः आरभ्य स्मृतिपर्यन्तम् अनेकेष्वर्थेषु राष्ट्रशब्दः प्रयुक्तोऽस्ति।[3] इमानि उद्धरणानि आश्रित्य उपेन्द्रनारायणबक्शी काशीप्रसादजायसवालश्च राज्यस्य अर्थे राष्ट्रशब्दं

---

१. तत्रैकं रसवेधजं तदपरं जातद्वयं भूमिजम्।
किञ्चिद् बहुनो हंसकर्ता चेति त्रिधा काञ्चनम्॥

२. कामन्दक० ४।५०, ५६।

३. शुक्र० १।१९; महा० शान्ति० ६७।२, ३, ५, ६; रामा० अयो० १४।५५, ६७; मनु० ७।११०, १५७, १८०।

प्रयोक्तुं वाञ्छतः किन्त्वत्रेदमवधेयं यत् सप्ताङ्गसिद्धान्तानुसारं राष्ट्रं राज्यस्य अङ्गम् इति। अत एव राष्ट्रशब्दः राज्यस्य पर्यायः इति स्वीकर्तुं न युज्यते। राष्ट्रशब्दवद् एकोऽन्योऽपि शब्दोऽस्ति 'जनपद' इति। अस्यापि शब्दस्य भूमिविशेषेण सम्बन्धः। क्वचित् क्वचित्तु इदं शब्दद्वयमपि (राष्ट्रं जनपदः) पर्यायतां प्राप्नोति। क्षेत्रविशेषेण जनसंख्यया सम्प्रभुतया च सम्पन्ने भूमिभाग-विशेषे जनपदशब्दः प्रयुज्यते। अत्र भूशब्देन पूर्वोक्तार्थोऽस्माकं न अभिप्रेतः। मनुस्मृतौ (७।३२; ८।४१) व्याख्यावसरे कुल्लूकभट्टेन जनपदशब्दः राष्ट्रशब्दश्च देशरूपेऽर्थे प्रायुज्येताम्। जनपदशब्दं प्रयुञ्जानेन कुल्लूकभट्टेन जनपदशब्दस्य "नियतदेशव्यवस्थिताम्नायाविरुद्धः" इति अर्थः कृतः, येन शासनस्य जनपद-विषयता बोधिता। अन्यत्रापि दृश्यमाना जनपदशब्दस्य प्रयोगा अपि एवमेव विचारणीयाः सन्ति।[१] यत्र राज्यस्य राजनीतिकसम्प्रभुतया सह भूभागस्य सम्बन्धः व्यञ्जनीयस्तत्र राष्ट्रशब्दस्य जनपदशब्दस्य वा, यत्र राज्यस्य वैधानिकी आन्तरिकी वा सम्प्रभुता व्यञ्जनीया तत्र भूमिशब्दस्य प्रयोगो भवति। यत्र वैयक्तिकं राज्यगतं वा स्वत्वं समाविष्टम् अस्ति। भूमिशब्देन उपरितनस्य भूतलस्य अन्तःस्थस्य भागस्य उर्ध्वगतस्य च ग्रहणं भवति।

---

१. सत्यं पालयति प्रीत्या नित्यं भूमिं प्रयच्छति—महा० शा० ९१।४०।
अर्थमेव प्रपद्यन्ते नहि सन्ति परस्परम्।
अनुगृह्णन्ति चान्योन्यं यदि रक्षति भूमिपः॥ महा० शा० १२०।३०।
सभा० प० ५।६५; महा० शां० ५७।३७; अत्रि० ३३०; मृजवान् स्यात् स्वयूथेषु भौमानि चरणैः क्षिपेत्—महा० शा० १२०।१०; ज्ञातिसामन्तधनिकां क्रमेण भूमि-परिग्रहान्—अर्थशा० ३।९; आसीनस्त्वासने शुद्धे भूमौ पादौ निधापयेत्—उशीनर-संहिता० ३।९३; नदीतीरेषु तीर्थेषु स्वभूमौ गिरिसानुषु—उशीनरसंहिता ५।१४; परस्य भूमिभागे तु पितृणां वै न निर्वपेत्—उशी० सं० ५।१५; मनु० ४।५५, २३०; ५।१२८; ६।१४; कामन्दक० ८।५०; ब्रह्म० वै० पु० ९।५।१४–१५।

# १६

## खनिजपदार्थः

केषाञ्चिद् विदुषाम् एष विश्वासो यत् प्राचीनभारते खनिजपदार्थानां सम्यग् ज्ञानं नासीत्। देशस्य आवश्यकतापूर्त्तिश्च आयातद्वारेण भवति स्म। लेस्सनप्रभृतीनाम् इदमेव मतं[1] किन्तु प्राचीनभारतस्य देशान्तरैः सह वाणिज्य-सम्बन्धः आसीत्।[2] मौर्यकालीनं वाणिज्यं सर्वैरपि ऐकमत्येन स्वीक्रियते। वाणिज्यवस्तुषु वस्त्राभूषणादीन्यपि आसन्।

स्मिथमहोदयेन केषाञ्चिद् वस्तूनां नामावली निर्दिष्टा येषां निर्यातं भारतेन विभिन्नेषु देशेषु क्रियते स्म। प्लिनीमहोदयेन अत्र विषये महान् खेदः प्रकाशितः यद् रोमदेशः निरर्थकानां भारतीयवस्तूनां क्रयणार्थं स्वदेशीयं महान्तं स्वर्णराशिं भारताय ददाति। पारसीकदेशोऽपि एवंविधानां वस्तूनां क्रयार्थं स्वदेशीयाः स्वर्णमुद्राः भारताय दातुं विवशः आसीत्।[4] तामिलसाहित्ये एतद्विषयकाणि बहूनि प्रमाणानि लभ्यन्ते यैः यूनानदेशेन सह भारतस्य वाणिज्यसम्बन्धः आसीदिति सिध्यति। रोमदेशीयाः काञ्चन मुद्राः अपि दक्षिणभारते लब्धाः।[5] दक्षिण-देशीया राजानः आदानप्रदानविषये रोमदेशीयानां मुद्राणां प्रयोगं कुर्वन्ति स्म। ईसातः शताब्दीसप्तकात्पूर्वं विभिन्नैः देशैः सह भारतस्य वाणिज्यसम्बन्धः आसीत्।[6] अस्यैष परिणामोऽभूद् यद् बहुशताब्दीपर्यन्तं भारतं विश्वस्य अपार-सम्पदः सङ्ग्रहालयः आसीत्।[7] फलतः हेरीडोटसमहोदयेन भारतं 'स्वर्णपक्षी' अस्ति इति कथितम्। इयमेव शब्दपरम्परा एच० राबिन्सन् इत्यादिभिः आवर्त्तिता।

भारतस्य पूर्वोत्तरसीमासु असमदेशीयाः पर्वतीया जातयः याः न पूर्णतया सभ्याः ताः रजतस्य प्रयोगं कुर्वन्ति स्म; अथ च पार्श्ववर्तिदेशेषु रजतस्य

---

१. राधामुकुदमुकर्जी, एंशेंट इंडियन शिपिंग।

२. कैम्ब्रिज हिस्ट्री ऑफ इण्डिया, भागः १, पृ० ६२, २१२, ३२६।
केगी, ऋग्वेदस्य भूमिका पृ० १४।
मजूमदार, इकनामिक कंडीशन इन एंशेंट इण्डिया, पृ. १४४३।

३. कैम्ब्रिज हिस्ट्री ऑफ इण्डिया, भागः १, पृ० ४२, १४३, ४७८।

४. कैम्ब्रिज हिस्ट्री ऑफ इण्डिया, भागः १, पृ० ३४२, ३४३।

५. हॉवेल, हिस्ट्री ऑफ आर्यन रूल इन इण्डिया, पृ० १३०।

६. हिस्ट्री ऑफ नियर ईस्ट, पृ० १७३-१७४, द्वारा हाल।

७. सी० डेनेल, इण्डस्ट्रियल कम्पटीशन, पृ० २२८।

निर्यातमपि अकुर्वन्। विदेशीयैः यात्रिभिः प्रत्यक्षं दृष्टमासीद् यद् असमदेशीयेषु खुनाङ्गजनेषु रजतस्य प्रयोगः समानरूपतया आसीत्। अथ च ते बर्माचीनदेशयोः रजतनिर्यातम् अकुर्वन्। 'नौ-ने-ख' नद्याः समीपे रजतस्य खनेः सम्भावना आसीत्। हिमालयः खनिजशक्तेः आगारं कथ्यते स्म। तत्र पाषाणेङ्गालखनेरपि सम्भावना आसीत्। तिब्बतदेशस्तु पूर्वकालत एव भारते स्वर्णनिर्यातं कुर्वन् आसीत्। एतद्देशविषये (तिब्बतदेशे) स्वर्णमयाण्डप्रसूः कुक्कटी इव इति हेरिडोट्स इत्येतदुक्ता उपमा प्रसिद्धा अस्ति। यूनानदेशीयलेखकानां भारतीयलेखकानाम् अनुसारं काश्मीरे स्वर्णस्य निधिः आसीत्।[१] अत्रत्याः स्वर्णविक्रेतारः संस्कृतसाहित्ये 'दरदाः' इति कथिताः।[२]

प्राचीनायाः सभ्यतायाः संस्कृतेश्च अध्ययनं कुर्वता प्रो० गावलैण्ड इत्यनेन विभिन्नस्थलानाम् आर्थिकमपि अध्ययनं प्रस्तुतम्। भारतविषये तस्य कथनं यद् भारते यद्यपि अतिशयिता समृद्धिः आसीत्, जनाः स्वर्णाभूषणानि प्रयुञ्जन्ति स्म, विनिमयस्य आधारोऽपि कदाचित् स्वर्णम् आसीत् तथापि भारते स्वर्णस्य उत्पादनं न आसीद् अपितु देशान्तरेभ्यः एव स्वर्णम् आयाति स्म। व्यापारस्य नियन्त्रणम् अधिकादधिकं भारतहस्ते एव आसीत्। फलतः भारतं स्वीयानां वस्तूनां विनिमयेन देशान्तरीयं स्वर्णं सञ्चिनोति स्म।[3] यद्यपि इदं सत्यं यद् विश्वस्य वाणिज्ये भारतस्य नियन्त्रणम् आसीत्, अत एव विनिमयद्वारेण स्वर्णराशिः भारते आयाति स्म; तथाऽपि भारते खनिजपदार्थानाम् उत्पादनं नासीदिति कथनं न विचारसहम्। हॉवेल हालप्रभृतिभिः इदं कथनं खण्डितमस्ति।[४] हॉल इत्यनेन स्पष्टं लिखितं यद् भारतीयनदीनां बालुकायां स्वर्णकणा आसन्। इमान् एव स्वर्णकणान् आश्रित्य तद्द्वारेण भारतीयाः स्वर्णस्य मूलं उद्भवस्थानं जानन्ति स्म। संस्कृतसाहित्ये विन्ध्याचलपार्श्ववर्तिनीनां नदीनां बालुकासु ईदृशानां स्वर्णकणानाम् उल्लेखो दृश्यते।

एतत्तु स्पष्टं यत् स्वर्णम्, लौहम्, ताम्रम्, रीतिः, रङ्गम् इत्यादीनां न केवलं प्रयोग एव देशे आसीद् अपितु एतत्सम्बन्धिन्यः कलाः अतिप्राचीनकालत एव देशे विदेशेषु च आसन्।[५] वस्तुस्थितिस्त्वेषा यदन्येषां धातूनां ज्ञानं नासीत् तदा तदैव स्वर्णस्य ज्ञानम् आसीत्। भूगर्भविशेषज्ञानां कथनं यद् यदा मानवसमाजः

१. क्रिडिल, एंशेंट इण्डिया, पृ० ५१।

२. तदेव, पृ० ५१ टिप्पणी।

३. गावलैंड, जर्नल ऑफ अन्थ्रोपोलोजिकल इंस्टीट्यूट, भागः १७, पृ० २६०, २६१।

४. हॉवेल, आर्यन रूल इन इण्डिया, पृ० ११६।
हाल, हिस्ट्री ऑफ दि नियर ईस्ट, पृ० १७३, १७४।

५. जर्नल ऑफ डिपार्टमेंट ऑफ लेटर्स, कलकत्ताविश्वविद्यालयः १९२० पृ० २१०।

उत्तरपाषाणयुगे प्रविशन्नासीत् तदा स्वर्णादृते कस्यापि धातोर्ज्ञानं तस्य नासीत्। आसन्नेन इत्यस्य कथनम् अस्ति यदिदं वक्तुं न शक्यते यत् स्वर्णस्य ज्ञानं सर्वप्रथमं केषाम् अभूत्।[1] परन्तु इदं सत्यं यदन्यधात्वपेक्षया सर्वप्रथमं स्वर्णमेव आदिममानवसमाजेन ज्ञातम्। भारतस्य स्वर्णप्रयोगः निःसन्देहं प्राचीनतमः अस्ति। ये भारतादेव मानवसमाजस्य विस्तारं साधयितुं चेष्टन्ते, तैः धातूनाम् उद्भवः कुतः कथं च इत्यादिकमपि अनुसन्धेयम्।

स्वर्णादीनाम् आकराः दक्षिणभारते आरम्भत एव प्रचुराः लभ्यन्ते। 'डकन' तिन्नवेली इत्यादिषु क्षेत्रेषु खनीनाम् अस्तित्वम् आसीत्। यत्र अद्यत्वे जशपुरमैसूरहैदराबाद इत्येते जनपदाः सन्ति, तत्र प्राचीनकालत एव स्वर्णादीनां ज्ञानं जनानाम् आसीत्। गावलैण्ड इत्ययमपि इदं मन्यते यद् दक्षिणदेशीयानां हिमालयीयानां च नदीनां वालुकासु स्वर्णकणाः आसन्।[2] अद्यापि एषा किंवदन्ती श्रूयते यत् शरत्पूर्णिमायां मालावारनीलगिरिपर्वतयोः स्वर्णवृष्टिर्जाता आसीदिति। इदं सर्वविदितं यद् दक्षिणदेशे स्वर्णस्य आकरा आसन्।

एवं वयं पश्यामो यद् भारते यद्यपि देशान्तरतः स्वर्णम् आयाति स्म तथापि अत्रापि स्वर्णस्य उत्पादनम् आसीत्। सुवर्णस्य अतिविस्तारेण वर्णनं लभ्यते किन्तु रजतविषये अधिकं वर्णनं न लभ्यते। यूनानदेशीयैः लेखकैः 'माऊस कानस' क्षेत्रे रजतस्य खनिः आसीदिति उल्लिखितम्; यच्क्षेत्रं प्रायः सिन्धदेशान्तर्गतम् आसीत्।[3] इदमेव कथनं प्रमाणयन्तौ 'मेकडालनकीथ' इत्येतौ साधयतः यद् वैदिकऋक्षु अपि रजतस्य प्रयोगः दृश्यते इति।

रामायणे रजतस्य उल्लेखो वर्तते।[4] एस० रङ्गस्वामिमहोदयेन इदं स्थानम् असमदेशे आसीदिति उल्लिखितम्। तिलकाख्यटीकाकृता तस्य स्थानस्य विवरणावसरे तत्र कौशेयवस्त्रनिर्माणमपि आसीत् इति उल्लिखितम्।[5] मध्यभारते रजतप्रयोगविषये शङ्कमानैः कैश्चिद् इदं सन्दिग्धं यद् रजतस्य प्रयोगस्तु आसीत् किन्तु आयातद्वारेण, अर्थाद् रजतस्य उत्पादनं नासीत्, देशान्तरेभ्यः आयातितस्यैव रजतस्य प्रयोगः आसीत्। परन्तु जॉनमार्शलप्रभृतिभिः एतत्कथनं न स्वीक्रियते। तदनुसारं रजतस्य अपि आकराः भारते आसन्।[6] ताम्रस्यापि उत्पादनं भारते

---

१. मेन ऑफ ओल्ड स्टोन एज, पृ० १३।

२. जे. आर. ए. आई. भागः १७, पृ० २६०।

३. फिंडले, एंशेंट इण्डिया, पृ० ४१।

४. रामा० ४।४०।१२१।

५. बिगिनिंग ऑफ साउथ इण्डियन हिस्ट्री, पृ० ६४।

६. कैम्ब्रिज हिस्ट्री ऑफ इंडिया, भागः १, पृ० ६१५।

आसीत्। इन्दौर सिंहभूमि सिक्किम कुमायू इत्यादि क्षेत्राणि रजतोत्पादनविषये प्रसिद्धानि आसन्। पर्वतोद्भवस्य लवणस्यापि उत्पादनं भारतेऽऽसीत्[१] एतच्च प्लीनीमहोदयेन उल्लिखितम्।

वी० स्मिथमहोदयेन लिखितमस्ति यद् ऋग्वेदे लौहस्य वर्णनं नास्ति। अथर्ववेदे शतपथब्राह्मणे च लौहस्य वर्णनम् अवश्यं दृश्यते; किन्तु ऋग्वेदेऽपि लौहप्रयोगः वर्णितोऽस्ति। इन्द्रकवचस्य मरुद्रथस्य च वर्णनं लौहविषयकमेव। स्मिथमहोदयोऽस्य व्याख्यान्तरं करोति। परन्तु सायणप्रभृतयः भाष्यकाराः लौहपरतया एव तद् व्याचक्षते।[२] डकनक्षेत्रेऽपि लौहस्य केन्द्रम् आसीदिति उल्लेखो वर्तते।[३] मनुना चाण्डालस्य कृते आभूषणेषु लौहप्रयोगो विहितः।[४] 'सर्वाकारेष्वधिकारमहायन्त्रप्रवर्तनम्' इति मनुवचनस्य कुल्लूकभट्टेन या व्याख्या कृताऽस्ति, सा बूल्हरमहोदयेन न स्वीकृता; किन्तु कुल्लूककृता व्याख्या यथार्था अस्ति। "सर्वाकरेष्वधिकार" इति वचनस्य कुल्लूकभट्टेन स्वर्णाद्युत्पत्तिस्थानेषु राजाज्ञया अधिकारः इति व्याख्यानं कृतम्। एतदेव च व्याख्यानम् उचितम्।

चन्द्रगुप्तमौर्यसमकालिकेन कौटिल्येन अर्थशास्त्रे खनिविभागस्य अधिकारी निर्दिष्टः। समाहर्त्ता अस्य विभागस्य अधिकारी भवति स्म। अर्थशास्त्र-कालपर्यन्तं खनिविभागः अनिवार्यताम् आप्तः। अद्यत्वे प्रत्येकं राष्ट्रं खनि-विषये गाम्भीर्येण विचारयति। वैज्ञानिकप्रगत्यनन्तरं खनिशक्तेः प्राधान्यम् अभूत्। कस्मिंश्चित्काले भारतं खनिजशक्तिसम्पन्नम् आसीत्। अद्यापि तस्य खनिजशक्तिर्न न्यूना किन्तु एतावत्पर्यन्तं तस्य खनिजशक्तिः कियति अस्ति इति परिज्ञानं नास्ति जनानाम्। यावत्याः खनिजशक्तेः परिज्ञानं जातमस्ति तस्या अपि उचित-रीत्या प्रयोगो न सम्पद्यते। अद्यतनस्य वैज्ञानिकयुगस्य पुरः प्राचीनकालिकी स्थितिः उपेक्षणीया प्रतीयते परन्तु अर्थशास्त्रस्य विशेषतः समाजशास्त्रस्य अध्येतॄणां शास्त्राणां कृते नैषा उपेक्षा युज्यते।

## धातूनां सामाजिकप्रयोगः

सभ्यतायाः मानदण्डः साम्पत्तिकी समृद्धिः मन्यते। प्राचीनभारते कृषि-व्यवस्थायाः महत्त्वं सर्वाधिकम् आसीत्। अत एव स्मृतिषु अन्यत्र च ग्रन्थेषु

---

१. क्रिडले, एंशेंट इण्डिया, पृ० ६६।

२. ऋग्वेद० १।५२।८, १।८८।५।

३. मित्र, जर्नल ऑफ डिपार्टमेंट लेटर्स, कलकत्ता, भागः २, १६२० कलकत्ता-विश्वविद्यालयः।

४. मनु० १०।५१-५३।

कृषिसम्बन्धिनां नियमानां बहुशो विवरणं दृश्यते। परन्तु तदानीमपि भारतस्य खनिजशक्तिः न्यूना नासीत्। दैनिकव्यवहारेषु रत्नानां मणीनां च प्रयोग आसीदिति लक्ष्यते। व्यवहारेण सहैव राष्ट्रान्तरीयवाणिज्यस्य राष्ट्रान्तरीयसम्बन्धानां च उल्लेखो दृश्यते। मिस्ररोमयूनानपारसीकमोसोपोटामियाबेबीलोनियासीरियाचीनबर्माप्रभृतिभिः दूरवर्तिभिः राष्ट्रैः सह रत्नानां मणीनां च वाणिज्यसम्बन्धः आसीत्।[1] अत एव एतद् विचारणीयमस्ति यद् ईदृशेषु वाणिज्यादिविषयकसम्बन्धेषु प्राचीनभारते केचन नियमाः आसन् न वा? अथ च तेषां सामाजिकप्रयोगः कया रीत्या आसीत्?

वेदानां देशः कालो वा यः कोऽपि वा भवेत्, इदं तु सर्वमान्यं सत्यं यद् भारतीयायाः सभ्यतायाः संस्कृतेः सर्वाधिकः प्रामाणिको निधिः वेदेषु अस्ति। ऋग्वेदे स्वर्णरजतयोः अन्येषां च धातूनां प्रयोगः लभ्यते।[2] ऋषयः स्वर्णसुरक्षार्थं सूर्यं प्रार्थयन्ते,[3] वरुणस्य स्वर्णकवचस्य उल्लेखो दृश्यते।[4] स्वर्णरत्नप्राप्तिपुरस्सरं गृहाः स्वर्णैः गोभिश्च पूर्णा भवन्तु इति ऋषयः इन्द्रं प्रार्थयन्ते।[5] अन्यत्रापि एतद्विषयकाणि उद्धरणानि लभ्यन्ते।[6] स्वर्णयानस्यापि चर्चा लभ्यते।[7] एकः क्षत्रियो राजा अभिषेकानन्तरं स्वर्णमुद्राणां सहस्रम् अददाद् इति ऐतरेयब्राह्मणे दृश्यते।[8] ऐतरेयब्राह्मणे एका कथा आयाति यद् असुरैः लौहप्राचीरेण भूः, रजतप्राचीरेण द्यौः, स्वर्णप्राचीरेण व्योम आवृयन्त।[9]

देवा इव असुरा अपि स्वर्णं प्रयुञ्जते स्म। शतपथब्राह्मणे एका कथा वर्णिता अस्ति यदनुसारेण जलात् स्वर्णस्य उत्पत्तिः स्वीकृता।[10] पुराणादिषु स्वर्णोत्पत्तिविषयक उल्लेख उपलब्धोऽस्ति।[11] दक्षिणायां स्वर्णमुद्राणां दानं

---

१. हॉल, हिस्ट्री ऑफ दि नियर ईस्ट, पृ० १७३,१७४।

२. ऋ० १।२२।५।

३. ऋ० १।२५।१३।

४. ऋ० १।३०।१६-१७।

५. ऋ० ५।१।५६।; १।१।८५।; ६।१।८८; ५।१२।११।

६. ऋ० २।४३।१।; ७।६५।८।

७. ऋ० ६।५।८।

८. ऐ० ब्रा० ८।२१।६।

९. ऐ० ब्रा० १।५।४।

१०. शत० ब्रा० ११।२।१।१।

११. ब्र० वै० पु०, कृ० जन्म० खं० १६।६६।३६; महा० अनु० अ० ८१-८४।

विहितम् अस्ति ।[1] विपदः दूरीकर्तुं मणयः प्रयुज्यन्ते स्म ।[2] स्वर्णोत्पत्तिसिद्धान्त विषये आधुनिका विद्वांसः उपर्युक्तं सिद्धान्तम् उपेक्ष्यन्ते स्म । परन्तु आधुनिकं भूगर्भशास्त्रं तेषां सिद्धान्तानां नैकत्य्यमेव आसादयति ।

वैदिकपरम्परायामिव बौद्धसाहित्येऽपि एष विषयो विचारितः । बौद्धसाहित्येन धातूनाम् औद्योगिकीकरणं पूर्णतया प्रकाशमायाति । ईदृशानां ग्रामाणां निर्देशो लभ्यते यत्र शिल्पिनां सहस्रं परिवाराः अवसन् ।[3] ग्रामसंघेषु एतेषां शिल्पिनाम् ईदृशं महत्त्वम् आसीद् यद् एतेषां तत्तद्विषयका मन्त्रिणोऽपि ग्रामसंघेषु आसन् ।[4] जातकानि आश्रित्य रिज्ञडेविड इत्यनेन लिखितं यत् स्वर्णस्य अन्येषां च धातूनाम् अत्यधिकं निर्गमनं (निर्यातम्) क्रियते स्म ।[5] स्वर्णपरीक्षणार्थं विशेषज्ञाः आसन् ।[6] एकः राजा पार्श्ववर्तिने राज्ञे उपायतया स्वर्णं मणींश्च ददाति स्म ।[7] राजभिः स्वर्णपात्राणि प्रयुज्यन्ते स्म ।[8]

सिकन्दराक्रमणात् पूर्वमेव भारतयूनानदेशयोः पारस्परिकः सम्बन्धः आसीत् । यूनानदेशीयाः नानाविधानि भारतीयानि रत्नानि प्रयुञ्जते स्म । प्लीनीमहोदयेन षड्विधानां भारतीयानां रत्नानां निर्देशः कृतः ।[9] तत्कथनानुसारं भारतात् कृत्रिमहीरकाणां निर्गमनं भवति स्म । प्राचीनयूनानदेशीयानां कथनानुसारं भारतवर्षं बहुमूल्यरत्नानां स्वर्णस्य च मातृभूमिः आसीत् ।[10] मेघस्थनीजकथनानुसारं भारतीयाः स्वर्णभूषितानि वस्त्राणि उपयुञ्जते स्म, 'स्ट्राबो' इत्येष लिखति । यूनानदेशीयेतिहासज्ञानां कथनं सत्यं यद् भारतीयाः उत्सवेषु स्वर्णशोभितैः बहुमूल्यैः वस्त्रैः हस्त्यश्वादीन् अलङ्कुर्वन्ति स्म । वृषाणाम् अश्वानां च रथेषु धातूनां प्रयोग आसीत् । व्यावहारिकपात्राणि महार्घैः रत्नैः सज्जयितुं स्पर्धा भवति स्म ।

---

१. ऋ० ९।५।१४; ४।३।७७ ।
२. ऋ० १।२६।१; ८।५।१; ऐ० ब्रा० ४।६।५ ।
३. ज. रा. ए. सो. १९०१, पृ० ८६४ ।
४. ज. रा. ए. सो. १९०१ ।
५. बुद्धिस्ट इंडिया, पृ० ९६ ।
६. ज. रा. ए. सो. १९०१, पृ० ८७८ ।
७. जातक० ४।४८० ।
८. जातक० न. २६० ।
९. क्रिडले, एंशेंट इण्डिया, पृ० १२६, १३० ।
१०. तदेव, पृ० १२१, कैम्ब्रिज हिस्ट्री ऑफ इण्डिया, खं० १, पृ० ४०३ ।

तेषां कान्यपि वस्त्राणि पात्राणि वा ईदृशानि नासन् यत्र रत्नप्रयोगो नासीत्।[1] राजसभायाः कर्मचारिणोऽपि महार्घाणि रत्नानि प्रायुञ्जन्।[2]

स्मृतिषु रत्नानाम् अन्येषां च धातूनां विस्तरेण वर्णनं लभ्यते। छात्राः गुरुदक्षिणात्वेन रत्नानि मणीन् स्वर्णञ्च आचार्याय समर्पयन्ति स्म।[3] रत्नानां पावित्र्यम् ईदृशं मान्यम् आसीद् यत् कुतश्चिदपि तत्प्राप्तौ दोषो नासीत्। स्नातकैरपि कर्णेषु स्वर्णालङ्काराः धार्यन्ते स्म। कांस्यादिधातूनाम् ईदृशं पावित्र्यम् अमन्यत यत् तत्र कोऽपि कांस्यपात्रेषु पादप्रक्षालनं न करोति स्म।[4] स्वर्णचौरः ब्राह्मणः मनुना श्राद्धे निषिद्धः।[5] स्वर्णदानविषये विशेषा नियमा आसन्।[7]

मनुना अध्यायपञ्चकेन स्वर्णादिधातूनां शुद्धीकरणप्रकारः निर्दिष्टः। तत्कथनानुसारं स्वर्णरजतप्रभृतयः धातवः भस्मना अग्निना जलेन च शोधनीयाः।[8] द्वितीयश्लोके धातूत्पत्तिविषयकः सिद्धान्तोऽपि निर्दिष्टः। तदनुसारम् अग्निना जलेन वा स्वर्णादीनां यच्छोधनं भवति तत्र इदं कारणं यत् स्वर्णादिषु अनयोः तत्त्वयोः प्राधान्यम् अस्ति।[9] राजधर्मप्रकरणे धातुविषयकस्य करस्य संरक्षणस्य च विवरणम् उपस्थापितमस्ति।[10] अस्मिन्नेव अध्याये अयमेकः महत्त्वपूर्णो विषयः प्रतिपादितोऽस्ति यद् राजा यद्राज्यं विजयेत तत्रत्यान् ब्राह्मणान् देवतांश्च स्वर्णेन सत्कुर्यात्।[11] यदि भूम्यन्तर्गतं स्वर्णराशिं राजा लभते तदा सः तस्य राशेः अर्धं ब्राह्मणेभ्य दद्याद् अवशिष्टं च भागं राज्यकोषे स्थापयेत्।[12]

खनिजसम्पत्तिविषये इदं ज्ञायते यद् राजा खनिजसम्पत्तेः संरक्षकः आसीत्। अतः तस्याः अर्धांशस्य अधिकारी आसीत्। मनुः कथयति यद् यः

---

१. फिक्ले, एंशेंट इण्डिया, पृ० ७५।
२. तदेव, पृ० ६६।
३. मनु० २।२६४।
४. मनु० २।२३८।
५. मनु० ३।२६।
६. मनु० ३।६५।
७. ३।१५०।
८. मनु० ५।१११
९. मनु० ५।११२।
१०. मनु० ७।१३०।
११. मनु० ७।२०१।
१२. मनु० ७।३८।

पुरुषः निःक्षिप्तं धनं न समर्पयेद् अनिःक्षिप्तं च धनं वाञ्छेत् स धात्वनुसारं दण्डनीयः।[1] अनेकेषु अध्यायेषु धातुचौराणां कृते दण्डो विहितः। मनुसमये खनिजविभागस्य नियमाः व्यवस्थिताः आसन्। तदनुसारं खनिजविभागे कार्यं कुर्वन् ब्राह्मणः उपपातकभाग्भवति। धातुभेदानुसारं दण्डव्यवस्थायामपि भेद आसीत्।[2]

याज्ञवल्क्यकथनानुसारं भूम्यन्तर्गतस्य धनस्य प्राप्तौ राजा अर्धभागं ब्राह्मणेभ्यो दद्यात्; अर्धञ्च राज्यकोशे निदध्यात्। यदि कश्चिद् विद्वान् ब्राह्मणः ईदृशीं सम्पत्तिं लभेत तदा सम्पूर्णाया अपि सम्पदः स ब्राह्मण एव स्वामी, यतः स सम्पूर्णायाः अपि भुवः स्वामी अस्ति।[3] यदि निकृष्टजातीयः कश्चिद् ईदृशं धनराशिं प्राप्नुयात् तदा तस्य षष्ठं भागं राजा आदत्ते स्म।[4] यदि स पुरुषः सम्पत्तिं गोपयेत्, राजानं च न सूचयेत् तदा स दण्डनीयः, तदीया सम्पूर्णा अपि सा सम्पत् कोशे निधीयेत।[5] विभिन्नानां धातूनां विषये च अन्या कुसीदव्यवस्था आसीत्।[6] कृत्रिमधातूनां प्रयोगे महद्दण्ड आसीत्।[7] भाविनां जनानां कृते इदम् आवश्यकम् आसीद् यद् राजा ताम्रपत्रे निर्देशान् उट्टङ्कयेत्।[8] धातूनां तोलनविषये महानिरीक्षणम् आसीत्।[9] वस्त्वन्तराणां चौर्यापेक्षया धातूनां चौर्यविषयेऽधिकः कठोरो दण्ड आसीत्। दण्डव्यवस्थायां जातिभेदोऽपि आलोच्यते स्म।[10]

राज्ञः आयं विवृण्वन् गौतमः कथयति यत् स्वर्णादीनां पञ्चदशम् अंशं कररूपेण राजा ग्रहीतुं शक्नोति। यज्ञविषये विवाहविषये च शूद्रादपि स्वर्णं ग्राह्यम्[11] इत्यपि विहितमस्ति। केषाञ्चित् कथनं यद् आपस्तम्बः दक्षिणदेशीयः

---

१. मनु० ८।१९१।
२. मनु० ८।१९२।
३. मनु० ९।९०-९७।
४. व्यवहारकाण्डम् ३५।
५. व्यवहारकाण्डम् ३६।
६. व्यवहारकाण्डम् ४०।
७. व्यवहारकाण्डम् ३००।
८. याज्ञ० आचार० ३१८-३२०।
९. प्रायश्चित्त० २०९।
१०. मनु० ११।९।
११. मनु० अध्या० ११।

आसीत्। अत एव तदुक्तविधानस्य प्रयोगः विशेषतः तत्क्षेत्रेऽस्ति।[१] अतः आपस्तम्बोक्तनियमेषु दक्षिणदेशीयाः व्यवस्थायायाः चित्रणम् आवश्यकम्। स्त्रीधनविषयकस्वर्णादिविक्रये ऐहिकामुष्मिकश्च महान् दण्ड आसीत्।[२] धातूनाम् अधिकारविषये आपस्तम्बेन किमपि महत्त्वपूर्णं मतं न स्पष्टीकृतम्।

ब्राह्मणेभ्योऽन्येषां सर्वेषामपि स्वर्णादेः षष्ठांशः राज्ञा ग्राह्यः इति वसिष्ठेन विहितमस्ति। यदा ब्राह्मणाः क्षत्रियाश्च स्वस्ववृत्त्यनुसारं जीविकां निर्वोढुम् अशक्ताः स्युः तदा तेभ्यो वाणिज्याचरणस्य सौविध्यं प्रदत्तमस्ति; किन्तु धातुविषयकं वाणिज्यम् एतेषां कृते सर्वथा निषिद्धम् आसीत्।[३] विष्णुना शततमांशद्वयमेव स्वर्णादिविषये कररूपेण ग्राह्यम् इति स्वीकृतम्।[४] राजा विजितराज्यस्य सर्वविधानामपि खनिजशक्तीनां स्वामी भवति स्म।[५] न्यायविषये विभिन्नानां जातीनां कृते स्वस्वजात्यनुसारं न्यायालये तत्तद्धातुविशेषविषयकशपथग्रहणम् आवश्यकम् आसीत्।[६] सर्वेषां धातूनां चौर्ये विक्रये च समान एव अपराधः नामन्यत। दण्डव्यवस्था अपि समाना नासीत्। दण्डव्यवस्थायां जातिविशेषानुसारं धातुविशेषानुसारञ्च भेद आसीत्। श्राद्धेऽपि स्वर्णादिधातूनां प्रचुरः प्रयोगः आसीत्।

उपर्युक्तविवेचितस्यैष एव आशयो यद् भारतीयसमाजेऽज्ञातकाल एव स्वर्णादीनां प्रचुरः प्रयोगः आसीत्। जन्मतः आरभ्य मरणपर्यन्तं क्रियमाणेषु कार्येषु स्वर्णादीनां नियमाः व्यवस्थिता आसन्। धातूनां प्रयोगं कुर्वाणा जातयः क्रियाशीला आसन्। एतदवश्यं यत् तासां जातीनां पारस्परिकः समानो व्यवहारः नासीत्। उत्कृष्टानां जातीनां कृते एतद् व्यवहारस्य निषेधः आसीत्; यद्यपि धातूनां प्रयोगः अनिवार्यः गौरवदायकश्च अमन्यत। स्नातकानां ब्रह्मचारिणां कृते चापि स्वर्णकमण्डलोर्विधानम् आसीत्। धातूनां संरक्षणस्य उत्तरदायी केवलः राजा आसीत्। धातुविक्रयः धातुचौर्यं च ऐहिकदृष्ट्या आमुष्मिकदृष्ट्या च गर्हिते आस्ताम्। धातुविषये सामाजिकाः वैयक्तिकाः राज्यगताश्च नियमाः निश्चिता आसन्। वाणिज्यक्षेत्रे मूल्यरूपतया क्रेयरूपतया च धातूनां प्रयोग आसीत्।

---

१. कैम्ब्रिज हिस्ट्री, पृ० २२७, २२९, १३०।

२. आप० ९।२६।

३. वासिष्ठ० २।३।

४. वि० २।४।

५. वि० ३।३५।

६. वि० ७।८,१।

१७

# वाणिज्यम्

## सामान्यविशेषता:

स्वदेशे विदेशे च भारतस्य वाणिज्यसम्बन्धः आसीदिति सङ्केतः उत्तरवैदिककाले स्पष्टं लभ्यते। राष्ट्रान्तरीयस्य वाणिज्यस्य भूयान् प्रचारः आसीत्। तस्य कानिचित् सामान्यानि वैशिष्ट्यानि सन्ति। निर्यातायातयोर्निर्याते विशेषतः दृष्टिर्दीयते स्म, किन्तु देशे उपभोक्तुः प्राथमिकता आसीत्। आयातवस्तुषु इदम् अधीयते स्म यत् तानि वस्तूनि देशीयस्योत्पादनस्य प्रतियोगिनि मा भूवन्। पाश्चात्त्येषु तथा एशियाखण्डीयेषु च देशेषु वाणिज्यस्य द्वारता भारतेन आसादिता आसीत्, अर्थाद् एतेषु देशेषु भारतं द्वारीकृत्य वाणिज्यं प्राचलत्।

लङ्कादेशस्य मौक्तिकाः, तिब्बतदेशस्य स्वर्णम्, प्राच्यानां द्वीपसमूहानां महार्घाः पाषाणाः, चीनदेशस्य कौशेयमित्यादीनां वस्तूनामायातं स्वयं भारतं करोति स्म। तानि च वस्तूनि भारतीयवस्तूनि इति कृत्वा यूरोपदेशीयापणेषु च विक्रीयन्ते स्म। एतेन देशान्तरीयैरप्युत्पादनैः भारतं लाभान्वितमभूत्। स्थलमार्गेषु भारतीयानामधिकारः आसीत्। अत एवानेकैः राष्ट्रैः भारतमाश्रयणीयमासीत्। अस्य एष परिणामोऽभूद् यद् भारतं पाश्चात्त्यदेशेभ्यः प्रचुराः स्वर्णमुद्राः अर्जयति स्म।[१]

राष्ट्रान्तरीयवाणिज्ये आयातनिर्यातयोः सन्तुलनेन सहैव प्राच्यपाश्चात्त्यदेशीयवाणिज्ये मध्यस्थतासाधनेन भारते वाणिज्यसङ्घाः विकसिताः। ईसातः शताब्दीपञ्चकात् पूर्वं यावद् वणिजां सङ्घाः, सहकारिवाणिज्ययोजना, वैयक्तिक्याः सम्पदः विकासः तस्याः सामाजिककल्याणेन सह समन्वयः, राज्यनिदर्शनञ्चेत्यादीनां सम्यग्विकासः समजनि। वाणिज्यस्य श्रमस्य च वंशानुगतता आरब्धा, वैयक्तिकसम्पदः विकसनेन सममेव च राज्यनिदर्शनमपि प्रवृद्धम्। सप्तमशताब्दीपर्यन्तं वाणिज्ये मुद्राः सहकारिसङ्घाश्च पूर्णतया विकासमाप्ताः।[२]

---

१. प्लिनी, नेचुरल हिस्ट्री, १२-१८।

२. कैम्ब्रिज हिस्ट्री ऑफ इण्डिया, पृ० २१९।

वाणिज्ये सह्‌वाणिज्यपद्धतेः पूर्णतया प्रयोग आसीत् ।[1] आरम्भे मध्ये वा सह्‌वाणिज्यस्य सौविध्यानुसारं परित्यागे विशिष्टाः नियमाः आसन् । कौटल्य-कालत एव सामूहिकगौरवस्य आनुकूल्यम आसीत् किन्तु वणिक् कथमपि आत्मसमर्पणार्थं न वाध्यते स्म, अर्थाद् अधिकारविशेषेण बलाद् वणिजा आत्म-समर्पणं कारयितुं न कश्चिदप्यशकत् । राज्येन निर्धारितं मूल्यमनुसृत्य वणिग्भिः वस्तूनि विक्रेयाण्यासन् । कौटल्यसमये वणिजां पुरः मूल्यस्य सूच्यपि आयातुमारब्धा ।

ए० वी० स्मिथमहोदयेन भारते वाणिज्यस्य 'करेन्सी' इति उत्पत्तेः कारणं विदेशीयवाणिज्यमेव स्वीकृतम,[2] किन्तु एतद्विषये तेन यः कालः निर्दिष्टः न स उपयुक्तः । 'रिज़डेविड' महोदयस्य मतं यद् भारते बुद्धात् पूर्वमेव मुद्रादीनां विकासः अभूदिति । कुसीदकोपणादीनां व्यवहारस्य प्रचलनमासीत् । मुद्राणां प्रयोगः वाणिज्य-ऋणे वाणिज्ये चासीत् । ऋणे कुसीदे च राज्यस्य ईदृग् नियन्त्रणं आसीद् यत् ताभ्यां वणिजः आर्थिकजीवनस्य च विकासो भवति स्म । इस्लाम-धर्मप्रचारकैः ईसाईधर्मप्रचारकैश्च ऋणं कुसीदञ्च भृशं निन्दितमस्ति । इस्लाम-मतानुसारं कुसीदजीवकाः गर्हिताः सन्ति । परन्तु भारतीयधर्मशास्त्रेषु अर्थ-शास्त्रेषु च कुसीदविषयकाः नियमाः व्यवस्थापिताः । तेषां नियमानामुल्लङ्घने उत्तमर्णाधमर्णेति पक्षद्वयमपि दण्डनीयमासीत् ।

इदं निश्चेतुं कठिनं यन्मुद्राभिः 'करेन्सी' इति नियमस्य द्वारता कदा आसादिता किन्तु इदं निर्विवादं यद् दक्षिणपूर्वेशियाखण्डस्य भारतस्य प्रमुखविस्तारात्पूर्वं मुद्राङ्कितं वाणिज्यक्षेत्रं आश्रितमासीदिति । यूनानदेशीया-क्रमणात्पूर्वं 'डेरियान' काल भारतीयमुद्राणां प्रयोगः आसीद् इत्यत्र प्रमाणं लभ्यते । वेदेषु मुद्रारूपेऽर्थे पण इति शब्दः प्रयुक्तोऽस्ति । अत एव क्रयविक्रयादिषु वैदिककालतः एव मुद्राणां प्रयोगः आरभ्यते । अस्यामवस्थायां स्मिथमहोदयस्य विचाराः कथं सिद्ध्येरन् ? स्थानीयवाणिज्ये वस्तूनां नियमः आसीदित्यत्र न संशयः, परमेतत् स्वीकार्यमेव यद् वाणिज्यक्षेत्रे मुद्राणां प्रयोगस्य यः पूर्वावधिः पाश्चात्यैर्व्यवस्थापितः ततः बहुशताब्दीपूर्वमेव मुद्रादिकमाश्रित्य भारते विनिमयः आसीदिति । 'रिज़डेविड' महोदयस्य मतं यन्मौर्यसमयात्पूर्वमेव राष्ट्रान्तरीय-वाणिज्यस्य विकासोऽभूदिति धातुमुद्रादिकञ्च विनिमयस्य आधारः आसीदिति च ।

---

१. अर्थशास्त्रम् २।१८ ।

२. इम्पीरियल गजे० भा० २, पृ० १३५ ।

उन्मानप्रमाणमुद्रादिविषयकः स्वतन्त्र एवैकः विभागः कौटिल्यमहाभागैः व्यवस्थापितः। तस्य विभागस्य कार्यमेवमासीद् यन्मुद्रादिकं यदा नस्यति तदा तस्यायं विभागो निरीक्षणं करोति स्म। अर्थशास्त्रस्य चतुर्दशेऽधिकरणे कृतेनैतद्विषयकेण विवेचनेन इदं परिज्ञायते यत् कौटिल्यकाले वाणिज्यक्षेत्रे साधनतया प्रयुज्यमानेषु मुद्रादिषु राज्यस्य पूर्णतया नियन्त्रणमासीदिति। विनिमयविषये मूल्यनिर्धारणमपि राज्येन क्रियते स्म। मनुमहाभागैरपि अयं विषयो विशदीकृतः।[1]

१. वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धिनीम्।
अशीतिभागं गृह्णीयान्मासाद् वार्धुषिकः शते॥
द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन्।
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी॥
द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम्।
मासस्य वृद्धिं गृह्णीयाद् वर्णानामनुपूर्वशः॥
न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्।
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः॥
न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत्॥
आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः।
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ॥
संप्रीत्याभुज्यमानानि न नश्यन्ति कदाचन।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते॥
यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति॥
अजडश्चेदपोगण्डो विषये चास्य भुज्यते।
भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति॥
आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः।
राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति॥
यः स्वामिनाननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः॥
कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता।
धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम्॥
कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति॥

(मनु० ८।१४०–१५२)

'अनाथपिण्डकस्ये'ति वृत्तेन ज्ञायते—यद्विनिमयेऽपि आवश्यकतापूर्त्तिविषयकाः नियमाः क्रियाशीलाः आसन्। कुसीदस्य विषये कदाचिन्न्यूनत्वं कदाचिच्चाधिकत्वमपि भवति स्म। वणिजां विशेषाः कोशाः सुरक्षिताः आसन्। अतिरिक्तधनालयरूपतयाऽपि तेषां प्रयोग आसीत्। अनेन समाजे वाणिज्यक्षेत्रे च सङ्कटं न आपतति स्म। यदा धनमुत्पादकतया प्रयुज्यते तदा तद्विषये कुसीदं ग्राह्यमिति व्यवस्था प्राचीनभारते आसीत्। द्रव्यस्योत्पादनक्षमतानुसारमेव कुसीदनिर्धारणमासीत्।[1]

स्वर्णस्य रजतस्य च मुद्रा आसन्। शुक्रसमये द्वयोः षोडशगुणाधिक्येन अनुपातः आसीत्।[2] यद्यपि स्वर्णस्येव धात्वन्तराणामपि प्रयोग आसीत्[3] तथाऽपि विदेशीयविनिमये स्वर्णमेवाधिकं प्रयुज्यते स्म। भारतस्य स्वर्णं न वाणिज्यद्वारेण विदेशं गतम्, अपितु विदेशीयैः लुण्ठकैः लुण्ठनद्वारेण भारतस्य स्वर्णं विदेशेषु नीतम्। अन्येषां धातूनां मुद्राः सामान्यवस्तुविनिमये प्रयुज्यते स्म। विदेशीयवाणिज्यस्य साधनं स्वर्णमेवासीत्।

धर्मशास्त्रेषु अर्थशास्त्रेष्वपि च मुद्रादण्डः विहितोऽस्ति, अर्थाद् अपराधिना दण्डतया मुद्रा देया इति धर्मशास्त्रादिषु दृश्यते। तत्र विशेषतः पणशब्दस्योल्लेखः कृतोऽस्ति। द्वितीयविश्वयुद्धात् पूर्वं पणस्य मूल्यं रूप्यकवदासीदिति प्रतीयते, अर्थाद् रूप्यकशब्देन योऽर्थ उच्यते तत्रैव प्रायः 'पण' इति शब्दस्य प्रयोगः। सर्वदा पणस्य मूल्यं रूप्यकमासीद् इति तु न, किन्तु परिस्थित्यनुसारं तत्राऽपि न्यूनाधिकत्वेन अभूताम्। बी. के. सरकारमहोदयेन शुक्रनीतिग्रन्थस्य (४।१ पृ. १३७) अनुसारेण मुद्राणां मूल्यमनुपाततः विस्तरेण प्रदर्शितः। तत्र च परिस्थितिषु जायमानेन प्रभावेण वस्तूनामपि स्तरो महत्त्वं वा प्रदर्शितम्।

प्राचीनकाले वाणिग्धनालयसंयोजकः (बैंकर) अपि आसीत्। तेन देशस्य सम्पदि तस्य विशेषः प्रभावः आसीत्। राज्ये कोशेष्वपि सम्पत्तिः निधीयते स्म, किन्तु सामान्यपरिस्थितौ वाणिज्योद्योगादिषु ताः न प्रायुज्यन्त। फलतः आर्थिकजीवनस्याधिके क्षेत्रे वणिजां प्रभावो भवति स्म। ऋणोद्योगाधिकोशादिषु नियन्त्रणे सौविध्यं भवति स्म, आधिः निधिश्च विकसितौ आस्ताम्।

---

१. सपादपणा धर्म्या मासवृद्धिः पणशतस्य। पञ्चपणा व्यावहारिकी। दशपणा कान्ताराणाम्। विंशतिपणा समुद्राणाम्। ततः परं कर्तुः कारयितुश्च पूर्वः साहस दण्डः। अर्थ० ३।११।१-५।

२. अर्थशास्त्र २।१६; २।१३।

३. रजतं षोडशगुणं भवेत् स्वर्णस्य मूल्यकम्। शुक्र० ४।२।६२।

धनस्योत्पादनक्षमतानुसारं कुसीदस्य महत्त्वमासीत्। अत्रापि विषये अवधीयते स्म यद् ऋणग्रसितस्य व्यक्तित्वं कीदृशमस्ति इति। अतः मनुना वर्ण-व्यवस्थानुसारं कुसीदं व्यवस्थापितम्।[१] चक्रवृद्धिकुसीदविषये देशस्य, कालस्य जातेश्च प्रभाव आसीत्, अर्थाद् देशकालानुसारं चक्रवृद्धिकुसीदं व्यवस्थाप्यते स्म।[२] वाणिज्ये दीयमानं ऋणं न ऋणं मन्यते स्म। तस्मिन् ऋणे उपलभ्य-मानं कुसीदं लाभस्यैवांशोऽमन्यत। अत एव तस्य कुसीदस्यानुपातोऽधिकः आसीत्। यदा ऋणस्य स्थितिः कठिना, तदा कुसीदं चाष्टगुणाधिकं भवेद् यत् कुसीदमिति कथ्यते।[३]

वैयक्तिकधनस्य लाभोऽपि व्यक्तिगतः आसीत्। सामाजिकेन लाभेन सह तस्य सम्बन्धः आसीद् अवश्यम्। यदि वैयक्तिकं धनं समाजकल्याणमतिक्रामति, तदा तत्र राज्यनियन्त्रणमावश्यकमासीत्। सामाजिकेनोपभोगेन सहैव लाभोऽपि उत्पादनस्य उद्देश्यः स्यात्। उत्पादकस्योपभोक्तुश्च मध्ये राजा तादृशं साधन-मासीद् येन मानवकल्याणस्यातिक्रमणं न स्यात्।[४] यदि वस्तुस्वरूपम् ऋणं दीयते स्म, तदा तस्य प्रत्यावर्तनमपि तथैव आसीत्। अर्थाद् वस्त्वात्मकं ऋणं न मुद्राभिः प्रत्यावर्तते स्म, अपि तु वस्तुभिरेव। तस्य ऋणभूतस्य वस्तुनो मूल्यं दातव्यमुद्रा भवेयुस्तदनुसारमेव तत्र कुसीदव्यवस्था आसीत्।[५] चिरकालान्तरमपि यद्यधमर्णः प्रत्यावर्त्तयति, तदा कुसीदं मूलधनेन सह योज्यते स्म, मूलधनं द्विगुणी क्रियते स्म।[६] कुसीदग्रहणे यदि कीदृगप्यनौचित्यं भवेत्, तदा धनदण्ड-व्यवस्था आसीत्।[७]

धनस्योचितव्यवस्थया सहैव वाणिज्यविभागे यातायातसाधनानामपि समी-चीना व्यवस्था राज्यस्य कर्त्तव्यतया आसीत्। जलमार्गेण सह समुद्रमार्गस्यापि व्यवस्था आसीत्। अर्थशास्त्र एतद्विषयकः स्वतन्त्रविभागो व्यवस्थापितः। तटादारभ्य समुद्रमध्यपर्यन्तं यातायातयोर्व्यवस्था आसीत्। आयातनिर्यातकर-विषय एतदवधीयते स्म यदयं स्वदेशीयो वणिग्, उत विदेशीयः, केषाञ्च वस्तूना-

---

१. मनु० ८।१४२।

२. मनु० ८।१५६।

३. बृहस्पति० १०।६।

४. राजन्ययोगक्षेमवहे तु धनिकधारणिकयोश्चरित्रमवेक्षेत।—अ० शा० ३।११।

५. अर्थशास्त्रम् ३।११।

६. चिरप्रवासस्तम्भप्रविष्टो वा मूल्यद्विगुणं दद्यात्—अर्थशास्त्रम् ३।११।

७. अकृत्वा वृद्धिं साधयतो वर्धयतो वा मूल्यं वा वृद्धिमारोप्य श्रावयतो बन्धचतुर्गुणो दण्डः—अर्थशास्त्रम् ३।११।

मायाताधिक्यम्, अर्थाद् वणिजां देशीयत्वनिदेशीयत्वादिकं विनिमेयवस्तूनां महत्त्वं पर्यालोच्यायातनिर्यातकरो व्यवस्थाप्यते स्म। वाणिज्यविकासानुसारं कानिचिद् वस्तूनि करयुक्तान्यासन्। एतद्विषयकं निरीक्षणं नावध्यक्षस्य कार्यमासीत्। नावध्यक्षेण सैनिकैः कर्मचारिभिः प्रकाशकैश्च वाणिज्यं राष्ट्रियसुरक्षा चावधेये आस्ताम्।

### विदेशेभ्यः

प्राचीनभारते वैयक्तिकसम्पदोऽधिकं महत्त्वमासीत्। तदानीमुपभोगार्थमेवोत्पादनं क्रियते स्म, न तु विनिमयार्थम्। उपभोगार्थेवोत्पादनस्य निर्यातमपि क्रियते स्म। देशस्य आन्तरिके बाह्ये च एष एव सिद्धान्तः प्रतिष्ठित आसीत्। धनवादार्थव्यवस्थायामुत्पादनस्य मुख्य उद्देश्यो लाभोऽस्ति। भारते वस्तूनां मूल्यनिर्धारणं आवश्यकतापूर्त्तिपद्धतिरिव राज्यनियन्त्रणमपि आसीद्, अर्थान्न केवलम् आवश्यकतानुसारं वस्तूनां मूल्यनिर्धारणम्, अपि तु राज्यनिर्देशनानुसारमपि आसीत्। अतः उपभोगयोग्यवस्तूनामेव उत्पादनमासीत्, न चासन् उपभोगपतयः यथेच्छं मूल्यनिर्धारणे अक्षमाः। देशकालानुसारमुपभोक्तृनुसारञ्च वस्तूनामुपयोगिताः नानाप्रकाराः भवन्ति। अत एव मूल्यनिर्धारणं देशकालोपभोगादीनां प्रभावेणावश्यम्भावी। इमं सिद्धान्तं स्वीकुर्वन् शुक्राचार्यः आह—पृथिव्यां यत् किञ्चिदपि अप्रतिमम् (असाधारणम्) वस्तु अस्ति, तत् सर्वं रत्नकल्पमेव। देशकालानुसारमेव वस्तूनां मूल्यं निर्धार्यते, यानि वस्तूनि व्यवहारायोग्यानि गुणहीनानि च भवन्ति, तेषां वस्तूनां किमपि मूल्यं कश्चिदपि न ददाति।' अर्थात् अल्पेनापि मूल्येन न तानि कश्चिन् क्रीणाति। एतदेवान्यत्रापि निगदितम्।[2]

अत्रापि मूल्यविषये वस्तूनां सुलभता, दुर्लभता, उपयोगिता, अभावः उपभोगश्चेत्यादीनां प्रभावः स्वीकृतः। अस्य सिद्धान्तस्य राज्येनापि महान् सम्बन्धः आसीत्। अत एव शासकस्य कृते इदमावश्यकमासीद् यत् स एतद्विषये

१. रत्नभूतं तु तत्तत् स्याद् यद्यदप्रतिमं भुवि।
यथा देशं यथा कालं मूल्यं सर्वस्य कल्पयेत्॥
न मूल्यं गुणहीनस्य व्यवहाराक्षमस्य च।

२. येन व्ययेन संसिद्धस्तत्तद्व्ययस्य मूल्यकम्।
सुलाभासुलभत्वाच्चागुणागुणसंश्रयः॥
यथाकामात् पदार्थानामर्घं हीनाधिकं भवेत्।
(२।३५६–५७)

अवदधाति। पणाध्यक्षः वस्तूनां मूल्येऽवदध्यात्, तानि वस्तूनि जलमार्गतः आयातानि स्युः, स्थलमार्गतो वा। परिवर्तनीयवस्तूनाम् उपयोगितायामिव वस्तूनां क्रयविक्रययोरपि अवधेयम्।[१]

भारते वणिजां महत्त्वपूर्णं स्थानमासीत्। तैः राज्यस्य आर्थिकविकासे महत् साहाय्यं क्रियते स्म। तैः सर्वविधान्यपि वाणिज्यविषयकाणि सौविध्यानि अधिगतानि आसन्।[२] किं बहुना, करविषयेऽपि तेभ्यः सौविध्यं राज्येन प्रदत्तमासीत्।[३] एतदपि वक्तुं शक्यते यद् यदि देशीया वणिजः धनविनियोजनेऽपेक्षेरन्, तदा विदेशीयानां वणिजां तत्र धननियोजने न किञ्चित् काठिन्यमासीत्।[४] यदि विदेशीया धनं विनियोक्तुं ईहेरन्, तदा तानपि राज्यम् अनुमन्यते स्म। परन्तु यदि वणिक् प्राप्तानां सौविध्यानां दुरुपयोगं करोति, अर्थात् समाजकल्याणं राष्ट्रहितञ्च अविगणय्य येन केन प्रकारेण लाभमेव कर्तुमीहते स्म, तदा स दण्ड्यः।[५] राज्यं स्वयमपि स्वीयान् उद्योगान् प्रचालयितुं शक्नोति। अरण्यविनिमयकेषु, खनिजपदार्थविक्रयकेषु, सैनिकोपयोगिवस्तुषु, पश्वादिविषयकेषु उद्योगेषु राज्यस्य प्रभुत्वम् आसीत्।[६] वणिग्भ्यः दत्तानां सौविध्यानां विषये इदमवधेयमस्ति यत् सौविध्यानि सर्वेषां वणिजां सर्वविधानञ्च वाणिज्यानां कृते समानानि आसन्, अद्यत्वे इत्थं नाऽस्ति। अद्यत्वे हि विनिमयमनुसृत्य केषाञ्चिद् वणिग्विशेषाणां वस्तुविशेषाणाञ्च कृते विशेषतः सौविध्यानि दीयन्ते, परन्तु कौटल्य एतन्निषेधति।[७] एतदवश्यमासीद् यद् आयातवस्तुषु चैकविध एव नियमः नासीत्। एतद्विषये राष्ट्रियसुरक्षायामेव प्राधान्यं स्वीक्रियते।[८]

प्रस्तुतमाधारमाश्रित्यैव भारतस्य देशान्तरैः सह वाणिज्यसम्बन्धः आसीत्। केषां केषां वस्तूनामायातनिर्याते कया रीत्या भवतः स्म इत्येष विषयोऽस्ति

१. पणाध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्गवर्घान्तरं प्रियाप्रियतां च विद्यात्। तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान्–कौ० २।१६।

२. अर्थशास्त्रम् २।२८।

३. नाविकसार्थवाहेभ्यश्च परिहारमायतिक्षमं दद्यात्–अर्थशास्त्रम् २।१६।

४. अनभियोगश्चार्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः–कौ० २।१६,१७।

५. वैदेहकानां च सम्भूय पण्यमवरुन्धतामनर्घेण विक्रीणतां क्रीणतां वा सहस्रं दण्डः।

६. प्रकाशवञ्चकास्तेषां नाना पण्योपजीविनः।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥
(मनु० ६।२५७)

७. अर्थशास्त्रम् २।२१, २२।

८. २।१३, १४, १६।

विचारणीयः। अनेन विषयेण सह भाषायाः समाजशास्त्रस्य चास्ति गाढतरः सम्बन्धः। वयमत्र इमं विषयं दूरमपमार्य कैः कैः देशैः सह भारतस्य वाणिज्य-मासीदित्येव इह विचारयामः। एतेन विचारेण प्राचीनभारते वाणिज्यविषयका कियती क्षमता आसीदित्येतत् सामान्यतोऽस्माकं पुर आयाति।

'केनेडी'महोदयेन[2] 'अर्लीकामर्स आफ बेवेलिन विथ इण्डिया' एतन्नामके निबन्धे इदं साधयितुं चेष्टितं यद् देशान्तरैः सह भारतस्य वाणिज्यं ईशातः शताब्दी-सप्तकात् प्राचीनं नास्ति।[1] परन्तु इदं केनेडीमहोदयस्य मतं पाश्चात्त्या अपि खण्डयन्ति। काल्डवेलमहोदयैः 'ए कम्परेटिव ग्रामर ऑफ द्रविडयन लाङ्ग्वेज' एतन्नामके पुस्तके बहवः ईदृशाः शब्दाः प्रायः वाणिज्यविषयकाः दर्शिताः, ये भारताद् देशान्तरेषु गताः। तद्यथा भारते 'नील' इति प्रसिद्धं वस्तु मिस्रदेशे 'इण्डिगो' इति व्यवह्रियते। तत्र देशे 'पिरामिड' इत्यत्र संलग्नतन्त्रीकाष्ठं केवलं भारत एव लभ्यते। के० टी० शाहमहोदयेन 'एंशेण्ट फॉउण्डेशन्स ऑफ इकॉनॉमिक्स' एतदाख्ये पुस्तके ईदृशानां शब्दानां सूची उपस्थापिता।

डॉ० जे० जे० अस्य मतं यत् सामुद्रिकमार्गेण भारतस्य बेबोलेनिया देशेन सह वाणिज्यव्यवहारस्तदानीं प्रचलति स्म, यदा तत्र देशे तत्रत्यः प्रथमः सम्राट् शासदासीत्। एष समयः ईशातः वर्षाणां सहस्रत्रयात् पूर्वः। 'हिब्बर्टलेक्चर्स' प्राचीनबेबोलेनियादेशे कौशेये वस्त्रे 'सिन्धु' शब्दः प्रयुज्यते स्म। तत्र भारतीयस्य 'सागवान' इति प्रसिद्धस्य (काष्ठविशेषस्य) प्रयोगः आसीत्। 'हेविट' अस्य विचारो यदेष शब्दो 'मलाबार'देशादागतः। अत्र भारते मलयालमभाषायां 'टेक्का' इत्युच्यते। असीरियादेशे (७२७ई० पूर्वम्) वैक्ट्रियादेशे उष्ट्राः भारतीयाश्च गजाः विक्रेतुं नीयते स्म। डॉ० विंकिलरमतमुद्धरता गौरङ्गबनर्जीमहोदयेन एतदेव मतं समर्थितम्।

वेबरमहोदयेन जातकानुसारं डॉ० बूल्हरमहोदयेन प्रतिपादितं यद् ईशातः शताब्दीपञ्चकात् पूर्वं पारसीकदेशस्य सामुद्रिकं तटं पूर्णतया भारतेन अधिकृतम्। एतत्कालाद् बहु शताब्दीपूर्वमेव भारतीयैर्वणिग्भिरेष भूभागोऽधिकृतः आसीत्। 'ओल्डटेस्टामेण्ट' ग्रन्थे पश्चिमदेशैः फिलस्तीनदेशेन च सह भारतस्य वाणिज्यसम्बन्धो वर्णितोऽस्ति। प्रो० 'वॉल' महोदयः कथयति यत् 'मोजेक' समये (१४९१-१४५० ई० पू०) भारतस्य महार्घाणां प्रस्तराणां महान् आदरः आसीत्।

१. राष्ट्रपीडाकरं भाण्डमुच्छिन्द्यादफलं च यत्।
महोपकारमुच्छुल्कं कुर्याद् बीजं तु दुर्लभम्॥
(अर्थशास्त्रम् २।२१)

२. जर्नल ऑफ रॉयल एशियाटिक सोसायटी, १८९७, पृ० २४१–२८८।

बाइविलग्रन्थे, अन्येषु अन्येषु च प्राचीनग्रन्थेषु भारवाहकाणां उष्ट्रसारथीनां वर्णनं दृश्यते। सोलोमनसमये मिस्रदेशे सीरियादेशे चापि एतेषां सारथीनां वर्णनं दृश्यते। डॉ० काल्डवेलमहोदयेन मयूरस्य व्याख्यां कुर्वता उक्तं यद् बाइविलग्रन्थे मयूरः 'तुकी' इति कथितः। तमिलमलयालमभाषायामेष 'तोकी'त्युच्यते। मलाबारदेशीयवणिग्भिः मयूरा विक्रेतुं पश्चिमदेशेषु नीयन्ते स्म। अत एवानेन पूर्वोक्तेन मयूरविषयकशब्देन बाइबिलग्रन्थे पदं लब्धम्। एवमेव तमिलमलयालमभाषायाः 'अघिल'शब्दः हिब्रू इति एतद् रूपे परिणतः, 'अहलिम' शब्दश्च 'अहलोथ' इति एतद्रूपे।

असीरियादेशीये 'शामनेशनस्तम्भे' उल्लिखितो नीलो गजो निर्विवादम् एशियाखण्डीयः मन्यते। तच्चित्रं भारतीयस्यैव गजस्य, यस्य नाम वजीयती इत्यस्ति, यन्नाम 'वसीयती'शब्दस्यैव रूपान्तरम्। हिन्दूकुशपर्वतमार्गेण गजानां वाणिज्यं प्रचलति स्म। ऋग्वेदे दृश्यमानामिन्द्रप्रार्थना-विषयिकाम् ऋचामधिकृत्य केचन एतत् साधयितुं चेष्टन्ते स्म यदियम् ऋचा सीरियाभारतयोः परस्परस्य सम्बन्धस्य द्योतिका इति।[1]

वेवरुजातककथायां भारतीयवणिग्भिः बेबोलेनियादेशे मयूरा विक्रीयन्ते स्म इति वर्णितमस्ति। तत्र चन्द्रमन्दिरे 'सागवान' इति प्रसिद्धं काष्ठं संलग्नमस्ति। 'नेवुन्दनजर' अनेनास्य मन्दिरस्य जीर्णोद्धारः कृतोऽस्ति। तदानीमुक्तस्य काष्ठविशेषस्य निर्यातं केवलं भारतादेव भवति स्म। ग्रीकभाषायां बहूनां भारतीयानां वाणिज्यविषयकाणां शब्दानां प्रयोगो दृश्यते। प्राचीनसमयत एव तमिलभाषीयः 'अरसी' शब्दः ग्रीकभाषायां 'राइस' इति प्रयुज्यते। स्वर्णम्, रजतम्, महार्घरत्नानि, हस्तिदन्ताः, 'आबनूस' इत्येतन्निर्मिताः पादुकाः, मयूराः कुक्कुराश्चेत्यादीनां निर्यातं बेबोलेनियादेशे भारतं करोति स्म। लोहबान इत्यस्य चन्दनादीनामन्येषाञ्च सुगन्धिकाष्ठानां निर्यातं भारताद् बेबोलेनियादेशे भवति स्म। दक्षिणभारतीयानां नाविकानां कार्यकौशलेन वणिक्षु अधिकं कार्यक्षमत्वमधीयते स्म। लासेन अनेन ईदृशाः वणिजः वर्णिताः ये अरबदेशस्य शरणं गताः आसन्। एषु केचन अफ्रीका-चीन-बेबोलेनिया एतानपि देशान् गता आसन्। दक्षिणभारतीयाः केचन लुब्धाः वणिजः बैधायनेन निन्दिताः। भारतीयेन वणिजः सम्बन्धेन बेबोलेनियादेशः समुन्नतिं प्राप। यद्यपि स देशः भारतादेव वस्तूनि क्रीणितवान्, तथापि तानि क्रीतानि वस्तूनि विक्रीय न महान् लाभः आसादितस्तेन।[2]

---

१. ज० रा० ए० सो० १८८८।

२. मैक्समूलर, इण्डिया ह्वाट इट कैन टीच अस, पृ० १२५–२६।

भारते चीनदेशात् कौशेयम् आनीयते स्म। रामायणे, महाभारते, अन्येषु च ग्रन्थेषु चीनांशुकस्य प्रचुरः उल्लेखो दृश्यते। कौशेयोद्योगस्य स्थापना भारतेऽपि अभूत्। रुद्रयामलतन्त्रे कौशेयोद्योगस्य स्थापना वर्णिता अस्ति। कौशेयस्य आरम्भः प्रथमतः भारते एव आसीत्, उत चीनदेशे इति एषोऽस्ति विचारणीयो विषयः। चीनदेशेन सह भारतस्य वाणिज्यं त्रिभिः मार्गैः भवति स्म, अर्थाद् वाणिज्यार्थं त्रयः पन्थानः आसन्। अद्यत्वे यत्र 'मछलीपट्टम-बन्दरगाह' इत्यस्ति ततः पूर्वीयद्वीपसमूहानतिक्रम्य वणिजः प्रशान्तमहासागरं यान्ति स्म। केनेडी-महोदयेन तु एते वणिजः प्रशान्तमहासागरं आगच्छन् इति उल्लिखितम्, अस्मिन्नेव मार्गे चीनदेशोऽपि। स्थलमार्गेणापि वणिजः यान्ति स्म। कम्बोजदेशस्तदानीं भारतस्याङ्गमासीत्। ततः बैक्ट्रिया-मरुस्थलप्रभृतिदेशानतिक्रम्य वणिजः चीनदेशं व्रजन्ति स्म। 'पारसीकरूसतुर्किस्तानयुरोप' इत्यादिषु देशेषु भारतीयैः वणिग्भिः सह चीनदेशीया अपि वणिजः वाणिज्यमकुर्वन्।[1] तृतीयो मार्गः तिब्बत-देशीयः आसीत्। कौटल्येन अर्थशास्त्रे चीनदेशाद् आनीयमानानां वस्तूनामुल्लेखः कृतः।[2] मिलिन्दप्रश्नेऽपि चीनदेशेन सह भारतस्य वाणिज्यमुल्लिखितमस्ति। प्रो० लोकाचेरी-महोदयेन ईशातः ६८० वर्षेभ्यः पूर्वतः एव चीनदेशेन सह भारतस्य वाणिज्यसम्बन्धः आसीदिति मन्यते। मिस्टर काकसु ओकाकुर एतन्मतानुसारमेव चीनभारतयोः सम्बन्धः 'मुस्लिम'कालपर्यन्तमासीत्।[3] वस्तुतो भारतचीनयोः पारस्परिकं वाणिज्यम् ईशातः परस्सहस्रेभ्यः वर्षेभ्यः पूर्वतः एव प्रचलितमासीत्।

पूर्वीयद्वीपसमूहैः सह भारतस्य वाणिज्यमासीत्। लङ्कादेशीया मौक्तिकाः प्रशंसिता उत्कृष्टतया च वर्णिताः सन्ति। एषु मौक्तिकेषु कृत्रिममणि अपि मौक्तिकानि सन्ति। सिकन्दरसमये यूरोपदेशेन सह एतेषां मौक्तिकानां वाणिज्यमासीत्। कल्याणनामकनगरद्वारेण दक्षिणभारते एतद्विषयकं वाणिज्यं प्रचलति स्म। लङ्कादेशीया वणिजः अनेनैव मार्गेण सिन्धुनदीमुल्लङ्घ्य पारसीकदेशं चीनदेशञ्च यान्ति स्म। लङ्कायाः दारुसिता (दालचीनी) पश्चिमदेशेषु नीयते स्म। प्रायः इमां अरबदेशीया यात्रिणः क्रीत्वा युरोपदेशे प्रेषयन्ति स्म। हेरीडोटस अनेनापि एतद्विषयकं प्रकरणमुल्लिखितमस्ति।

दक्षिणदेशीयानाम् आन्ध्राणां कुषाणानाञ्च समये भारतीयवाणिज्यविषये लिखितं यद् आन्ध्रदेश वाणिज्यदृष्ट्या सम्पन्न आसीत्। जलमार्गेण स्थल-

---

१. केनेडी, अर्ली कामर्स ऑफ इण्डिया विथ बेबोलेनिया, ज० रा० ए० सो० १८९८।

२. हिस्ट्री एण्टि० भागः ६।

३. कौ० २।२।

मार्गेण च वाणिज्यं भवति स्म । पश्चिमैशियादेशेन, यूनानदेशेन, रोमदेशेन च सह वाणिज्यमासीत् । पूर्वीयद्वीपसमूहाः चीनदेशश्च एतस्य मुख्याः आपणाः आसन् । अत्रत्या एव गजा सीरियादेशेषु उपयुज्यन्ते स्म । रोमदेशेन स्वीयस्य स्वर्णराशेः भारताय यन्नियन्त्रितं तद्विषये प्लिनी अनेन महान् खेदः प्रकटितः । रोमदेशात् पलायिताः यहूदीयाः वणिजः दक्षिणभारतमेव देशं गताः ।[1] कनिष्क-समये तु युरोपखण्डे एशियाखण्डे च भारतस्य कलाविज्ञानादिवाणिज्यं स्फुटमेव प्रचलितम् आसीत् ।

मिस्रदेशस्य भूमध्यसागरीयैः देशैः, अरबदेशेन सह वाणिज्यसम्बन्धः आसीत् । अरबदेशीयाः वणिजः भारताद् वस्तूनि क्रीणन्ति स्म । तानि च वस्तूनि मिस्रदेशेषु विक्रीयन्ते स्म । श्रूयते यद् आक्सस ( सीजकसका ) यूरेगेटस ( सोकात्राको ) आभ्यां भारतमागत्य ग्रीकभारतयोः वाणिज्यव्यवहारः स्थापितः । फिलाडेल्फस अस्य अशोकेन सह वाणिज्यव्यवहार आसीत् । अलेक्जेण्डिया अयं वाणिज्यमार्गस्य संयोजकः आसीत् । स्ट्रैबो अनेन नामनिर्देशनपुरस्सरं विंशत्य-धिकं शतं नौकासमूहाः उल्लिखिताः, ये भारताद् वस्तूनि आदाय ग्रीकदेशं गच्छन्तः आसन् । ग्रीकभाषीयाः 'ओरिजा' 'जिगिवर' 'कारप्यून' एते शब्दाः तमिल-भाषीयाणामेव 'आरिसी' 'इञ्जिवर' 'कारवा' शब्दानाम् अपभ्रष्टानि रूपाणि सन्ति । आयोनियादेशवासिनः आत्मानम् 'आथेनस' इति कथयन्ति । एत एव भारते यवना इति कथिताः । पेरिप्लस एतेन लिखितं यद् एते वणिजः भारताद् द्राक्षा, धातुमयानि वस्तूनि, पिप्पलीन्, हस्तिदन्तान्, मौक्तिकानि कौशेयञ्च स्वदेशं नयन्ति स्म ।

आगस्टस अतः आरभ्य नेरो इति एतत् पर्यन्तं रोमदेशः विश्वे महान् शक्तिमान् आसीत् । तदानीं पूर्वीयेषु पश्चिमीयेषु च वाणिज्यमार्गेषु रोमदेशस्य नियन्त्रणमासीत् । रोमनिवासिनः तदानीं धनिनः आसन् । भारतीयानि बहु-मूल्यानि विलासवस्तूनि तैः प्रचुरं क्रीयन्ते स्म । रोमदेशीयानाम् इदं कार्यं निन्दन् प्लिनीमहोदयः इदं लिखितवान् यद् वस्तुतः रोमदेशीयैः धनस्य महान् अपव्ययः कृतः । स्वर्णराशिं दत्वा रोमदेशीयैः भारतीयानि मौक्तिककौशेयादीनि वस्तूनि क्रीयन्ते स्म । विंसेण्ट अनेनापि प्लिनीमहोदयस्य कथनं समर्थितम् ।

प्राचीनकाले भारतीयैः राष्ट्रान्तरीयविनिमयोऽपरिचित आसीदिति कथनं तु भ्रममूलकम् । ईसातः परस्सहस्रेभ्यः वर्षेभ्यः पूर्वत एव ते राष्ट्रान्तरीय-

---

१. आइडियल्स ऑफ ईस्ट, पृ० १–२ ।

वाणिज्ये कुशला आसन्।[1] अनेल[2]महोदयेन एष विषयः विस्तरेण विवेचितः। अतिरिक्तोत्पादनं वैशिष्ट्यञ्च अनुसृत्य वाणिज्यं प्रचलति स्म। 'कैम्ब्रिज हिस्ट्री आफ इण्डिया' नामके ग्रन्थेऽपि इदमेव मतं प्रतिपादितम्, तत्र हि स्वर्ण-मौक्तिक-महार्घ-पाषाणविषयकं वाणिज्यम् उदाहृतम्। रिज्डेविड्स अनेन 'बुद्धिस्ट इण्डिया' ग्रन्थे इदमेव मतं प्रकटितम्। उत्पादने वैयक्तिक्याः सम्पदः विनियोगः आसीत्, परन्तु मूल्यनिर्धारणे आयातनिर्यातविषयक-नीतौ च राज्यस्य नियन्त्रण-मासीत्। उत्पादनं च उपभोगार्थमासीत्, अतः शोषणप्रवृत्तिः न पदं निदधे। फलतः सम्पूर्णेन विश्वेन सह वाणिज्यसम्बन्धस्य समस्तेऽपि सामुद्रिकक्षेत्रे अधिकारस्य च सत्त्वेऽपि साम्राज्यवादिनी धनवादिनी च वणिजां मनोवृत्तिः नासीत्। वाणिज्यक्षेत्रेऽपि 'वसुधैव कुटुम्बकम्' इत्येष एव भावना आसीत्।

## यातायातम्

धारानगरस्य राज्ञा भोजेन सम्पादितस्य युक्तिकल्पतरोर्हस्तलेखः कलकत्तास्थपुस्तकालये विद्यते।[3] तदनुसारं नौकानिर्माणे ब्राह्मणक्षत्रियवैश्यशूद्र-जातीयानां काष्ठानां विभिन्ना गुणाः सन्ति—

लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजातिः तत्।
दृढाङ्गं लघु यत् काष्ठमघटं क्षत्रजातिः तत्॥
कोमलं गुरु यत् काष्ठं वैश्यजातिस्तदुच्यते।
दृढाङ्गं गुरु यत् काष्ठं शूद्रजातिः तदुच्यते॥
लक्षणद्वययोगेन द्विजातिः काष्ठसंग्रहः।
क्षत्रियकाष्ठैर्घटिता भोजमते सुखसम्पदं नौका।
अन्यैर्लघुभिः सुदृढैर्विदधति जलदुष्पदे नौकाम्॥
विभिन्नजातिद्वयकाष्ठजाता न श्रेयसे नापि सुखाय नौका।
नैषा चिरं तिष्ठति पच्यते च विभिद्यते वारिणि मज्जते च॥

(युक्तिकल्पतरुः, निष्पदमानोद्देशः, ८४-८७)

---

१. इम्प० गजट. २, पृ० ३२५।

२. इंडस्ट्रियल कम्पटीशन ऑफ एशिया।

३. नरेन्द्रनाथ लॉ महोदयेन खीष्टाब्दे १९१७, कालिकातः प्रकाशितः।

समुद्रयात्रायाः तदीयदेवतानां यानानां च उल्लेखः प्राचीनसाहित्ये ऋग्वेदत एव आरभ्यते, किन्तु नौकानिर्माणस्य प्रक्रिया भोजीयकल्पतरावेव सर्वप्रथमं लभ्यते। भोजः नौकानिर्माणविषये अधोनिर्दिष्टान् निर्देशान् दर्शयति—

न सिन्धुगाह्यार्हति लौहबन्धं तल्लौहकान्तैर्ह्रियते हि लौहम्।
विपद्यते तेन जलेषु नौका गुणेन बन्धं निजगाद भोजः॥

(८८)

परिमाणं गुणादींश्च आश्रित्य सामान्या विशेषाश्चेति द्विविधा नौकाः स्वीकृताः—

सामान्यश्च विशेषश्च नौकायाः लक्षणद्वयम्।
राजहस्तमितायां तत्पादपरिणाहिनी॥
तावदेवोन्नता नौका शूद्रतेति गदिता बुधैः।
अतः सार्धमितायामातदर्द्धपरिणाहिनि॥
त्रिभोगेणोत्थिता नौका मध्यमेति प्रचक्षते।
शूद्राथ मध्यमा भीमा चपला पटलाऽभया॥
दीर्घा पत्रपुटा चैव गर्भरा मन्थरा तथा।
नौका दशकमित्युक्तं राजहस्तैरनुक्रमम्॥
एकैकवृद्धैः सार्धैश्च विजानीयाद् द्वयं द्वयम्।
उन्नतिश्च प्रवीणा च हस्तादर्धांशसम्मिता॥
अत्र भीमाऽभया चैव गर्भरा चाशुभप्रदा।

(८९-९४)

विशेषभूता नौका समुद्रयात्रायां क्षमते "मन्थरपरतायास्तु तासामेवाम्बुधौ गतिः।" एवंविधा विशेषनौकापि द्विविधा "दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा।" एतासां नौकानाम् अनेके भेदाः—

राजहस्तद्वया यामा अष्टांशपरिणाहिनी।
नौकेयं दीर्घिका नाम दशाङ्गेनोन्नतापि च॥
दीर्घिका तरणिर्लोला गत्वरा गामिनी तरिः।
जङ्घालाऽल्पाविनी चैव धारिणी वेगिनी तथा॥

राजहस्तैकैकवृद्धा नौका नामानि वै दश ।
उन्नतिः परिणाहश्च दशाष्टांशमितौ क्रमात् ॥
अत्र लोला गामिनी च प्लाविनी दुःखदा भवेत् ।
लोलाया मानमारभ्य यावद् भवति गत्वरा ॥
लोलायाः फलमाधत्ते एवं सर्वासु निर्णयः ।

(९७-१०१)

राजहस्तद्वयमिता तावत्प्रसरणोन्नता ॥
इयं मूर्धाभिधा नौका क्षेमाय पृथिवीभुजाम् ।
अर्धानूर्धास्वर्णमुखी गर्भिणी मन्थरा तथा ॥
राजहस्तैकैकवृद्ध्या नाम पञ्चत्रयं भवेत् ।
अत्रानूर्धा गर्भिणी च निन्दितं नाम युग्मकम् ॥
मन्थरायाः परायास्तु ताः शुभाय यथोद्भवम् ।

(१०५-१०७)

नौकानां चित्रणे रञ्जने अलङ्करणे च निम्नलिखितानि विधानानि सन्ति—

धात्वादीनामतो वक्ष्ये निर्णयं तरिसंश्रयम् ।
कनकं रजतं ताम्रं त्रितयं वा यथाक्रमम् ॥
ब्रह्मादिभिः परिन्यस्य नौकाचित्रणकर्मणि ।
चतुःशृङ्गा त्रिशृङ्गा वा द्विशृङ्गा चैकशृङ्गिणी ॥
सितरक्तपीतनीलवर्णान् दद्याद् यथाक्रमम् ।
केशरी महिषो नागो द्विरदो व्याघ्र एव च ॥
पक्षी भेको मनुष्यश्च एतेषां वदनाष्टकम् ।
नावां मुखे परिन्यस्य आदित्यादिदशा भुवम् ॥

(१०९-११२)

नौकासु मणिविन्यासो विज्ञेयो नव दण्डवत् ।
मुक्तास्तवकैर्युक्ता नौका स्यात् सर्वतो भद्रा ॥

(११७)

